

1875 वेल्लङ्कोण्ड रामारायकविः 1914

# श्री भागवत चम्पूः

# श्री भागवत चम्पूः

( मन्दरव्याख्या समन्विता )

व्याख्याता :

## बेल्लङ्कोण्ड रामारायकविः

FIRST PRINTING EDITION --- 1949.

FIRST DIGITAL EDITION --- **05-02-2015.**

DIGITALIESED BY : -

**BELLAMKONDA CHAKRADHAR KUMAR.**

GREAT GRAND SON OF SRI RAMA RAYA KAVI.

(C) NO COPY RIGHT'S.

SRI BELLAMKONDA RAMA RAYA KAVINDRULA TRUST

SRI NILAYAM

Do.No. 12-8-5/5

Prakash Nagar

NARASARAOPET - 522 601

Guntur (Dt)

Andhra Pradesh.

E- Mail : - bvlnckumar@gmail.com

Note : - Please download PDF file and save . Print on A4 size paper. Please.check printer setting's before printing.Please check page option's and use FIT the page option.Take one side or two side's on the paper.



**కీ॥శే॥ బెల్లంకోండ నరశింగరావు (కరణంగారు)**

**1914 - 1960 జమిందారు పమిడిపాడు సర్వా అగ్రహారం**

**MY GRAND FATHER. CHAKRADHAR.**

# SRI BELLAMKONDA RAMA RAYA KAVINDRULU TRUST.
# NARASARAOPET .



BELLAMKONDA VENKATA
SUBRAMANYA SARMA.



BELLAMKONDA
SRINIVASASARMA



BELLAMKONDA
CHAKRADHAR KUMAR.

रामारायादि प्राचीन कविताग्रन्थमण्डलि :

# श्री भागवत चम्पूः

( मन्दरव्याख्या समन्विता )



रचयिता :

अभिनव कालिदास

वेल्लाल चिदम्बरशास्त्री



व्याख्याता :

## बेल्लङ्कोण्ड रामारायकविः



गर्तपुरी पञ्चाक्षरी मुद्रणालये

मुद्रापिता

१९६१

DIGITALISED BY : - BELLAMKONDA CHAKRADHAR KUMAR. GREAT GRAND SON TO AUTHOR.

01-02-2015.

ॐ

श्रीहयवदनपरब्रह्मणे नमः

# श्रीचम्पूभागवत व्याख्यातृपीठिका

( शुभकृत् कार्तिककृष्णदशम्याम् )



श्लो॥ चम्पूभागवतापगापति ममुं केचि त्तरन्तु स्वतः
केचि त्प्राप्य तरीं तरन्तु कतिचि त्तीर्थोपदेशाश्रयात्
सुब्रह्मण्यनिदेशत स्सुमनसां दातुं तदीयामृतं
रामः प्रारभतेऽथ तस्य मथनं श्रीनाथपादाश्रयः॥ १

श्लो॥ सस्यस्तोमं फलति बहुधा कृष्यमाणैव धात्री
क्षीरासारं स्रवति बहुधा दुह्यमानैव धेनुः
ग्रन्थाम्भोधि र्व्यधिगतफलोऽप्येष नित्यं बुधेन्द्रै
रेत न्मन्थे जनयति सुधापूरधाराप्रवाहम्॥ २

सुधापूरः सुधाराशिः अमृतनिधि रिति यावत्। तस्य धाराः वृष्टयः तासां प्रवाहम्। अत्र ग्रन्थाम्बुधौ मेघवत् घनीभूय सुधा अस्ति। वातवशा द्यथा मेघा द्वर्षाविर्भावः, तथा मथनवशात् सुधापूरा द्वर्षाविर्भावः। यथा वृष्टिधाराणां बहूनां मिळित्वा प्रवाहरूपेण प्रसृतिः एवं सुधापूर धाराणामपीति, एतेन सुधासारनिक्षेपयोग्येषु बहुषु श्लोकेषु व्याख्यातेषु तदुद्गता बह्व्योऽमृतधाराः प्रवाहीभूय सतां मनसि समुद्रे इव मिळन्तीति ध्वन्यते।

श्लो॥ अनन्तगुणवेष्टितप्रबलबुद्धिमन्थाद्रिणा
हयाननकृपाझरीमिळितसन्मनोजृम्भणः
विलोड्य बहुवार मत्युपमकोशदुग्धाम्बुधिं
प्रपद्य मधुरामृतं बुध! गृहाण दास्य त्ययम्॥

कोशः प्रकृतग्रन्थः

श्लो॥ चम्पूभागवताम्भोधिं मथि त्वैतेन य द्बुधाः
गृह्णन्ति सार ममृतं व्याख्यानं मन्थराभिधम्॥

हयानन धृत स्त्वया विजयता मयं मन्थर
स्तवापि भविता रमा धवळिताखिलाशान्तरा
त्वदीयकरुणालवाकलितमामकात्माऽमृते
निमज्जतु भवत्पदामृतरुहोद्भवे ते नमः ॥ ५

यथाकथञ्चि न्मम बुद्धिमन्थरः प्रवेश मीया द्भगवद्गुणाम्बुधौ
इतीव चम्पूं विवृणो त्ययं मुदाऽबुधोऽपि बालो न तु साहितीबलात् ॥ ६

ीबलादिति ल्यब्लोपे पञ्चमी । साहित्यप्रकर्षं प्रकाशयितु मित्यर्थः ।

। अपभ्रंशा वर्णा अपि न हरिगा दूषणपदं
ततोऽपभ्रंशोऽहं ध्रुवमिव भवेयं हरिमनाः
मुधालापै र्व्यर्थश्रमिभिरपि कालं क्षपयतां
जनानां बुद्धिं द्रा ग्वशय नृहरे ! ते नम इदम् ॥ ७

ंशा अपि हरिप्रतिपादका वर्णा दूषणपदं न भवन्ति । हरिगाः पतञ्जल्यंगीकृताः इति लौकिकदृष्ट्या अपभ्रंशत्वेन प्रतीयमाना अपि हिरुक्, धिरकुत्, इत्यादय श्शब्दा त्त्वेन न दूष्या इति भावः। अन्यत्र अपभ्रंशाः आचारादिभ्रष्टा अपि वर्णाः ब्राह्मणादयः भगवद्भक्ताश्चेत् दूषणस्थानं न भवन्ति । तस्मात् अपभ्रंशोऽहं हरिमना ध्रुवं भवेयम् । पे न दूष्यत्वप्रसंग इति भावः। अन्यत्र हरि रहं भवामि ततोऽपभ्रंश एव अपगतभ्रंश एव यावत् । एतेन भगवत्कथाव्याख्यान मस्माकं क्षेमार्थमेव। न तु पाण्डित्यप्रकर्षोद्बोधनार्थ ।तुः कवे र्विनयो व्यज्यते । श्रमयः श्रमणानि ।

व्यंग्यप्रधानभगवत्प्रतिपादकत्वा द्व्यंग्यप्रधान मिदकं स्फुटयेत को नु
राम स्तथापि त्रिपरीत मियेष बाल्या त्सन्तः प्रतीच्छत गुणैकदृशो दयार्द्राः ॥

वान् हि अप्रत्यक्षस्सन् जगत्सृष्ट्यादिव्यापारै र्व्यज्यते इति व्यंग्यत्वं हरे स्सिद्धम। इदमे कर्म ।



ॐ

श्रीहयवदनपरब्रह्मणे नमः

# श्रीचम्पूभागवतम्

## प्रथमो विलासः



श्लो॥ कल्याणं नः प्रभूतं कलयतु ललितालापशैलेशबाला
लीलाजालानुकूला शिशिरकरकलाभानुमालाजटाला
भद्रा शेषाहिभूषा परिकलितसुधापूरधारानुकारा
एषा मुद्रा त्रिनिद्रा पुरहरणविधौ काऽपि कारुण्यपूर्णा ॥ १

—* व्याख्यानारम्भः *—

इह खलु वेल्लाल्कुलकलशवाराशिचिन्तामणिः, फणितराघवपाण्डवयादवीयाभिधचित्र प्रबन्धः, श्लेषयमकध्वनिचक्रवर्ती, अभिनवकाळिदासात्मकपौरुषनामा, चिदम्बरनामा महाकविः, सकलकल्याणगुणनिलयदिव्यविग्रहस्वरूपस्य भगवतो वासुदेवस्य गुणक्रियास्वरूपत्रितयप्रतिपाद कत्वे नाद्वितीयानन्दलक्षणपरमपुरुषार्थसाधनम् "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतर क्षतये, सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे" इत्यालङ्कारिकवचनप्रामाण्या ल्लौकिक पुरुषार्थसाधनं च चम्पूभागवताभिधं महाकाव्यं चिकीर्षुः, प्रारीप्सितग्रन्थस्य अविघ्नपरिसमाप्ति सम्प्रदायाविच्छेदलक्षणफलसाधन मभीष्टदेवताप्रार्थनागर्भ माशीरूपं मङ्गळं शिष्यशिक्षार्थं ग्रन्थादौ श्लोकषट्के नोपनिबध्नाति। कल्याण मिति।

"लक्ष्मीकरः कवर्ग स्स्या" दिति कवर्ग स्यादौ प्रयोगः मङ्गळकरः "मो भूमि स्त्रिगुरु श्शुभं वितनुते" इति भूदेवताकसर्वगुरु मगणोपि शुभकर एव। अपि च अयं मगणः कल्याण मिति पदं भद्रवाचकत्वेन अतीव शुभावहः। "देवतावाचका श्शब्दा ये च भद्रादिवाचका" इत्युक्तत्वात्। एवम् वर्गतः गणतः अर्थतश्च कल्याणपदं सर्वशुभावह मिति फलितम्। ललितालाप शैलेशबालालीलाजालानुकूला शिशिरकरकलाभानुमालाजटाळा शेषाहिभूषा परिकलितसुधापूर धारानुकारा पुरहरणविधौ विनिद्रा कारुण्यपूर्णा भद्रा काऽपि एषा मुद्रा नः प्रभूतं कल्याणं कलयतु इत्यन्वयः। ललिताः मनोज्ञाः आलापाः गिरो यस्या स्सा तथोक्ता मञ्जुभाषिणीत्यर्थः। शैलेशस्य

वर्ती बाल्‍ कुर्वीति यावत्। ललितालापा च शैलेशबाला च तथोक्ता। तस्याः लीलाजालानां विलास॰ ॰ाना मनुकूला अनुरूपा. मनोज्ञभाषणकटाक्षनिक्षेपादिपार्वतीविलाससङ्क्रमणोचितभूमि रिति फलितः समासार्थः। आलापेत्येत दुपलक्षणं गुणरूपादीनां तेन ललितालापपदेन पार्वत्याः निरतिशय सौन्दर्यं, शैलेशबाले त्यनेन सत्कुलप्रसूति र्व्यज्यते। बाले त्यनेन सौकुमार्यं व्यज्यते। एवं विधाया अनुकूलेत्यनुक्त्वा एतल्लीलाजालानुकूलेति वचनेन पार्वत्यपेक्षया परमेश्वरस्य सौन्दर्या द्याधिक्यं व्यज्यते। एतेन मायापारतन्त्र्याभावा च्छिवे परमेश्वरत्वं स्फुटं भवति। अन्यथा शैलेशबाला मेवाय मनुकुर्या न्नतु सैन मिति। एवं पार्वतीसाहित्यप्रतिपादनेन पार्वतीविशिष्टः परमेश्वर एव प्रपत्तव्यः नतु केवल इति प्रपत्तिमत मप्युपदिष्टं कविनेति बोध्यम्। इथ्थं स्वतस्सिद्धं सौन्दर्यं शिव स्याभिधाय अथ भूषणज माह- शिशिरेति- शिशिरकरस्य चन्द्रस्य कलायाः भानुमालाभिः किरण परम्पराभिः जटाला दन्तुरिता; चन्द्रचूड इत्यर्थः। अत्र शैशिर्यप्रतिपादनेन भक्ततापनिवारणक्षमत्वं व्यज्यते। शिशिरकरं सर्वं मधृत्वा कलामात्रधारणेन कळङ्कस्थानीयदोषोपमृष्टगुणाभासान् कपटान् सेवकान् हित्वा निष्कपटं भक्त स्वीयत्वेन गृह्णातीति व्यज्यते। भानुमाले त्यनेन लोके स्त्रीभि शिरसा धृतचन्द्रवङ्काभिधभूषणव न्नेदं भूषणं निश्शोभं किन्तु प्रचुरशोभ मिति व्यज्यते। भानुमालाजटाले त्यनेन शिवशिरसि लम्बमाना जटा न भवन्ति। किन्तु शशाङ्कशकलरुचिमाला एवेति अपह्नवो व्यज्यते। तेन च जटानां श्वेतत्वं फलति। प्राणिस्था दातो ल जिति लचि जटाला इति रूपम्। अथापरं भूषण माह। शेषेति- शेष इत्यहि र्भूषा यस्या स्सा तथोक्ता, शेषभूषितेति यावत्। चूतवृक्षादिव च्छेषाहिपदयो स्सामान्यविशेषभावा न्न पौनरुक्त्यम्। अनेन विशेषणेन शिवस्य सर्वातिशायित्वं व्यज्यते। समस्तभूधरस्यापि शेषस्य तद्भूषणस्थानापत्त्या तदङ्गगतत्वात् ततश्च शेषशायिनो विष्णोरपि शेषभूष शिव एव परम इति फलति। मल्लिकामालयेव च्छेषभोगो विभाति। तत्फणामणयस्तु कोकनदव न्मध्ये भान्तीति भूषणसाम्यं शेषस्य। यद्वा मुक्ताहारलताव त्सर्पकायः, नायकरत्नानीव फणामणयः, इति एतेन शेषाख्यमुक्ताहारस्य मध्ये मध्ये विश्लेषाभावा द्दण्डाकारस्थित्या मुक्ताहारा द्व्यतिरेको व्यज्यते। अपिच - " आश्रितेषु गणयन्ति न दोषम्" इति न्यायात् आश्रितवत्सलोऽयं शिवः परमारणविषधरत्वरूपं दोष मविगणय्य शेषं भूषयतीति शिव एव शरणीकरणीय इति व्यज्यते। अथ स्वरूपं गुणं चाह। परिकलितेति। सुधायाः अमृतस्य, समृद्धिः तस्य धारा प्रवाहः तस्यानुकारः अनुकरणं भावे घञ्। परिकलितः कृतः सुधापूरधारानुकारः यथा सा। धावल्या दाह्लादकत्वाच्च सुधाधारा मनुकुर्वन्ती इत्यर्थः। एतेन विग्रहस्वरूप मतिधवळ मिति, आत्मस्वरूप ममृतव त्सुख मिति, गुणाः अमृतव दाह्लादका अनुभवता मिति फलितम्। अत्र धाराकाराकारित स्सुधापूर एव पुरुषाकाराकारितशिवव द्भाति। न त्वयं शिव इत्यपह्नवो व्यज्यते। तेन अमृतवद् भोग्यत्वं परमानन्दास्पदत्व च शिवस्य फलितम्। अथ भक्तरक्षणोन्मुखत्व माह- पुरेति- पुराणां त्रयाणां मयकृतपत्तनानां हरणविधौ संहारकार्ये विनिद्रा जागरूका त्रिपुरासुरविजयिनी इत्यर्थः।

एतेन शिवस्य महापराक्रमत्वं व्यज्यते । अतएव स्वं स्वाश्रितांश्च रक्षयतीति भावेन पार्वती भक्तरक्षणोपयोगिनं प्रधानं गुणं कण्ठतो निर्दिशति; कारुण्येति-कारुण्येन करुणारसेन पूर्णा व्याप्ता, दयारसभरितान्तःकरणेत्यर्थः । पूर्णेत्यनेन शिवस्य वस्तुतोऽचलत्वं व्यज्यते । "पूर्णस्य पूर्ण मादायेति" श्रुतेः । भद्रा कल्याणी सकलकल्याणगुणपरिपूर्णेत्यर्थः । एतेन उक्तानुक्त सकलगुण संग्रहः कृत इति फलितम् । एषा मद्धृदिस्था । कापि अनिर्वचनीया मुद्रा भङ्गी शिव इत्यर्थः । धर्मधर्मिणो रभेदोपचारात्, नः अस्माकं प्रभूतं अधिकं कल्याणं कलयतु दिशतु– "यो यद्वान् स त इत्तो" इति न्यायेन शिवस्य कल्यणित्वा दस्माकमपि कल्याणं ददात्ये वेति कवे निश्चयः। कापि मुद्रा इत्यादि स्त्रीलिङ्गशब्दैः पुमर्थप्रतिपादनेन शिवस्य अर्धनारीश्वरत्वं व्यज्यते । कल्याणं कलयत्वित्यत्र सुवर्णं ददा त्विति व्यज्यते। युक्तञ्चेदं शिवस्य सम्पत्प्रदत्वात्। अत्र "अर्थत श्शब्दतो वापि मना क्काव्यार्थसूचनम्" इति यथाकथञ्चि त्काव्यार्थसूचनमपि भवति। तथाहि- यस्याः ललितालापे भर्तु र्ब्रह्मणो देवानां वा शं सुखं भवति सा ललितालापशा । इरा उदकं "इरा सुराम्बुवाग्भूषु" इति रत्नमाला; तदीश स्समुद्रः अस्य विष्णो स्सम्बन्धी इरेशः ऐरेशः दुग्धसागरः विष्णोः क्षीरसागरशयनत्वात् । तस्य बाला कन्या ऐरेशबाला लक्ष्मीः, रलयो रभेदा दिलाशब्दे इरात्वबुद्धिः। ललितालापशा च सा ऐरेशबाला च ललितालापशैरेशबाला, वृद्धिरेचीति आकारस्य एकारस्य च स्थाने वृद्धि रैकारः । तस्याः लीलाजालानुकूला । शिशिरकरकला चन्द्रकला तत्साम्या त्तदनुजत्वा द्वा कौस्तुभमणि स्तत्त्वेन व्यपदिश्यते । तद्भानुमालाभिः तत्कान्तिपूगैः जटाला व्याप्ता । शेषाहिं भूषयतीति शेषाहिभूषा, शेषपर्यङ्कभूषणभूतेत्यर्थः । परिकलितः कृतः सुधापूरधारानुकारः यया सा तथोक्तः । कटाक्षमालाभिः वाक्पुष्पमरन्दैर्वा सुधापूरधारा मनुकुर्वन्ती इत्यर्थः । सुधास्रावकरुणाकटाक्षः सुधास्राववाचिकश्चेति भावः। अपुरहरणविधौ अपुराणाम् अशरीराणां हरणविधौ स्वीकरणविधौ, यद्वा नञो विरुद्धार्थकत्वात्, अपुराः विरुद्धशरीराः राक्षसा इति यावत् । तेषां हरणविधौ नाशनविधौ विनिद्रा जागरूका स्वविलासान् दर्शयित्वा भक्तानां मुक्तिं दातुम् अथवा भूभारभूतराक्षसनिबर्हणार्थं वा अस्यावतारात्, अत्र हेतु माह कारुण्यपूर्णेति । भद्रा कल्याणी काऽप्यनिर्वचनीया एषा मद्धृदिस्था मुद्रा भङ्गी रीतिः विष्णुरित्यर्थः । नः कल्याणं सच्चिदानन्दलक्षणं शुभं, कलयतु ददातु । इति एतेन, क्षीरसागरे शेषशायी लक्ष्मीवान् भगवान् नारायणः ब्रह्मादिप्रार्थितस्सन् भक्तसायुज्यदानार्थं भूभारहरणार्थं च कृपया भुव्यवतीर्य विराजते इति कृष्णकथा प्रतीता । किञ्च शेषभूषे त्यनेन प्रकृतावतारेऽपि शेषावतारो रामोऽ्वतीर्ण इति । ऐरेशबालालीलाजालानुकूले त्यनेन रुक्मिणीरूपेण लक्ष्मी रवतीर्णा इति । ललितालापे त्यनेन ब्रह्मादीन् वरदानेन सन्तोषणं च एवमादिभागवतदशमस्कन्धान्तर्गतकृष्णकथा प्रतीयते इति सैवात्र वर्ण्यते इति बद्धम् । अत्र. ला. षा. रा. द्रा. इति वर्णाना मसकृदावृत्तिश्रवणा द्वृत्त्यनुप्रासाभिध श्शब्दालङ्कारः "एकद्विप्रभृतीनां तु व्यञ्जनानां यथा भवेत्। पुनरुक्ति रसौ नाम्ना वृत्त्यनुप्रास इष्यते" इति तल्लक्षणात्।

त्यत्रानुरूप्यवर्णना त्समालङ्कारः " समं स्या द्वर्णनं यत्र द्वयो रप्यनुरूपयो " रिति लक्षणात् । द्वयोरपि एकपदगतत्वेन एकवाचकानुप्रवेशात्मक स्सङ्करः । जटालेति शिशिरकरलीलानां जटात्वरूपणा द्रूपकालङ्कारः । अस्यापि पूर्वव च्छब्दालङ्कारेण सङ्करः । सुधापूरेति विशेषणे उपमा । किञ्च गम्यत्वेन विवक्षितस्य शिवस्य विवक्षितरूपा दपि चारुतरेण रूपान्तरे णाभिधाना त्पर्यायोक्ता लङ्कारः " पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रय " मिति । अयं पूर्वोक्तालङ्कारत्रय प्रतिभोत्थापित इति तेषा मस्यच अङ्गाङ्गीभावेन सङ्करः । वृत्तन्तु स्रग्धरा । "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुतेति " तल्लक्षणम् । इति— १

अव. एवं परमेश्वरं प्रार्थयित्वा अथ स्वाभीष्टदेवतां परमेश्वरीं प्रार्थयते ।

श्लो॥ प्रालेयाचलभागधेयभवनं कल्याणजालास्पदं
जाटाटीरतपःफलं किलकिलल्लीलाशुकाह्लादितम्
बिभ्राणं परिमौळि कञ्चन सुधाधाराधरं सादरं
त न्मे भद्र ममुद्र माकलयता मानन्दकन्दं महः ॥ २

प्रालेयेति— प्रलेयाचलस्य हिमालयस्य भागधेयानां भाग्यानाम् । " दैवं दिष्टं भागधेयं भाग्यं स्त्री नियति र्विधि " रित्यमरः । " भाग रूप नामभ्य स्स्वार्थे धेयप्रत्ययो वाच्य " इति धेय प्रत्ययः । भवनं गेहं, स्थानमिति यावत् । यद्वा भवनं भावः स्वरूपमिति. यावत् । कल्याणजालानां मङ्गळसमूहाना मास्पदं स्थानं, जटाटीरः परमेश्वरः " अहिर्बुध्यो जटाटीरो जटाजूटोऽग्निलोचन " इति पञ्चाशन्निघण्टुसारे । तस्येदं जाटाटीरं तस्येद मि त्यण् । तस्य तपसः चित्तैकाग्रचलक्षणस्य फलम् । परिपाकभूत मित्यर्थः । किलकिलेति ध्वने रनुकरणोऽयं शब्द स्तान्तः किलकिलदिति, पटपट दितिवत् । किलकिल युक्तो लीलाशुकः किलकिल्लीलाशुकः किलकिलध्वनिकारि विलास-कीरः, तेन आह्लादितं सन्तोषितम् । परिमौळि मौळौ, "अव्ययं विभक्तीति" विभक्त्यर्थेऽव्ययीभावः । कञ्चन कञ्चित् । सुधाधाराधरं सुधाधाराणां धरः धारकः तं अमृतप्रवाहधर मित्यर्थः, चन्द्र मिति यावत् । यद्वा धाराधरः, घनाघनः, वार्षिकमेघ इत्यर्थः । तम् ; चन्द्र मिति यावत् । सादरं सप्रेम यथातथा, बिभ्राणं त त्प्रसिद्धं, मह स्तेजः अर्था त्पार्वती मे मह्यम् , अमुद्र ममित मानन्दकन्दं सन्तोष-सम्पादकं भद्रं कल्याणं आकलयतां वितरत्विति प्रार्थनायां लोट् । आनन्दकन्द मिति महसो विशेषणं वा । आनन्दस्य कन्दं मूलं निधि मिति यावत् ; यद्वा- आनन्दरूपं कं जलं ददातीति आनन्दकन्दम् । अत्र प्रालेयाचलसम्बन्धीनां भाग्यानां प्रालेयाचलमेव आस्पदं भवति; नतु तद्भिन्नम् । " अदृष्ट स्यात्मनिष्ठत्वा " दिति न्याय मुल्लङ्घ्य प्रालेयाचलभागधेयानां पार्वती आस्पदमिति वर्णनेन विरोधः प्रतीयते । अनन्तजन्मार्जितसुकृतवशा द्धिमवतः पार्वतीरूपपुत्रीलाभ इति कृत्वा, भागधेय-जातायां तस्यां भागधेयाश्रयत्वं सिद्धमेव । मृज्जातस्य घटस्य मृदाश्रयत्वमेवेति तत्परिहरश्च

व्यज्यते । यद्वा तस्य विरोधस्य भवनं भाव इत्यर्थवर्णनेन परीहारः हिमवतो भागधेयमेव पार्वती रूपेण परिणतं; मृद् घटात्म नेवेति तदाशयात्। कल्याणजालास्पद मित्यनेन भक्तेभ्य स्सकल-कल्याणदानशौण्डीर्यं व्यज्यते । तपःफल मित्यनेन, शिवसम्बन्धिनी चिरसञ्चिता तपोलता पार्वतीरूपं फलं जनयाम्बभूवेति व्यज्यते । तेन च परमेश्वरेणापि दक्षिणामूर्तिरूपिणा पार्वत्यर्थं तपः कृत मिति पार्वत्याः परमेश्वरमनोमोहनक्षमनिरतिशयसौन्दर्यं व्यज्यते । किलकिलदिति विशेषणेन लीलाशुक मपि मनोहरां ध्वनि मध्यापयन्ती तेन आह्लादिता भवतीति शुकादपि मञ्जुभाषिणीति व्यज्यते । किञ्च स्वाध्यापितशुकध्वनिश्रवणाह्लादशालिनीयं ममापि कांश्चन बीजवर्णान् उपदिश्य तदुप-देशजनिते नानेन ग्रन्थेन सन्तुष्यतीति कव्याशयात् कवौ पार्वत्याः परमादरो व्यज्यते । तृतीय पादेन चन्द्रव दमृतप्रवाहजनकं मामकं काव्यं सादरं पार्वती शिरसा गृह्णात्येव वात्सल्यादिति कव्या-शयो व्यज्यते । भद्र स्यामुद्रत्वविशेषणेन कवे र्मोक्षाभिलाषो व्यज्यते । नहि तद्भिन्नकल्याणस्य मुद्राभावः क्वापि दृश्यते । ब्रह्माद्यैश्वर्याणा मपि मुद्रणदर्शनात् । आनन्दकन्दमिति महसो विशेष-णेन उदकव दमित मतिसुलभं च मोक्षानन्दं प्रयच्छतीति सर्वोत्कृष्टतां पार्वत्या व्यज्यते । मह इति-तेजोवाचिशब्देन स्वयं प्रकाशत्वं स्फुटति । तेन च परमात्मस्वरूपिण्ये वेयम पीति सिद्धम् । अथ अत्र महसि भागधेयभवनत्वरूपणा द्रूपकालङ्कारः । भाव इत्यर्थेतु - भागधेयजन्यायां पार्वत्यां भागधेयस्वरूपत्ववर्णनेन हेत्वलङ्कारः । "हेतुहेतुमतो रैक्यं हेतुं केचित्प्रचक्षते" इति तल्लक्षणात्। तपःफल मित्यत्र अतिशयोक्तिः । परमेश्वरार्थं पार्वतीतप एव प्रसिद्धम्. नतु पार्वत्यर्थं परमेश्वरतप इति । पार्वत्या श्शिवतपःफलत्वासम्बन्धेपि तत्सम्बन्धोक्ते रतिशयोक्तिः । यद्वा चन्द्रचन्द्रिकयो रिव अविनाभूतयो र्माय ब्रह्मणो श्शिवाशिवयोः सतोः; शिवायाः शिवतपःफलत्वासम्भवेऽपि तत्सम्बधोक्ते रतिशयोक्ति रिति वा । किलकिल दिति विशेषणेन परिकरालङ्कारः । सुधाधाराधर मित्यत्र रूपकम् । विवक्षितरूपादपि चारुतरेण रूपान्तरेण शिवाया अभिधाना त्पर्यायोक्तम् । सर्वेषा मङ्गाङ्गिभावेन सङ्करः । प्रौढिर्नाम गुणः । "प्रौढि रुक्तेः परीपाक" इति लक्षणात् ॥ २

अव. अथ तस्या एव स्वाभीष्टदेवताया मन्दस्मितं प्रार्थयते--

श्लो॥ क स्त्वं घोरविलोचनोऽसि भुजगोत्तंसः कपाली जटी
देव्या श्शासन मन्तरेण भगव न्नन्तःपुरं मागमः
इत्थं द्वारि निवारितं पुरहरं निध्याय दौवारिकै
र्य न्मात र्विदधासि मन्दहसितं दद्या त्त दिष्टानि नः ॥

क स्त्व मिति । घोरविलोचनः घोराणि भीषणानि विकृतानि वा विलोचनानि नेत्राणि त्रीणि यस्य स तथोक्तः । यद्यपि द्वयो र्नेत्रयो र्न विकृतत्वं । तथापि तृतीय साहित्या त्परस्परापेक्षया त्रीण्यपि विकृतान्येवेति बोध्यम् । यद्वा घोरं भयङ्करं विलोचनं तृतीयनेत्रं यस्य स तथोक्तः । सर्व

जगत्संहारहेतुत्वा त्तस्य भयङ्करत्वम् । अथवा, घोरं विकृतं विलोचनं यस्येति, तृतीयस्य विकृतत्वंनाम फालगतत्वमेव स्वस्थानगतत्वा द्भुवो रथस्थयो र्न विकृतत्वम् । अस्य च अस्थानगतत्वा द्विकृतत्व मिति भावः । एतेन नतु पुण्डरीकाक्ष इति ध्वन्यते । भुजगोत्तंसः भुजगाः सर्पाः उत्तंसानि भूषणानि कुण्डलकटकहारयज्ञोपवीतादिरूपाणि यस्य सः । न केवलं विकृतरूपः किन्तु विकृताभरणोऽपीति भावः । एतेन नतु वनमाली इति ध्वन्यते । कपालं छिन्नब्रह्मपञ्चमशिरोरूपं यस्य सः । मत्वर्थीयोऽत इनिः । एतेन परमदरिद्रः । तत्रापि भिक्षितुं मृण्मय पात्रमपि नास्तीति फलितम् । अत्र नतु चक्रपाणिः । नच श्रीपति रिति च ध्वनिः । जटाः अस्य सन्तीति जटी । व्रीह्यादित्वा दिनिः । नतु केशव इति ध्वनिः । एतादृशविशेषणविशिष्टः त्वं कोऽसि । कोवा भवसि । क स्त्व मिति प्रश्नः । नतु पुरुषोत्तमः । किन्तु यः कश्चन पुरुषाधम इति ध्वनिः । एतद्विशेषणचतुष्टयं वस्तुत शिवे परमत्वमपि व्यञ्जयति । तथा हि । घोरविलोचनः सर्वजगत्संहारहेतुतृतीयनेत्रः । एतेन ब्रह्मादीन् सर्वानपि तृतीयनेत्राग्ना वुपसंहृत्य प्रळयाम्बुधा वय मेकाकी विजयते इति सिद्धम् । भुजगोत्तंसः शेषभूषः । व्यस्त्यात मिदं शेषाहिभूषेत्यत्र । कपाली ब्रह्माणमपि छित्वा तच्छिरो जग्राहेति ब्रह्मादि सर्वदेवशिक्षकत्वं सिद्धम् । जटी प्रशस्त जटः । जटानां प्राशस्त्यञ्च वीरभद्रोत्पादने प्रसिद्धम्; यद्वा मन्दाकिनीप्रवाहधारणे इति । एवं कस्त्व मिति पृष्ट्वापि तत्प्रश्नस्य प्रकृतानुपयोगित्वं मन्यमानस्सन् दौवारिकः स्वाज्ञारूपं वक्तव्य माह । देव्या इत्यादि । हेभगवन् ! षड्गुणैश्वर्यशालिन् ! इदं च सम्बोधनं जटित्वा दयं यः कोपि तपस्वी भवितु मर्हती त्यभिप्रायकृतम् । देव्याः राज्ञ्याः शासनमन्तरेण निदेशं विना । "अन्त रान्तरे णेति" द्वितीया । अन्तःपुरं पुरस्यान्त रिति योग मजह देव रूढ्या केळीगृहं बोधय त्ययं शब्दः । मागमः मा आयाहि । मा विशेति यावत् । "न माङ्योगे" इति लुङि अडागमप्रतिषेधः । "लृदित्वात् च्ले रङ् ।" (मा-गमः । इति भेदः) इत्थम् एवं, द्वारि द्वारे, दौवारिकैः द्वारपालकैः निवारितं वारितं, पुरहरं शिवं, निध्याय दृष्ट्वा, हेमातः जननि ! य न्मन्दहसितं मन्दस्मितं विदधासि करोषि । मध्यमपुरुषनिर्देशेन त्व मिति कर्ता आक्षिप्यते । तत् मन्दहसितं कर्तृ, नः अस्माकं मिष्टानि अभिलषितानि, अर्था न्मङ्गळानि, तेषा मेवेष्यमाणत्वात्; दद्यात् इत्याशिषि लिङ् वितर त्वित्यर्थः । विवाहकालिकदिव्यसौन्दर्य मपहाय रूपान्तरधारिणं मां दौवारिका निवारयेयु र्वा नवेति परीक्षार्थं, पार्वत्यपि मयि एवंविधे रतिं कुर्या द्वा नवेति परीक्षार्थं च, शिवे रूपान्तरं धृत्वा आगते सति, त तत्त्व मविज्ञाय दौवारिका स्तं न्यवारयन् । देवी तु त तत्त्वं ज्ञात्वा विचित्रेय मस्य लीलेति मन्दस्मित मकरो दिति मुख्याशयः । अत्र भुजगादिधारणजन्य-विकृताकारेण मुग्धां मां भीषयितु मायातोऽयं शिवः स्वय मेव मद्दौवारिकै र्वारितस्सन् बिभे तीति पार्वती मन्दं स्मयते इति ध्वन्यते । मन्दहसित मित्यनेन पार्वत्या उत्तमनायिकात्वं प्रतीयते । अत्र भगवद्गतविरुद्धालङ्कारादिदर्शनजन्यो भगवत्या हासो दौवारिककृतनिषेधकटुवचनादिपरितोषितो हास्य-रसता मङ्गीचकारेति वेदितव्यम् ॥

श्लो॥ क्रीडाकोप मनर्गळं शमयितुं क्षेमङ्करे शङ्करे
नम्रे सप्रणयापि तत्र कुपिता मन्दाकिनीदर्पतः
मौळिं तस्य मुहु र्मुहुः प्रहरसे येनाब्जमर्मस्पृशा
मात स्तच्चरणाम्बुजं वितरतु श्रेयांसि भूयांसि नः ॥ ४

क्रीडेति :– अनर्गळ मप्रतिबन्धं, क्रीडाकोपं क्रीडायां रतिविलासे यः कोपः तं; विलास-कलहजातरोष मिति यावत् । शमयितुं निर्वापयितुं, क्षेमङ्करे शुभकरे जगत इति शेषः, शङ्करे शिवे, नम्रे प्रणते सति, तत्र शिवे, सप्रणयापि सस्नेहापि, नमस्कारेण निवृत्तकोपापीत्यर्थः, मन्दा-किन्याः गङ्गायाः दर्पः गर्वः, भर्तृशिरश्श्लाघ्यत्वरूपः, तस्मा दिति पञ्चम्यर्थे तसिः । मन्दाकिनीदर्पतः ल्यब्लोपे पञ्चमी । मन्दाकिनीदर्पं पर्यालो च्येत्यर्थः । कुपिता सञ्जातकोपा सती । अतएव हे मातः जननि! त्वम् , शिवस्य महेश्वरस्य, मौळिं मकुटं, अब्जमर्मस्पृशा कमलसदृशेन, यद्वा चन्द्रमर्म भेदिना " अब्जो जैवातृक स्सोम " इत्यमरः। येन चरणेन मुहु र्मुहुः असकृत्, प्रहरसे ताडयसि, तच्चरणाम्बुजं पादाब्जं, नः अस्माकं, भूयांसि अमितानि, श्रेयांसि शुभानि, वितरतु ददातु । प्रार्थनायां लोट् । अत्र " दासे कृतागसि भव त्युचितः प्रभूणां पादप्रहार इति सुन्दरि नास्मि दूये " इति न्यायेन कृतापराधस्य भर्तु श्शिरसि भार्याचरणप्रहारो युक्त एव । अस्य च चरणप्रहारस्य मन्दाकिनी दर्पनिर्हरणार्थकत्वं तु कविनोत्प्रेक्षितम् । इयं च गम्या फलोत्प्रेक्षा । मन्दाकिनीदर्पत इवे तीवशब्द स्याप्रयोगात् । शिवशिरसि कृतोऽयं चरणप्रहारः तत्रस्थां मन्दाकिनीं स्पृशत्येवेति सपत्नीचरणतल-हत्या गङ्गा स्वदर्प मुत्सृज त्येवेति भावः। अब्जमर्मस्पृशे त्यनेन प्रणयकलहकृतोऽयं पादप्रहारः न पाषाणप्रहारतुल्यः किन्तु पुष्पप्रहारतुल्य इति शिवस्य तेन व्यथाभावः; प्रत्युत मृदुळतर तच्चरणाब्ज सम्बन्धेन महा नानन्द एवेति व्यज्यते । चन्द्रमर्मभेदि नेत्यर्थान्तराश्रयणेन गङ्गां बाधितु मशक्ता तत्सहचरं चन्द्रं बाधितवती पार्व तीति प्रत्यनीकालङ्कारो व्यज्यते । " बलिनः प्रतिपक्षस्य प्रतीकारे सुदुष्करे, य स्तदीय तिरस्कारः प्रत्यनीकं त दुच्यते " इति लक्षणात् । जगतः क्षेमङ्करे इत्यनेन परमेश्वरस्य वस्तुतोऽगुण स्यापि पार्वतीसम्भोगादिविलासादिकं भक्तक्षेमार्थ मेव न तु स्वार्थं, परिपू-र्णत्वा दिति व्यज्यते । भगवति जातः यः क्रीडाकोप स्स भगवन्नत्या निवृत्तः । अथ मन्दाकिनी दर्पदृष्ट्या यश्च जातः प्रकृष्टकोपः स तु तच्चरणक्षतिभि रेव निवर्त्यते । नतु साम्ना इति सामदण्डा वत्र सूच्येते । किञ्च प्रणयकोप निवारणार्थं नमस्कुर्वति शिवे तात्कालिकजटानिगूढ स्त्र्यन्तरदर्शनेन पार्वत्याः प्रकृष्टकोप आसी दिति प्रतीयते। विषमालङ्कारः । " यत्नानर्थस्य वा भवे " दित्युक्तलक्षण इति बोध्यम् ॥ ४

श्लो॥ अन्योऽन्यं विजयैषिणो र्विहसतो स्सानन्दयो स्साहसे
साटोपा दितरेतरव्यतिकरा दुद्भूतरोमाञ्चयोः

**क्षिप्रोत्क्षिप्तकराब्जयोः प्रतिमुहु र्नव्याक्षतारोपणे**
**संरम्भ श्शिवयो रमन्द विभव श्श्रेयांसि पुष्णातु नः ॥** ५

अन्योऽन्यमिति– अन्योऽन्यं परस्पर मपि, विजयैषिणोः जयाभिलाषिणोः, विहसतोः स्मयमानयोः, त्वरातत्कृतकरस्खलनादिनेति भावः । साहसे हठात्कृतिविषये सानन्दयोः, मया साहसं कृत मिति हृष्टयो रित्यर्थः । साटोपात् सम्भ्रमात् जातो यः इतरेतरव्यतिकरः अन्योन्यकटाक्षकरादि-सम्पर्कः, तस्मात् उद्भूतरोमाञ्चयोः उत्पन्नरोमहर्षयोः, प्रतिमुहुः मुहुर्मुहु रित्यर्थः । वीप्सायाा मव्ययी-भावः । क्षिप्रोत्क्षिप्तकराब्जयोः त्वरितोदस्तहस्तकमलयोः, अन्यथा पराजयभया दित्यर्थः । शिवयोः शिवाच शिवश्च तयोः पुमां स्त्रिये त्येकशेषः । पार्वतीपरमेश्वरयोः, अमन्दविभवः अमितविलासः अमूल्य इति वा नव्याक्षतारोपणे नूतनाक्षतारोपणमहोत्सवे, विवाहकालिके इत्यर्थः । यः संरम्भः सम्भ्रमः, सः नः अस्माकं, श्रेयांसि शुभानि, पुष्णातु वर्धयतु । स्वभावोक्ति रलङ्कारः । "स्वभावोक्ति रसौ चारु यथाव द्वस्तुवर्णन" मिति लक्षणम् । अत्र शिवयो रिति पदसूचिताभ्यां लोकोत्तरालम्बन-विभावाभ्यां सन्निध्या दस्मि न्नव्याक्षतारोपणादिरूपै रुद्दीपनविभावैः हासकटाक्षरोमाञ्चादिरूपै रनुभावैः क्षिप्रोत्क्षिप्तेत्यादिपदसूचितै रौत्सुक्यादिसञ्चारिभावै श्च रससार्वभौमः शृङ्गार श्चर्वणास्पदं भवति । विजयै षित्वादिविशेषणैः भटयो र्युद्धसंरम्भ इवानयो रयं संरम्भ इत्युपमालङ्कारो ध्वन्यते ॥ ५

**श्लो॥ भद्रं वपुः कथ मिदं छुरितं विभूत्या ?**
**वैयाघ्ररोमशबळं वसनं कुत स्ते ?**
**श्रुत्वैव माळिपरिहासवचो भवान्या**
**श्श्रेयः स्मितं दिशतु नो नवसङ्गतायाः ॥** ६

भद्रमिति– भद्रं मङ्गळस्नानचन्दनलेपनादिना कमनीयतर, मिदं ते वपुः देहः, विभूत्या भस्मना, अर्था च्छिवशरीरसम्बन्धिना कथं छुरितं रूषितं ? कर्पूरादिलेपनयोग्यं तव वपुः कथं वा भस्मना दूषित मित्यननुरूप घटनात्मको विषमालङ्कारः । कथ मित्यनेन सखीना मत्र विषये निर्वेदो व्यज्यते । अन्यत्र भद्रं तव वपुः विभूत्या कथं छुरितं कुत श्छन्न मिति प्रश्नः । तव, वपु ष्ययं भस्मसम्बन्धः कुत आसी दित्यर्थः । अनेन चालिङ्गनरूपं वस्तु व्यज्यते । ते तव वसनं वस्त्रम्, वैयाघ्ररोमशबळं व्याघ्राजिनरोमकलितं, कुतः कथ मिति विषादः । त्वद्वस्त्रे व्याघ्रचर्मरोमप्रवेशो दृश्यते । हा धिक् सुभगाया स्तव क्रूरपुरुषसम्बन्धोऽस्माक मतीव व्यथाहेतु रिति भावः । अन्यत्र कुतः कस्मा द्धेतोः, तव वसनं वैयाघ्ररोमशबळं भवतीति प्रश्नः । एतेन परस्परसम्मर्दो व्यज्यते । एव माळिपरिहासवचः सखीजनकृतपरिहासवाक्यम्, जात्येकवचनम् वाक्ये इत्यर्थः । पूर्वार्धेन वाक्यद्वयस्यैव प्रतिपादितत्वात् । यद्वा वाक्यानीत्यर्थः । पूर्वोक्तवाक्यद्वयं तु उपलक्षणं । तथा च– एव मादीनि वाक्यानि सखीकृतपरिहासद्योतका नीति निर्गळितार्थः । श्रुत्वा निशम्य, प्रवृत्ता मिति

शेषः । नवसङ्गतायाः नूतनसङ्गमायाः, भवान्याः पार्वत्याः, स्मितं मन्दहासः, नः अस्माकं, श्रेयः इष्टं, दिशतु ददातु । दिश अतिसर्जने इति धातोः प्रार्थनायां लोट् । अत्रालिङ्गनादिव्यञ्जकसखीपरिहासवचनरूपविभावेन स्मितरूपानुभावेन च नवोढानिष्ठो हर्षाख्य स्सञ्चारीभावो व्यज्यते इति भावः ॥ ६

अथैकेन श्लोकेन स्वनामाख्यानपूर्वकं ग्रन्थारम्भं प्रतिजानीते ।

श्लो॥ अभिनवपदपूर्वः काळिदासः प्रगल्भः
त्रिनयनदयितायाः प्रेमडिम्भ स्तृतीयः
विरचयति तयैव प्रेरितः प्रेमपूर्वं
हरिगुणपरिणद्धं चारु चम्पूप्रबन्धम् ॥ ७

अभिनवेति—त्रिनयनदयितायाः शिवप्रियायाः पार्वत्याः इत्यर्थः । क्षुभ्नादित्वा ण्णत्वाभावः । तृतीयः प्रेमडिम्भः प्रेमास्पदपुत्रः, मध्यमपदलो प्ययं समासः । मातुः कनिष्ठपुत्रो प्रेमातिशय इति प्रसिद्धिः । गणेशो ज्येष्ठः, कुमारस्वामी तु द्वितीयः, अयं तु तृतीय इति भावः । एतेन ता वुभा विव अयमपि सर्वविद्यानिधि रिति व्यज्यते । प्रगल्भः प्रौढः, अभिनवपदपूर्वः अभिनवेति पदं पूर्वं यस्य सः तथोक्तः, काळिदासः काळिदासशब्दः । शब्दपरशब्देना प्यर्थो गम्यते । यथा "देवपूर्वं गिरिं ते" इति मेघसन्देशे, "हिरण्यपूर्वं कशिपुं प्रचक्षते" इति माघे च । ततश्च, अभिनवपदपूर्वकाळिदासपदवाच्य इत्यर्थः । 'अभिनवकाळिदास' इति नाम्ना प्रसिद्ध इति भावः । अनेन नाम्ना च काळिकायाः नूतनेऽस्मिन् स्वस्य दासे अतीव प्रीति रस्तीति व्यज्यते । तयैव त्रिनयनदयित यैव । प्रेमपूर्वं सस्नेहं, प्रेरितः 'कुरु'इति, नियोजितः सन् स्वप्ने इति शेषः । एतेन अनुरूपप्रेरणासत्त्वात् ग्रन्थोऽयं सुन्दर इति व्यज्यते । हरिगुणपरिणद्धं हरेः कृष्णस्य गुणैः परित स्सर्वत्र नद्धं बद्धम् । "णह बन्धने" इति धातुः । भगवत्कल्याणगुणानपायिन मित्यर्थः । चम्पूप्रबन्धं चम्पूरूपं प्रबन्धं गद्यपद्यात्मक मित्यर्थः; चारु सुन्दरं यथातथा, विरचयति करोति । अत्र प्रगल्भ इत्यनेन पाण्डित्योज्जृम्भणं व्यज्यते । इद मेव हि प्रौढत्वं प्रकृतोपयोगि, न तु युवत्वमिति । भगवती प्रेरणासत्त्वात् भगवन्नायकत्वात् कवे श्च प्रौढत्वात् ग्रन्थोऽय मतीव सुन्दर इति ध्येयम् ॥ ७

एवं प्रतिज्ञातार्थस्य दुष्करत्वप्रकटनद्वारा स्वविनय मभिनयति ।

श्लो॥ क्वेयं मति र्मम शिशो रगभीरवाचः !
क्वेयं यदूद्वहकथा वचसा मभूमिः !
तद्वर्णनेऽपि यतमानहृदः कदापि
निर्वर्णितं निशमितं च न साहसं मे ॥ ८

क्वेय मिति श्लोकेन—शिशोः अव्युत्पन्नस्य, न तु स्तनन्धयस्येत्यर्थः । अत एव अगभीर-वाचः अप्रौढवचनस्य अर्थगौरवहीनवाक्य स्येत्यर्थः । मम इयं सर्वजनपरिचिता अत्यल्पतया सर्वविदितेति यावत् । मतिः बुद्धिः क ? वचसां श्रुतिगिरा म प्यभूमि रविषयभूता तदगोचरे त्यर्थः । इयं प्रतिज्ञाता । यदूद्वहकथा यदूद्वहस्य यदुनायकस्य कृष्णस्य कथा । चरितं क ? मह द्वैरूप्य मित्यर्थः । अननुरूपघटनात्मकोऽत्र विषमालङ्कारः । तद्वर्णनेपि तस्याः यदूद्वहकथायाः वर्णनेपि प्रख्यापनेपि यतमानहृदः प्रयतचित्तस्य “ यती प्रयत्ने ” इति धातो रनुदात्तेत्वा च्छानच् । मम साहसं अन्यसाहसस्य अन्यत्र स्थित्ययोगा न्मत्साहसतुल्यं साहस मिति निदर्शनालङ्कारः । क्वापि कुत्रापि देशे काले पुरुषे वा न निर्वर्णितं न दृष्टम् । “ निर्वर्णनन्तु निध्यानं दर्शना-लोकनेक्षण '' मित्यमरः । न निशमितं न श्रुतं च । “ शमो दर्शने ” इति मित्त्वा द्ध्रस्वः । भूतादिकालेषु, अङ्गादिदेशेषु, यः कोऽपि पुरुषः मत्तुल्यसाहसो न दृष्टश्रुतचर इति भावः । विषमाप्रतिभोत्थापितो निदर्शनालङ्कारः । अत्र साहसत्वजात्याक्रान्ततया सर्व मपि साहस मभिन्न मेवेति कृत्वा लोकसिद्धसाहसाभेदेपि स्वसाहसस्य भेदवर्णनात् भेदकातिशयोक्ति रिति रत्ना वळीकाराः ॥ ८

तर्हि दुष्करेऽस्मिन् कार्ये माप्रवर्तस्वेत्यत आह—

श्लो॥ यद्वा दयारसझरीपरिपूरितेन
मन्दारमाल्यनिकुरुम्बसहोदरेण
गौरीकटाक्षनिकरेण करम्बितस्य
किं दुष्करं मम भवे जगतां त्रयेऽपि ॥ ९

यद्वेति— दयारसझरीपरिपूरितेन कृपारसप्रवाहभरितेन अत्र रस एव रसो जल मिति श्लिष्टरूपकम् , दयार्द्रेणेत्यर्थः । मन्दारमाल्यनिकुरुम्बसहोदरेण मन्दारमाल्यनिकुरुम्बाणां मन्दार-सुममालासमूहानां सहोदरेण अनुजेन सदृशेनेत्यर्थः । धावळ्या दीप्सितदाना च्चेति भावः । एतेन पार्वतीनयनयो रधुना निरञ्जनत्वं व्यज्यते । अन्यथा कटाक्षा नीला एव स्युः । गौरीकटाक्ष-निकरेण पार्वत्यपाङ्गपरम्परया करम्बितस्य व्याप्तस्य विषयीकृतस्येत्यर्थः । गौरीकटाक्षपात्रस्येति यावत् । मम मे, दुष्करं कर्तु मशक्यं, वस्तु, जगतां लोकानां त्रयेऽपि भवे किं, स्या त्किं ? न स्या देवे-त्यर्थः । यद्वा किं भवे न्न किञ्चि दित्यर्थः । अत्र दुष्करवस्त्वभावं प्रति गौरीकटाक्षकरम्बितत्वस्य पदार्थस्य हेतुत्वा त्पदार्थहेतुकं काव्यलिङ्ग मलङ्कारः । तदुक्तम् “ हेतो र्वाक्यपदार्थत्वे काव्यलिङ्ग मुदाहृत '' मिति । गौरीकटाक्षाणामपि दुष्करकारकत्वं मन्दारेति विशेषणबला त्सिद्धम् । तस्मा दत्र परिकरालङ्कारः । तदुक्तम्- “ अलङ्कारः परिकर स्साभिप्राये विशेषणे ” इति । परिकरोत्थापित-काव्यलिङ्गोत्थापितोऽत्राक्षेपालङ्कारोऽप्यस्ति । पूर्वश्लोकोक्तकाव्यनिर्माणशक्त्यभाव स्यात्र निषेधात् ।

" आक्षेप स्स्वय मुक्तस्य प्रतिषेधो विचारणा " दिति तल्लक्षणम् । स्वस्य गौरीकटाक्षपात्रत्वे हेतु स्तु दयारसे त्यनेन व्यक्तः । निर्हेतुकजायमाना कृपैव हेतु रिति तद्विशेषणविन्यासाशयः ॥ ९

ननु स्वतः पण्डितस्य गौरीकटाक्षवशा त्कविता स्या न्नाम । कथं पुन श्शिशो स्तवे त्यत आह—

श्लो॥ प्रादुर्भवन्तु सरसानि वचांसि गौरी
कारुण्यतो मम मुखा दपि नात्र चित्रम्
नैवामृतं वमति किं कठिना शिलापि
पीयूषधामकरजालपरिग्रहेण ॥ १०

प्रादु रिति— सरसानि रसोऽत्रोपलक्षणं गुणालङ्कारादीनाम् । रसेन सहितानि सरसानि, रसगुणध्वन्यादिसहिता नीत्यर्थः । यद्वा रसप्रधाना नीत्यर्थः । रसस्य स्वात्ममात्रविश्रान्तत्वेन प्राधान्यात् । " रसो वै स " इति श्रुतेः । सरसानि सेश्वराणि भगवत्प्रतिपादकानीति ध्वन्यते । वचांसि पदसमूहात्मकानि वाक्यानि । गौरीकारुण्यतः पार्वतीकृपाया इति हेतौ पञ्चमी । मम मुखा दपि अतिजडस्य मम वक्त्रा दपि, प्रादुर्भवन्तु नाम उद्भवन्तु, नामेति प्रसिद्धिः । एतेन जडा नपि कवीन् करोती त्यघटितघटनापटीयस्त्वं मायारूपिण्या गौर्या व्यज्यते । अत्र विषये, चित्र मद्भुतं, न नास्ति । कुत एत दित्यत्र दृष्टान्त माह । कठिना कर्कशापि, शिला चन्द्रकान्त दृषत्, पीयूषधामकरजालपरिग्रहेण पीयूषधाम्नः सुधामयूखस्य, करजालानां किरणपरम्पराणां, परिग्रहेण सम्बन्धेन हेतुना, अमृत मुदकं, सुधां चेति गम्यते । न वमति किं? न स्रवति किं? किन्तु स्रव त्येव । एवेति वाक्यालङ्कारे । यद्वा न वमत्येव कि मित्यन्वयो बोध्यः । वमती त्यस्य वमनरूपं मुख्यार्थं त्यक्त्वा गौणस्य स्यन्दनरूपस्यार्थस्य विवक्षितत्वा च्चारुत्वम् । तदुक्तं दण्डिना । " निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम् । अतिसुन्दर मन्यत्र ग्राम्यकक्षां विगाहते " इति । दृष्टान्तालङ्कारः स्फुट एव । अत्र पीयूषधामकरजालव द्गौरीकटाक्षलहरीणा ममृतस्यन्दनं चन्द्रकान्तव त्कवेः परिशुद्धत्वं च व्यज्यते॥ १०

अथ सुकवीन् प्रार्थयते—

श्लो॥ दोषं विमुञ्चत गुणांश मुदार मत्र
सन्तः प्रतीच्छत गुणैकदृशो दयार्द्राः
त्यक्त्वा कळङ्क मनवद्यसुधांशुखण्ड
मीशो बिभर्ति शिरसा न कि मादरेण ॥ ११

दोष मिति—गुणैकदृशः गुणानेकान् पश्यन्तीति तथोक्ताः । यद्वा गुणे ष्वेका मुख्या, दृक् दृष्टिः ज्ञान मिति यावत्, येषां ते तथोक्ताः, विद्यमानदोषत्यागपूर्वकं गुणमात्रग्राहिण इति भावः।

दयार्द्राः दयया कृपया, आर्द्राः शीतलाः, हे सन्तः विद्वांसः! अत्र काव्ये दोषं विमुञ्चत त्यजत। उदार मधिकं, गुणांशं गुणभागं, प्रतीच्छत स्वीकुरुत यूय मिति कर्तृपदाक्षेपः। अत्र दोषत्यागस्य दयार्द्रत्वं हेतुः। गुणस्वीकारस्य गुणैकदृष्टित्व मिति। "पदार्थहेतुकं काव्यलिङ्गद्वयम्।" यद्वा साभिप्रायत्वा द्विशेषणद्वयस्य परिकरालङ्कारद्वयम्। ननु दोषसत्वे सर्वोऽपि प्रबन्ध स्त्याज्य एव। "त दल्प मपि नोपेक्ष्यं काव्ये दुष्टं कथञ्च" नेति दण्डिवचना दत आह। कळङ्कम् चिह्नम्, अर्थात् तत्सन्निहितं कलांशं च, त्यक्त्वा विहाय, अनवद्यसुधांशुखण्डं निर्दुष्टचन्द्रशकल, मीश शिवः, निष्कळङ्कचन्द्रान्तरनिर्माणसमर्थ इति भावः। आदरेण प्रेम्णा, न तु निर्बन्धे नेति भावः। शिरसा मौळिना, न त्ववयवमात्रेणेति भावः। न बिभर्ति किं, न धत्ते किम्? बिभर्त्येवेत्यर्थः। न तु क्षणमात्रं धृत्वा त्यज तीति भावः। दृष्टान्तालङ्कारः। 'य द्य दाचरति श्रेष्ठ स्त त दे वेतरे जना' इति न्यायेन परमेश्वरेण य दाचरितं कळङ्कत्यागपूर्वकचन्द्रशकलस्वीकाररूपं कर्म; त दधुनातना विद्वांसोऽप्यनुकुर्यु रेवेति कव्याशयः। सुधांशुखण्ड सादृश्यप्रतीत्या ग्रन्थस्य सुधारसस्रावकत्वं प्रतीयते ॥ ११

स्वकाव्यस्य इतरकाव्यवैलक्षण्यं प्रतिपादयति।

श्लो॥ उपक्रम्य स्तोतुं हरि मिह हि वात्स्यायनकथा
मुधा माघादीना मिव कृतिषु नैव प्रकटिताः
गुणै श्श्लिष्टा किन्तु प्रतिपद मुदारै र्मुररिपो
रपारा काऽप्येषा प्रसरति सुकाव्याऽमृतझरी ॥ १२

उपक्रम्येति- इहाऽस्मिन् काव्ये, माघादीनां माघः कवि रादि र्येषां तेषां माघभारविप्रमुखकवीना मित्यर्थः। नायकेन भगवता भगवदंशेन वा भाव्य मिति तदन्यदुष्प्रभुप्रतिपादकानां काव्याना मसत्त्वेन "काव्यालापांश्च वर्जये" दिति निषेधकोटिगतत्वा त्तत्प्रसङ्ग मपहायैव भगवन्नायककाव्य-साम्यं स्वग्रन्थ स्याशङ्क्य, नायकांशे साम्ये सत्यपि वर्णनांशे विशेषोऽस्तीति प्रकटयितुं माघादि-ग्रहण मिति बोध्यम्। तमेव विशेषं दर्शयति हरि मित्यादि। हरिं भगवन्तं स्तोतु मुपक्रम्य प्रारभ्य, भगवत्स्तुत्यर्थं प्रवृत्तो भूत्वेत्यर्थः। मुधा वृथा, वात्स्यायनकथाः वात्स्यायनः कामतन्त्रा-चार्यः, तस्य कथाः ग्राम्यधर्मप्रसङ्गा इत्यर्थः। न प्रकटिता एव न वर्णिता एवेत्यर्थः। मया इति कवेः कर्तु राक्षेपः। मयेह वात्स्यायनकथा न प्रकटिता इत्यन्वयः। माघादिषु हि द्वित्रेषु सर्गेषु हरिकथा मुपवर्ण्य समनन्तरं भूयोभिः सर्गैः हरिकथाभि रसंस्पृष्ट मन्यदेव वर्ण्यते। प्रकृते तु काव्ये आग्रन्थसमाप्ति हरिकथा एव वर्ण्यन्ते। नतु तदसंस्पृष्ट मन्य दिति माघादिकाव्येभ्य स्स्वकाव्यस्य तत्कर्तृभ्यो माघादिभ्य स्स्वस्य च वैलक्षण्यं स्पष्टम्। न च स्वकाव्येपि "मुग्धे कथं कञ्चुलिकां दधासी" त्यादौ वात्स्यायनकथा वर्ण्यन्त एवेति माघादिवैलक्षण्यं नास्येति वाच्यम्। भगवत्क्रीडावर्ण

नस्य कर्तव्यत्वात् । माघादिषु तु तत्सैनिकादिक्रीडावर्णन मिति विवेकः । इद मेव वैलक्षण्यं स्फुटयति । गुणै रिति- किन्तु प्रतिपदं पदे पदे, वीप्साया मव्ययीभावः । मुररिपोः कृष्णस्य, सम्बन्धिभिः उदारै र्महद्भिः कल्याणगुणैः, श्लिष्टा मिश्रिता, अपारा अनवधिः काऽप्यनिर्वचनीया एषा प्रतिपाद्यमाना । सुकाव्याऽमृतझरी शोभनकाव्यामृतप्रवाहः, अमृतं रसः, तदेवामृतं सुधेति श्लिष्टरूपकम् । प्रसरति प्रवहति, स्वग्रन्थपरिशीलने तु भगवद्गुणश्रवणजन्यं सत्काव्यास्वादजन्य श्चानन्दो भवतीति भावः । अनेन एतत् ग्रन्थाध्येतॄणां मोक्षलक्षण ममृत मपि करतलामलक मिति अमृतपदेन सूच्यते । गुणैः श्लिष्टा झरी प्रसरती त्यनेन भगवद्गुणबद्धा सती काचन तरुणी राधाभिधा अत्र ग्रन्थे प्रकर्षेण सरति वर्णिता भवतीति स्वकल्पितराधामाधवकथा च सूचिता भवति । सुकाव्यामृतत्व मेव प्रपञ्चयति ॥ १२

श्लो॥ कथैकघटनापरै स्त्रिचतुरै रसव्यञ्जनैः
कृति र्मम युता भवे दिय मसारपद्यै र्न वा
न तेन सकला तथे त्यरुचि माददध्वं बुधा!
वधारयत यत्नतः प्रतिपदं ध्वने र्जृम्भणम् ॥ १३

कथेति— कथैकघटनापरैः कथाया एवैकस्याः घटनायां परैः निष्ठितैः, कथामात्रप्रयोजकै रित्यर्थः । अतएव असद्व्यञ्जनैः— असती अविद्यमाना व्यञ्जना तन्नामका वृत्तिः येषु तैः, व्यञ्जनाव्यापारशून्यैः, 'अव्यङ्ग्य मधमं स्मृत' मिति काव्यस्य अधमत्वप्रयोजको हेतु रव्यङ्ग्यत्व मेवेति तथाविधै रव्यङ्ग्यै रिति भावः । त्रिचतुरैः त्रीणि चत्वारि वा त्रिचतुराणि, तैः कतिपयै रित्यर्थः, अत्यल्पै रिति यावत् । असारपद्यैः सारभूतरसरहितश्लोकैः, इयं मम कृतिः युता भवेत् नवेति संशयः । अतिविरळेऽस्मिन् ग्रन्थे त्रीणि चत्वारि वा पद्यानि अव्यङ्ग्यानि सन्तु यद्वा न सन्तु । तावन्मात्रनिस्सारपद्यसत्त्व मपि सन्दिग्ध मेव । तदतिरिक्तानि सर्वाणि पद्यानि तु सव्यङ्ग्या न्यत उत्तमा न्येवेति भावः । अनेन ग्रन्थस्य अतिविरळता व्यज्यते । तेन तावन्मात्रेण सकला समस्ता, कृतिः ग्रन्थः, असारेति नीरसेति, अरुचि मप्रीतिं नाददध्व न कुरुत ! हे बुधाः विद्वांसः ! सहृदया इति यावत् । किन्तु यत्नतः प्रयत्नपूर्वकं प्रतिपदं पदेपदे, ध्वनेः व्यङ्ग्यस्य जृम्भणं विकासम् । वधारयत विचारयतेत्यर्थः । "वष्टि भागुरि रल्लोप मवाप्यो रुपसर्गयो" रिति अकार-लोपः । व्यङ्ग्य स्यात्यन्तासत्त्वे तु काव्य मधमं स्यात् । न च कतिपयस्थलेषु व्यङ्ग्यासत्त्वे । तस्मात् प्रायश स्सर्वत्रापि व्यङ्ग्यस्फुरण मस्त्ये वेति कृत्वा तद्विचारण मेव बुधाना मावश्यकं; न तु तदभावस्थलप्रयुक्तानादर इति भावः ॥ १३

अथ स्वविवक्षितां कृष्णकथां प्रस्तोतुं तत्कथामूलभूतभागवतप्रवर्तकं परीक्षितं स्तौति सप्तश्लोकैः ।

श्लो॥ आसी दसीममहिमामहनीयरूप
रूपानुरूपचरित स्सुकृतप्रधानः
राजा परीक्षिदभिधो यदजस्रदान
नीरै रुपैति मरुभूमि रनूपभावम् ॥ १४

आसी दिति ॥ असीममहिमा नास्ति सीमा मर्यादा यस्य सः । असीमा महिमा महत्वं यस्य स तथोक्तः, अनन्तमाहात्म्य इत्यर्थः । एतेन परीक्षितो भगवदंशत्वं व्यक्तं । महनीयरूपरूपानुरूप चरितः प्रशस्तं महनीयं महनीयरूपम् । प्रशंसायां रूपप् । तच्च तद्रूपं कुण्डलमुक्ताहारनूपुराङ्गदादि चतुर्विधभूषणाभावेपि भूषितत्व दवभासमान आकारविशेषः । तदुक्तम् - "आवेध्यारोप्यविक्षेप्यबन्धनीयै रभूषितं– य द्भूषित मिवाभाति त द्रूप मिति कथ्यते" इति । तस्य अनुरूप मनुगुणं, चरित माचरणं यस्य स तथोक्तः । न केवल मस्य रूप मतिमहनीयं किन्तु चरित मपि तद्वदे वेत्यर्थः । यद्वा महनीयं रूपं यस्य स चासौ रूपानुरूपचरितश्चेति कर्मधारयः । कुत एव मत आह- सुकृत प्रधानः सुकृतानां पुण्यानां, प्रधानो मुख्याश्रयः, पूर्वजन्मार्जितपुण्यबहुळपरिपाकभूतत्वा दस्य महनीयरूपादिक मिति भावः । यद्वा सु कृतं प्रधानं यस्य सः "मयूरव्यंसकादित्वा" द्विशेषणस्य पूर्वनिपाताभावः । उत्कृष्टसुकृत इत्यर्थः । अथवा सु शोभनं कृतं कृति राचरणं येषां ते सुकृताः, तेषु पुरुषेषु प्रधानः उत्तमः, पुरुषोत्तम इत्यर्थः । पुरुषोत्तमांशत्वे नास्यापि पुरुषोत्तमत्वा न्महिमादि सत्त्व मिति भावः । महामात्रः प्रधान स्स्या दिति वोपालितकोशा त्प्रधानशब्दः पुंलिङ्गोऽप्यस्तीति बोध्यम् । परीक्षि दभिधः परीक्षि दि त्यभिधा नाम यस्य सः, राजा नृपतिः, राजशब्दप्रयोगस्वार स्यात् क्षत्त्रियोऽय मिति व्यज्यते । यद्वा राजा चन्द्र, आसीत् । चन्द्रवंशजत्वा त्परीक्षित श्चन्द्रत्वेन व्यपदेश इति परीक्षितो वंशोऽपि व्यक्तः । महिमादिक मेव विवृणोति । यदिति, यदजस्रदाननी रैः यत्सन्ततवितरणोदकैः; गोभूहिरण्यादिदानेषु हि जलधारां वितरन्ति । स एष परीक्षिदभिधान इति वक्ष्यमाणगद्यस्थतच्छब्दे नास्य यच्छब्दस्य वक्ष्यमाणश्लोकगतयच्छब्दानां चान्वयः । मरुभूमिः निर्जलप्रदेशः, अनूपभावं जलप्रायतां, उपैति प्राप्नोति, वर्तमाननिर्देशेन अधुना जलप्रायतया दृश्यमाना स्सर्वा अपि भूमयः परीक्षितः प्राक्काले मरुभूमय एवेति ध्वन्यते । रूपानुरूपचरिते त्यत्र समालङ्कारः । मरुभूमे र्जलप्रायत्वासम्बन्धेपि तत्सम्बन्धोक्ते रतिशयोक्तिः । तया च राज्ञो निरतिशयौदार्यं व्यज्यते । तेन च महाभाग्यं वस्तु व्यज्यते ॥ १४

श्लो॥ कन्दर्पदर्पदमनाय पुरा पुरारि
र्नेटाललोचनभवस्य कृपीटयोनेः
क्रोधानलं रिपुमहीपचमूचमूरु-
पञ्चाननस्य युधि यस्य विवर्त माहुः ॥ १५

कन्दर्पेति । रिपुमहीपचमूचमूरुपञ्चाननस्य रिपुमहीपानां शत्रुभूपानां, चमू स्सेना, सैव चमूरु र्हरिणी, तस्याः पञ्चाननस्य सिंहस्य, चम्वा एकत्वा चमूरो रप्येकत्वेन निर्देशः । अन्यथा भिन्नवचनत्वदोषापत्तेः । नच उपमाया मेव तद्दोषः न तु रूपके इति वाच्यम् । औपम्यस्यैव रूपक बीजत्वेन भिन्नवचनत्वे सति औपम्यदोषात् , इति । यद्वा, चमूरिति जात्येकत्वं ततश्च सेनाया अपि अवयवबहुत्वे सत्यपि जात्येकत्वा दुभयो रौपम्य मविप्रतिपन्न मिति बोध्यम् । अथवा रिपुमहीप-चमूना मेव चमूरूणा मिति बहुत्वव्याख्यानमेव सम्यक् । एतेन पञ्चाननतुल्यपराक्रमत्वं राज्ञो व्यज्यते । पञ्चाननस्य पुरत श्चमूरूणां यथा न स्थितिः एवं परीक्षितः पुरतः रिपुभूपसेनाना मिति । युद्धं विनैव अस्य सर्वराजजय स्सिद्ध इति भावः । यस्य परीक्षितः युधि युद्धे, जात मिति शेषः । क्रोधानलं कोपाग्निं, यद्वा युधि सत इति शेषः । यस्य क्रोधानल मित्यन्वयः । पुरा पूर्वकाले, कन्दर्पदर्पदमनाय मन्मथगर्वनिबर्हणार्थम् , तन्नाशनायेत्यर्थः; तादर्थ्ये चतुर्थी । पुरारिनैटाललोचनभवस्य निटाले फाले भवः नैटालं, तत्र भव इत्यण् । "फालो निटालो निटल" इति वैजयन्ती । तच्च तल्लोचनं नयनं, पुरारे नैटाललोचनं पुरारिनैटाललोचनं शिवफालस्थनेत्रं, तत्र भवस्य उत्पन्नस्य, मन्मथं हन्तुं शिवफालनेत्रा दाविर्भूतस्येति भावः । कूपीटयोनेः अग्नेः, विवर्तं परिणामं रूपान्तर मिति यावत् । आहुः वदन्ति, कवय इति शेषः । अत्र विशिष्टयो र्धर्मिणो रैक्यारोपा न्निदर्शनालङ्कारः । "वाक्यार्थयो स्सदृशयो रैक्यारोपो निदर्शने" ति लक्षणात् । यद्वा क्रोधानलस्य फालनेत्राग्निविव-र्तत्वासम्बन्धेपि तत्सम्बन्धोक्ते रतिशयोक्तिः । राजकोपे आरोपितोऽनलः न साधारणः किन्तु शिव-फालस्थित एवेति अपह्नवो व्यज्यते । तेन च रिपुक्षयः क्षणा त्कृत इति वस्तु व्यज्यते ॥ १५

श्लो॥ यस्यातिवेलधवळे ष्वखिलार्णवेषु
भासै रमन्दविभवस्य यशस्सुधांशोः
श्वेतच्छदा स्सलिलदुग्धविभागविद्यां
धन्या ममन्यत चिरा दितरै र्दुरापाम् ॥ १६

यस्येति ॥ अमन्दविभवस्य अमितैश्वर्यस्य, यस्य राज्ञ स्सम्बन्धिनः यशस्सुधांशोः कीर्तिरूप-चन्द्रस्य, भासैः कान्तिभिः, 'भासो भासि खगे गोष्ठे' इति भास्करः । अखिलार्णवेषु "लवणेक्षुसुरा सर्पिर्दधिक्षीरजलार्णवा" इति सप्तसु समुद्रेषु, अतिवेलधवळेषु सत्सु, भृशं श्वेतेषु सत्सु 'अतिवेल भृशात्यर्थे ' त्यमरः । श्वेतच्छदः हंसः, जात्येकवचनम् हंसा इत्यर्थः । हंसा स्तु श्वेतगरुत इत्यभि धानात् । चिरा द्बहुकालं, स्वनिष्ठा मिति शेषः । इतरैः अन्यैः जन्तुभिः, दुरापा माप्तु मशक्यां, सलिलदुग्धविभागविद्यां सलिलदुग्धयोः उदकक्षीरयो, र्विभागः विवेचनं, स एव विद्या तां, धन्यां सफलां, अमन्यत मेने । क्षीरसमुद्रव त्सर्वसमुद्राणां श्वेतत्वेन अयं क्षीरसमुद्रः अयं जलार्णवः इति विवेकः । हंसान् ऋते नान्येषा मभव दिति भावः । हंसानां मानसावासत्वेन मानससरसः जलमय

त्वात्, मन्निवासभूतं सरः क्वास्तीति सर्वत्र विचिन्वानाः हंसाः "स्वविषया इदं जल मिदं क्षीर मिति विविच्य" स्वनिवासं जानन्तीति ध्वन्यते । एतेन सर्वभूमण्डलव्यापिनी राजकीर्ति रिति वस्तुध्वनिः । १६

श्लो॥ आश्रित्य जन्मभवनं रिपुभूपतीनां
यस्य प्रतापरवि राश्रयनाश मेषाम्
कृत्वा ततो धनपदाक्रमणं विधाय
तद्विक्रमक्षयवशेन बभूव सौम्यः ॥ १७

आश्रित्येति– यस्य राज्ञः प्रतापरविः तेजोरूप स्सूर्यः, रिपुभूपतीनां शत्रुनृपाणां, जन्म भवनं, उत्पत्तिगृहं, लक्षणया तादृशगृहवर्ती राजधानीम् आश्रित्य आक्रम्य, एषां रिपुभूपतीनाम् आश्रयनाश स्थानभ्रंशं कृत्वा उच्चा ट्येत्यर्थः । ततः तदनन्तरं, धनपदाक्रमणम् कोशगृहक्रन्ति, विधाय कृत्वा, धन गृहान प्याक्र म्येत्यर्थः । तद्विक्रमक्षयवशेन तेषां शत्रुभूपानां विक्रमस्य पराक्रमस्य, क्षयवशेन नाशा दित्यर्थः क्षीणपराक्रमत्त्वा त्तेषु शरणागतेषु स स्त्वित्यर्थः । सौम्यः प्रसन्नः बभूव, शरणागतरक्षकत्वा दिति भावः । तेजोरूप स्सूर्य इति य दुक्तं तत्र तेजःपक्षो व्याख्यातः । सूर्यपक्षे तु रविः रिपुभूपतीनां जन्म भवन मुदयराशिं लग्न मिति यावत् । आश्रित्य प्राप्य एषा माश्रयनाशं स्थानभ्रंशं, कृत्वा 'स्थानं जन्मनि नाशये द्दिनकर' इति सिद्धान्तात् । ततः धनपदं द्वितीयस्थानं, द्वितीयं धनवा-ग्वित्तमिति तत्सङ्केतात् । तस्याऽक्रमणं विधाय, द्वितीयराशिं प्राप्येत्यर्थः । त ततः विक्रमक्षयवशेन तृतीयस्थानप्राप्त्या 'निवेश श्शरणं क्षय' इत्यमरः । तृतीयं भ्रातृविक्रम इति सिद्धान्ता दिति बोध्यम् । 'सौम्यः मृदु श्शुभप्रद' इति यावत् । बभूव षट्त्रिदशस्थो भानुरिति शास्त्रा दिति भावः । रूपकोत्थापितः श्लेषालङ्कारः; श्लेषोपजीवितं रूपक मिति वा । ध्वनि स्तु न भवति । विशेष्यस्य अश्लिष्टत्वात् । तेन च यथा रवि र्नमस्काराद्याराधनेन समाधेयः न तु विक्रमेण, तद्व द्स्य प्रता-पोपीतिप्रतापस्य निर्गळत्वं व्यज्यते ॥ १७

श्लो॥ यत्स्वातिवृष्टिजनितानि यशोनिभानि
मुक्ताफलानि दिगधीशकिरीटशाणैः
उत्तेजिता न्यहह दिग्वरवर्णिनीनां
हारन्ति सत्कविगवीगुणगुम्भितानि ॥

यदिति– यत्स्वातिवृष्टिजनितानि । स्वस्य धनस्य अतिवृष्टि स्स्वातिवृष्टिः 'ख मज्ञातिधना-ख्याया मित्यत्र स्वशब्दस्य धनवाचकत्वं स्फुटं, स्वातौ स्वातीनक्षत्रे वृष्टिः स्वातिवृष्टिः 'वृष्टि र्वर्षं' मित्यमरः । यस्य स्वातिवृष्टि रेव स्वातिवृष्टि रिति श्लिष्टरूपकम् । ततो जनितानि जातानि, यत्स्वाति

वृष्टिजनितानि यत्सम्बन्धिधनातिवर्षरूपस्वातीनक्षत्रवर्षप्रभूतानीति निर्गळितार्थः । यश इति-निभं मिषं येषां तानि यशोनिभानि । कीर्तिव्याजेन जातानीत्यर्थः । 'मिषं निभं च निर्दिष्ट' मिति हला-युधः । दिगधीशकिरीटशाणैः दिगधीशानां दिक्पतीनामिन्द्रादीनां, किरीटरूपैः शाणैः उत्तेजन-यन्त्रैः उत्तेजितानि सङ्घर्षितानि, मुक्ताफलानि मौक्तिकानि । सत्कविगवीगुणगुम्भितानि सता मुत्तमानां, कवीनां याः गावः वाचः, ताः सत्कविगव्यः । "गो रतद्धितलुकीति" समासान्तः टच् टित्वात् ङीप् । ता एव गुणाः तन्तवः; तैः गुम्भितानि संदब्धानि सन्ति । दिग्वरवर्णिनीनां दिश एव वरवर्णिन्यः सुदत्यः, तासां हारन्ति हारवदाचरन्ति । सुब्धातुः दिगन्तविश्रान्ता कीर्ति रिति भावः । मुक्ताफलानां यशोनिभत्ववचनादपह्नवोऽयं । स च रूपकोत्थापित इति ज्ञेयम् । यशो-निभानीत्यस्य यशोरूपाणीत्यर्थाश्रयणे तु सावयवरूपकालङ्कारः । अत्र दिगधीशाः स्वकिरीटशाणै रुत्तेजयित्वा निर्दुष्टानि मुक्ताफलानि गुणैः सन्दभ्य स्वपत्नीभ्यः दिग्वरवर्णिनीभ्यः, तेषां हारान् ददतीति नायिकाप्रसाधनं व्यज्यते । सत्कविगवीनां कल्पान्तस्थायित्वात्तद्गुम्भितयशोमुक्ताहारोपि कल्पान्तस्थायीति कीर्तेः कल्पान्तस्थायित्वं व्यज्यते । यशोमुक्ताफलानां शाणोत्तेजन कथनेन प्रसिद्धमुक्ताफलव्यतिरेको व्यज्यते । प्रसिद्धमुक्ताफलानां शाणोत्तेजनासम्भवादिति रत्नावळीकाराः । अहहेत्याश्चर्ये । अत्यद्भुतमिदमिति भावः ॥ १८

श्लो॥ स्मृत्वा यमेव कुरुपाण्डुकुलप्रतिष्ठा
माचार्यसूनुशरजालनियम्यमानम्
आविश्य कुक्षिकुहरं तरसा जुगोप
चक्रेण शौरि रतिमात्रकृपाविशालः ॥ १९

स्मृत्वेति– कुरुपाण्डुकुलप्रतिष्ठां कुरुरिति कश्चन कौरववंशमूलपुरुषः, पाण्डुरिति तद्वंश्य एव परीक्षित्प्रपितामहः । तयोः कुले कुरुपाण्डुकुले, तयोः प्रतिष्ठाम् आधारभूतमित्यर्थः । यद्यपि पाण्डुकुलमपि कुरुकुलमेव । तथापि पाण्डुकुलम् इत्यवान्तरविशेषकथनेन कुरुकुलत्वं पाण्डु-कुलेतरधृतराष्ट्रकुले एव विश्राम्यति । तस्मात धृतराष्ट्रवंशस्य पाण्डुवंशस्य च अयमेव आधारभूत इति सिद्धम् । यद्वा, मूलभूतकुरुवंशस्य तदवान्तरपाण्डुवंशस्यचायमेव प्रतिष्ठेति बोध्यम् । प्रतिष्ठा हेतुत्वात्प्रतिष्ठेति हेतुहेतुमतोरभेदेन निर्देशः । आचार्यसूनुशरजालनियम्यमानम् – आचार्यस्य द्रोणस्य, सूनोः अश्वत्थाम्नः शरजालेन ब्रह्मास्त्रसृष्टबाणसमूहेन, नियम्यमानं पीड्यमानं, अश्वत्थामप्रयुक्त ब्रह्मास्त्रजालदन्दह्यमानमिति यावत् । यं परीक्षितं । स्मृत्वैव एवकारोऽत्र अव्यवधानबोधकः, स्मृत्यनन्तरमेवेत्यर्थः, कुक्षिकुहरम् उत्तराया गर्भरन्ध्रम् आविश्य प्रविश्य, अतिमात्रकृपाविशालः अत्यर्थ दयाप्रसारः, शौरिः कृष्णः,तरसा वेगेन, चक्रेण चक्रायुधेन, जुगोप ररक्ष । चक्रेण ब्रह्मास्त्रशरजालं भित्वा गर्भस्थं ररक्षेति भावः । अत्र यमेव स्मृत्वा तरसा जुगोपेति वाक्यार्थस्य अतिवेलकृपाविशाल इति पदार्थहेतुकत्वात् काव्यलिङ्गम् । विशेषणस्य साभिप्रायत्वात्परिकरो वा । यमेव स्मृत्वेत्यनेन

न तु भगवन्तमयं सस्मार, किन्तु भगवानेवामुमिति निर्हेतुकत्वं कृपायाः व्यज्यते। अत्र आचार्यसूनुशरजालनियम्यमानं यमेव कुरुपाण्डुकुलप्रतिष्ठां स्मृत्वा विचिन्त्येत्यन्वयोऽपि सम्पद्यते। कुरुपाण्डुकुलयोः काचन प्रतिष्ठा स्यात् अनेन जीवितेन सतेति मत्वा तं ररक्षेति भावः। सर्वव्यापिनः कृष्णस्य कुक्षिकुहरप्रवेशासम्भवेऽपि तत्सम्बन्धोक्त्या विरोधो व्यज्यते। तस्य च अङ्गुष्ठमात्रपुरुषाकारधृतिपूर्वकप्रवेशोक्त्या परिहारः, स च व्यज्यते। शूरस्य अपत्यं शौरिरिति व्युत्पत्त्या आर्तरक्षणोपयोगिशौर्यसद्भावो व्यज्यते। यं शौरिर्गर्भस्थमेव सस्मारेत्यनेन परीक्षितो मुमुक्षुत्वं व्यज्यते। 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः स वै तत्त्वार्थविज्ञाता स वै मोक्षार्थचिन्तक' इत्युक्तत्वात्॥ १९

उपसंहरति– श्लो॥ किं विस्तरेण वचसामधुना य एष
कालेऽपि हन्त कलिपूरुषजृम्भणार्हे
प्रावर्तयत्सुकृतमेव पदैश्चतुर्भि
रंहःप्रवृत्तिमुपरुध्य विधिप्रक्लृप्ताम्॥ २०

किमिति– वचसां वाक्यानां, विस्तरेण अतिशयेन किम्? वागाडम्बरेण किमपि न फलमित्यर्थः। परीक्षिन्माहात्म्यप्रकटनार्थको वागाडम्बरो वृथेति भावः। कुत एतदत आह– अधुना इति। कलिपूरुषजृम्भणार्हे कलिपुरुषविकासयोग्ये, अधुनापि काले अस्मिन्नपि काले,कलियुगेपीत्यर्थः। विधिप्रक्लृप्तां दैवकृतां, अंहःप्रवृत्तिं पापव्यापारम्, अधर्मसञ्चारमिति यावत्। उपरुध्य निरुध्य। सुकृतमेव पुण्यमेव, वृषभरूपं धर्ममेवेति यावत्। चतुर्भिः पदैः अंशैः पादैश्च। यः एषः प्रकृतो राजा प्रावर्तयत् प्रवर्तयति स्म। हन्तेत्याश्चर्ये। अनेन विधिमप्यन्यथाकर्तुं शक्तस्यास्य शत्रुजयः कियान् इत्यर्थापत्तिर्व्यज्यते। कलिमपि निगृहीतवतः किमुत शत्रुभूपा इति भावः। अत्र 'धर्मसंस्थापनार्थाय सम्भवामि युगे युगे' इति भगवद्वचनप्रामाण्याद्धर्मसंस्थापकोऽयं राजा भगवदंश एवेति ध्वन्यते॥ २०

गद्यम्॥ स एष परीक्षिदभिधानो राजर्षिराकर्णितविविधमधुसूदनकथाप्रपञ्चस्ततोपि सौहित्यमनधिगच्छन्नधिगतनिखिलनिगमतत्त्वं तत्त्वविदामग्रेसरमुपशमशकलितविषयाभिनिवेशमपरिमितमहिममहितं भगवन्तं बादरायणिमद्राक्षीदप्राक्षीच्च। अयि भगवन्निशमितानि पाण्डुनन्दनप्रशंसामांसलानि जगदुद्भवप्रसङ्गसङ्गतानि रुचिरतरमुरभिदवतारलीलानिकरकरम्बितानि ध्रुवपृथुपुरञ्जनचरितभरितानि दक्षाध्वरविध्वंसप्रपञ्चकञ्चुकितानि प्रियव्रतचरित्रविचित्रितानि धरणीगोळपरिमितिनिरूपणसुरूपितानि समुद्भवदजामिळितचरितकरचितानि वृत्रवधविधानवृत्तान्तसन्दानितानि प्रह्लादकथाकदम्बकन्दळितानि वर्णाश्रमधर्ममर्मसमुदयमेदुराणि

मकरकातरीकृतसिन्धुरकथानिबन्धनबन्धुराणि दुग्धपयोनिधिमथनोद्दन्तदन्तुराणि बलिबलनियमनकथानुषङ्गतरङ्गितानि मिहिरहिमकरकुलनरपालगुणपरिशीलनकीलितानि भवदीयवदनारविन्दनिष्यन्दमानमकरन्दबिन्दुसन्दोहायितानि वचोऽमृतानि नाम॥ २१

स एषः पूर्वोक्तगुणविशिष्टः प्रसिद्धः परीक्षिदभिधानः। परीक्षिदि त्यभिधानं नाम यस्य सः राजा, परीक्षिदभिध इति नाम्न उक्तत्वेपि पुनरुक्तिस्तु कल्याणार्थः। भगवदंशभूतपुरुषनामग्रहणे हि भवति मङ्गळम्। राजा चासौ ऋषिश्च राजर्षिः। एतेन महाराजस्याप्यस्य विषयदोषानुसन्धानपूर्वकत्यक्तराजत्वं व्यज्यते। तेन च भागवतकथानुयोगयोग्यत्वं सिद्ध मिति व्यज्यते। आकर्णितः श्रुतः, विविधः बहुविधः, मधुसूदनस्य नारायणस्य, कथानां समुद्रमथनादीनां, प्रपञ्चः विस्तारो येन सः। आकर्णितविविधमधुसूदनकथाप्रपञ्चः। भागवते द्वितीयादिनवमस्कन्धपर्यन्तं ये ये भगवदवताराः तेषां कथास्सर्वा अपि श्रुत्वेति भावः। ततोऽपि तथापि सौहित्यं तृप्तिम्, सुहितार्थास्तृप्त्यर्था इति व्याख्यानात्। अलम्भावमिति यावत्। अनधिगच्छन् अप्राप्नुवानस्सन् 'क उत्तमश्लोकगुणानुवादात्पुमान् विरज्येत विना पशुघ्ना' दिति। भगवत्कथासु नहि विरतिः पुंसः कस्यापि प्राज्ञस्य भवति। एतेन अमृतादपि भगवत्कथामृत मतिशयितमिति व्यज्यते। अतएव अधिगतं निखिलानां समस्तानां, निगमानां वेदानां, तत्त्वं याथार्थ्यं येन तमधिगतनिखिलनिगमतत्त्वं, तत्त्वविद्याब्रह्मज्ञानिनामग्रेसरं अग्रे सरतीति अग्रेसरः मुख्यः, तम् अग्रेसरत्वमेव दर्शयितुं विशिनष्टि - उपशमशकलितविषयाभिनिवेशम्। उपशमेन शान्त्या शकलितः निरस्तः, विषयेषु सांसारिकभोगेषु, अभिनिवेशः आग्रहः, असक्तिरिति यावत्, यस्य तम्; अतएव अपरिमितमहिममहितं– अपरिमितेन अनवधिना महिम्ना महत्त्वेन, महितं पूज्यं अपरिमितमहिम्नाम्महानुभावानामपि महितं पूज्य मिति वा, भगवन्तं षड्गुणैश्वर्यशालिनं, बादरायणिं बदरोवृक्षः तत्सम्बन्धि बादरं वनं, तदयनं स्थानं, यस्य स बादरायणः संज्ञात्वाण्णत्वम्–व्यासः। नरनारायणनिलये बदर्याश्रमे व्यासोवसतीति प्रसिद्धिः। तस्यापत्यं बादरायणिः- अतइञ् - शुक इत्यर्थः तं; अद्राक्षीद्ददर्श- अप्राक्षी च पप्रच्छ च। यद्यपि शुकदर्शनात्प्राक् मधुसूदनकथाश्रवणमेव नास्तीति इदानी मद्राक्षीदिति शब्दप्रयोगोऽपार्थो विरुद्धश्च; तथापि परीक्षितः पुरतस्सन्तमेव शुकं प्रश्नाभिप्रायपूर्वकंददर्शेतिकथञ्चि त्समाधेयम्। प्रश्नप्रकारमेवाह अयीत्यादिना–अयीति प्रेमपूर्वकं सम्बोधनम्, हेभगवन् भगवत्कथाम्तुतिसामर्थ्याभिप्रायगर्भमिदम्। वचोऽमृतानि अमृतानीव वचांसि, उपमित समासः। अमृतस्राविषु वचस्सु अमृतत्वेन व्यपदेशः। बहुळरसभरिततत्वद्योतनार्थः। मयेति शेषः। निशमितानि श्रुतानि। नामेति प्रसिद्धे इत्यन्वयः। वचोऽमृतानि विशिनष्टि शोडशविशेषणैः। पाण्डुनन्दनानां धर्मादीनां प्रशंसया मांसलानि बलिष्ठानि। तत्प्रतिपादकानीति यावत्। एतेन भागवते प्रथमस्कन्धकथासङ्गृहीता। जगतः प्रपञ्चस्य

उद्भवप्रसङ्गेन उत्पत्तिनिरूपणप्रसङ्गेन सङ्गतानि मिश्रितानि प्रसङ्गसङ्गतानीति वा। एतेन द्वितीय-स्कन्धप्रधानकथा सङ्गृहीता। रुचिरतराणामतिमनोहराणां भगवदवताराणां कपिलादीनां लीला-निकरैः विलासजालैः करम्बितानि मिश्रितानि, अत्र तृतीयस्कन्धकथासंग्रहः। ध्रुवः प्रियव्रतपुत्रः। पृथुः वेनाङ्गजः। पुरंजनः नारदकल्पितो जीवव्यङ्ग्यो राजा। एतेषां चरितैः कथाभि र्भरितानि पूरितानी ति चतुर्थस्कन्धप्रधानकथासंग्रहः। दक्षाध्वरविध्वंसप्रपञ्चकञ्चुकितानि दक्षस्य ब्रह्मपुत्रस्य प्रजापतेः, अध्वरस्य यज्ञस्य विध्वंसप्रपञ्चः भञ्जनविस्तारः, तेन कञ्चुकितानि मिश्रितानि। अत्रापि चतुर्थस्कन्धकथासंग्रह एव। प्रियव्रतस्य राज्ञ श्चरित्रेण विचित्राणि सञ्जाताद्भुतानि। धरणी-गोळस्य भूगोळस्य परिमितिनिरूपणं परिमाणप्रकटनं, तेन सुरूपितानि सुष्ठु सञ्जातरूपाणि, रूपशब्दोऽत्र सामान्याकारेण गुणाभिधायी। यद्वा धरणीगोळपरिमितिनिरूपणे सुरूपितानि निरूपितानीत्यर्थः। एतेन विशेषणद्वयेन पञ्चमस्कन्धकथासंग्रहः। सम्य गुदञ्च दाविर्भवत्, प्रकाशमान मिति वा, य दजामीळस्य दासीभर्तु श्चरितं चरित्रं, तेन कवचितानि मिश्रितानि। वृत्रस्य त्वष्टृकृताभिचारहोमप्रभूतस्य इन्द्रशत्रो रसुरस्य, वधविधानं संहारविधिः, तद्रूपो यो वृत्तान्तः वार्ता, तेन सन्दानितानि गुम्भितानि। अनेन विशेषणद्वयेन षष्ठस्कन्धकथासंग्रहः। प्रह्लादस्य हिरण्यकशिपुपुत्रस्य, कथाकदम्बेन चरित्रविस्तारेण, कन्दळितानि व्याप्तानि। वर्णाः ब्राह्मणादयः आश्रमाः गार्हस्थ्यादयः, तेषु ये धर्माः अहिंसादयः, तेषां मर्मणां सन्दिग्धांशानां समुदयेन सम्यगाविर्भावेण, मेदुराणि दन्तुरितानि— इति सप्तमस्कन्धकथासंग्रहः। मकरेण ग्राहेण, कातरी-कृतस्य भीतिं प्रापितस्य, सिन्धुरस्य गजेन्द्रस्य, कथानिबन्धनेन चरित्रप्रतिपादनेन, बन्धुराणि निबिडानि, दुग्धपयोनिधेः क्षीरसमुद्रस्य, पयोनिधिशब्दो हि रूढ्या समुद्रं प्रतिपादयति। न तु योगरूढ्या जलार्णवं, प्रकृतासङ्गतेः। मथनोदन्तेन मन्थनवृत्तान्तेन दन्तुराणि व्याप्तानि। बलेः प्रह्लादपौत्रस्य, बलनियमनकथायाः बलसङ्कोचनवृत्तान्तस्य, अनुषङ्गेण सम्बन्धेन तरङ्गितानि सञ्जात-तरङ्गाणि व्याप्तानीति यावत् – इति अष्टमस्कन्धकथासंग्रहः। मिहिरहिमकुलयोः सूर्यचन्द्रवंशयोः ये नरपालाः सगरपुरूरवादयः, तेषां गुणपरिशीलनेन गुणप्रख्यापनेन, कीलितानि मिश्रितानि— इति नवमस्कन्धप्रधानकथासंग्रहः। अत्र विशेषणेषु अर्थैक्येऽपि मांसलादिबहुभङ्गीकशब्दप्रयोग-सत्त्वात् कवेः प्रौढत्वं गम्यते। 'प्रौढिरुक्तेः परीपाक' इति तु गुणः वचसां वक्तारं निर्दिशति— भवदीयेति–भवतः तव इदं भवदीयं, वृद्धाच्छः। तच्च तद्वदनारविन्दं च तथोक्तं। वदनमेवारविन्द मिति रूपकं। तस्मात् निष्यन्दमानः स्रवन् यः मकरन्दसन्दोहः मधुप्रवाहः तद्वदाचरितानि। कमला न्मधुबिन्दुसन्तति रिव तव वदना द्वचस्सन्ततिर्निस्सृतेति भावः॥ २१

ततः किमत आह :—

ग॥ एव ममृतसारसरसमास्वादयन्नपि भवदीय§ वचननिचयम् अनुपजात-परितोषपोष एव मदीयमानसमानसचरः॥ २२

§भवदमेय (पा)

एवमिति– एव मुक्तविध ममृतसारसरसं सुधाप्रवाहसमानरसं भवदमेयवचननिचयं त्वत्स म्बन्धिवाग्जाल मास्वादय न्ननुभवन्नपि, मदीयमानसमेव मानसचरो हंसः, अनुपजातः अनुदितः परितोषपोषः सन्तोषपुष्टिः यस्य सः तथोक्तः । अतृप्त एवेत्यर्थः । अत्र मानसस्य हंसत्वरूपेण वचसां बिससादृश्यं सूच्यते ॥ २२

**ग॥त दस्ति किञ्चि दभ्यर्थनीयम् । अय मह मिदानी माशानितम्बिनीनितम्ब बिम्बदुकूलायमानयशोनिकुरुम्बस्य निरवधिकृपावारिधे रनुगृहीतयदुमहीभृदन्वयस्य निखिललोकहितावतारस्य भगवतो गरुडध्वजस्य महिमान मवकर्ण्य निरतिशयसुख मनुभवितु मभिलषामी ति ॥ २३**

तदिति–त त्तस्माद्धेतोः, तृप्त्यभावा दिति भावः । अभ्यर्थनीयं प्रार्थनीयं किञ्चि द्वस्तु अस्ति विद्यते । तदेवाभिलषित मभिनीय दर्शयति । अय मिति :– अय मतृप्तः अहम् , इदानी मधुना, आशानितम्बिनीनां दिङ्नारीणां ' नितम्बिनीत्यत्र प्रशंसाया मिनिः ' । नितम्बबिम्बेषु कटिमण्डलेषु दुकूलायमानं दुकूलवत् क्षौमवत् आचरत् , यशोनिकुरुम्बं कीर्तिसमूहः, यस्य तस्य दिगन्तविश्रान्त-कीर्ते रिति भावः । निरवधिः अमितः,सचासौ कृपावारिधिः दयासमुद्रः । तस्य समुद्रस्य वेला अस्ति, कृपायास्तु न तथेति व्यतिरेको व्यज्यते । कृपाकृपावतो र्धर्मधर्मिणो रभेदेन निर्देशः । कृपैव वारिधिरिति रूपकम् । यद्वा कृपायाः वारिधि रिति षष्ठीसमासः । नदीनां वारिधि र्यथा विश्रान्ति-भूमिः एवं कृपायाः भगवानपीति भावः । अथवा निरवधिः कृपारूपो वारिधि र्यस्य तस्य, अनुगृही-तोऽनुकम्पितः स्वजन्मनेति भावः । यदुमहीभृतः यदुनामकस्य राज्ञ , अन्वयो वंशो, येन तस्य; यदुवंशोत्तारकस्ये ति भावः । निखिललोकानां सर्वजगतां, हितं सुखं, यस्मा त्सः, निखिललोकहितः, निखिललोकानां हितः प्रिय इति वा, अवतारः अविर्भावः यस्य तस्य सर्वलोकक्षेमार्थ मवतीर्णस्येति भावः, भगवतः ' ऐश्वर्यस्य समग्रस्य वीर्यस्य यशस श्श्रियः । ज्ञानवैराग्ययो श्चैव षण्णां वर्गो भगो मत ' इत्युक्तलक्षणषड्गुणशलिनः गरुडध्वजस्य कृष्णस्य, महिमान मनुभाव, मवकर्ण्य श्रुत्वा, निरतिशय मत्युत्तमं, सुखं मोक्षलक्षणमानन्दं, श्रवणजन्यं मानसिक मानन्दं वा. अनुभवितुं प्राप्तुम् अह मभिलषामि इच्छामी त्यन्वयः । कृष्णावतारकथाश्रवणाभिलाषो ममास्तीति भावः ॥ २३

**श्ली॥ आकर्ण्य कर्णमधुरं वचनं तदेत**
**दानन्दमन्थर ममुष्य महीमघोनः**
**वैयासकिः कथयति स्म ततो निपीय**
**कारुण्यपूरपरिपूरितया दृशैनम् ॥ २४**

आकर्ण्येति– अमुष्य प्रष्टुः महीमघोनः भूदेवेन्द्रस्य, सम्बन्धि, कर्णमधुरं कर्णयोः श्रव-णयोः, मधुरं सुभगं, श्राव्यमि त्यर्थः । अत एव आनन्दमन्थरं सुखदन्तुरं, सुखहेतु मिति यावत् ।

तदेत त्पूर्वोक्तं प्रसिद्धं वचनं प्रश्नरूपं वचः, 'अय मह' मित्यारभ्य 'अभिलषा' मीत्यन्त प्रश्नस्य एकवाक्यगतत्वात् एकवचननिर्देशः; वाक्य मित्यर्थः। आकर्ण्य श्रुत्वा, तत स्तदनन्तरम्, वैयासकिः 'व्यासशब्दा दत इञि व्यासवरुडेत्यकञ्चि । नव्वाभ्या मित्यैचि च रूप मिदम्'। व्यासापत्य मित्यर्थः; शुक इति यावत्। कारुण्यपूरपरिपूरितया दयारसझरीभरितया, दृशा कटाक्षेण, जात्येकवचनम्। एनं परीक्षितं, निपीय पीत्वा, दृष्ट्वेति यावत्। कथयति स्म जगाद। लट् स्म इति स्मयोगे लट्। दृशा निपीयेत्यत्र दृशा पान मनुपपन्नं स, दादरातिशयं व्यञ्जयतीति जहल्लक्षणामूला वस्तुध्वनिः २४

श्लो॥ महीनाथ! प्रज्ञा तव परिचिता पुण्यविभवै
रुदीता शुश्रूषा मुररिपुकथानां य दतुला
अभूमि र्वाचानां किमुत भवतः पूर्वपुरुषै
रसौ भूमा भूमाविह विरचितानां प्रतपसाम् ॥ २५

महीनाथेति— हे महीनाथ! भूपते!, तव प्रज्ञा बुद्धिः, पुण्यविभवैः पूर्वपुण्यातिशयैः परिचिता सम्पन्ना। त्वद्बुद्धेः पुण्यविभवपरिचयोऽस्तीति भावः। परिणतेति पाठे परिणामं गतेत्यर्थः। पूर्वपुण्यातिशयेन त्वद्बुद्धे रेतादृशः परिणाम आसी दिति भावः। अथवा— पुण्यविभवैः परिणता तव प्रज्ञा पूर्वपुण्यपरिणामभूता प्रज्ञे त्यर्थः। घटात्मना मृ दिव, प्रज्ञात्मना पुण्यविभवः परिणत इतिभावः यद्वा पुण्यविभवै रित्युत्तरे णान्वयः। हे महीनाथ! तव प्रज्ञा परिणता परिपक्वा, ब्रह्मणि जातनिष्ठेति भावः। कुत एत दत आह— पुण्यविभवै रिति। य द्यस्मात्, पुण्यविभवै र्हेतुना, अतुला अनुपमा मुररिपुकथानां भगवद्वार्तानां, शुश्रूषा श्रोतु मिच्छा, उदीता उत्पन्ना भवतीति शेषः। 'उत्पूर्वकादीङः कर्तरि क्तः।' 'अदन्तत्वाट्टाप्'। भगवत्कथा शुश्रूषैव बुद्धिपरिणामस्य लक्षण मिति भावः। किमुत यद्वा, असौ तवोदि तेयं हरिकथा शुश्रूषा भवत स्तव पूर्वपुरुषैः पितृ-पितामहादिभिः प्राचीनपुरुषैः, इह भूमौ अत्र भूलोके, विरचितानां कृतानां प्रतपसां प्रकृष्टतपसां, सम्बन्धी वाचानां वाक्यानां 'आपं चैव हलन्तानां यथा वाचा निशा दिशे' त्युक्तत्वात्। अभूमि रविषयः वक्तु मशक्य इति यावत्। भूमा महिमा, भवतीति शेषः। अत्र हरिकथाशुश्रूषातपोमहिम्नो र्हेतु-हेतुमद्भावः। त्वद्वंशसुकृतस्य त्वत्सुकृतस्य वा इय मेव फलभूतेति श्लोकसारः। तपोभूमजन्यायां हरिकथशुश्रूषायां तपोभूमत्व व्यपदेशा द्धेत्वलङ्कारः। 'हेतुहेतुमतो रैक्ये हेतुं केचि त्प्रचक्षते' इति लक्षणात्॥ २५

श्लो॥ इत्थ मेन मभिनन्द्य भूयसा, पारिकाङ्क्षिविभु राभिमन्यवम्
आददे सपदि वाच मादरा, न्माधुरीभि रधरीणमाक्षिकाम्॥ २६

2-3



इत्थमिति–पारिकाङ्क्षिविभुः मुनिश्रेष्टः, प्रकरणा च्छुकः, तपस्वी तापसः, 'पारिकाङ्क्षी वाचंयमो मुनि' रित्यमरः। इत्थ मुक्तप्रकारेण, एनं प्रष्टारं, आभिमन्यव मभिमन्युसुतं, 'तस्यापत्य मित्यण्' भूयसा अत्यर्थं, मभिनन्द्य श्लाघयित्वा, सपदि तत्काले एव, माधुरीभिः माधुर्यैः, अधरीण माक्षिका मधरीणं तिरस्कृतं, माक्षिकं मक्षिकाणा मिदं, तस्येद मि त्यण्, मधुकारकृतं मध्वित्यर्थः। यया तां, यस्या स्ता मिति वा तथोक्तां। मध्वपेक्षया प्यतिमधुरा मित्यर्थः। वाचं जात्येकवचनं, वाक्यानीत्यर्थः। आदरात् परीक्षिद्विषयप्रीतेः नतु निर्बन्धा दिति भावः। 'हेतौ पञ्चमी' आददे जग्राह। वक्तु मुपचक्रमे इति भावः। अधरीणमाक्षिका मित्यत्र प्रतीपालङ्कारः। 'प्रतीप मुपमान स्योपमेयत्वप्रकल्पन' मिति लक्षणात्। तेन च मक्षिकाभिः कीटैः निर्मिता न्मधुनः शुकेन महर्षिणा निर्मितं भागवत मिदं मतिमधुर मित्यत्र न विवदितव्य मिति, 'माक्षिकपारिकाङ्क्षिविभु' पदद्वयबला त्प्रतीयते ॥ २६

ग॥ स्थाने हि तत् ॥

तत् पूर्वोक्तं, शुकवाचोऽधरीणमाक्षिकत्वं, स्थाने हि युक्तमेव। योग्यता मेव प्रकटयति।

श्लो॥ अलक्षितार्था अपि लोभनीया,
द्विजस्य वाच श्शुकनामभाजः
ता एव चे दर्थयुता मुकुन्द
लीलाकुलाया अपि, किम्पुन स्स्यात् ॥ २७

अलक्षितेति– अलक्षितार्था अपि न लक्षितः अलक्षितः अदृष्टः, अर्थः अभिधेयः, येषां ते तथोक्ताः। अर्थानुसन्धानं विना पीत्यर्थः। शुकनामभाजः शुक इति नाम भजतीति शुकनाम-भाक्, तस्य द्विजस्य ब्राह्मणस्य शुकमहर्षे रित्यर्थः। वाचः गिरः लोभनीयाः आकाङ्क्ष्याः भवन्ती ति शेषः। शुकमहर्षिप्रणीता श्श्लोका श्श्रवणसमये एव आनन्दं जनयन्तीति भावः। मुकुन्दलीला-कुलायाः मुकुन्दस्य कृष्णस्य, लीलानां विलासानां, 'कुलयो नीड मस्त्रियाम्' इत्यमरः. आश्रया इत्यर्थः। इद मेव लोभनीयत्वे हेतुः। ताः वचः अर्थयुता अपि चेत् अनुसन्धितार्था अपि भवेयु श्चेत्, किम्पुन स्स्यात्, किम्पुन र्वक्तव्यं स्यात्? न कि मपीत्यर्थः। एवेति वाक्यालङ्कारे, श्रवण वेळाया मेव या आनन्दं जनयन्ति तासा मर्थानुसन्धाने आनन्दप्रदत्वं न वक्तव्यं; स्वतसिद्धत्वा दिति भावः। अत्रार्थान्तरः स्फुरति। तथाहि अलक्षितार्था अपि अर्थहीना अपि, शुकनामभाजः द्विजस्य पक्षिणः, वाचः लोभनीया भवन्ति। शुकसम्बन्धी यः कश्चन असम्बद्धप्रलापोऽपि मधुरः; स्वरे चारुत्वसत्त्वा दितिभावः। ता एव वाचः अर्थयुता श्चेत् तत्रापि मुकुन्दलीलाकुलाया अपि भवेयुश्चेत्, किम्पुन र्वक्तव्यं स्यात्? निरर्थकाना मेव कीरवाचां मधुरत्वे सति, सार्थकाना मतिमधुरत्वं सम्प्रतिपन्नमेव। तत्रापि भगवद्गुणप्रतिपादनरूपार्थवत्त्व मत्यन्तमधुर मिति सुनिर्णय मिति भावः। अत्र शुकगिरां

प्रागेव सिद्धस्य माधुर्यस्य अथहरिकथाभ्यां सम्बन्धेन अतिशया दनुगुणालङ्कारः 'प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधे' रिति लक्षणात्। विशेष्ययो रपि श्लिष्टत्वा त्त्रात्र श्लेषालङ्कारः। किन्तु ध्वनिरेव। तेन च कीरवाच इव शुकमुनिवचनानां सहजमाधुर्यं ध्वन्यते ॥ २७

अथ शुकः कृष्णकथा मवतारयितुं, कृष्णावतारहेतुभूतं कञ्चन वृत्तान्तं प्रस्तौति ॥

**ग॥ पुरा खलु निखिलसहनबिरुदधुरन्धरापि वसुन्धरा, दुस्सहमदमेदुरकंसादिमेदिनीदयितकैतवनिशाचरभर मसहमाना, परिगृह्य पयस्विनीरूप मश्रुसलिलकलुषनयनयुगळा शोकपावकपरवशनिजाशया परिदेवननिनददन्तुरितहरिदन्तरा भगवन्त मम्भोजसम्भवं शरण मभजत ॥ २८**

पुरा खल्विति– खलु प्रसिद्धौ। पुरा पूर्वकाले, निखिलानां सर्वेषां, सहनं मर्षणं, तदेव बिरुदं प्रतिष्ठा, तस्य धुरन्धरा भारवाहा, सर्वंसहेति बिरुदशालिन्यपीत्यर्थः। वसुन्धरा भूमिः, मदेन गर्वेण, मेदुराः उद्रिक्ताः, ये कंसादिमेदिनीदयिताः कंसप्रमुखा राजानः, आदिशब्देन शिशुपालादिसंग्रहः। ते कैतवं कपटं, येषां तेषां निशाचराणां रक्षसां, भरः भारः, दुस्सह श्चासौ मदमेदुरकंसादिमेदिनीदयितकैतवनिशाचरभर श्चेति कर्मधारयः। तं तथोक्तम्, असहमाना सती वोढु मक्षमा सती त्यर्थः। पयस्विनिरूपं गोरूपं, परिगृह्य स्वीकृत्य, अश्रुसलिलेन बाष्पजलेन, कलुषं क्षुब्धं, नयनयुगळं नेत्रद्वन्द्वं, यस्या स्सा तथोक्ता सती; किञ्च शोकः खेदः, सएव पावकः अग्निः, तेन परवशः परतन्त्रः, निजस्य स्वस्य, आशयः हृदयं यस्या स्सा तथोक्ता च सती; अपिच परिदेवननिनदेन विलापरवेण, दन्तुरिताणि व्याप्तानि, हरिदन्तराणि दिङ्मध्यभागाः, यस्या स्सा यया सेति वा, तथोक्ता च सती; भगवन्तं षड्गुणशालिनं अम्भोजसम्भवं ब्रह्माणं, शरणं रक्षितारं, 'शरणं गृहरक्षित्रो' रित्यमरः। अभजत आपत्। ब्रह्माणं रक्षितृत्वेन स्वीचकारेत्यर्थः। शरणागता बभूवेति भावः ॥ २८

**ग॥ सोऽपि निवेदनविदिततदीयवेदनापनोदनाय शतमखमुखसुरनिकरपरिवृत श्चतुरानन स्सहसुरभिरूपधारिण्या धरण्या पयःपयोधि मुपससर्प ॥ २९**

सोपीऽति– सोपि चतुराननः धरणीशरणीकृतो ब्रह्मापि, शतमखमुखाना मिन्द्रादीनां, सुराणां देवानां, निकरेण समूहेन, परिवृत स्सन् सुरभिरूपधारिण्या गोरूपशालिन्या, धरण्या सह भूदेव्या समं, भुवासहित इत्यर्थः। निवेदनेन विज्ञापनेन, विदितायाः ज्ञातायाः, तदीयायाः भूसम्बन्धिन्याः, वेदनायाः दुःखस्य, अपनोदनाय निवारणार्थं, पयःपयोधिं क्षीरसमुद्रम्, प्रति उपससर्प जगाम। गोरूपिणी धरा चतुराननाय स्वदुःखं व्यजिज्ञपत्। सच त दपनोदनाक्षम स्सन् स्वगुरुनिलयं दुग्धाब्धिं मगम दिति भावः ॥ २९

ग॥ तत्र ॥

तत्रेति– तत्र क्षीरसमुद्रे, सन्तमिति शेषः ।

श्लो॥ ददं कल्याणानां दध मपि कृपाया निरवधे
हनं क्रव्यादानां पिब मपि भवाब्धे श्श्रितवताम्
श्रियः पश्य भूय स्सकलजगतीधारय मसौ
विधिस्तावंस्तावं मधुरिपु मनंसी त्सविनयम् ॥ ३०

ददमिति– कल्याणानां शुभानां, ददं दातारम्; निरवधेः अपारायाः, कृपायाः दयायाः, दधं बिभ्राणं; 'ददाति दधात्यो र्विभाषेति शप्रत्ययः' क्रव्यादानां राक्षसानां, हनं हन्तारम् । 'हनधातोः पचाद्यच्' । श्रितवता माश्रितानां, सम्बन्धिनः भवाब्धेः संसारसागरस्य, पिबं पायिनं, मपहर्तारमिति यावत् । पाघ्राध्माधेड्दृशः शः इति शप्रत्यये, पाघ्राध्मेति पश्यदेशः । कर्मणः शेषत्वविवक्षायां षष्ठी कल्याणानामित्यादौ बोध्या । भूयः बहुधा, सकलजगतीधारयं सकलायाः समस्तायाः, जगत्याः भुवः, धारयतीति धारयः धर्ता, तं तथोक्तं 'अनुपसर्गा ल्लिम्पविन्दे' त्यादिना शप्रत्ययः । मुररिपुं विष्णुं, असौ शतमखादिसुरनिकरपरिवेष्टितः विधिःब्रह्मा स्तावंस्तावं स्तुत्वास्तुत्वा 'अभीक्ष्ण्ये णमुल्' सविनयं विनयेन सहितं यथातथा, अनंसीत् नमश्चकार । यद्वा सविनयं स्तुत्वास्तुत्वा अनंसीदित्यन्वयः । अत्र सकलजगतीधारयमित्यनेन प्रकृतभूदुःखनिवारणक्षमत्वं व्यज्यते । धारणं नाम पोषणं हि, तच्चदुःखनिवारणद्वारकमिति भुवो दुःखहेतुरयं भारः क्रव्यादनिमित्त एवेति कृत्वा, तद्धननं प्रार्थयितुं, हनं क्रव्यादानामित्युक्तम् । क्रव्यादहननपूर्वकभूधारणे तव नकिञ्चित्प्रयोजनं, नापि कश्चित्प्रेरकः किन्तु निर्हेतुककृपैवेत्याह । कृपाया दधमिति । अस्मदादिनिष्ठकृपावन्नेयं परिच्छिन्नेत्याह । निरवधेरिति । निष्प्रत्यूहविजृम्भमाणकरुणादुग्धार्णवो भगवानिति भावः । एवं भुव मुद्दिश्य प्रार्थयित्वा, देवानुद्दिश्य प्रार्थयति । ददं कल्याणानामिति । राक्षसै र्विभ्रंशितश्रियः देवाः तद्धननद्वारा त्वया शुभयुक्ताः कर्तव्या इतिभावः । स्वागमनप्रयोजनं ध्वनयति । पिबमपि भवाब्धे श्श्रितवतामिति मामकसंसारदुःखापनोदनपूर्वकं मोक्षश्रियं देहीति भावः । नन्वह मपि यूय मिव बद्ध एव नतु मुक्त इत्यतआह । श्रियः पश्य मिति– मोक्षलक्ष्मीं सानुरागं पश्यसि तत्समालिङ्गित एवेति भावः । एतेन नित्यमुक्तत्वमीश्वरस्य बद्धम् । स्तावंस्तावमित्यनेन भगवद्गुणाना मानन्त्यं व्यज्यते ॥ ३०

श्लो॥ अपारकरुणापूरपरिपूरितमानसम्
वाग्भि स्त्रयीमयीभि स्त मुपतस्थे पितामहः ॥ ३१

अपारेति– अपारेण अनिवेलेन करुणापूरेण दयाप्रवाहेण, परिपूरितं सर्वतोभरितं मानसं हृदयं यस्य तं तथोक्तं तं भगवन्तं, पितामहः ब्रह्मा, त्रयीमयीभिः वेदात्मिकाभिः वाग्भिः वचनैः

उपतस्थे तुष्टाव । त्रयीमयीभि रित्यत्र ' विकारार्थे मयट् ', यद्वा, 'प्रकृतवचने मयट्' । वेदत्रयप्रधानाभि रिति तदर्थः । ब्रह्ममुखचतुष्टयादेव वेदाना माविर्भावश्रवणा देव मुक्तम् । निर्घृणविषयाया इव अस्या स्स्तुते र्न वैयर्थ्यमि त्येतदर्थ मपारेति विशेषणम् । पौरुषवचोगुम्भिते अस्मिन् काव्ये अपौरुषेयवचोनिबन्धनायोगा द्ब्राह्मीस्तुति रत्र नोपनिबद्धेति ज्ञेयम् ॥ ३१

श्लो॥ समाधिस्थे वेधस्यविदितवदा वा गचकल
त्सुधासाराकारा नभसि तदभीष्टानुसदृशी
निश म्यैनां वेधा स्तदनु दनुजारातिनिचया
नसा वूचे वाचं प्रतिनिनदवाचालितदिशम् ॥ ३२

समाधिस्थे इति— वेधसि समाधिस्थे सति ब्रह्मणि चित्तैकाग्र्यम् सम्पादयति सतीत्यर्थः । समाधिसम्पादनक्षणे एव अभीष्टार्थसिद्धेः प्रहर्षणालङ्कारः । 'उत्कण्ठितार्थसंसिद्धि र्विना यत्नं प्रहर्षण मिति ' लक्षणात् । तेनच भगवतः परमकारुणिकत्वं व्यज्यते । अविदितवदा वदतीति वदः ' पचाद्यच् ' । अविदितः अज्ञातः, वदः वक्ता यस्या स्सा तथोक्ता । सुधासाराकारा सुधाया अमृतस्य आसारः धारासम्पातः' तस्येव आकारः यस्या स्सा सुधाप्रवाहतुल्ये त्यर्थः । तदभीष्टानुसदृशी तस्य ब्रह्मणः, अभीष्टस्य अभिलषितस्य, अनुसदृशी अनुरूपा, वाक् वाणी, नभसि अचकलत् आविर्बभूव । आकाशवाणी आविर्बभूवेति भावः । अत्र समाधिस्थे, इत्यनेन क्षीरसागरेऽपि न भगवान् ब्रह्मणो गोचरता माप , तस्य सर्वान्तरत्वेन बहिर्भावायोगात् । तस्मात् भगवत्साक्षात्कारसाधनभूतं तप एवेति अनुभववशाद्ब्रह्म ज्ञात्वा, समाधि मधितष्ठौ इति व्यज्यते । अविदितवदे त्यनेन वाग्भि रेवाय मनुमेयः, नतु साधनान्तरे णेति परब्रह्मण श्शास्त्रयोनित्वं व्यज्यते । सुधासारेत्यनेन अमृतवत्स्वादुत्वं वाक्यानां व्यज्यते । किञ्च समाधौ नभस्यचकलदित्यनेन स्वहृदयाकाशे आविर्भूतः प्रणवनाद एव वाङ्मयत्वेन ब्रह्मणा परिशीलित इति व्यज्यते । अन्यथा बाह्यनभोवाण्याविर्भावपक्षे तु, देवै रपि सा श्रूयतेति बोध्यम् । असौ समाधिशाली वेधाः ब्रह्मा, एनां नभसि प्रसृतां वाणीं वाचं निशम्य आकर्ण्य, तदनु तदनन्तरं, दनुजारातीन् असुरद्वेषिणस्सुरा निति यावत् । प्रतिनिनदवाचालितदिशं प्रतिनिनदेन प्रतिध्वनिना वाचालिता श्शब्दायमानाः दिशः, ककुभः यस्या स्तां तथोक्तां वाचं वाक्यमूचे उवाच । ' दुह्याच् पच् दण्ड्रुधिर् प्रच्छी ' ति प्रच्छार्थका द्ब्रूञो द्विकर्मकत्वम् ॥ ३२

ग ॥ विदित एव ननिवेदितोऽपि भगवता चतुर्भुजेन निरवधि रसौ वसुन्धराज्वरः ॥ ३३

विदित इति— ननिवेदितोऽपि अविज्ञापितोऽपि नञर्थकोऽयं न शब्दः निरवधिः, अपारः, असौ प्रत्यक्षः वसुन्धराज्वरः भूपरितापः, भगवता षड्गुणशालिना चतुर्भुजेन विष्णुना, विदित एव ज्ञात एव, अविदितवेदने भगवत्त्व मेव हेतु रिति साभिप्रायविशेषणा त्परिकरालङ्कारः ॥ ३३

ग ॥ सोऽय मवनीव्यसनविनाशनाय सम्प्रति सम्प्रतिपन्नवसुदेवतनयभावः परिवसुन्धर मवतरितु मध्यवस्यति ॥ ३४

सोऽयमिति–सोय मस्मदुपस्तुतो भगवान् चतुर्भुजः, सम्प्रति अधुना, अवनीव्यसनविनाशनाय भूदुःखनिवारणार्थं, सम्प्रतिपन्नवसुदेवतनयभावस्सन्, सम्प्रतिपन्नः स्वीकृतः, वसुदेवस्य देवकीपतेः, तनयभावः पुत्रत्त्वं येन स तथोक्तः । परिवसुन्धरं वसुन्धरायां, विभक्त्यर्थेऽव्ययीभावः । भूलोके इति यावत् । अवतरितुम् आविर्भवितु मध्यवस्यति निश्चिनोति, उद्युङ्क्ते इति यावत् । वसुदेवस्य पत्न्यां देवक्यां भगवान् कृष्णरूपेण आविर्भविष्यतीति भावः ॥ ३४

ग ॥ तदिदानी मविलम्बित मवलम्बनीय एव तदभ्यर्चनाय भवद्भि रपि यदुकुलसमुद्भवः ॥ ३५

तदिति– तत्तस्मात् इदानी मधुना, अविलम्बितं त्वरितं, तदभ्यर्चनाय भगवत्पूजनाय, यदुकुलसमुद्भवः यदुवंशे उत्पत्तिः, भवद्भिरपि युष्माभिश्च अवलम्बनीय एव स्वीकर्तव्य एव । हे देवाः! यूयं यदुवंशे उत्पद्यध्वम् , इति भावः ॥ ३५

ग ॥ एव ममरवरवर्णिनीभि रपि मुररिपुचरणपरिचरणाय परिकलनीय एव मानवमानिनीभावः ॥ ३६

एवमिति– एव मुक्तरीत्या, मुररिपुचरणपरिचरणाय भगवत्पादसेवार्थं ममरवरवर्णिनीभि रपि देवतास्त्रीभिः अप्सरोभि रपी त्यर्थः । मानवमानिनीभावः मनुष्यनारीत्वं परिकलनीय एव गृहीतव्य एव, अप्सरसः गोपिकास्वरूपेण भुवि प्रादुर्भवन्त्विति भावः ॥ ३६

ग ॥ ऋषिभि रपि पुरुषोत्तमपरितोषपोषणाय गोरूपधारण मादरणीय मेव ॥ ३७

ऋषिभि रिति– पुरुषोत्तमस्य विष्णोः, परितोष स्सन्तोषः, तस्य पोषणाय अभिवृद्ध्यर्थं ऋषिभि रपि मुनिभि रपि, गोरूपधारणं पयस्विनीरूपस्वीकारः आदरणीय मेव आदर्तुं योग्य मेव, आदरः स्वीकरणीय एवेति भावः ॥ ३७

ग ॥ कुम्भीनसविभु रपि मुररिपुभजनाय भवितैव तदग्रभवः ॥ ३८

कुम्भीनसेति– कुम्भीनसविभु रादिशेषोऽपि मुररिपुभजनाय भगवत्सेवार्थं तदग्रभवः कृष्णाग्रजस्सन् भवितैव आविर्भविष्यत्येव, बलभद्रनाम्ना शेष उत्पत्स्यतीति भावः । ३८

ग ॥ मायापि भुवनमोहिनी मुरशासनशासनेन पुरा परिवसुन्धर मवतरति ३९

मायेति– भुवनमोहिनी जगन्मोहकारिणी मायाऽपि प्रकृति रपि, मुरशासनस्य विष्णो श्शासनेन आज्ञया, परिवसुन्धरं भुवि, पुरा अवतरति अवतरिष्यति। 'यावत्पुरा निपातयो रिति लट्।' यशोदाकन्यकारूपेणेति भावः ॥ ३९

ग ॥ कमलालयापि भुवि तदीयकुलपालिकापद मनुबुभूषति ॥ ४०

कमलालयेति– कमलालया लक्ष्मी रपि, भुवि, तदीयकुलपालिकापदं भगवत्सम्बन्धिकुलस्त्रीत्वं, पत्नीभावमिति यावत्। यद्वा भगवत्सम्बन्धिकुलस्त्रीस्थानमित्यर्थः। अनुबुभूषति अनुभवितु-मिच्छति। रुक्मिणीस्वरूपेण लक्ष्मी रुत्पत्स्यते, इति भावः। 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनीति' विष्णुपुराणवचनात् ॥ ४०

ग ॥ तदवलम्बितमेव यथोदित मनुष्ठीयता मिति बुधसभासद स्समादिश्य समाश्वास्य च मेदिनी ममृतधाराकल्पजल्पितपरम्पराभि रनुभवन मपससारसार-सासनः ॥ ४१

तदिति– तत्तस्मात् अविलम्बितमेव त्वरितमेव, यथोदित मुदित मनतिक्रम्य, मदुक्तप्रकारेणे त्यर्थः। अनुष्ठीयतां क्रियतां, भवद्भि रिति शेषः। इत्येवं रीत्या बुधसभासदः देवसभ्यान् इन्द्रादी नित्यर्थः। समादिश्य आज्ञाप्य, अमृतधाराकल्पाभिः सुधाप्रवाहतुल्याभिः 'ईषदसमाप्तौकल्पप्' जल्पित परम्पराभिः वचनधोरणीभिः, मेदिनीं भूदेवीं समाश्वास्य च, सम्यगाश्वास्य च, सारसासनः ब्रह्मा, अनुभवनं भवनमनु गृहं, प्रतीत्यर्थः। अपससार जगाम। सत्यलोकं ययावित्यर्थः॥ ४१

अथ देवक्यां कृष्णोदयं वर्णयितुं तत्कथां संक्षेपतो दर्शयति ॥

श्लो ॥ मधुरा मधुरानाम। राजधानी पुरातनी
देशेषु शूरसेनेषु। बभूव यदुभूभुजाम् ॥ ४२

मधुरेति– शूरसेनेषु तन्नामकेषु देशेषु, यदुभूभुजां यदुराज्ञां यदुवंशीयनृपाणामित्यर्थः। पुरातनी राजधानी कुलपरम्परागता प्रधाननगरी मधुरा मनोज्ञा, मधुरा तन्नाम्ना प्रसिद्धा नगरी बभूव आसीत्। नामेति प्रसिद्धौ। यद्वा मधुरा मनोज्ञा, पुरातनी अनादिसिद्धा, मधुरा नाम मधुरेति नाम्ना प्रसिद्धा यदुभूभुजां राजधानी, शूरसेनेषु देशेषु बभूव आसीदित्यन्वयः। अथ वा शूरसेनेषु देशेषु मधुरा पुरातनी मधुरा नाम, यदुभूभुजां राजधानी बभूवेति ॥ ४२

श्लो ॥ आवस न्नगरी मेना। मुग्रसेनमहीपतिः
गुणै रनुचका रैन। मनुजो मनुजोत्तमः ॥ ४३

आवसदिति– एनां पूर्वोक्तां, नगरीं मधुराम्, उग्रसेन इति राजा, आवसत् अधितष्ठौ। आश्रित इत्यर्थः 'उपान्वध्याङ्वस' इत्याधारभूतायाः नगर्याः कर्मत्वम्। मधुराया मुवासेत्यर्थः

मनुजोत्तमः मनुजे षूत्तम इति सप्तमीसमासः । षष्ठीत्वे तु, 'ननिर्धारणे' इति निषेधः प्रवर्तेत, नरश्रेष्ठ इत्यर्थः । अनुजः उग्रसेनस्य कनिष्ठो भ्राता 'देवक' इत्युत्तरश्लोकस्थपदेनात्रान्वयः । गुणैः औदार्यादिभिः, एन मुग्रसेन मनुचकार अनुकरोतिस्म । तत्तुल्यगुण इति भावः ॥ ४३

श्लो ॥ देवक, स्तनया तस्य । देवकी, देवतोपमा ।
तनयो प्युग्रसेनस्य । कंसो हि कुलपांसनः ॥ ४४

देवकइति—देवकपदन्तु पूर्वश्लोके एवान्वितम् । तस्य देवकस्य देवतोपमा देवतातुल्या तद्वत्सुन्दरीति भावः । देवकी तन्नाम्नी, तनया पुत्री, बभूवेति शेषः । उग्रसेनस्य, कंसः तन्नामा कुलपांसनः वंशदूषकः तनयोऽप्यासी दिति शेषः ॥ ४४

**ग ॥ अथ कदाचि दानकदुन्दुभि रधिमधुरानगर मुपयम्य देवकतनूजा मुपजात हर्षप्रकर्ष स्सह जायया परिजनेन च निजभवनजिगमिषया समारुरोह रथ मनुपहत मनोरथः ॥** ४५

अथेति— अथ एवंस्थिते कदाचित् कुत्रचित्काले अधिमधुरानगरं मधुरापत्तने 'विभक्त्यर्थेऽव्ययीभावः'। देवकतनूजां देवकस्य सुतां देवकी मित्यर्थः । उपयम्य पाणौकृत्य परिणीयेति यावत् । अतएव उपजातः उदितः, हर्षप्रकर्षः मोदातिशयः यस्य स तथोक्तस्सन्, अनुपहतमनोरथः अप्रतिहतकामः, आनकदुन्दुभिः वसुदेवः, निजभवनजिगमिषया स्वगृहं प्रति गन्तु मिच्छया, जायया सह भार्यया देवक्या समं, परिजनेन च अनुचरवर्गेण च समं, रथं स्यन्दनं, समारुरोह अधितष्ठौ । यद्वा परिजनेन परिवृत स्सन्निति शेषः । जायया सह रथ मारुरो हेत्यन्वयः ॥ ४५

श्लो ॥ वत्सल्यं भगिनीजने प्रकटय न्कंस स्तत स्सादरं
सारथ्यं समुपेयिवा न्परिवृतो रौक्मै रथानां शतैः
सानन्दं हरणात्मना दुहितरि प्रेम्णा ददौ देवकः
प्राज्यं हस्तिरथाश्व मुज्ज्वलतरा दासी स्सुरूपा अपि ॥ ४६

वात्सल्य मिति— ततः तदनन्तरं देवकीवसुदेवयोः रथारोहणानन्तर मित्यर्थः । रौक्मैः सुवर्णविकारैः । 'विकारार्थे अण्' । रथानां स्यन्दनानां शतैः अयुतैः अमितै रिति यावत् । शत-शब्दो यद्यपि शतसंख्येयवाची, तथा प्यत्र शतै रिति बहुत्वनिर्देशेन असंख्येयत्व मर्थ इति वेद्यम् । परिवृतः युतः सन्, कंसः उग्रसेनसुतः भगिनीजने भगिनीनां सोदरीणां जन स्समूहः तस्मिन्, यद्वा भगिनीति जनः तस्मिन्, जनशब्दोऽत्र दीनवाची दीनायां भगिन्या मित्यर्थः । भगिन्याः दैन्यञ्च उत्पत्तिस्थानत्यागकृत मिति वेद्यम् । अनेन च भाविदैन्यं व्यज्यते । वात्सल्यं वत्सलत्वं प्रेमेति यावत् । 'वत्सांसाभ्यां कामबले' इति लचि वत्सलः । 'ततो गुणवच नेति' ष्यञि-

वात्सल्यम्, प्रकटयन् ज्ञापयन् सन्, सादरं सप्रेम यथा तथा सारथ्यं सारथिकर्म, समुपेयिवान् प्राप्तः बभूवेति शेषः । 'उपेयिवा ननश्वा निति निपातना त्साधुः ।' रथिनो वसुदेवस्य सारथि र्बभूवेति भावः । देवकःदेवकीपिता, दुहितरि पुत्रिकायां विषये, प्रेम्णः स्नेहेन हेतुना, हरणात्मना हरणस्वरूपेण विवाहकाले दुहितु र्दीयमानं वस्तु हरण मित्युच्यते । प्राज्यं प्रभूतं हस्तिरथाश्वं सेनाङ्गत्वा देकवद्भावः । गजरथतुरगा नित्यर्थः । सुरूपाः सु शोभनं रूपं सौन्दर्यं यासां ता स्तथोक्ताः । उज्ज्वलतराः अत्यन्तं भासमानाः भूषणै रिति शेषः । भूषणभूषिता इति यावत् दासीः दासानां-स्त्रियः दास्यः, पुंयोगे ङीष् ताः परिचारिका इत्यर्थः । अपिः समुच्चये, तेन धनादिक मपीति व्यज्यते । सानन्दं ससन्तोषं यथा तथा । न तु धनादिगतस्नेहकृतव्यसनेनेति भावः । ददौ व्यतरत् । अर्था द्दुहितु रेवेदं दानं, देयस्य हरणात्मकत्ववचनात् ॥ ४६

श्लो ॥ गीतै र्वारविलासिनीपरिचितैः कल्याणवादाङ्कुरै
रुद्वेलै रपि काहळीकलकलै रापूरि रोदोऽन्तरम् ।
कंसं निर्वृत मन्तरेण गगने दैवी तदा वा गभू
दस्या स्ते लय मष्टमः कलयिता गर्भो भगिन्या इति ॥ ४७

गीतै रिति—वारविलासिनीपरिचितैः वेश्याङ्गनाभि रभ्यस्तैः तत्कृतै रित्यर्थः । गीतैः गानैः कल्याणवादाङ्कुरैः । सुवासिनीकृतैः, कल्याणवादानां मङ्गळवादाना मङ्कुरै राविर्भावैः मङ्गळवचनै रित्यर्थः । उद्वेलैः उद्गता निरस्ता वेला मर्यादा यै स्ते उद्वेला अनवधय इत्यर्थः । तैः काहळीकलकलैरपि काहळीनां वाद्यविशेषाणां कलकलैः कलकलध्वनिभि श्च, रोदोन्तरम् ब्रह्माण्डमध्यम् आपूरि आ समन्ता त्पूरितम् 'आङ्पूर्वकात् पॄ पालनपूरणयोरिति धातोः कर्मणि लुङि च्लेश्चिण्' 'चिणो लुक् ।' गीतादिध्वनित्रयं मिळित्वा ब्रह्माण्डं विदारयामासेति भावः । तदा तदानीम् निर्वृतं सुखितं भगिनीविवाहोत्सवदर्शनेन सानन्द मित्यर्थः । कंस मन्तरेण उद्दिश्य 'अन्तरान्तरेणेति द्वितीया ।' अस्याः त्वया सानन्दं नीयमानायाः, ते तव, भगिन्याः स्सोदर्या स्सम्बन्धी अष्टमो गर्भः कुक्षिस्थजन्तुः, सुत इति यावत् । ते तव लयं नाशं कलयिता करिष्यति । ते इति पद मावर्त्य उभयत्र योजितम् । इति एवं प्रकारा दैवा देवसम्बन्धिनी वाक् वाणी गगने अभूत् आकाश वाणी आविरभू दित्यर्थः । तस्येद मित्यणि टिड्ढाणि ङीपि 'दैवी इति रूपम् ॥ ४७

श्लो ॥ एना माकर्ण्य वाणीं त्रिकलितहृदयः कंस एष स्सत्रसारं
हस्तग्राहं गृहीत्वा कचनिचय मिमां हन्तु मभ्युद्यतोऽभूत्
दृष्ट्वा कष्टायमानं त मथ मृदुगिरा सान्त्वयामास शौरिः
प्रत्यादिष्टोऽथ तेन प्रकृति मुपगतो न प्रियाभङ्गभीरुः ॥ ४८

एना मिति—एनां पूर्वोक्तां वर्णी वाच, माकर्ण्य श्रुत्वा, विकलितहृदयः विदीर्णचित्तः, एषः स्वीकृतसारथ्यः, कंसः कचनिचयं केशपाशं, हस्तग्राहं गृहीत्वा हस्तेन गृहीत्वा 'हस्ते वर्तिग्रहो रिति णमुल् ।' इमां नवोढां स्वसारं भगिनीं, हन्तुं हिंसितु, मभ्युद्यतः उद्युक्तः अभूत् बभूव । अथ ततः शौरि र्वसुदेवः, कष्टायमानं पापं कर्तु मुत्सहमानं, 'कष्टाय क्रमणे इति क्यङ् ।' तं कंसं दृष्ट्वा, मृदुगिरा स्निग्धवाचा सान्त्वयामास प्रार्थयामा सेत्यर्थः । तमिति कर्मपदं दृष्ट्वे त्यनेन सान्त्वया मासेत्यनेन च सम्बध्यते इति बोध्यम् । अथ । ततः तेन कंसेन प्रत्यादिष्टस्सन् प्रत्याख्यातस्सन्, अनङ्गीकृतनिजप्रार्थनस्स न्नित्यर्थः । प्रियाभङ्गभीरुः प्रियायाः प्रेयस्याः भङ्गे विषये भीरुः भयशीलः यद्वा प्रियाभङ्गेन उपस्थितेन भीरु रिति समासः । अतएव प्रकृतिं स्वास्थ्यं नोपगतः न प्राप्तः बभूवेति शेषः, नावापेत्यर्थः ॥ ४८

**श्लो ॥ अनिवार्य मथालोच्य सान्त्वै स्तस्य विनिश्चयम्**
**उवाच वचनं शौरि र्दयिताप्रेमविह्वलः ॥** ४९

अनिवार्य मिति— अथ अनन्तरम् तस्य कंसस्य विनिश्चयं विरुद्धाभिनिवेशं विशेषाग्रह मिति वा, सान्त्वैः प्रार्थनावाक्यैः अनिवार्यं निवारयितु मशक्य मालोच्य विदित्वा, दयिताप्रेमविह्वलः दयितायां भार्यायां प्रेम्णा भार्याविषयस्नेहेनेत्यर्थः । विह्वलः विवशः शौरि र्वसुदेवः वचनं वाक्यं दानरूपमिति भावः । उवाच अवोचत् । सामोपायस्य निष्फलत्वेन दानोपाय मवतारयामासेति भावः॥ ४९

वचनमेव निर्दिशति गद्यद्वयेन—

**ग ॥ अयि भगवन् ! भोजकुलतिलकप्रतीतदीनदयाळुभावस्य दिशान्तविश्रान्त यशोवैभवस्य न साम्प्रत मेव तपस्विनी मेना मनुजा मपि तनुजा मिव सभाजन भाजनभूता मसुभि र्वियोजयितुम् ॥** ५०

अयीति— अयीति प्रेम्णा सम्बोधनम् । भगवन्! षड्गुणनिधे! मत्प्रेयसी रक्षाभर स्त्वाधुना त्वदायत्तत्त्वा त्वमेव भगवा नित्यभिप्राया दिदं सम्बोधनम् । भोजकुलतिलक! भोजवंशभूषण! एतेन न त्वं कुलपांसनः, एतादृशं गर्ह्यं कृत्यं कर्तु मिति स्तुति र्व्यज्यते । किञ्च भोजाः प्राचीना स्त्वद्वंशीयाः नहि दुष्टाः, किन्तु सुशीला एवेति तद्वंश्यस्य तवापि शिष्टत्व मेव न्याय्य मिति सूच्यते । प्रतीतदीनदयाळुभावस्य प्रतीतः प्रसिद्धः दीनेषु कृपणेषु शोच्येष्वित्यर्थः, दयाळुभावः कारुणिकत्वं यस्य तस्य नतु निर्घृणस्येति भावः । अत एव दिशान्तविश्रान्तयशोवैभवस्य दिगन्त-व्याप्तकीर्तिविलासस्य तवेति शेषः । तपस्विनीं शोच्यां । 'तपस्वी तापसे शोच्ये' इति वैजयन्ती । अनुजा मपि भगिनीमपि तनुजा मिव सुता मिव सभाजनभाजनभूतां सभाजनं प्रीणनं तस्य भाजनं पात्रं तद्धितभूतां जातां तथोक्तां प्रीणनविषयभूता मित्यर्थः । अभाजनं भाजनं सम्पद्यमाना भूतेति

विग्रहोक्तौ तु ' अभूततद्भावे च्विः अस्य च्वादितीत्वं दीर्घश्च । ' भाजनीभूता मिति स्या दिति ज्ञेयम् । नेय मनुजा किन्तु तनुजेव त्वया नन्दनीयेति मुख्याभिप्रायः। एनां नवोढा मसुभिः प्राणैः, वियोजयितुं विघटयितुं, पदद्वयस्य मारयितु मिति निष्कृष्टार्थः । न साम्प्रतमेव न युक्त मेव । एतादृशाया मारणे तव महती अकीर्त्ति स्स्यात् , तया च सर्व्व मपि तव कुलं दूषितं स्यादिति कंसस्य हितोपदेशोऽयम् ॥ ५०

ननु भवतुनाम ममाकीर्तिः देवक्या मारणे तु प्राणा स्ताव त्तिष्ठन्तीत्यत आह—

**ग ॥ किन्तु भव त्याहितहेतुभूत मेतदीय मप त्यमुद्भविष्यति यदि सद्य एव व्यापाद्यता मिति ॥** ५१

किन्त्विति — तव त्वदनुजाया श्च यथा प्राणवियोगो न स्यात् मम च यथा प्रियावियोगो न स्या त्तदनुगुण मुपायं वक्ष्यामि शृण्वित्यभिप्रायः। भवतस्तव अत्याहितस्य महाभयस्य प्राणापहरण-रूपस्येति भावः । हेतुभूतं कारणभूतम् एतदीयं देवकीसम्बन्धि अपत्यं सन्तान मुद्भविष्यति यदि उत्पत्स्यते चेत् सद्य एव तत्क्षणा देव व्यापाद्यतां हन्यतां, त्वयेति शेषः ।

एतत्सन्तानं त्वं नाशयेति भावः । तथा सति न ते मरणभीतिः, न च प्रियायाः, न तद्वियोगेन ममापीति, त्रयोपि वयं सुखं वर्तामहे इति भावः । इतीति पदस्य, इति वचन मुवा चेति पूर्वेण सम्बन्धः ॥ ५१

श्लो ॥ मत्वा हित मिदं वाक्यं परिणामविषायितम्
तता निववृते कंसो भगिनीवधपौरुषात् ॥ ५२

मत्वेति— परिणामविषायितं परिणामे परीपाके विषायितं, विषवदाचरितं इदं वसुदेवोक्त मपत्यदानरूपं वाक्यं हितं प्रिय मिष्ट मित्यर्थः । मत्वा आलोच्य, ततः वाक्यश्रवणानन्तरं भगिनी-वधपौरुषात् भगिन्या स्सोदर्याः वधः हननं स एव पौरुषं पुरुषकारः, तस्मात् कंसः निववृते निवृत्तो अभवत् । भगिनीवधपौरुषं तत्याजेत्यर्थः ॥ ५२

**ग ॥ इत्थ मानकदुन्दुभि रुग्रसेनसुतसमालम्बितां निजवधूवधविधित्सा मुत्सार्य सप्रमोद मेव निजसदन माससाद ॥** ५३

इत्थमिति— आनकदुन्दुभिः वसुदेवः इत्थ मुक्तप्रकरेण उग्रसेनसुतसमालम्बितां कंसेन स्वीकृतां निजवधूवधविधित्सां स्वभार्याहननेच्छां विधातु मिच्छा विधित्सा, निजस्य वधूः निजवधूः तस्या वधस्य विधित्सा, तां तथोक्ता मिति विग्रहः । उत्सार्य निवार्येत्यर्थः सप्रमोद मेव सानन्द मेव जीवत्प्रेयसीलाभा दिति भावः । निजसदनं स्वगृहम् आससाद प्राप ॥ ५३

श्लो॥ वासरै स्तदनु स्तोकैः । कीर्तिमन्नामभाजनम् ।
सुषुवे देवकी सूनु । मैन्द्री चन्द्रमसं यथा ॥ ५४

वासरैरिति– तदनु तदनन्तरं स्तोकैः अल्पैः वासरैः दिनैः गतै रिति शेषः कतिचिद्दिनेषु यातेषु सत्स्वित्यर्थः । ऐन्द्री इन्द्रसम्बन्धिनी 'तस्येद मित्यणि टिड्ढेति ङीप्' प्राचीदि गित्यर्थः । चन्द्रमसं यथा चन्द्रमिव, देवकी वसुदेवदाराः, कीर्तिमन्नामभाजनं कीर्तिमान् इति नाम कीर्तिमन्नाम तस्य भाजनं पात्रं विषय मिति यावत्, यद्वा भाजयति ण्यर्थ स्याविवक्षया भजति प्राप्नोतीति भाजनः तम् कीर्तिमन्नामभाज मित्यर्थः। सूनुं पुत्रं सुषुवे उत्पादयामास। 'षूञ् प्राणिगर्भविमोचने इति धातो र्लिट्'। उपमालङ्कारः । तेन चन्द्रतुल्यकान्तिशालित्वं पुत्रस्य व्यज्यते ॥ ५४

**ग ॥ तदनु यदुपति रपि तनयसमुदयनिशमनसमुपनत मानन्द मनुभूय सत्य व्यत्याससाध्वसा देन मुपनीय कथ मपि कंसाय समर्पयामास ॥ ५५**

तदन्विति–तदनु ततः देवकीप्रसवानन्तर मित्यर्थः । यदूनां पति र्यदुपति र्वसुदेवोऽपि तनयस्य पुत्रस्य समुदयं आविर्भावः तस्य निशमनं श्रवणं शमोऽदर्शने इति श्रवणे मित्त्वा दुपधाह्रस्वः। तेन समुपनतं जातं आनन्दं सुखम् अनुभूय प्राप्य, सत्यव्यत्याससाध्वसात् सत्यस्य व्यत्यासः वैपरीत्यं असत्य मिति यावत्, तस्मा द्यः साध्वसः भयं तस्मात् एनं सुत मुपनीय आनीय, कथ मपि अतिकृच्छ्रेण पुत्रवियोगस्य दुस्सहत्वा दिति भावः । कंसाय राज्ञे समर्पयामास अर्पितवान् ददा विति यावत् ॥ ५५

**श्लो ॥ कंसोऽपि धैर्य मनिवार्य मथो विचार्य**
**तस्यातिवीर्य मभिनन्द्य त माबभाषे**
**नास्मा द्बिभेमि कलभोऽय मुपैतु सद्म**
**गर्भोऽष्टमो मम जिघांसु रभाणि पूर्वम् ॥ ५६**

कंसोपीति– अथोऽनन्तरं कंसोऽपि कंसश्च तस्य धैर्यं धीरत्व मनिवार्यं निवारयितु मशक्यं विचार्य आलोच्य, तस्येति काकाक्षिन्यायेव उभयत्र सम्बध्यते। तस्य वसुदेवस्य अतिवीर्य मत्यन्तपराक्रम मभिनन्द्य श्लाघयित्वा, तं वसुदेवं प्रति आबभाषे उवाच। वचन मेव दर्शयति- नास्मादिति– अस्मात् तव प्रथमा त्पुत्रात् न बिभेमि उत्तमपुरुषनिर्देशेन अह मित्याक्षिप्यते। अहं भीतिं न प्राप्नोमीत्यर्थः । अयं पुत्रः सद्म अरिष्टरूपं गृहम् उपैतु प्राप्नोतु। एन मरिष्टं नयेत्यर्थः । अष्टमः गर्भः अपत्यं मम मे जिघांसुः हन्तुमिच्छुः हन्तेति यावत्; भवतीति शेषः; इति पूर्वं पुरा देवक्यानयनसमये इत्यर्थः । अभाणि उक्तम् "भावे लुङ्" देवेनेति शेषः ॥ ५६

**ग॥ इत्थ मनुकम्प्यमानोऽपि कंसेन शङ्कितमानस एव वसुदेव स्तनय मादाय निजनिवेश माविवेश ॥ ५७**

इत्थ मिति– इत्थ मेवं कंसेन अनुकम्प्यमानोऽपि अनुकम्पितोऽपि, उपसर्गवशात् कपि-चलने इति धातु र्दयायां वर्तते । तत श्शानचि रूप मिदम् । शङ्कितमानस एव शङ्कितं सञ्जातशङ्कं मानसं मनः यस्य स तथोक्तः सशङ्क एवेत्यर्थः । वसुदेवः तनयं सुत मादाय गृहीत्वा निजनिवेशं स्वगृह माविवेश अविशत् प्रापेति यावत् ॥ ५७

**ग ॥ अथ कदाचि दौग्रसेनि रनवरतबृन्दारकबृन्दवन्द्यमानचरणारविन्द मरविन्दभवनन्दन ममरमुनिबृन्दारक मविरतविग्रहसमुत्सुक मपि समुज्झित विग्रहाभि निवेश मधरीणगुणगण मपि मुररिपुगुणगण मुपवीणयन्तं भगवन्त मखिलनिगमधर्म मर्मनिर्भेदनविशारदं नारदमुनि मद्राक्षीत् ॥** ५८

अथेति – अथ कंसनिर्वृत्त्यनन्तरम् कदाचित् कुत्रचित्काले औग्रसेनिः उग्रसेनस्यापत्यं 'तस्यापत्य मित्यर्थे अत इञ्' कंस इत्यर्थः । अनवरतं यथा तथा सर्वदापीत्यर्थः । बृन्दारकबृन्देन देवसमूहेन, किम्पुन मनुष्यै रिति भावः । वन्द्यमाने अभिवाद्यमाने स्तूयमाने इति वा 'वदि अभिवादन स्तुत्यो रिति धातोः कर्मणि यकि शानच् ।' अरविन्दे इव चरणे चरणारविन्दे, उपमितं व्याघ्रादिभि रिति व्याघ्रादे राकृतिगणत्वा दुपमितसमासः यस्य तं अरविन्दभवस्य ब्रह्मणः नन्दनं तनयं, नन्दयतीति नन्दनः नन्दि ग्रहीति ल्युः । अमरमुनिषु देवर्षिषु बृन्दारकः मुख्यः तं 'बृन्दारकौ रूपमुख्यावि' त्यमरः । अविरतं यथा तथा अनवरत मित्यर्थः । विग्रहे कलहे समुत्सुकं सहर्ष मपि समुज्झितः त्यक्तः विग्रहाभिनिवेशः शरीराभिमानः येन तं देहादा वात्माभि मानरहित मित्यर्थः । अधरीणाः तिरस्कृताः गुणगणाः शब्दादिगुणसमूहाः येन तमपि मुररिपोः कृष्णस्य गुणगणं कल्याणगुणकदम्ब मुपवीणयन्तम् वीणया उपगायन्तं 'सत्यापपाशेत्यादिना णिच् ।' अत्र कलहसमुत्सुक मपि कलहाभिनिवेशरहित मिति तिरस्कृतशब्दादिविषय मपि शब्दादिविषय-कदम्बं गायन्त मिति च विरोधद्वयं प्रतीयते । तस्य उक्तरीत्या परिहारा द्विरोधाभासालङ्कारद्वयम् । भगवन्तं षड्गुणनिधिं अखिलानां निगमधर्माणां वेदोक्तधर्माणां यानि मर्माणि रहस्यस्थलानि रहस्या नीति यावत् । तेषां निर्भेदने प्रकाशने विशारदं निपुणं नारदमुनिम्, नारद इति मुनिः ऋषिः तं अद्राक्षीत् अपश्यत् । अत्र अनवरतबृन्दारकेति विशेषणेन देवकार्यार्थं नारदस्यात्रागमन मिति सूच्यते । अविरतविग्रहे त्यनेन शान्तकोपस्य कंसस्य कोपोद्बोधनार्थं तदागमन मिति सूच्यते । एवंविधव्यापारे नारदस्य किम्फल मत आह । मुररिप्विति :– कंसस्य दुष्टत्वे प्रवृद्धे सत्येव भगवा नाविर्भूय भुवि लीलाः प्रदर्शयिष्यतीति तद्गुणगानार्थ मयं नारदस्य प्रयास इति भावः । एतेन प्रत्यङ्निष्ठस्यापि नारदस्य भगवद्गुणलोलुपत्वकथनेन 'आत्मारामा श्च मुनयो निर्ग्रन्था अप्युरुक्रमे कुर्वन्त्यहैतुकीं भक्ति मित्थंभूतगुणो हरि' रिति भागवतवचनम् नारदोक्तं वचनं कंसः स्वीकुर्या द्वा नवेति शङ्कापनोदनाय भगवन्त मिति, गतागतादिसर्ववेत्तृत्वा न्नारदोक्तं तथ्य मिति,

कंसो जानीया देवेति भावः। ननु मनुष्यमनोरहस्य मयं वेत्तु नाम; कथं देवरहस्य मत आह- अखिलनिगमेति। सर्वदेवरहस्यस्यापि वेदैकायतनत्वा द्वेदमर्मज्ञ स्यास्य देवरहस्यवेदनं नाद्भुत मिति भावः। नारद स्यैवंविधमाहात्म्ये हेतु माह। अरविन्देति- ब्रह्मण एतादृशत्वेन तत्पु त्त्रोऽपि तथाविध एवेति भावः। ननु देवहितार्थं व्याप्रियमाणेषु देवर्षि ष्वनेकेषु सत्सु किं नारद स्यैवायं श्रमः। अत आह - अमरमुनीति। तेषु मुख्यत्वा दस्यैव देवहितकरत्व मुचित मिति भावः॥ ५८

ग ॥ तदनु नारदोऽपि यथाविधि तदभ्यर्चना मुपगम्य कंस मिद मवादीत् ॥५९

तदन्विति— तदनु दर्शनानन्तरम् , यथाविधि विधि मनतिक्रम्य, प्राप्य स्वीकृत्येत्यर्थः। नारदोऽपि नारदश्च कंसं प्रति इदं वक्ष्यमाणं वचनं वाक्य मवादीत् उवाच 'वदे लुङ्'॥ ५९

श्लो ॥ वार्ष्णेया वसुदेवदेवकमुखा गोपाश्च नन्दादय
स्तत्कान्ता अपि देवता इति मतिं पर्याकुलां माकृथाः
त्वद्गृह्या नपि दानवान् बकमुखान् त्वां कालनेमिं पुरा
भूतं विद्धि चतुर्भुजोऽपि भविता नाथो यदूना मिति॥ ६०

वार्ष्णेया इति— वसुदेवदेवकमुखाः वसुदेवो देवकश्च वसुदेवदेवकौ मुख मादि येषां ते तथोक्ताः। वर्ष्णेयाः वृष्णिवंश्याः यादवा इत्यर्थः। यद्यपि देवको भोजवंशजत्वेन न वार्ष्णेयः, तथापि वसुदेवानुयायित्वा त्तथा व्यपदिष्टम्। यद्वा वार्ष्णेयाः, वसुदेवदेवकमुखा श्च, इति प्रत्येकं योज्यम्। अस्मिन् पक्षे वसुदेवस्य वार्ष्णेयत्वेऽपि पृथग्ग्रहण मुत्कर्षार्थ मिति बोध्यम्। नन्दादयः नन्दः आदि र्मुख्यः येषां ते नन्दादयः गोपाः गोपाला श्च तत्कान्ताः तेषां वसुदेवादीनां वार्ष्णेयानां नन्दादीनां गोपानां च कान्ता भार्याः देवकीयशोदादयश्च एते सर्वे देवताः सुराः इत्येवं रूपां मतिम् इतःप्रा क्तवोदितां बुद्धिं पर्याकुलां विक्षिप्तां माकृथाः मा कुरु; त्व मिति शेषः। दृढां कुर्वित्यर्थः। यद्वा इत्येवं ज्ञात्वेति शेषः। मद्वचनेन निश्चित्येत्यर्थः मतिं तव बुद्धिं पर्याकुलां माकृथाः। भीतां मा कुर्वित्यर्थः; माभैषी रिति यावत्। त्वद्गृह्यान् त्वत्पक्षाश्रिता नपि बकमुखान् बकादीन् पुरा पूर्वजन्मनि दानवान् दनो रिमे दानवाः तान् असुरान्' विद्धि जानीहि। त्वा मपि पुरा जन्मनि भूतं सत्ताशालिनं कालनेमिं तन्नामक मसुरं विद्धि। यद्वा पुराभूत मित्येकं पदं पूर्वकालिक मित्यर्थः। चतुर्भुजो भगवान् वासुदेवोऽपि यदूनां नाथः पति र्भविता भविष्यतीति विद्धि। वसुदेवादीनां देवत्वेऽपि तद्घटाना मसुरांशत्वा त्तव च कालनेमित्वा त्पूर्ववैर मविस्मृत्य, तान् देवान् तत्पक्षगं वासुदेवं च समूल मुन्मूलयेति भावः॥ ६०

ग ॥ इत्थ मुपदिश्य सुरतपस्विनि विनिर्गते तद्वचनविदितयादवदेवभाव सम्भूतभयविधूननाय देवकदुहितर मानकदुन्दुभि मपि कारागारसीमनि विधाय

निगळसन्दानितौ। पितर मपि परिभूय निजशासनविषयीकृतशूरसेनविषय श्चाणूरज-
रासन्धकेशिमहाशनमुष्टिकारिष्टधेनुकबकतृणावृत्तादियातुधानविवृत्तपरिवृत त्सपदि यदु
कदन ममित मतनुत ॥ ६१

इत्थ मिति– सुरतपस्विनि देवर्षौ नारदे इत्थ मेवं प्रकारेण उपदिश्य आदिश्य विनिर्गते सति निष्क्रान्ते सति तस्य नारदस्य वचनेन विदितात् ज्ञातात्, यादवानां यदुवंशजानां देवभावात् सुरत्वात्, सम्भूतस्य उदितस्य भयस्य भीतेः विधूननाय निवारणार्थं, देवकस्य दुहितरं सुतां देवकी मित्यर्थः। आनकदुन्दुभि मपि वसुदेवं च एता वुभौ निगळैः शृङ्खलाबन्धैः सन्दानितौ बद्धौ विधाय कारागारसीमनि कारागृहान्तः विधायेति काकाक्षिन्याये नोभयत्रान्वेति। विधाय स्थापयित्वा, पितर मुग्रसेन मपि परिभूय तिरस्कृत्वा, निजशासनस्य स्वाज्ञायाः विषयीकृताः 'अविषया विषयाः कृता इत्यभूततद्भावे च्विः।' गोचरीभूता इत्यर्थः। शूरसेनविषयाः शूरसेननामानो देशाः येन स तथोक्तः। चाणूर जरासन्ध केशि महाशन मुष्टिक अरिष्ट धेनुक बक तृणावृत्ताः आदयः मुख्याः येषां तैः यातुधानविवृत्तैः राक्षसरूपान्तरैः राक्षससमूहै रितिवा परिवृतः युतस्सन्, कंस इति शेषः सपदि तत्क्षणे एव अमित मनल्पं यदुकदनं यदुभि र्विरोध मतनुत अकरोत्॥ ६१

ग ॥ तदनु भगिनीगर्भसमुद्भव मर्भकषट्क मपि व्यापादितवान् ॥ ६२

तदन्विति– तदनु यदुविरोधानन्तरम् भगिनीगर्भसमुद्भवं देवकीगर्भसञ्जात मर्भकषट्क मपि षण्णां समूहः षट्कं अर्भकाणां षट्क मर्भकषट्कं, शिवभागवतादिवत्समासः। षट्शिशू नपीत्यर्थः। 'पोतः पाकोऽर्भको डिम्भ' इत्यमरः। व्यापादितवान् जघान॥ ६२

श्लो ॥ शेषाख्यं भिभरांबभूव भगवद्धामानुविद्धं ततो
गर्भं देवकनन्दना हरि रथ त्रातुं त मत्याहितात्।
क्षिप्रं गर्भ ममुं विकृष्य सकलां त्सम्मोह्य नन्दव्रजे
रोहिण्या विनिवेशयेति जठरे मायां निजा मादिशत् ॥ ६३

शेषाख्य मिति–ततः अर्भकषट्कनाशानन्तरम् देवकनन्दना देवकतनया देवकीति यावत्। भगवद्धामानुविद्धं भगवतः कृष्णस्य धाम्ना तेजसा अंशेनेति यावत्। अनुविद्धं व्याप्तं शेषाख्यं शेष इत्याख्या नाम यस्य तं, गर्भं कुक्षिस्थजन्तुं, बिभरांबभूव दधार। देवकीगर्भे भगवदंशः आदिशेषः शिशु र्भूत्वा विवेशेत्यर्थः। अथ गर्भधारणानन्तरम् तं गर्भस्थं शिशु मत्याहितात् महाभया त्त्रातुं रक्षितुं हरि र्भगवान् विष्णुः अमुं परिदृश्यमानं गर्भं कुक्षिस्थजन्तुं अमुं देवकीगर्भस्थ मिति वा, क्षिप्रं त्वरितं यथा तथा विकृष्य आकृष्य अपनीयेति यावत्। सकलान् सर्वा नपि सम्मोह्य मोहयित्वा, नन्दव्रजे नन्दस्य गोपस्य व्रजे गोष्ठे घोषे वा स्थिताया इति शेषः। रोहिण्याः जठरे

गर्भे विनिवेशय निक्षिप स्थापयेति यावत्। इति एवं निजां स्वीयां मायां, योगमाया, मादिशत् अज्ञापयामास। ३६

श्लो ॥ तया सपदि निर्व्यूढे, वचने वनमालिनः
गर्भो विगळितो देव्या, इति पौरा विचुक्रुशुः ॥ ६४

तयेति-सपदि तत्काले एव,तया मायया कर्त्र्या, वनमालिनः विष्णोः, वचने, वाक्ये निर्व्यूढे अनुष्ठिते सति,भगवदाज्ञाप्रकारेण कृते सतीत्यर्थः। देव्याः राज्ञाः-देवक्या इति यावत्। राजकन्या त्वा देव्या इत्युक्तम्। गर्भः कुक्षिस्थजन्तुः, विगळितः भ्रष्टः, बभूवेति पौराः पुरजनाः, विचुक्रुशुः विशेषेण रुरुदुः। कंसस्य दुष्टत्वेऽपि तत्पुरजनानां समत्वात् रोदनकर्तृत्व मिति ज्ञेयम् ॥ ६४

श्लो ॥ अथातनुतनुच्छायविशदीकृतदिङ्मुखम्
रोहिणी सुषुवे सूनुं रोहिणीव गरीयसी ॥ ६५

अथेति– अथ मायया रोहिणीजठरे देवकीगर्भनिक्षेपणानन्तरं, रोहिणी तन्नामका आभीरी, अतनुतनुच्छायविशदीकृतदिङ्मुखं अतनुना महता,तनुच्छायेन शरीरकान्त्या,'विभाषा सेनासुराछायेति' क्लीबत्वम्। विशदीकृतानि श्वेतीकृतानि,दिशां मुखानि अन्तराणि यस्य तं तथोक्तं, सूनुं पुत्रं गरीयसी श्रेष्ठा,रोहिणी चन्द्रपत्नी तारा, अतनु तनुच्छायविशदीकृतं दिङ्मुखं, प्राङ्मुखं यस्य तं तथोक्त सूनुं पुत्रं, बुध मिव, सुषुवे उत्पादयामास। बुधो यद्यपि तारायाः बृहस्पतिपत्न्या स्तनय इति प्रतीति रस्ति; तथापि 'रौहिणीयो बुध स्सौम्य' इति कोशात् बुधस्य रौहिणीयत्व मस्ती त्येव मुदाहृत मिति बोध्यम्। बुधोदयेन श्वेतायते खल्वैन्द्री दिक्। अत्र श्लिष्टसाधर्म्योपमालङ्कारः। बलरामस्य श्वेतत्वा द्विशदीकृतेत्युक्तं। तेन च दिशां प्रसन्नत्वं गम्यते ॥ ६५

ग ॥ भगवानपि समनन्तर मानकदुन्दुभिमनोरथपरिपूरणाय देवकीजठर मवजगाहे ॥ ६६

भगवानपीति– समनन्तरं ततः, भगवा नपि वासुदेवोऽपि, अपिना गर्भसम्बन्धयोग्यस्यापीति विरोधो व्यज्यते। आनकदुन्दुभे र्वसुदेवस्य, मनोरथानां कामानां, परिपूरणाय प्रवर्षणार्थं, एतेन विलासे नास्य गर्भसम्बन्धः न तु कर्मणेति विरोधपरिहारः प्रतीयते। देवकीजठरं देवक्याः कुक्षि मवजगाहे अविशत् ॥ ६६

ग ॥ अथ कमपि समय मौग्रसेनि रननुभूतपूर्वसुषमाविशेषविषयीभूता मेता मापन्नसत्त्वा मालोक्य नियत मवलम्बित मुत्पत्स्यमान मपत्य मेव मदत्याहितहेतुभूत मिति चिन्तासन्तानतन्तुवितानसन्दानितान्तःकरणोऽय मभवत् ॥ ६७

अथेति– कमपि समयं 'कालाध्वनो रत्यन्तसंयोगे द्वितीया' कस्मिंश्चि त्काले इत्यर्थः। अननुभूतपूर्वः पूर्व मनुभूतः न भवती त्यननुभूतपूर्वः, अदृष्टचर इत्यर्थः; स चासौ सुषमाविशेषः परमकान्त्यतिशयः, तस्य विषयीभूतां गोचरीभूता, मापन्नसत्त्वां गर्भिणीं, 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' त्यमरः। एतां संक्रान्तभगवत्तेजस्कां देवकी, मालोक्य दृष्ट्वा, अविलम्बितं त्वरितं, यथा तथा उत्पत्स्यमान मुद्भविष्य दपत्यं सन्तान मेव, नियतं निश्चितं, विधिना कृत मितिवा, मदत्याहितस्य मम महाभयस्य, हेतुभूतं कारणं भवती त्येवं चिन्तासन्ताने नैव चिन्तासमूहेनैव, तन्तुवितानेन गुणसमूहेन सन्दानितं बद्ध, मन्तःकरणं चित्तं यस्य स तथोक्तः। अयं कंसः अभवत्। कंस श्चिन्तामापेत्यर्थः॥ ६७

**ग ॥ अथ पितामहपुरस्सरा स्सुराः नारदादिभि रमरमुनिभि स्सह वसुमती मवतीर्य गर्भीकृतचतुर्दशभुवन मपि देवकीगर्भगर्भभवनमध्य मध्यासीनं भगवन्त मम्भोजलोचन मस्तौषुः। तथा हि ॥** ६८

अथेति–अथ कंसविषादानन्तरम्, पितामहपुरस्सराः ब्रह्मप्रमुखाः, सुराः देवाः, नारदादिभिः नारदप्रमुखैः, अमरमुनिभिस्सह देवर्षिभिस्समं, वसुमतीं भुव, मवतीर्य अवरुह्य, प्राप्येति यावत्। गर्भीकृतानि गर्भाः कुक्षिस्थजन्तवः 'अगर्भाः गर्भाः कृतानी त्यभूततद्भावे च्विः।' गर्भे धृतानीत्यर्थः। चतुर्दशभुवनानि पाताळादिचतुर्दशलोकाः येन तं तथोक्त मपि, देवक्याः गर्भः कुक्षि रेव गर्भभवन मभ्यन्तरगृहं, तस्य मध्यं मध्यदेश, मध्यासीनं अधिष्ठितवन्तं 'अधिशीङ्स्थाना मित्याधारस्य कर्मत्वम्'। देवकीगर्भे सन्त मित्यर्थः। भगवन्तं षड्गुणैश्वर्यशालिन, मम्भोजलोचनं विष्णु, मस्तौषुः उपतस्थिरे। तुष्टुवु रित्यर्थः। स्तुति मेव दर्शयति नवभि श्श्लोकै रित्याह। तथाहीति। तदे वोपपादय तीत्यर्थः॥ ६८

**श्लो ॥ दामोदराय दमिताभितदानवाय**
**दारिद्र्यदावदहनात दयापराय**
**दूरीकृतातिदुरिताय दुरासदाय**
**दद्यां नम स्सपदि दारुणदारणाय ॥** ६९

दामोदरा येति– दाम लोकात्मका माला उदरे यस्य स दामोदरः। यद्वा– दामानि रज्जवः तत्तुल्या वळयोऽत्र निगीर्णलक्षणया प्रतिपाद्यन्ते, उदरे यस्य स तथोक्तः। अथवा दाम वनमाला उदरे उपलक्षण मिदं वक्षसोऽपि यस्य स तथोक्तः। तस्मै अत्र दाम उलूखलबन्धनार्थम् यशोदया गृहीता रज्जु, रुदरे यस्य स दामोदर इति व्युत्पत्त्या, भावी उलूखलाकर्षणोत्सवो व्यज्यते। विशेष्य मिदं। अथ विशेषणा न्याह। दमितेति– दमिताः नाशिता, अमिताः अनन्ताः, दानवाः मधुकैटभादयो येन तस्मै दमितामितदानवाय। एतेन पूतना तृणावृताद्यनन्त-

राक्षसवधोऽनेन करिष्यते इति व्यज्यते । दारिद्र्यदावदहनाय दारिद्र्य मकिञ्चनत्वं, तदेव दावो वनम् तस्य दहनः दावाग्निः तस्मै इति रूपकम् । दारिद्र्यनिवारका येत्यर्थः । एतेन कुचेलोपाख्यानं व्यज्यते । दयापराय दयायाम् कृपायां, पर आसक्त, स्तस्मै तथोक्ताय करुणासमुद्रा येत्यर्थः । एतेन कुब्जाकृष्णविलासादिकं व्यज्यते । दूरीकृतातिदुरिताय दूरीकृतं नाशित,मतिदुरित मत्यन्तपापः,अर्था द्भक्तानां येन तस्मै । एतेन शिशुपालसायुज्यदानादिकथाः व्यज्यन्ते । दुरासदाय दुर्धर्षाय । एतेन जरासन्धादि युद्धकथा प्रतीयते । दारुणादारणाय दारुणानां दुष्टानां दारणाय विदारकाय नाशका येति यावत् । एतेन भारतयुद्धं व्यज्यते । एवंविधाय दामोदराय सपदि इदानीं नमः प्रणतिं जात्येकवचनं नमांसीत्यर्थः । दद्यां वितरेयं प्रार्थनायां लिङ् । प्रत्येकाभिप्राये णेद मेकवचनम् । अत्र शब्दालङ्कार स्स्फुट एव । सच रूपकसङ्कीर्ण इति विवेकः :– ६९

श्लो ॥ नीलाभ्रकान्तिनिकुरुम्बकरम्भिताय
कल्याणजालनिधये करुणार्णवाय
लीलालयाय पललाशपलालजाल
जञ्झानिलाय पुरुषाय नमः परस्मै ॥ ७०

नीलाभ्रेति– नीलाभ्रकान्तिनिकुरुम्बकरम्भिताय नीलाभ्रानां कृष्णमेघानां, कान्तिनिकुरुम्बेण शोभासन्तानेन, करम्भिताय व्याप्ताय; मिश्रितायेति यावत् । नीलमेघकान्तिनिकुरुम्बस्य कृष्णे व्याप्त्य योगात् तत्तुल्यकान्त्याक्षेपः । तस्मा न्निदर्शनालङ्कारः । अनेन च नीलमेघ स्येव जगत्सन्तापहारित्वं वस्तु व्यज्यते । इत्यलङ्कारेण वस्तुध्वनिः । एतेन विग्रहसौन्दर्यं व्यक्तम् । कल्याणजालनिधये कल्याणजालानां मङ्गळसमूहानां, निधिः निक्षेपः, तस्मै अमितकल्याणा येत्यर्थः । एतेन जीवव न्नायं दुर्भग इति फलितम् । नन्वीश्वरस्य कुतो गर्भवासादिक्लेशाङ्गीकार इत्यत आह । करुणार्णवा येति, दयासमुद्रा येत्यर्थः । आश्रिते ष्वस्मासु, ब्रह्मादिषु, दयया तवायं गर्भवास.इति भावः । नन्वेवमपि जीवस्येव ममापि गर्भसम्बन्धेन क्लेश स्स्या दित्य मत आह । लीलालया येति विलास निवासा येत्यर्थः । यद्वा । ईश्वरस्य निर्गुणस्य कथं करुणयापि गर्भक्लेशः । अत आह– लीलालया येति एतद्गर्भवासादिकं तव विलास एव नतु बन्धकं जीवस्येवेति भावः । भगवदाविर्भावहेतुभूतां प्रधानां लीला माह । पललाशेति-पललाशाः क्रव्यादाः ते एव पलालजालानि तुषसङ्घाः, तेषां तेभ्यो वा जञ्झानिलः महावायुः तस्मै पललाशपलालजालजञ्झानिलाय, लीलया युयुत्सो स्तवाज्ञया जाताभ्यां शिशुपालदन्तवक्त्राभिधाभ्यां जयविजयाभ्यां साकं युयुत्सया तवाय माविर्भाव इति भावः । एवं विधाय परस्मै प्रकृतिविलक्षणाय पुरुषाय पुरुषोत्तमायेत्यर्थः । नमः प्रणामः अस्त्विति शेषः ॥ ७०

एवं सगुणत्वेन स्तुत्वा निर्गुणस्तुति मुपक्रमन्ते–

श्लो ॥ द्रष्टा त्वमेव सकलस्य न दृश्य मेत
दित्याकलय्य तदनु त्वदनन्यभूतम्
व्यामृश्य दृश्य मपि तां धिय मप्यपास्य
संवित्सुखैकरसिका स्समुपासते त्वाम् ॥ ७१

द्रष्टेति– त्वं सकलस्य प्रपञ्चस्य द्रष्टा ज्ञाता साक्षीति यावत्; एव भवसीति शेषः। अवधारणफलित माह। न दृश्य मेत दिति। एत त्प्रत्यक्षदृश्यं ज्ञेयं जगत् त्वं नभवसि द्रष्टेव त्वं भवसि न तु दृश्य मित्यर्थः। दृशे र्यद्यपि प्रेक्षणमर्थः तथापि 'दृशोऽनालोचने कञ्चेति सूत्रात्' ज्ञान मत्रार्थः। इत्येव माकलय्य ज्ञात्वा दृश्यभूतसर्वप्रपञ्चविलक्षणः कश्चन द्रष्टा विद्यते, इति गुरुशास्त्राभ्यां परोक्षतो विदित्वेति भावः। तदनु साक्षिबोधदार्ढ्यानन्तरं दृश्य मपि जग दपि, त्वदनन्यभूतं त्वत्तोऽभिन्नं व्यामृश्य विचार्य "यतो वा इमानि भूतानि जायन्ते" इत्यादि कारण वाक्यविचारणेन "सर्वं खल्विदं ब्रह्म" त्याद्य द्वैतश्रुतिमननेन च कारणाभिन्नं कार्यं भवितु मर्हति, मृदभिन्नघटव दिति युक्त्या च त्वत्तो जन्य मिदं जग त्त्वदभिन्न मेवेति निश्चित्येति भावः। तामपि धियं दृग्दृश्यावगाहिनीं बुद्धिं अपास्य त्यक्त्वा "ज्ञानेन ज्ञेय मालोच्य पश्चात् ज्ञानञ्च सन्त्यजे" दिति शास्त्रा दिति भावः। संवित्सुखैकरसिकाः चिदानन्दरसानुभवप्रवणाः, मुनय इति शेषः। त्वां केवलात्मस्वरूपं, समुपासते अनुभव न्तीत्यर्थः। स्वस्वरूपेण तिष्ठन्तीति भावः। इयमेव हि निर्विकल्पसमाधेः पराकाष्ठा ॥ ७१

श्लो ॥ स्रष्टा त्वमेव जगतः परिपालकोऽपि
संहारकोऽपि भवसीति समामनन्ति
कारुण्यपूरपरिपूरितमानसस्य
संहारधी स्तव कथं न्विति न प्रतीमः ॥ ७२

स्रष्टेति– जगतः प्रपञ्चस्य स्रष्टा उत्पादक स्त्वमेव भवसि; जगतः परिपालको रक्षकोऽपि त्वमेव भवसि; जगत स्संहारकोऽपि त्वमेव भवसि। यद्वा जगत स्स्रष्टा परिपालक श्च संहारकश्च त्वमेव भवसी त्येकवाक्यान्वयः, इति समामनन्ति वदन्ति; श्रुतय इति शेषः। 'यतो वा इमानि भूतानि जायन्ते, य त्प्रय न्त्यभिसंविशन्ती' त्या द्याः श्रुतय एवं वदन्तीतिभावः। कारुण्यपूरपरिपूरित मानसस्य करुणारसभरितान्तःकरणस्य, तव संहारधीः जगद्विनाशनबुद्धिः, कथन्नु कथं वा आसीत्। इति न प्रतीमः न जानीमः; विरुद्धत्वा न्न विश्वसि म इत्यर्थः ॥ ७२

श्लो ॥ आनन्दजाश्रुभरिताक्ष मुदीतकम्प
मुद्गतगद्गद मुदञ्चितरोमहर्षम्

त्वा मेव संविदरविन्दमरन्दबिन्दु
सन्दोहसान्द्र मभिवन्द्य मुदं प्रयान्ति ॥ ७३

आनन्देति– आनन्दजाश्रुभरिताक्षं आनन्दजैः सन्तोषा दुदितैः, अश्रुभिः भरिते पूर्णे अक्षिणी नेत्रे यस्मिन् कर्मणि त यथा तथा। "बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गादिति षच्।" उदीतकम्पः उदीतः उत्पन्नः,कम्पः वेपथुः,यस्मिन् कर्मणि त यथा तथा। उद्भूतगद्गदं उत्पन्नदीनस्वरं यथा तथा। उदञ्चितरोमहर्षं आविर्भूतरोमाञ्च यथा तथा च। संविदरविन्दमरन्दबिन्दुसन्दोहसान्द्रं संविदरविन्दं हृदयकमलं, तत्र ये मरन्दबिन्दवः मकरन्दपृषतः, तेषां सन्दोहेन, समूहेन सान्द्रं व्याप्तं, हृदयारविन्दे स्थापित मिति यावत्। त्वामेव अभिवन्द्य नमस्कृत्य स्तुत्वा चेत्यर्थः। मुद मानन्दं, प्रयान्ति; भक्ता इति शेषः। एतेन सगुणोपासना प्रपञ्चिता ॥ ७३

श्लो॥ तीर्णानि शोकजलधिं यमिनां मनांसि
धृत्वा तवातिमृदुळं चरणप्रवाळम्
मज्जन्ति हन्त महती मपि गात्रयष्टि
मालम्ब्य निर्भरसुखामृतदीर्घिकासु ॥ ७४

तीर्णानीति– यमिना मुपरतानां मुनीना मिति यावत्। मनांसि चित्तानि, तव सम्बन्धि अतिमृदुळ मधिकस्निग्धं, चरणप्रवाळं पादरूपं पल्लवं, धृत्वा हृदि कृत्वेत्यर्थः; शोकजलधिं दुःखसागरं, तीर्णानि 'तॄधातोः कर्तरि क्तः।' अतरन्नित्यर्थः। महतीं गुर्वी मपि, तव गात्रयष्टिं शरीररूपां लता, मालम्ब्य धृत्वा निर्भरसुखामृतदीर्घिकासु निर्भरं च तत्सुखामृतं च निर्भरसुखामृत ममृतशब्दोऽत्र जलवाची, सुखमे वामृत मिति रूपकम्। तस्य दीर्घिकासु तत्प्रधानासु दीर्घिका स्विति वा। दीर्घिकाः वाप्यः, मज्जन्ति मग्नाः भवन्ति, हन्ते त्याश्चर्ये। अत्रापि यमिनां मनांसीत्येव कर्तृपदम्। अत्र अतिमृदुपल्लव मवलम्ब्य यानि समुद्र मपि लङ्घितवन्ति. तेषां दृढलताव लम्बनेनापि दीर्घिकास्वेव मज्जनं जात मित्याश्चर्यं ध्वन्यते। वस्तुतस्तु भगवच्चरणारविन्दमात्रस्फुरणेन मनस श्शोकोपरति र्भवति। ध्यानाभ्यासवशेन पश्चा द्भगवत्सर्वाङ्गस्फूर्तौ सत्यां परमानन्दो जायते इति मुख्यार्थः ॥ ७४

श्लो॥ लब्ध्वा भवत्पदसरोजपरागजाल
सङ्गं शिलापि जडभाव ममुञ्च दाशु
स्तम्भं भजन्ति हृदयेन भवन्त मेव
चित्तं चिराय परिरभ्य शरीरिणोऽपि ॥ ७५

लब्ध्वेति– शिलापि दृषदपि, भवत्पदसरोजपरागजालसङ्गं त्वच्चरणारविन्दरजस्समूहसम्बन्धं, लब्ध्वा प्राप्य, आशु तत्क्षणमेव, जडभावं जडत्वं, अचेतनत्व मिति यावत्, अमुञ्चत् तत्त्याज, चैतन्य मापेति भावः। अत्र अहल्याशापविमोचनरूपो रामावतारवृत्तान्तो वर्णित इति ज्ञेयम्। शरीरिणोऽपि चेतना अपि, चिराय चिरकालं, हृदयेन मनसा, वक्षसेति च व्यज्यते। भवन्त मेव त्वामेव, परिरभ्य ध्यात्वा,आलिंग्येति च व्यज्यते। स्तम्भं सात्त्विकभाव,मन्यत्र जडीभावं, भजन्ति प्राप्नुवन्ति, चित्र माश्चर्य मिद मित्यर्थः। अत्र वाच्यार्थे चित्राभावात्। चित्र मिति पदं व्यङ्ग्यार्थं प्रकटयतीति गुणीभूतव्यङ्ग्य मिदम्। यद्वा शरीरिणोऽपि स्तम्भं जाड्यं भजन्तीति विरोधः। चेतनाना मचेतनीभवनस्य विरुद्धत्वात्। स्तम्भं सात्त्विकभाव मिति तत्परिहारः। तेन विरोधाभासोऽयम् 'आभासत्वे विरोधस्य विरोधाभास इष्यते' इति तल्लक्षणात्। अनेन च भगवतः अघटितघटनापटीयस्त्वं व्यज्यते ॥ ७५

श्लो॥ स्थाने विदारितहृदा नखरै रभावि
य द्वैरिणा नरहरे! तव गर्वभाजा
यान्ति श्रिता अपि विलोकनमात्रत स्ते
हृद्ग्रन्थिभेद मिति किन्तु विचित्रपात्रम्॥ ७६

स्थाने इति– हे नरहरे! नरसिंह! गर्वभाजा दर्पवता, वैरिणा शत्रुणा, हिरण्यकशिपुनेत्यर्थः। तव नखरैः नखैः, विदारितहृदा त्रुटितवक्षसा, अभावि भूत मिति यत् 'भावे लुङ्' 'यत्तदो र्नित्यसम्बन्धात्' तत्, स्थाने युक्त मित्यर्थः। त्वन्नखै श्शत्रुहृदयस्य विदळनं युक्तमेवेति भावः। इति नरसिंहावतारो वर्णितः। अथ अयुक्तत्वं दर्शयति– यान्तीति। किन्तु श्रिताः आश्रिता भक्ता अपि,नतु शत्रव इति भावः। ते तव,विलोकनमात्रतः दर्शनमात्रात्, नतु नखादि क्षता दिति भावः। हृद्ग्रन्थिभेदं हृदयमर्मविशरणं, यान्ति भजन्तीति विरोधः। हृद्ग्रन्थीनां कामादीनां, भेदं नाशनं, यान्तीति तत्परिहारः "भिद्यते हृदयग्रन्थि" रिति गीतावचनात्। इतीदं विचित्रपात्र माश्चर्य विषय मित्यर्थः; भवतीति शेषः। विरोधाभासालङ्कारः॥ ७६

श्लो॥ अनीशा याथार्थ्यं गहन मभिधातुं श्रुतिरपि
स्वशक्ते श्शैथिल्यं स्फुटयति यतो वाचयति ते
अत स्स्तोतुं शक्ताः कथ मिव वयं त्वां किमुत ते
कृपापारावारो जयतु जगतीपालनकृते॥ ७७

अनीशेति – "यतोवाच" इति श्रुति रपि "यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति" वेदोऽपि, गहनं दुर्ज्ञेयं, ते तव, याथार्थ्यं तत्त्वं, मभिधातुम् वक्तुं, अनीशा असमर्था सती, स्वशक्ते

स्वसामर्थ्यस्य, शैथिल्यं शिथिलत्वं, राहित्य मिति यावत्; स्फुटयति प्रकटयति। यद्वा श्रुति रपि ते गहनं याथार्थ्य मभिधातु मनीशा सती यतो वाच इत्यादिना स्वशक्ते श्शैथिल्यं स्फुटयतीत्यन्वयः। अतः श्रुतिशक्त्यविषयत्वात् त्वां स्तोतु मभिवादयितुं वयं कथमिव शक्ता स्समर्थाः? न कथ मपीत्यर्थः। किमुत किन्तु- जगतीपालनकृते भूरक्षार्थं, ते तव, सम्बन्धी कृपापारावारः दयारूपसमुद्रः, जयतु सर्वोत्कर्षेण वर्तताद्, इति प्रार्थनायां लोट्। कृपया जगतीं पाहीति भावः॥ ७७

श्लो॥ स्तुत्वैव मरविन्दाक्ष, मुग्रसेन सुतार्दिताम्
देवकीं मुहु राश्वास्य, देवा स्वभवनं ययुः॥ ७८

स्तुत्वेति--एव मुक्तप्रकारेण, अरविन्दाक्ष पुण्डरीकाक्षं, स्तुत्वा अभिवन्द्य, उग्रसेनसुतार्दितां, कंसपरिपीडितां, वर्तमाने क्तः। देवकीं मुहुः अत्यर्थ माश्वास्य सांत्वयित्वा, देवाः ब्रह्मादयः सुराः स्वभवनं स्वलोकं, ययुः जग्मुः॥ ७८

**ग॥ तदनु देवकनन्दना समुपलक्षितदौहृदलक्षणा विलक्षणसुषमाविशेषा मन्द मन्द मपहाय विविधभूषणभर मपचितबल मपि समुचितरुचिनिचय मवयवसमुदय मदीधरत्॥** ७९

तदन्विति- तदनु देवनिर्गमनानन्तरं, समुपलक्षितदौहृदलक्षणा प्राप्तगर्भधारणचिह्ना, गर्भचिह्नै रुपलक्षितेति यावत्। अतएव विलक्षणसुषमाविशेषा विलक्षणः यत्र कुत्रापि लोके अप्रसिद्धः, सुषमाविशेषः कान्त्यतिशयः, यस्यास्सा तथोक्ता, देवकनन्दना देवकी, मन्दमन्दं 'प्रकारे गुणवचन स्येति द्विर्भावः।' तेन 'कर्मधारयव द्भावा त्सुब्लोपः।' मन्दसदृश मीषन्मन्दं यथा तथेत्यर्थः। शनैरिति यावत्। विविधभूषणभरं विविध मावेध्यारोप्यादिभेदै र्बहुविधं भूषणभर माभरणनिकरं, मपहाय त्यक्त्वा, प्रथमं मेखलां ततो वलय मित्येवंक्रमेण त्यक्तसर्वभूषणेति भावः। अपचितबलमपि विगत-शरीरदार्ढ्यमपि समुचितरुचिनिचयं योग्यकान्तिबृन्दं, मवयवसमुदयं करचरणाद्यङ्ग सन्ततिम्, अदीधरत् दधार। "धरते र्णौ चङि सन्वद्भावः, दीर्घश्च"। यद्यपि धारयामासे त्येवार्थो न्याय्यः; तथापि णि जर्थोत्रऽविवक्षित इति कृत्वा दधारेत्युक्त मिति बोध्यम्॥ ६९

श्लो॥ यच्चिन्तनेनापि निमेषमात्रं
सारूप्य माप्येत त मभ्रनीलम्
गर्भे विधायापि विरूपभावं
बभार गौरा वसुदेव दाराः॥ ८०

य दिति- निमेषमात्रं निमेषपरिमितकालेऽपि, नतु बहुकाल मिति भावः। यच्चिंतनेनापि यस्य विष्णो श्चिन्तनेन मननेनापि, नतु बहुकालशरीरसबन्धेनेति भावः। सारूप्यं समान-

स्वभावता, समाननीलपीतादिरूपत्वञ्च । 'रूपं स्वभावे सौन्दर्ये आकारश्लोकयो रपीति' विश्वः । समानं रूपं यस्य सः सरूपः । समानस्येति– योगविभागात् समानस्य सभावः । यद्वा सह समानम् 'अव्ययाना मनेकार्थत्वात् ।' रूपं यस्य सः सरूपः । वोपसर्जन स्येति सहस्य सभावः । सरूपस्य भाव स्सारूप्यम् । 'गुणवचनेति ष्यञ् ।' आप्येत गम्येत । भक्तै रिति शेषः । अभ्रनीलं मेघव त्कृष्णवर्णं, तं कृष्णं, गर्भे विधायापि कुक्षौ धृत्वापि, वसुदेवदाराः वसुदेवस्य दाराः भार्या 'दाराः पुंसि च भूम्न्येवे' त्यभिधाना द्बहुत्वं, पुंस्त्वञ्च । देवकीत्यर्थः । गौरा पाण्डुरा सती, विरूपभावं वैरूप्यं, श्वेतत्व मिति यावत् । बभार अधरत् । अत्र गर्भे हरिं धृत्वापि तन्नैल्यसङ्क्रमणेन नीला नासीदि त्यतद्गुणालङ्कारः । 'सङ्गतान्यगुणानङ्गीकार माहु रतद्गुण' मिति तल्लक्षणात् ॥ ८०

श्लो॥ गौरवं भजति गर्भसम्भवा
न्मध्यमे मृगदृश स्तनीयसि
साधु तद्द्रढिमकृ द्वलिच्छलं
हेमदामनिकुरुम्ब मत्रुटत् ॥ ८१

गौरव मिति – मृगदृशः मृगस्येव दृशौ यस्या स्तस्याः हरिणव चञ्चलाक्ष्या इत्यर्थः । देवक्या इति यावत् । सम्बन्धिनि तनीयसि अत्यल्पे, मध्यमे "मध्या न्म इति मः ।" मध्यभागे गर्भसम्भवात् कुक्षिस्थजन्तुभरणा द्धेतोः । गौरवं भजति सति गुरुत्वं प्राप्नुवति सति, साधु योग्यं, तद्द्रढिमकृत् तस्य मध्यस्य द्रढिमानं दार्ढ्यं करोतीति तथोक्तम् । मध्यस्य तनीयस्त्वा त्तद्भङ्गभिया विधिना कृत मित्यर्थः । वलिच्छलं वळय इति भङ्गय इति छलं मिषं, यस्य तत् त्रिवळिव्याज मित्यर्थः । हेमदामनिकुरुम्बं स्वर्णरज्जुसमूहः, अत्रुटत् छिन्नं बभूवेत्यर्थः । स्वतएव दृढत्वा द्वैयर्थ्य शङ्कया शिथिलीभूत मिति भावः । गर्भे वर्धमाने सति वळयो नालक्ष्यन्तेति मुख्यार्थः । अत्र छलशब्देन वळिषु वळित्व मपह्नुत्य हेमदामनिकुरुम्बत्वोत्प्रेक्षणा दुत्प्रेक्षालङ्कारः स च व्यञ्जका प्रयोगा द्गम्यः॥ ८१

श्लो॥ गभीरभावेन बभूव नाभी
महाबिलं लोलविलोचनायाः
अथापि गर्भस्फुरणेन विष्णु
पदच्छला त्प्राप महाबिलत्वम् ॥ ८२

गभीरेति– लोलविलोचनायाः चपलाक्ष्याः, देवक्याः नाभी नाभिः । गभीरभावेन अगाध त्वेन हेतुना, महाबिलं महच्च त द्बिलं चेति कर्मधारये आ न्महत इत्यात्वम् । बृह त्सुषिर मित्यर्थः ।

बभूव अभूत् । इदानीं गर्भस्फुरणेन गर्भस्थौल्येन हेतुना, गाथापि अगभीरापि, विष्णुपदच्छलात् विष्णोः पदं स्थानं विष्णुपदं, वियदिति च गम्यते । तस्य छला द्व्याजात्, महाबिलत्व माकाशत्वं, महारन्ध्रत्वं चेति गम्यते, प्राप अभजत् । गाथापि महाबिलत्व मापेति । विरोधस्य आकाशत्वं प्रापे त्याभासीकरणा द्विरोधाभासालङ्कारः । अयं च विष्णुपदच्छला दित्यपह्नवानुप्राणितः सोऽप्यपह्नवः विष्णुपदशद्बश्लेषबला दुज्जीवित इति लयाणा मङ्गाङ्गिभावेन सङ्करः । गर्भोदया त्प्राक् नाभ्याः गाम्भीर्या न्महाबिलत्वं । इदानीं तु विष्णुपदत्वा न्महाबिलत्व मिति मुख्यार्थः ॥ ८२

अथ कृष्णावतारं वर्णयति —

**ग॥ अथ कदाचि दखिलदेहि ष्वमन्दानन्दकन्दळितेषु दळितेषु च मनुजभुवनकलुषेषु कलुषेषु च विमतहृदयकमलेषु विमलेषु च सकलसलिलाशयेषु विमलाशयेषु च विबुधजनसमूहेषु सम्मोहेषु च सकलासुरेषु भासुरेषु च निखिलदिगन्तेषु शान्तेषु च जीमूतगर्जितेषु तर्जितेषु च व्यसननिर्झ रेषु जर्जरेषु च सकलसमयारिष्टेषु वृष्टेषु च कल्पपादपकुसुमतरङ्गितेषु तरङ्गितेषु च गीर्वाणवरवर्णिनीनृत्तेषु वृत्तेषु च गगनकल्लोलिनीकल्लोलमालिकाकलकलविडम्बशौण्डनिर्जरजयडिण्डिमाडम्बरेषु परिमधुरानगर मधिनिशीथ मभिभूतविरोचनाभिधानतेजस्त्रितय मुद्भासितजगत्त्रय मनुद्भूतपूर्वं किमपि महः प्रादुरभवत् ॥** ८३

अथेति — देवकीगर्भपरिपूर्त्य नन्तरम्, कदाचि त्कुत्रचि च्छुभकाले, अखिलदेहिषु सर्वप्राणिषु, अमन्दानन्दकन्दळितेषु अमितानन्दसञ्जातकन्दळेषु सत्सु, कन्दळिते ष्वित्यत्र तारकादित्वा दितच् । सञ्जातानन्देषु सत्स्वित्यर्थः । मनुभुवनकलुषेषु मनुष्यलोकपापेषु, दळितेषु अपहृतेषु सत्सु, विमतानां विरोधिनां, कंसाद्यसुरांशानां हृदयानि कमलानीव तेषु मनःपद्मेषु, कलुषेषु दुःखितेषु सत्सु, सकलसलिलाशयेषु समस्तजलाशयेषु, विमलेषु निर्मलेषु सत्सु, विबुधजन समूहेषु देवजनसङ्घेषु, विमलाशयेषु निर्मलहृदयेषु सत्सु, प्रसन्नमनस्सु सत्स्वित्यर्थः । सकलासुरेषु सर्वराक्षसेषु, बकपूतनाप्रलम्बादिषु सम्मोहेषु सम्यक् मोहो मूर्छा येषां तेषु सत्सु, निखिलदिगन्तेषु सर्वदिग्भागेषु भासुरेषु प्रकाशमानेषु, सत्सु, जीमूतगर्जितेषु, मेघध्वनिषु, शान्तेषु उपरतेषु सत्सु, श्रावणमासस्य वर्षाकालत्वा न्मेघध्वनिसम्भवः । गर्जितानामशुभसूचनत्वा च्छुभार्थं तच्छान्तिवचन मिति ज्ञेयम् । व्यसननिर्झरेषु दुःखप्रवाहेषु जर्जरेषु नाशितेषु सत्सु, सकलसमयारिष्टेषु विषघटिकादिसर्व दुस्समयेषु झर्झरेषु विदीर्णेषु अपहृतेषु सत्स्वित्यर्थः; विषघटिकाद्यरिष्टाभाव समये इति यावत् । वृष्टेषु वर्षेषु कल्पपादपकुसुमतरङ्गितेषु कल्पवृक्षपुष्पै स्सञ्जाततरङ्गेषु सत्सु, यद्वा । कल्पपादपकुसुमानां तरङ्गितेषु तरङ्गेषु समूहे ष्वित्यर्थः ; वृष्टेषु सत्सु देवै रिति शेषः । गीर्वाण वरवर्णिनीनृत्तेषु अप्सरोनाट्येषु तरङ्गितेषु वर्धितेषु सत्सु, गगनकल्लोलिन्याः आकाशगङ्गायाः तस्या

मिति वा कल्लोलमालिकानां तरङ्गसङ्घानां, ये कलकलाः तद्वत्ध्वनयः तेषां विडम्बे अनुकरणे, शौण्डाः प्रशस्ता स्समर्था इत्यर्थः। निर्जराणां देवानां सम्बन्धिनां जयार्थं डिण्डिमाः जयडिण्डिमाः वाद्यविशेषाः तेषा माडम्बराः ध्वनय इत्यर्थः। गगनकल्लोलिनीकल्लोलमालिकाकलकलविडम्बशौण्डाश्च निर्जरजयडिण्डिमाडम्बरा श्चेति कर्मधारयः। तेषु तथोक्तेषु वृत्तेषु प्रवृत्तेषु सत्सु। परिमधुरा-नगरं मधुरापत्तने "विभक्त्यर्थेऽव्ययीभावः" अधिनिशीथं निशीथसमये, अभिभूतं तिरस्कृतं, विरोचनाभिधानं विरोचननामकं; तेजस्त्रितयं तेजस्त्रयं येन तत् अग्नीन्द्वर्कादिविरोचना इत्यभिधानात् सूर्यचन्द्राग्नितिरस्कृतिचण मित्यर्थः। अतएव उद्भासितजगत्त्रयं प्रदीपितत्रिलोक, मनुद्भूतपूर्वं पूर्वं यदाकदा प्यनुत्पन्नं किम प्यनिर्वाच्यं महः कृष्णात्मकं तेजः, प्रादुरभवत् आविर्बभूव। यद्वा। गर्भ-कुहरा च्छ्रीकृष्णनिर्गमनसमये बहिः प्रसृतं तेज एवात्र महश्शब्देन विवक्षित मुत्तरवाक्यार्थानु-गुण्यात्॥ ८३

श्लो॥ आविर्बभूव देवक्या स्तत श्श्रीवत्सलाञ्छनः
द्रष्टु मेन मिव प्राच्या श्शीतांशु रपि तत्क्षणम्॥ ८४

आविरिति— ततः तेजःप्रादुर्भावानन्तरम्। देवक्याः 'जनि कर्तुः प्रकृति रित्यपादानसंज्ञया पञ्चमी' श्रीवत्सलाञ्छनः भगवान् कृष्णः, आविर्बभूव उदपद्यत। तत्क्षणं तदैव। एनं कृष्णं द्रष्टु मिवेत्युत्प्रेक्षा। प्राच्याः पूर्वदिशस्सकाशात्, शीतांशु रपि चन्द्रोपि, आवि-र्बभू वेत्यन्वयः। दीपकालङ्कारः। स च उत्प्रेक्षासंसृष्टः। अत्र श्रीवत्सलाञ्छनं द्रष्टुं मृगलाञ्छन स्समाजगा मेति श्रीकृष्णचन्द्रयो स्साधर्म्या दन्योन्यप्रेम व्यज्यते। शीता श्शान्ताः सङ्कोचिता इति यावत्, अंशवो यस्य स इति व्युत्पत्त्या मृगलाञ्छनरूपार्थप्रतीते रिति बोध्यम्। किञ्च। स्वभगिनीभर्तारं कृष्णं द्रष्टुं चन्द्र आयया विति चन्द्रस्य कृष्णविषयं प्रेम व्यज्यते। अपिच। चन्द्रं द्रष्टुं कृष्णो न ययौ; किन्तु कृष्णं द्रष्टु मेव चन्द्र आयया विति चन्द्रा दधिकतेजोवत्त्वं कृष्णस्य व्यज्यते। दीपकालङ्कारेण चन्द्रकृष्णयो स्साम्यावगमात् चन्द्रवज्जगदाह्लादकरत्वं कृष्णस्य व्यज्यते। चन्द्रोदयसमकाले श्रीकृष्णः आविर्बभू वेति मुख्यार्थः॥ ८४

श्लो॥ किशोरं न्यध्याय त्तदनु वसुदेव स्स्वतपसा
मसीमाना मेनं फल मिव नवीनारुणनिभम्,
कृपापारावारं करबदरकल्पं सुकृतिनां
सुधाधाराधारायितनयनधाराञ्चितमुखम्॥ ८५

किशोर मिति— तदनु आविर्भावानन्तरं, वसुदेवः एनं पूर्वोक्तं किशोरं शिशुं, न्यध्यायत् ददर्श। किशोर मेव विशिनष्टि श्लोकत्रयेण- असीमाना मनवधीनां, स्वस्य तपसां फलं परिपाक

मिव स्थित मित्युत्प्रेक्षा। नवीनारुणनिभम् ,नवीनेन नूतनेन,अरुणेन तुल्य इत्यस्वपदविग्रहः,तम् तथोक्तं प्रातःकालसूर्यव न्मृदुलारुणतेजस मित्यर्थः। कृपापारावारं दयासमुद्रम्, सुकृतिनां पुण्यशालिनां, करबदरकल्पं करतलामलकव त्सुलभ मित्यर्थः। सुधाधारायाः अमृतप्रवाहस्य, आधारायितया आश्रयीभूतया, नयनधारया अपाङ्गै रित्यर्थः। अञ्चितं रम्यं, मुख माननं यस्य तं तथोक्तं। अत्र असीमानां स्वतपसां लतास्थानीयानां नवीनारुणनिभं परिपक्व मिति यावत्। फलमिव स्थित मिति निरवयवरूपकानुप्राणिता प्युत्प्रेक्षा प्रतीयते। तच्च फलं सुकृतिना मेव सुग्रहं; नत्वन्येषा मिति करबदरकल्पं सुकृतिना मित्यनेन व्यक्तम्। सुधाधा रेत्यनेन अमृतवत् तत्फलं स्वाद्विति गम्यते। इदं च फलं कल्पवृक्षफलव दभिलषितार्थप्रद मिति कृपापारावा रेत्यनेन व्यज्यते॥ ८५

श्लो॥ खनिं कल्याणानां यदुकुलमहाभाग्यविभवं
स्फुरल्लीलाजालं वलभिदुपलश्यामलतनुम्,
गदां शङ्खं चक्रं धनु रपि दधानं करतलै
स्तनौ पीतं वास श्शिरसि मकुटं कौस्तुभ मपि॥ ८६

खनि मिति– कल्याणानां मङ्गळानां, सुवर्ण स्येति च व्यज्यते। खनिं निधिं, यथा प्रसिद्धः खनिः निरन्तर मपह्रियमाणस्वोदरस्थद्रव्योऽपि अलुप्तद्रव्यस्सन् वर्तते, एवं भगवानपि कविभि रनवरत मुद्गृह्यमाणगुणगणोऽपि प्रतिपदस्फुरदभिनवगुणगणपरिपूरित एव वर्तते इति खनिसाम्यं कृष्णस्य बोध्यम्। यदुकुलमहाभाग्यविभवं यदुकुलस्य यादववंशस्य, यन्महाभाग्य ममित सुकृतं, तस्य विभवः विलासः, विवर्त इति यावत्। तम् इतःप्राक् स्वतपःफलत्वेन निर्णीतम्; इदानीं तु स्ववंशतपःफलत्वे नेति विवेकः। एतेन वसुदेवपत्न्याः भगवदाविर्भावं प्रति न केवलं वसुदेवानन्तजन्मसम्बन्धिसुकृतं कारणं; किन्तु तद्वंशीयानन्तपुरुषानन्तजन्मसञ्चितं सुकृत मेवेति आक्षेपालङ्कारो व्यज्यते। 'आक्षेप स्स्वसमुक्तस्य, प्रतिषेधो विचारणा' दिति तल्लक्षणात्। स्फुर ल्लीलाजालं प्रकाशमानविलाससमूहम्, एतेन भगवतो लीलैव एवं भगवन्त माविर्भावयति; नतु मत्सुकृतं नापि मद्वंशसुकृत मिति पूर्वोक्तस्याक्षेपो व्यज्यते। अथ विग्रहगुणं विशिनष्टि 'वलभिदुपलश्यामलतनु, मिति- वलभिदुपलः इन्द्रनीलमणिः,तद्वत् श्यामला श्यामा, तनुः यस्य तम् तथोक्तं, नीलवर्ण मिति यावत्। एतेन नाय मङ्गारवन्नीलः किन्त्विन्द्रनीलव त्परमशोभ इति फलितम्। अथ भूषणा न्याह गदा मित्यादिना। करतलैः हस्तप्रदेशैः बहुत्वा च्चतुर्भि रित्यर्थः। गदां कौमोदकीं, शङ्खं पाञ्चजन्यं, चक्रं सुदर्शनं, धनुरपि शार्ङ्गं च,दधानं, बिभ्राणं,तनौ शरीरे,पीतं वासो वस्त्रं, दधानं पीताम्बर मित्यर्थः। शिरसि मूर्धनि, मकुटं किरीटं, कौस्तुभमपि समुद्रजं कौस्तु भाख्यं रत्नं च दधानं; यद्यपि कौस्तुभं गळे वर्तते नतु शिरसि, तथापि यथो र्लाक्षालक्ष्मी

रुणहरिचूडामणिरुचि रित्यत्र हरेः चूडामणिं कौस्तुभ इत्याख्यातं सर्वज्ञलोलक्ष्मणे नेति श्रुत्वा प्रकृतेऽपि शिरसीत्युक्त मिति ज्ञेयम् । यद्वा । शिरसि मकुटं दधानं कौस्तुभञ्च, दधान, मर्भा द्गळे इति शेषः इति व्याख्येयम् ॥ ७६

श्लो॥ तनूजानां पाण्डोः किमपि कुलदैवं सकरुणं
विलोलल्लावण्यामृतजलधिवेलायिततनुम्
गुणाना मम्भोधिं सुकृतनिचयं विग्रहभृतं
प्रकाशा स्तन्वानं चकचकितभासै र्दशदिशः ॥ ८७

तनूजाना मिति— पाण्डो स्तनूजानां सुतानां धर्मादीनां, पञ्चानां किम प्यनिर्वाच्यं कुलदैवं वंशदेवताभूतम् । वेदं वाक्यं, वसुदेवफणितं किन्तु कविवाक्य मिति भविष्यत्पाण्डवपक्षपातित्व-वचने न दोषः, तत्र हेतु माह सकरुण मिति - सदय माश्रितवत्सल मित्यर्थः । अतएव कृपापारावार मित्यनेन न पौनरुक्त्यम् । विलोलल्लावण्याऽमृतजलधिवेलायिततनुं विलोलतः चञ्चलस्य लावण्यं भूयिष्ठं तेज एवाद्भि र्बहुळाभि र्मृदूकृतम् । " चक्षुरानन्दजनकं लावण्य मिति " कथ्यते, इत्युक्त लक्षणं सौम्यतेजः तदेवामृतं जलं, तस्य जलधि स्समुद्रः, तस्य विलोलल्लावण्यामृतजलधेः, वेलायिता पारभूता, विश्रान्तिभूमि रिति यावत् । तनु श्शरीरम् यस्य तं तथोक्तम्; लावण्यनिधि मिति यावत् । गुणाना मौदार्यादीनां सद्गुणाना मम्भोधिं समुद्रम्, कल्याणाना मिति पूर्व पदस्य तु अपहत-पाप्मत्वादयः स्वरूपगुणा अर्थः । अस्य गुणाना मिति पदस्य तु औदार्यादयो मनोगुणा इति विवेकः । तस्मा न्न पौनरुक्त्यम् । विग्रहभृतं शरीरधारिणं, सुकृतनिचयं चतुर्दशभुवनसम्बन्धि पुण्यसमूह मिव स्थित मिति मम्योत्प्रेक्षा । एतेन यदुवंशसुकृत स्यैवायं परिपाक इति पूर्वोक्तसङ्को-चस्य आक्षिप्तत्वा दाक्षेपालङ्कारो व्यज्यते । तस्मा न्न पौनरुक्त्यशङ्कावकाशः । चकचकितभासैः चकचक एषां सञ्जातः चकचकिताः धगद्धगिना इत्यर्थः । भासाः कान्तयः, 'भासो भासि खगे गोष्ठे' इति विश्वः । तैः दशदिशः दश च ता दिश श्चेति समासः । यद्वा दशेति भिन्नं पदम् । दशसङ्ख्याकाः ककुभः इति कर्म । प्रकाशाः प्रकृष्टः काशः दीप्तिः - 'काशृ दीप्ता' विति धातोः पचादित्वा दचि काश इति रूपम् - यासां ता स्तथोक्ताः । तन्वानं कुर्वाणं, एवंविधं किशोरं वसुदेवो न्यध्याय दिति पूर्वेण सम्बन्धः ॥ ८७

ग ॥ एव मानकदुन्दुभि रत्यद्भुतानुभाव मभूतपूर्व माविर्भूत मेन मर्भकं चतुर्भुज मवधार्य, निर्भरानन्दसिन्धुनिमज्जन मनुभव न्नपि पुनरुक्तसलिलावगाहन श्वेतसैव सुरभिशत मवनीसुरसा द्विधाय, भगवन्त मम्भोजलोचन मस्तौषीत् । तथा हि— ८८

एव मिति – एव मुक्तविध, मत्यद्भुतानुभाव ममित महिमान, मभूत पूर्वं पूर्वं कदाऽप्यनुत्पन्न माविर्भूत, मुत्पन्न मेनं स्वतनूज, मर्भकं शिशुं, चतुर्भुजं भगवन्त, मवधार्य ज्ञात्वा, चतुर्भुज मेन मर्भकं अवधार्य दृष्ट्वेति वा; आनकदुन्दुभि र्वसुदेवः, निर्भरानन्दसिन्धुनिमज्जनं सम्पूर्ण सन्तोषसागरस्नान, मनुभवन्नपि कुर्वन्नपि, आनन्दपूर्णो भूत्वेत्यर्थः । पुनरुक्तसलिलावगाहनः पुनरुक्तं पुनरपि कृतं सलिलावगाहन मुदकनिमज्जनं, येन स तथोक्तः । समुद्रे मज्जन्नपि सलिलावगाहनं पुन श्चकारेति विरोधः । तस्य आनन्दसान्द्रो भूत्वा सलिले न्यमज्ज दिति परिहारः । तेन विरोधाभासालङ्कारः । चेतसैव मनसैव, शरीरस्य कंसपरतन्त्रत्वा दिति भावः । सुरभिशतं गोसहस्र, शतशब्दोऽत्र असङ्ख्येयवाची । अवनीसुरसात् ब्राह्मणाधीनं, देये त्राचेति सातिप्रत्ययः । विधाय कृत्वा, भगवन्तं षाड्गुण्यनिधिं, मम्भोजलोचनं पुण्डरीकाक्ष मस्तौषीत् तुष्टाव । स्तुतिमेव दर्शयति । तथा हीति तदेव प्रतिपादयतीत्यर्थः ॥ ८८

पञ्चभिः श्लोकैः वसुदेवः स्तौति पुराण इत्यादिभिः—

श्लो॥ पुराणो नीरूप स्त्व मसि विगुणो नैव वशगो
गिरां वा निश्चेष्टः पर मपि तु चैतन्यनिलयः
कथं वा रज्यन्ति श्रुतियुवतय स्त्वय्यपि हरे!
न जय्या ते माया बत भुवनसम्मोहनकरी ॥ ८९

पुराणेति– हेहरे भगवन्! त्वं पुराणः अनादिः असि । इदं सर्वत्र सम्बध्यते । 'पुरुषः पुराण' इति श्रुतेः । तथा नीरूपः निराकारः, विगुणः सत्त्वादिगुणरहितश्च, असि भवसि । 'न नामरूपे गुणदोष एव वा' इति भागवतात् । तथा गिरां वचसां, वशगः अधीनः विषय इति यावत् । नैवासि न भवस्येव । 'यतो वाचो निवर्तन्ते' इति श्रुतेः । निश्चेष्टः निष्क्रियः असि । 'निष्कळं निष्क्रियं शान्त' मिति श्रुतेः । एवं निषेधमुखेन प्रतिपाद्य विधिमुखे नाथ प्रतिपादयति । अपि तु किन्तु, परं केवलं, चैतन्यनिलयः ज्ञानाश्रयः चिन्मात्र मित्यर्थः, असि । इदं ह्यस्य स्वरूपलक्षणम् । 'सच्चिदानन्दं ब्रह्मे' ति श्रुतेः । 'नित्यो नित्यानां चेतन श्चेतनाना' मिति श्रुतेश्च । त्वय्यपि एतादृशेऽपि त्वयि, श्रुतियुवतयः श्रुतिरूपा स्तरुण्यः, कथंवा केन प्रकारेण, अरज्यन्त रक्ता बभूवुः? श्रुत्यविषय मपि त्वां श्रुतयः कथंवा प्रतिपादयामासुः? शास्त्रयोनित्वा दित्यधिकरणेन हि तव शास्त्रैकवेद्यत्वं प्रतिपादितम्! शास्त्रं तु वागात्मकत्वेन वागविषयं प्रतिपादयितुं न शक्नो त्येवेतिकृत्वा तव शास्त्रयोनित्वं दुर्घट मिति भावः । एतेन 'ब्रह्मन्! ब्रह्म ण्यनिर्देश्ये निर्गुणे गुणवृत्तयः । कथं चरन्ति श्रुतय स्साक्षा त्सदसतः परे' इति परीक्षित्प्रश्नार्थोऽत्र विवृतः । प्रश्नं समाधत्ते न जय्येति– भुवनसम्मोहनकरी त्रिजगन्मोहिनी, ते माया न जय्या जेतुं शक्या न भवति । 'क्षय्यजय्या' विति निपातना त्साधुः । त्वन्मायाविभवो

दुर्विज्ञेय इति भावः । एतेन श्रुतयो भगवन्तं प्रतिपादयन्तीव मायाबला दस्माकं प्रतीयते । वस्तुतस्तु अद्वितीये ब्रह्मणि श्रुतय एव न सन्ति; किमुत तत्प्रतिपाद्यत्व मिति अद्वैत्यानुसारे णाय मुत्तरः । मायावशा त्स्वीकृतगुणं त्वां प्रतिपादयन्ति श्रुतयः; नतु केवलं यत्र कुत्रापि 'सत्यं ज्ञान मनन्तं ब्रह्मे' त्यादिना निर्गुणप्रतिपादनं तु व्यञ्जनावृत्त्यैव; न तु साक्षा दिति भागवतमतानुसारे णाय मुत्तरः । यद्वा दुर्घटमपि घटयामीति स्वीकृतदृढप्रतिज्ञा या त्वन्माया अस्ति तद्बला त्सर्व मुपपद्यते इति वा मुख्योत्तरः । अत्र श्रुतिषु युवतीत्वरूपणात् कथं वा अरज्यन्तेति विरोधः प्रतीयते । तथा हि– त्वं नीरूपः सौन्दर्यरहितोऽसि । सौन्दर्यं मास्तुनाम यौवनमपि नास्ती त्याह पुराण इति जरठ इत्यर्थः । जरठत्वम प्यङ्गीक्रियतां नाम गुणा अपि न सन्ती त्याह– विगुण इति दुष्ट इत्यर्थः । अस्तु दोषः । तथापि गिरा मपि नैव वशगः, तासां वाक्यान्यपि न श्रुणोषीति भावः । एवंविधस्यापि तव तासा मालिङ्गनेऽपि न शक्ति रस्तीत्याह- निश्चेष्ट इति। करचरणादिचालनेऽपि असमर्थ इत्यर्थः । अपि तु किन्तु, चैतन्यनिलयः प्राणमात्रसम्पृक्त इत्यर्थः । एवंविधे त्वयि कथं श्रुतियुवतयोऽरज्यन्त इति प्रतीतस्य विरोधस्य 'न जय्या ते माया बत भुवनसम्मोहनकरी' त्यनेन परिहारः । मणिमन्त्रादिवञ्चनाऽत्र मायाशब्दे नोच्यते । तया सर्व मिदं घटित मिति भावः । अत्र पुराण इत्यादौ श्लेषः । श्रुतियुवतय इत्यत्र रूपकम् । तदुभयोत्थापितो विरोधाभासोऽलङ्कारः । कथंवेति स्वोक्तानुरागानुपपत्तेः न जय्येत्यादिना निषेधा दाक्षेपालङ्कारः । पूर्वप्रतिपादितविरोधस्य न जय्येति वाक्यार्थेन समर्थना द्वाक्यार्थहेतुकं काव्यलिङ्ग मलङ्कारः।। एतेषां यथायथं सङ्करो ज्ञेयः । एतै स्सर्वै रुत्थापितो निन्दया स्तुत्यभिव्यक्तिरूपव्याज स्तुत्यलङ्कारः । पुराणत्वादीनां गुणाना मीषद्दोषत्वकल्पना लेशालङ्कारः ॥ ८९

श्लो॥ निधिः कल्याणानां त्व मधिक मुदार स्सकरुणः
कृतार्था स्ते भृत्या इति च तव सेवापरवशः
हृते यत्सर्वस्वे प्यभव दतिरिक्तोऽखिलजना
त्तत स्त्वात्मा लब्धः पर मिति हि लाभ स्समधिकः ॥ ९०

निधि रिति– त्वं कल्याणाना मपहतपाप्मत्वादीनां मङ्गळगुणानां, निधिः निक्षेपः असि। न च निर्गुणश्रुतिविरोधः । निर्गुणः अप्राकृतगुणरहित इति तदर्थात् । अन्यथा– 'स वा एष पुरुषो महा' नित्यादिश्रुति प्रति पादितमहत्त्वादिगुणाः निरालम्बा स्स्युः । यद्वा परमार्थदशायां निर्गुण इत्यर्था न्न निर्गुणश्रुतिविरोध इति ज्ञेयम् । स्वतः कल्याणनिधित्वा त्त्व मस्माकं कल्याणं दातुं शक्नोषीति भावः । अत एव परिकरालङ्कारः । अत्र कल्याणानां सुवर्णाना मिति च गम्यते । 'कल्याणं मङ्गळे स्वर्णे' इति भास्करकोशात् । अतएव अधिक मुदारः अत्युत्कृष्टः; जीवा हि अपहतपाप्मत्वादिगुणाभावा त्त्वत्तो विकृष्टाः । अनेन पुरुषोत्तमत्वं भगवतो व्यक्तम् । अत्र न केवलं त्वं स्वर्णनिधिः किन्तु अधिक मुदारो दाता ; नतु पुन लुब्ध इति गम्यते । 'उदारो दातृमहतो'

रित्यमरः । ननु एवं पुरुषोत्तमत्व मस्तु नाम; नैर्घृण्ये सति तत्सेवा व्यर्थेत्यत आह– 'सकरुण' इति । आश्रितेष्वपि अपहतपाप्मत्वादिगुणाष्टक माविर्भावयितुं तव सौशील्य मस्तीति भावः। अन्यत्र कृपण दारिद्र्यदुःखासहिष्णु रिति गम्यते । ते तव, भृत्याः भक्ताः, सेवका इति च गम्यते । कृतार्थाः धन्याः, बभूव रिति शेषः । भृत्येभ्यः यथाभजनं सालोक्यादिकं दत्वा तान् कृतार्थयामासिथेति भावः । अन्यत्र कृतार्थाः लब्धधनाः इति मत्वा गम्यमानार्थत्वा दप्रयोगः प्रयोगे पौनरुक्त्य मित्यालङ्कारिकाः । तव सेवापरवशः त्वद्भजनासक्तः, जन इति शेषः । अस्ति भवन्ति परोऽप्रयुज्यमानोऽप्यस्तीति भाष्यकारवचनात् । अस्तीति लाभः भवतीत्यर्थः । सर्वस्वे सर्वधनेऽपि हृते सति त्वयेति शेषः । 'यस्यानुग्रह मिच्छामि तस्य वित्तं हरा म्यह' मिति विष्णुपुराणवचना दिति भावः । अखिलजनात् प्रापञ्चिकसर्वजनापेक्षया अतिरिक्तः अधिकः अतिदरिद्रश्चेति गम्यते। अभव दिति यत् बभूवेति यत्– अर्थात् जन इत्ये वात्र कर्ता । त दस्तु त तथाऽस्तां । न तावन्मात्रमेव पुरुषार्थ इत्यर्थः । अन्यत्र सर्वस्वं हृत मित्येतावन्मात्रमेव न शोचनीय मित्यर्थः । आत्मा पर मुत्कृष्टं, निस्संशयं यथा तथा लब्धः प्राप्तः, आत्मसाक्षात्कार आसी दित्यर्थः । इति हि इत्ययं समधिकः अत्युत्कृष्टः, लाभः पुरुषार्थो भवतीति शेषः । 'आत्मलाभा न्न परं विद्यते' इति श्रुते रित्यर्थः । अन्यत्र– आत्मा स्वयंलब्धः इति परं इत्येव समधिको लाभः । प्राणा अप्यवशेषिताः न तु पुन स्तेपि हृता इति प्राणावशेष एव परमो लाभः । 'जीवन् भद्राणि पश्यतीति' न्याया दिति भावः । अत्र वाच्यार्थे स्वभावोक्ति रलङ्कारः । व्यङ्ग्यार्थे तु धनाशया धनिक मुपसृतस्य दरिद्रस्य नूतनधनागमाभावेऽपि प्राक्तन गृहादिकिञ्चिद्धनस्या प्यगमसम्भवा द्विषादालङ्कारः। 'इष्यमाणविरुद्धार्थसम्प्राप्ति स्तु विषादन' मिति लक्षणात् । प्रभोः खलत्वदोषेण भृत्यवधाभावस्य गुणत्वेन वर्णना दुल्लासालङ्कार श्च । 'एकस्य गुणदोषाभ्या मुल्लासोऽन्यस्य तौ यदीति' लक्षणात् । द्वयो स्संसृष्टिः ॥ ९०

श्लो॥ दुरापं त्वां मत्वा जगति सुदृशां वश्य मपरै
रभीष्टां भक्तिं ते विततमतयो यान्ति शरणम्
असि श्रेयोदाता यदि तदवलम्बो दृढतरो
न चे देवं तेषां न खलु फललेशोऽपि भवतः ॥ ९१

दुरापमिति– जगति लोके, विततमतयः विस्तृतबुद्धयः, नित्यानित्यवस्तुविवेचनचतुरा इत्यर्थः । सुदृशां शोभनं दृक् ज्ञानं येषां तेषां भक्ताना मिति यावत् । वश्य मधीनं, त्वां अपरै रभक्तैः, दुरापं प्राप्तु मशक्यं, मत्वा ज्ञात्वा, ते तव, अभिमता मिष्टां, भक्तिः 'यो मद्भक्त स्स मे प्रिय' इत्यादौ भक्तिमतः प्रियत्वदर्शनेन भक्तेः प्रियत्वं कैमुतिकन्यायसिद्ध मिति भावः । शरणं यान्ति रक्षकत्वेन भजन्तीत्यर्थः । तदवलम्बः तस्याः भक्तेः कर्मणि षष्ठी । अवलम्बः परिग्रहः, दृढतरः सुदृढः, यदि स्या चेत् दृढभक्ति स्स्या च्चे दित्यर्थः । श्रेयोदाता मोक्षप्रदः, असि, भवसि ।

एवं नचेत् दृढभक्ति र्नास्ति चे दित्यर्थः। तेषां सेवकानां, भवत स्सकाशात् फललेशोऽपि स्वल्पफल मपि, न खलु नैव भवेत्। दृढभक्तिरेव मोक्षहेतुः न तु आपातभक्तिः नाप्यभक्ति रिति मुख्यार्थः। यद्वा जगति सुदृशां ज्ञानिनां, वश्यं सुलभ मिति यावत्। आत्मसाक्षात्कारस्य आत्मज्ञानपूर्वकत्वात् त्वां अपरैः भक्त कर्मठादिभिः, दुरापं- नच भक्तसुलभस्य कथं भक्तदुर्लभत्व मिति वाच्यम्। 'भक्ति र्ज्ञानाय कल्पते' इति भक्ति र्ज्ञानद्वारा भगवत्साक्षात्कारहेतुः नतु केवलेति; केवलाया भक्तेरपि भगवत्प्राप्ता वन्तरङ्गसाधनत्वात्। मत्वा ज्ञात्वापि, अविततमतयः स्तब्धबुद्धयः, ज्ञाने अनधिकारिण इति भावः। अभीष्टां स्वेच्छाविषयीभूतां, ते त्वद्विषयां भक्तिं शरणं,यान्ति। भक्तें रेव तदभीष्टत्वेन तामे वावलम्बन्ते इत्यर्थः। यद्वा- ते तव, मभीष्टा अभीष्टव दवभासमाना मिति काक्वर्थः। 'प्रियो हि ज्ञानिनोऽत्यर्थ महं स च मम प्रिय' इति ज्ञानस्यैव तत् अभीष्टत्वात्, भक्तिं शरणं, यान्तीत्यन्वयः। केवलभक्तिमार्गनिरता भवन्तीति भावः। एवं भक्तिमार्गावलम्बिनां गति माह। असीति- दृढतरः तदवलम्बः भक्तिकर्मकपरिग्रहः, अस्ति यदि तर्हि श्रेयसां स्वर्गादि फलानां दाता श्रेयोदाता, असि भवसि। 'नान्यःपन्था विद्यतेऽयना' येति श्रुतेः ज्ञाना दन्य न्न मोक्षसाधनं, किन्तु दृढभक्ति स्स्वर्गादिसाधन मिति भावः। तथा च। नारायणेति म्रियमाण उपैति मुक्ति मित्यादावपि अन्ते नारायणस्मृतिमात्रेण मोक्षो न भवतीति कृत्वा मुक्तिं स्वर्गमिति व्याख्यातं पञ्चदशीटीकाकारैः। एवं नचे द्भक्तिरपि दृढा नास्तिचेत्, तेषा मापातभक्तानां, भवत स्सकाशा त्फललेशोऽपि न भवतीति श्लोकार्थः। अत्र सुदृशामिति पदश्लेषबला त्कश्चनार्थः प्रतीयते। सुदृशां स्त्रीणां वश्य मपरै र्दुरापं त्वां मत्वा विततमतयः सूक्ष्मबुद्धयः, ते अभीष्टां प्रेयसीं, भक्तिन्नाम स्त्रियं, शरणं यान्ति। दृढतरः तदवलम्बः भक्तिकर्तृकपरिग्रहः स्याद्यदि श्रेयसा मभीष्टानां धनादीनां दाता असि। कामान्धाः किं न कुर्वन्तीति भावः। एवं नचे द्यदि भवत स्सकाशा त्तेषां फललेशोऽपि नखलु। स्त्रीपरतन्त्रस्य तव दर्शनस्यैव दुर्लभत्वा दिति ॥ ९१

श्लो॥ नाथ! त्वद्गुणजालबद्धहृदया भक्ता विमुक्ताः कथं?
सञ्जातामितवेदना अपि कथं मग्ना सुखाम्भोनिधौ?
ध्यानेन प्रकृतिं तवैव गमिता माया मतीताः कथं?
नाश्चर्यं जगदिन्द्रजालकलने पिञ्छा हि वाञ्छा तव॥ ९२

नाथेति-हे नाथ! प्रभो, त्वद्गुणजालेन सत्यकामत्वादितावकगुणवृन्देन, बद्धं तद्ध्यानशील मित्यर्थः, हृदयं मनः, येषां ते तथोक्ताः। भक्ताः विमुक्ताः विशेषेण मुक्ताः, कथं केन प्रकारेण, भवन्ति? न कथ मपीत्यर्थः। लिङ्गभङ्गो हि मोक्षः। लिङ्गस्य तु प्रधानतत्त्वं मनः। भगवद्गुणासक्तस्य मनस स्सत्त्वा त्तदानीं मुक्ति र्वक्तु मशक्येति भावः। सञ्जात ममितं वेदनं ज्ञानं, येषां ते सञ्जातामितवेदना अपि भक्ता इति पद स्याता प्यन्वयः। सुखाम्भोनिधौ आनन्दसागरे, मग्नाः स्नाताः, कथं सकलज्ञानविलये हि आनन्दस्य ब्रह्मणः, परिस्फूर्ति र्भवति। सुषुप्ता विवेति कृत्वा

अमितज्ञानसत्त्वे कथं ब्रह्मानन्दानुभवः ? न कथ मपीति भावः । ध्यानेन हेतुना तवैव मायाशबलितब्रह्मणः ईश्वरस्य, तवै वेत्यर्थः । एवकारा त्तु शुद्धब्रह्मण इत्यवधारणं लभ्यते । प्रकृतिं स्वभावं सत्यकामत्वादिकं, गमिताः प्राप्ताः, ध्यानेन कर्त्रा गमिताः प्रापिता इति वा । भक्ताः मायां सत्यकामत्वादिस्वभावहेतुभूतां दर्पणसदृशीं माया मतीताः अतिक्रान्ताः, कथम् ? लोके ध्यातु र्ध्यानेन हेतुना ध्येयात्मकत्वप्राप्तिः दृष्टा । तद्वत् प्रकृतेः ध्यानगोचर ईश्वर एव; न तु ब्रह्म; अविषयत्वात् । एवं सः ईश्वर ध्यातॄणा मीश्वरात्मकत्वं भवतीति सिद्धमेव । ईश्वरस्तु मायावी; न तु ब्रह्मवत् निर्मायम् । अतः त्वद्भक्ता अपि मायिन एव नतु मायातीताः । उक्तञ्च सगुणमुक्तौ (सारूप्ये इत्यर्थः) जगद्व्यापारवर्ज मिति भगवद्भि र्व्यासपादैः जगद्व्यापारं विना ईश्वरसारूप्यं सगुणोपासकानां भवतीति । ध्यानं नाम सगुणोपासनं हि । निर्गुणे ध्यातृध्यानध्येयत्रयाभावात् इति भावः । इत्येतेषु विरोधेषु स्मयमानं प्रत्याह नाश्चर्यमिति । अत्राश्चर्यं न कर्तव्य मिति भावः । कुतः ? तव वाञ्छा इच्छा, जगदिन्द्रजालकलने जगदेवेन्द्रजालं मायाकृत्यं, तस्य निर्माणे, पिञ्छा हि बर्हतुल्य मित्यर्थः । सादृश्याक्षेपा न्निदर्शनालङ्कारः । यथैन्द्रजालिकः पिञ्छाभ्रमणमात्रेण गगने समुद्रादिकं रचयति, तद्व दिच्छामात्रेण अचिन्त्यनिर्माणं जग द्रचयत स्तव न किञ्चिदपि दुष्कर मित्यर्थः । मायाकार्येऽस्मिन् जगति बन्धाधिकं यथा मिथ्या, तथा मुक्त्यादिक मपि मिथ्यैव । वस्तुतस्तु न जग दस्ति; नापि तत्कृतो जीवानां बन्धः; नापि तन्मोक्षः । अद्वितीयस्य ब्रह्मण स्सदैकरूपत्वा दिति परिहारः । अतएव आक्षेपालङ्कारः । यद्वा– हेनाथ ! त्वद्गुणजालेन तावकरज्जुसन्तानेन बद्धं सन्दानितं हृदयं वक्षः, येषां ते तथोक्ताः । भक्ताः विमुक्ताः त्यक्ताः, कथ मिति विरोधः । त्वद्गुणजाले तावकमङ्गळगुणगणे बद्ध मासक्तं हृदयं येषां ते तथोक्ताः भक्ताः, विमुक्ताः सगुणमुक्तिं प्राप्ता इति तत्परिहारः । सगुणमुक्तौ मनस्सत्त्वाङ्गीकारात् । अथवा– त्वद्गुणजालबद्धहृदया स्सन्तः भक्ताः क्रमेण सर्ववासनाक्षये जाते सति कैवल्यं प्रपद्यन्ते इतिवा विरोधपरिहारः । एवं सञ्जाता अमिता वेदना व्यथा येषां ते तथोक्ता अपि सुखाम्भोनिधौ मग्नाः कथ मिति विरोधः । उत्पन्नामितज्ञाना स्सन्तः पश्चा त्तदपि साधनभूतं ज्ञानं त्यक्त्वा नीरोदयानन्तरं कूपखानकाअपि खनित्र मिवेति भावः । सुखाम्भोनिधौ स्वस्वरूपे मग्नाः भवन्ति । निवातस्थितदीपव त्तिष्ठन्तीति तत्परिहारः । ध्यानेन तवैव प्रकृतिं मायां गमिताः माया मतीताः कथ मिति विरोधः । ध्यानेन ब्रह्मोपासनया सोऽह मित्यनया, तव प्रकृतिं सच्चिदानन्दलक्षणं परमार्थस्वभावं गमिताः । अत एव मायां त्रिगुणां प्रकृति मतीताः । निरस्ताविद्या भवन्तीति तत्परिहारः इति विरोधाभासालङ्कारत्रयम् । एव मादितः प्रतीतानपि विरोधान् समाधत्ते नाश्चर्य मित्यादिना- नाश्चर्यं विरुद्धधर्माणाम प्येकत्र समावेशन मत्र नाद्भुत मिति भावः । कुतः? तव वाञ्छा जगदिन्द्रजालकलने पिञ्छा हि । मायावशा दुर्घट मपि सर्वं सुघटं भवतीति भावः ॥ ९२

श्लो॥ प्राप्ता स्तमःपरिचया द्विरसं भवान्धुं
निर्यान्तु ते गुणगणा नवलम्ब्य धीराः
मग्नात्मनां त्वयि सुखाम्बुनिधा वमीषां
सम्भावनापि निरयस्य कथं पुन स्स्यात्? ॥ ९३

प्राप्ता इति– धीराः प्राज्ञाः, धर्ष्टाश्च तमःपरिचयात् तमोगुण प्राचुर्या द्धेतोः अन्धकार प्राकट्याच्च, विरसं निस्सारं निर्जलं च, भवान्धुं संसाररूपं कूपं, 'पुंस्येवान्धुः प्रहिः कूप' इत्यमरः। प्राप्ता स्सन्तः तत्रपतिता स्सन्त इति यावत्। ते तव, गुणगणान् सत्यसङ्कल्पत्वादिगुणसमूहान्, रज्जुसमूहांश्च, अवलम्ब्य ध्यात्वा धृत्वेति च, निर्यान्तु निर्गच्छन्तु निर्गमनं युक्त मित्यर्थः। सुखाम्बुनिधौ आनन्दसमुद्रे, त्वयि, मग्नात्मनां मग्नस्वरूपाणां, त्वदैक्यं प्राप्तानामिति यावत्। मग्न-शरीराणां च अमीषां धीराणां, पुनः भूयः, निरयस्य त्वत्तोनिर्गमनस्य पुनरावृत्ते रिति यावत्। सम्भावनापि उत्प्रेक्षापि ऊहोपीति यावत्। कथं स्यात् न कथमपि। कैवल्यं प्राप्तानां पुनरावृत्ति र्नेति भावः। अन्धकारे निर्जलकूपपतितो धर्ष्टः रज्ज्वादी नवलम्ब्य कथञ्चि न्निर्गच्छेत्। मध्ये समुद्रं मग्नस्य तु न पुनरावृत्ति रित्यप्रकृतार्थतात्पर्यम् अत्र भवान्धु मिति, त्वयि सुखाम्बुनिधा विति च रूपकद्वयं तच्च श्लेषोत्थापितम्। संसारस्य कूपत्वरूपणेन भगवत स्समुद्रत्वरूपणेन च 'पादोऽस्य विश्वाभूतानि त्रिपाद स्यामृतं दिवि' इति पुरुषसूक्तार्थ स्सङ्गृहीत इति वेद्यम्। भ्रान्तिमूलत्वा दपरमार्थस्य संसारस्य निवृत्तिः, परमार्थस्य कैवल्यस्य तु न नित्य इति विवेकः। अत्र कूपपतिता अपि निर्गच्छन्ति। त्वयि तु समुद्रव त्पतितास्तु न निर्गच्छन्ति। किन्तु तत्रैव म्रियन्ते। अहो तव घातुकतेति भगवतो लेशेन निन्दा व्यज्यते। तया च निन्दया भगवतः स्वात्मदातृत्वरूपा स्तुति र्व्यज्यते इति लेशोत्थापिता व्याजस्तुतिः॥ ९३

उपसंहरति–

श्लो॥ इति स्तावंस्तावं प्रतिमुहु रनंसी न्मुररिपुं
दृशा पायंपायं चिरमपि न सौहित्य मगमत्,
सुखं ध्यायंध्यायं कृतिन मय मात्मान मभज,
द्रिपुं स्मारंस्मारं व्यथित पर मत्याहित मपि॥ ९४

इतीति– इत्येवंप्रकारेण अयं वसुदेवः मुररिपुं भगवन्तं, स्तावंस्तावं स्तुत्वा स्तुत्वा, 'अभीक्ष्ण्ये णमुल्' 'नित्यवीप्सयो' रिति द्विर्भावः। प्रतिमुहुः मुहुर्मुहुः 'वीप्साया मव्ययी-भावः।' 'अव्ययं विभक्तेति' सूत्रपठित यथार्थेषु वीप्साया मन्तर्भावात्। उदाहृतं च तत्रैव प्रत्यर्थ मिति। अनंसीत् ननाम। 'णम प्रह्वत्वे इति धातो र्लुङ्' 'गम्यमनमो रमि रिति नमः' 'अनिट्त्वे न लुङि सि च इडागमाभावात्– इट ईटेति न सलोपः'। तथा दृशा दृष्ट्या,

चिरमपि चिरकालमपि, पायं पायं पीत्वा पीत्वा, मुररिपु मित्ये वात्रापि कर्म। अय मिति तु कर्ता। सौहित्यं तृप्तिं, नागमत् न प्राप। तथा अयम् आत्मानं स्वं, कृतिनं पुण्यवन्तं, ध्यायंध्यायं ध्यात्वा ध्यात्वा, अह मतीवकृती; अन्यथा कथं मम भगवता पुत्त्रीत्व मिति मत्वेत्यर्थः। सुख मानन्द, मभजदाप। तथा अयं रिपुं शत्रुं कंसं, स्मारं स्मारं स्मृत्वा स्मृत्वा, पर मत्यन्त, मत्याहितं महाभयं च, व्यथित अकरोत्, प्रापेत्यर्थः। कंसा दस्याभकस्य भय माशङ्कितवा निति भावः॥ ९४

**ग॥ तदनु देवकनन्दनापि मुकुन्द ममन्दानन्दकन्दळित मभिवन्द्य च सुधाऽऽसारसारतराभि रमितस्तुतिभि रित्थ मेनं प्रार्थयत॥ ९५**

तदन्विति— तदनु वसुदेवस्तुत्यनन्तरं, देवकनन्दना देवकी च, अमन्देन अधिकेन, आनन्देन कन्दळितं सञ्जातकन्दळं, स्वभक्तवसुदेववाङ्मरन्दास्वादनेन मुदित मित्यर्थः। मुकुन्दं कृष्णं, सुधाऽऽसारा इव अमृतधारासम्पाता इव सारतराः अधिकस्वादाः, ताभिः तथोक्ताभिः, अमिताभिः अमूल्याभिः, स्तुतिभिः स्तवैः, अभिवन्द्य स्तुत्वा, चा न्नमस्कृत्येत्यर्थः। इत्थं वक्ष्यमाण प्रकारेण, एनं कृष्णं, प्रार्थयत ययाचे। 'प्रपूर्वका दर्थ उपयाच्ञाया मिति धातो र्लङ्।' 'चुरा दित्वा त्स्वार्थे णिच्' 'अर्थवेदसत्याना मापु' गिति आपुगागमस्तु नास्य भवति। 'तवर्गचतुर्थो-पधस्यै वार्थतेः तद्विधानात्।' अयन्तु तवर्गद्वितीयोपध इति विवेकः। ९५

प्रार्थनामेव दर्शयति गद्यद्वयेन—

**ग॥ भगवन्! अननुभूतचर मभिरूपं रूप मिदं सुनिरूपं मादृशां माकुर्वीथाः॥ ९६**

भगवन्निति— हे भगवन् षड्गुणनिधे! अननुभूतचरं पूर्व मननुभूतं 'भूतपूर्वे चरट्।' अभिरूपं सुन्दरं, इदं परिदृश्यमानं, शङ्खचक्रादिविभूषितं रूप माकारं, मादृशां मामिव पश्यन्ति यां स्ते मादृशः तेषां मांसचक्षुषा मिति भावः। सुनिरूपं सुखेन द्रष्टुं योग्यं सुलभ मिति यावत्। माकुर्वीथाः माकुरु। मादृशां दुर्लभं कुर्वित्यर्थः। इदं रूप मुपसंहरेति भावः॥ ९६

**ग॥ अपि तु तनयविरहदूयमानमानसा मेना मानन्दयतु रिपुभयमपि परि-हरतु भवा निति॥ ९७**

अपित्विति— अपि तु किन्तु, तनयानां कंसनाशितानां षण्णां पुत्त्राणां विरहेण वियोगेन, दूयमानं उपतप्यमानं, माननं यस्या स्तां तथोक्ता मेनां दीनां मां, अनाथां मा मितिवा, भवा नानन्दयतु सन्तोषयतु; भार्याविरहदुःखं पुनर्भार्यान्तरसम्पर्केण यथा नश्यति तद्व त्पुत्त्रविरहदुःखं पुनः पुत्त्रान्तरसम्पर्केणैवनश्यतिः न त्वन्यथेत्युक्त्वा त्वं मम पुत्त्रो भूत्वा मद्दुःख मपनुदेति देवकीप्रार्थना। एवं यदि मदुक्त्या भगवान् प्राकृतशिशुः केवलं भवसि, तर्हि कंसा दस्ति भय

मिति तत्परिहारं प्रार्थयते । भवान् त्वं रिपुभय मपि कंसा द्भीति मपि परिहरतु अपहरेत्यर्थः । इतीतिपदस्य प्रार्थयतेति पूर्वेणान्वयः ॥ ९७

ग॥ एव मभिदधानौ तनयविरहकातरौ मातापितरौ मुरशासन स्सादर मिद मवादीत् ॥ ९८

एव मिति– एव मुक्तप्रकारेण, अभिदधानौ प्रार्थयमानौ, तनयानां विरहा द्वियोगा, त्कातरौ भीतौ, माताच पिताच मातापितरौ तौ, प्रति मुरशासनः विष्णुः, सादरं सप्रेम यथा तथा, इदं वक्ष्यमाणं वचन, मवादीत् उवाच ॥ ९८

श्लो॥ पुरा खलु युवां पृश्निसुतपोनामधारयौ
तपः पर मतप्येथां तेन प्रमुदितोऽभवम् ॥ ९९

पुराख ल्विति– खलु प्रसिद्धौ, पुरा पूर्वजन्मनि, पृश्निश्च सुतपाश्च पृश्निसुतपसा विति नामनी अभिधे, धारयत इति पृश्निसुतपोनामधारयौ पृश्नि स्सुतपसः पत्नी, युवां पर मुत्कृष्टं, तपः अतप्येथाम् तप्तवन्तौ; चक्रतु रित्यर्थः । तेन तपसा प्रमुदित स्सन्तुष्टः अभवम् । इह अह मि त्याक्षिप्यते ॥ ९९

श्लो॥ पुत्त्रः पुरा भवामीति युवयो र्वर म प्यदाम्
तेनाह मिह जातोऽद्य भवत्प्रियविधित्सया ॥ १००

पुत्त्र इति– पुत्त्रः पुरा भवामि भविष्यामि 'यावत्पुरेति लट्' इत्येवं युवयोः 'सम्प्रदा-नत्वा च्चतुर्थ्या भवितव्यत्वेपि शेषत्वविवक्षया षष्ठी।' वर मदा मपि दत्तवा नभवम् । तेन वर-प्रदानेन हेतुना, भवत्प्रियविधित्सया युवयोः प्रीतिविधानेच्छया, तदर्थ मित्यर्थः । इह अस्मिन् जन्मनि, अत्रलोके इतिवा । अद्य अधुना, जातः उत्पन्नः, अभव मिति शेषः ॥ १००

श्लो॥ याव न्ममानुभावेन तरथ श्शोकवारिधिम्
नन्दव्रज महं नेय स्साम्प्रतं सम्प्रतारणात् ॥ १०१

याव दिति– ममानुभावेन कप्रभावेन रणेन हेतुना वा, शोकवारिधिं दुःखसागरं, याव त्तरथः तरिष्यथः । युवा मित्यस्याक्षेपः । युवां शोकवारिधिं तीर्णौ भविष्यथ इत्यर्थः । 'याव त्पुरेति लट् । ' साम्प्रत मधुना, सम्प्रतारणात् वञ्चनात्, सर्वं जनं प्रतार्येत्यर्थः । अहं नन्दव्रजं नन्दस्य घोषं, नेयः प्रापणीयः । वसुदेवेनेति शेषः । 'नीहृकृष्वहा मिति नयते र्द्विकर्मकत्वम्' १०१

श्लो ॥ एवं व्याहृत्य भगवान् । बभूव प्राकृत श्शिशुः
रोदिति स्म तत स्तारं । तारको भववारिधेः ॥ १०२

एव मिति– भगवान् विष्णुः एव मुक्तरीत्या, व्याहृत्य अभिधाय, प्राकृतः प्रकृतिपरतन्त्रः, शिशु रर्भकः, बभूव आसीत् । ततः शिशुभावप्राप्त्यनन्तरम्, भववारिधेः संसाररूपसमुद्रस्य, तारकः सन्तारयिता, भगवान् तार मत्यन्तं, रोदिति स्म रुरोद । 'लट् स्मे इति लिङर्थे लट् ।' शिशवो हि भुवि पतित्वा प्राक्तनं ज्ञान मपहृत मिति भृशं रुदन्तीति प्रसिद्धिः । शिशुभावप्राप्त्या भगवानपि तथा रुरोदेति भावः । अत्र भवतारकोऽपि तारं रुरोदेति विरोधः । लीलाशिशुत्वा दिति परिहारः ॥ १०२

श्लो ॥ मायाऽपि नन्दजायाया । मजायत तदा हरेः
तया विमोहिताः कंस । पुरान्तःपुररक्षिणः ॥ १०३

मायापीति– तदा तदानीं, हरेः कृष्णस्य, मायापि योगमायापि, नन्दजायायां नन्दस्य पत्न्यां यशोदाया, मजायत कन्यकारूपेण आसीत् । तया बालिकया कंसपुरान्तःपुररक्षिणः– कंसपुरे मधुरानगरे, य दन्तःपुरं गर्भगृहं, देवकीवसुदेवबन्धनागार मित्यर्थः । तत्रैव देवक्याः प्रसूतत्वात् । अन्यथा वसुदेवस्य भगवद्दर्शनमेव न घटेतेति दिक् । तस्य रक्षिणः पालकाः विमोहिताः मोहं प्रापिताः बभूवुरिति शेषः । तेषां जागरूकत्वे तु, भगवतो नन्दव्रजनयनं न सम्भवे दिति भावः ॥ १०३

ग ॥ समनन्तर मानकदुन्दुभिरपि जनार्दनप्रचोदनेन नन्दमन्दिर मुपयातुकाम स्तत्क्षणमेव विगळितनिगळबन्ध स्सूतिकानिकेतना द्विनिर्गत्य गत्यनुकूल मयत्न-सम्भूत मररविघटन मुपलक्ष्य फणिपतिफणागणनिवारितवारिधार मविलम्बित मन्तः-पुरतः पुरतोरणतोऽपि च निष्क्रम्य तरणितनूभव मतिसृष्टसरणि मन्तरेण तरणि मतिलङ्घ्य नन्दव्रज मवजगाहे ॥ १०४

समनन्तरमिति– समनन्तरं नन्दजायायां मायोदयानन्तरम् । भगवतः प्राकृतशिशुभावा-प्त्यनन्तर मिति वा । आनकदुन्दुभिरपि वसुदेवश्च, जनार्दनप्रचोदनेन श्रीकृष्णनिदेशेन, नन्द-मन्दिरं नन्दगोपव्रजं, उपयातुकामः गन्तुकामः, 'तुं काममनसोरपीति' मलोपः । तत्क्षणमेव जिगमिषा समकाल एव विगळितनिगळबन्धः भ्रष्टशृङ्खलाबन्धः, कृष्णानुग्रहेणेति भावः; भूत्वेति शेषः । सूतिकानिकेतनात् अरिष्टात्, प्रसूतिगृहा दित्यर्थः । विनिर्गत्य निष्क्रम्य, गत्यनुकूलं गमनानुकूलं, अयत्नसम्भूत मप्रयत्नोदितं, अररविघटनं कवाटे बन्धाभाव, मुपलक्ष्य दृष्ट्वा, भगवदनु-ग्रहेण प्रयत्नं विनैव कवाटेषु विघटितेषु सत्स्वितिभावः । फणिपतेः शेषस्य,फणागणेन स्फटासमूहेन, निवारिताः अपहृताः, वारिधाराः वर्षधाराः यस्मिन् कर्मणि त द्यथा तथा तथोक्तम् । तदानीं श्रावणमासत्वेन वर्षे सति तद्धाराः प्राकृतशिशुं भगवन्तं बाधेरन्निति शङ्कया भगवान् शेषः स्फणागणेन भगवत आतपत्रायतेस्मेति भावः । अविलम्बित मतित्वरितं, यथा तथा अन्तःपुरतः

गर्भगृहात्, पुरतोरणतः पत्तनबहिर्द्वाराच्च सकाशात्, निष्क्रम्य निर्गत्य, तरणिं मन्तरेण नावं विना, 'अन्तरान्तरेणेति द्वितीया' अतिसृष्टसरणिं दत्तमार्गां, तरणितनूभवं सूर्यसुतां यमुनानदीं, अतिलङ्घ्य तीर्त्वा, नन्दव्रजं नन्दघोषं, अवजगाहे विवेश ॥ १०४

श्लो ॥ नन्दव्रजं शौरि रुपेत्य तत्र । शिशुं यशोदाशयने निवेश्य
तस्या स्समादाय सुता मथाशु । विवेश हर्षेण निजं निवेशम् ॥ १०५

नन्देति– शौरि र्वसुदेवः, नन्दव्रज मुपेत्य प्राप्य, प्रविश्येति यावत् । तत्र व्रजे, यशोदाशयने यशोदायाः नन्दपत्न्याः शयने शय्यायां, निवेश्य स्थापयित्वा, अथ ततः तस्याः यशोदायाः, सुतां कन्यां, समादाय गृहीत्वा, हर्षेण कृतकार्यत्वा त्सन्तोषेण, निजं स्वकीयं, निवेशं सदनं, विवेश प्राप । यथापूर्वं बन्धनागारं प्रविष्ट इति भावः ॥ १०५

श्लो ॥ ता मसौ निजदाराणां । निधाय सविधे ततः
चरणौ निगळै राशु । यथापुर मनह्यत ॥ १०६

तामिति– असौ वसुदेवः, निजदाराणां स्वभार्यायाः, स्सविधे समीपे, तां यशोदाकन्यां, निधाय स्थापयित्वा, ततः निधानानन्तर, माशु त्वरया, यथापुरं पूर्ववत्, चरणौ स्वपादौ, निगळैः शृङ्खलाभि, रनह्यत बबन्ध । णह बन्धने इति धातो र्लङ् । १०६

श्लो ॥ आदत्त नन्दरमणी वसुदेवसूना
वानन्द मात्मजधिया भ्रममूलया यत्
तत्रैव निर्विशयया परताधियापि
तादृग्विधं किमनया सुलभं सुखं स्यात् ॥ १०७

आदत्तेति– नन्दरमणी नन्दपत्नी यशोदा, वसुदेवसूनौ वसुदेवपुत्रे, श्रीकृष्णे, भ्रममूलया भ्रान्तिहेतुकया, आत्मजधिया आत्मज स्सूनु रिति धीः बुद्धिः तया हेतुना, य दानन्दं सुखं, मादत्त प्राप स्वपर्यङ्कस्थं वसुदेवसूनुं स्वसूनु म्मत्वा य दानन्दं प्रापेति भावः । तादृग्विधं तत्तुल्यं, सुखं ततएव वसुदेवसूना देव, निर्विशयया निस्सन्देहया, परताधियापि परमात्मत्वबुद्ध्यापि, परो रि 'परमात्मनो' रित्यभिधानात् । अनया यशोदया, सुलभं सुखेन, लब्धुं योग्यं स्या रिकम्? न स्यादेव । अयं शिशु स्साक्षा त्परमेश्वर एवेति तत्त्वज्ञानोदयेपि न पूर्वोक्तविधं सुखं स्या दिति भावः । अत्र वास्तवार्थस्तु नन्दरमणी भ्रममूलया अविद्याकृत मनात्मनि देहादा वात्मज्ञानं, आत्मनि सच्चिदानन्दे दुःखित्वादिज्ञानञ्च भ्रम इत्युच्यते । सः भ्रमः मूलं कारणं यस्या स्तया, वसुदेवसूनौ वासुदुवे भगवति परमकारणे, अनादौ परमपुरुषे श्रीकृष्णे, आत्मजधिया "देहा द्देहोऽभिजायते" इति जातव्यवहारविषयः देहएव नतु जीवः 'अजो नित्य श्शाश्वतोऽयं पुराण' इति श्रुतेः । एवं सः 'जहा त्येनां भुक्तभोगा

मजोऽन्य ' इत्युक्तलक्षणस्य सर्वसाक्षिण ईश्वरस्य कथं जन्म, येन तस्मिन् यशोदापुत्रत्वव्यवहार स्स्यात् ? तस्मात् श्रीकृष्णो ममात्मज इति यशोदाया बुद्धिः भ्रमएव। नतु प्रेमेति भावः। य दानन्द मादत्त ' आत्मा हि ताव त्प्रेमास्पदः आत्मनस्तु कामाय नर्वं प्रियं भवतीति ' श्रुतेः। तस्मादपि गौणात्मा प्राकृतपुत्रादिरपि परप्रेमास्पदः लोके तथा दर्शनात्। तस्मा देतस्माच्च परमप्रेमास्पद एव परमात्मेति कृत्वा तथाविधे परमात्मनि गौणात्मबुद्ध्यापि यशोदाया जात आनन्दः प्राकृतानन्दा दतिरिक्त एवेति भावः। इदमेव अर्थापत्तिमुखेन प्रथयति तत्रै वेति। अर्थः प्राग्वदेव। परमात्मनि श्रीकृष्णे, दृढया परमात्मबुद्ध्यापि, एवंविधानन्दो न स्यादेवेति किमुत प्राकृतानन्दस्य तत्तौल्यशङ्केति भावः॥ १०७

**ग॥ समनन्तर मन्तःपुरद्वारेषु पुरगोपुरेषु च यथापुर मावृतेषु बालिकाकलकल माकलय्य निलयपालिका स्सत्वर मवबुद्ध्य कंसाय सुतावतरणं न्यवेदयन्॥ १०८**

समनन्तरमिति– समनन्तरं नन्दव्रजे कृष्णप्रवेशनान्तर मित्यर्थः। अन्तःपुरद्वारेषु पुरगोपुरेषु, पत्तनबहिर्द्वारेषु च, यथापुरं पूर्वव, दावृतेषु घटितेषु सत्सु, बालिकायाः देवकीशयनस्थापितयशोदा-सुतायाः, कलकलं तादृशध्वनि, माकलय्य श्रुत्वा, सत्वरं सवेग, मवबुध्य स्वापा दुत्थायेत्यर्थः। निलयपालिका गृहरक्षिण्यः, कंसाय कंसं प्रतीत्यर्थः, सुतावतरणं पुत्रिकोदयं, न्यवेदयन् विज्ञापया-मासुः। देवकी कुमारी मजनय दिति कंस प्र त्यूचिरे इति भावः॥ १०८

**ग॥ सोऽपि तद्वचननिशमनसमय मशनिहत इव धाराधर स्समधिकगतहृदय-वेदन स्समजनि निजविलयहेतु रन्तक इति सातङ्कः पङ्कनिमग्नपद इव द्विरदः कृत्या-कृत्यविवेक मकलयन् द्विविधम प्यरिष्ट मासादयन् व्यापादनाय देवकतनयां तनया मयाचत। साऽपि पापाशय मेनं प्रत्यवादीत्॥ १०९**

सोऽपीति– सोऽपि कंसोऽपि, तद्वचननिशमनसमयं तासां वाक्यश्रवणकाले एव " शमो दर्शने इति श्रवणे मित्त्वा न्निशमन मित्यत्र ह्रस्वः " अशनिहतः वज्रायुधक्षतः धाराधर इव धराधर एव धाराधरः ' स्वार्थेऽण् ' धराधर इति पाठस्तु सुगमः पर्वतइव। समधिगतहृदयवेदनः प्राप्त-मनोव्यधस्सन् निजस्य स्वस्य, ममेत्यर्थः विलयस्य नाशनस्य, हेतुः कारणभूतः, अन्तकः मृत्युः, समजनि जातः, इतिसान्तकः सभयस्सन्, पङ्कनिमग्नपदः पङ्के कर्दमे, निमग्नानि मग्नानि पदानि चत्वारः पादाः यस्य स तथोक्तः, द्विरदः गज इव, कृत्याऽकृत्यविवेकं इदं कृत्य मिद मकृत्य मिति कर्तव्याऽकर्तव्यभेदज्ञानं, अकलयन् अजानन् सन्, द्विविधं द्वे विधे रीती यस्य तं तथोक्त, मरिष्टं सूतिकागृह, मशुभं चेत्यर्थः " अरिष्टं सूतिकागारे तक्रे चाप्यशुभे शुभ " इति वैजयन्ती। आसादयन् भजन् सन्, व्यापादनाय हिंसनार्थं, देवकतनयां देवकीं, तनयां सुता, मयाचत प्रार्थयत। " दुह्याचिप्रच्छिति याचिति द्विकर्मकः " सापि देवक्यपि, अपि श्चार्थः। पापाशयं कलुषबुद्धिं,

'अथ त्रिषु द्रव्ये पापपुण्यसुखानि वे' त्यमरोक्त्या पापशब्दोऽत्र पापवत् द्रव्यपरः। "यद्वा पाप माशये यस्य स पापाशयः चक्रपाणि रितिव त्समासः" एनं कंसं प्रत्यवादीत् प्रत्युवाच ॥ १०९

श्लो ॥ भूयांसो निहता स्सुता मम सुधाधामानना मानना
योग्या भीरु रसा वसावि सपदि प्रेमा समालम्ब्यताम्
क्लेशं मा नय मानय स्वभगिनीं दूना मनूनाधिना
नोसिञ्चन्ति धराधराळि मशनिप्लोषेऽपि धाराधराः ॥ ११०

भूयांस इति-- सुधाधामाननाः चन्द्रवदनाः, मानना योग्याः सम्मानार्हाः, भागिनेयत्वा दिति भावः। भूयांसः बहवः षडिति भावः। मम सुताः पुत्राः, निहताः नाशिताः, त्वयेति शेषः। अत्र हेकंस! इति सम्बोधने कर्तव्येऽपि दुष्टतया तन्नामग्रहणस्य अमर्षया देवक्या तथा न सम्बोधित मिति वेद्यम्। असौ इयं, भीरुः कन्या, 'क्ष्मापभीरु कुलकुन्तलबन्धा दित्यभियुक्तोक्ते ह्रस्वान्तोऽयं भीरुशब्दः' असावि असूत 'सूतेः कर्मणि लुङ्' मयेति शेषः। सपदि इदानीं, प्रेमा स्नेहः, समालम्ब्यतां गृह्यतां त्वयेति शेषः। नष्टपुत्रायां मयि, अनाथाया मस्यां च प्रेम गृहाणेति भावः। भगिनीं मां क्लेशं कष्टं, मा नय न प्रापय। 'नीहृकृष्वहा मिति नयति द्विकर्मकः' माङर्थकोऽयं माशब्दः। भगिनी मिति काकाक्षिन्यायेन उभयत्रान्वेति। अनूनाधिना अधिकमनोव्यथया, पुं स्याधि र्मानसे व्यथे त्यमरः। दूनां परितप्तां, भगिनीं सोदरीं, मां मानयस्व पूजय; पुत्रिकासमर्पण मेव मम पूजेति भावः। ननु पुत्रहन्तृत्वेन त्वत्पीडाहेतो र्मम कथं त्वन्मानन मत आह। नोसिञ्चन्तीति अशनिप्लोषेऽपि वज्रदाहे क्रियमाणे सत्यपि, कृते सत्यपीति वा, अशनिना दग्धाऽपीत्यर्थः। धाराधराः मेघाः, धराधराळिम् पर्वतबृन्दम्, नोसिञ्चन्तीति काकुः, आर्द्रीकुर्वन्त्येवेत्यर्थः। अर्थान्तरन्यासालङ्कारः॥ ११०

ग ॥ एव मतिकरुण मालपन्ती मेना मानकदुन्दुभि मपि दीनारवमुखरितहरिदन्तर मविगणय्य स्तनन्धयी मादाय परिशिलातल मुत्पात्य पातयितु मारभत ॥ १११

एव मिति-- एव मुक्तरीत्या, अतिकरुणं अत्यन्तदीनं यथा तथा, आलपन्तीं विलपन्तीं, एनां देवकीं, दीनारवमुखरितहरिदन्तरं दीनारवैः कृपणविलापैः, मुखरितानि शब्दायमानानि, हरिदन्तराणि दिङ्मध्यभागाः यस्य तं, आनकदुन्दुभि मपि वसुदेवञ्च, अविगणय्य अगणयित्वा, उभावपि तिरस्कृत्येत्यर्थः। स्तनन्धयीं स्तनंलक्षणया स्तन्यं क्षीर मित्यर्थः, धयतीति पिबतीति तथोक्ता-ताम् 'नासिकास्तनयो र्ध्माधेटो' रिति स्तने धेटः खश्; अरुर्द्विष दिति मुम्; टिड्ढेति ङीप्; बाला मित्यर्थः। आदाय गृहीत्वा, उत्पात्य उपरि विक्षिप्य, परिशिलातलं पाषाणप्रदेशे, विभक्त्यर्थेऽव्ययीभावः। पातयितुम् क्षेप्तुं, मारभत उपक्रमते स्म॥ १११

श्लो ॥ अबला य देवकजा न तत स्सोऽयं शृणोतु तद्वाणीम्
आनकदुन्दुभिशब्दं नाश्रौषी देष विस्मया यैतत् ॥ ११२

अबलेति—य यस्मात्, देवकजा देवकी, अबला स्त्री, भवतीति शेषः; दुर्भवेति च गम्यते। ततः तस्मात्, स्त्रीत्वप्रयुक्तानादरा द्धेतो रित्यर्थः। दौर्बल्यप्रयुक्तध्वनिमान्द्या दिति च गम्यते। सोऽयं शिशुहन्ता कंसः, तद्वाणीं देवकीवाचं, न शृणोतु नाङ्गीकरोतु, न शृणो त्विति च गम्यते। एष कंसः आनकदुन्दुभिशब्दं वसुदेववाक्यं, पटहभेरीशब्द मिति च गम्यते। नाश्रौषीत् नाङ्गीचकार नाश्रृणो दिति च गम्यते। इत्येतत् विस्मयाय आश्चर्याय भवतीति शेषः। आश्चर्यावह मित्यर्थः। दुर्बलोच्चारितशब्दस्य अतिमन्दतया श्रवणाभावो युक्त एव। पटहभेरीशब्दमपि नाश्रृणो दित्यहो कंसस्य बाधिर्य मिति ध्वनिः। इदं च व्यङ्ग्यं गुणीभूत मेव विस्मयाये त्यनेन प्रतिपादितः विस्मयः वाच्यार्थे असम्भवस्सन् व्यङ्ग्यार्थं गमयतीति। नहि पुरुषवाक्यं गृहीतव्यं स्त्रीवाक्यन्तु न तथेति प्राज्ञानां नियमः। ननु वक्तृविशेषनिस्पृहा गुणगृह्यवचनेविपश्चित इत्युक्तत्वात्। नच दुष्टाना मयं नियम इतिवाच्यम्; तेषां स्वतन्त्रत्वात्। नहि दुष्टानां पारतन्त्र्यं मस्ति वेदगुर्वादिपरतन्त्रत्वे दुष्टत्वव्याघाता दितिकृत्वा स्त्रीवाक्यानङ्गीकारव त्पुरुषवाक्यानङ्गीकारोऽपि न विस्मयावहः; किन्तु सहज एवेति वाच्यार्थे न विस्मय इति सुष्ठ ॥ ११२

ग ॥ साऽपि प्लुतकौशलेन तत्क्षण मन्तरिक्षवर्त्मनि समुत्प्लुत्य समधिगम्य च सुरसुन्दरीरूपं विस्मयमान मेन मुग्रसेनतनय मवादीत् ॥ ११३

सापीति— साऽपि बाला च, प्लुतकौशलेन लङ्घनचातुर्येण, तत्क्षणं तदैव, अन्तरिक्षवर्त्मनि आकाशमार्गे, समुत्प्लुत्य समुद्गम्य, सुरसुन्दरीरूपं देवतास्वरूपं, समधिगम्य च प्राप्य च, विस्मयमानं किमिद मित्याश्चर्यपर्याकुलं, एनं, पूर्वोक्तं उग्रसेनतनयं कंसं अवादीत् उवाच ॥ ११३

ग ॥ अयि भो वैधेयकुलतिलक! किं मनया बालिशया मया निबर्हितया ?

अयीति— अयीति मुग्धसम्बुद्धिः भो वैधेयकुलतिलक! हे मूर्खवंशभूषण! निबर्हितया त्वया हिंसितया प्यनया स्त्रिया, बालिशया बालया मया, किम्? यद्वा मया निबर्हितया सत्या तव किम् मन्निबर्हणेन तव न मरणभयनिवृत्ति रिति भावः ॥ ११४

तदेव विशदयति अपि त्विति—

ग ॥ अपि तु भुवि समुद्भूत एव तव समभ्यर्चनाय कोऽपि निरङ्कुशमहिमानुभाव स्सावधानमेव तदवधारयतु भवा निति ॥ ११५

अपित्विति— अपि तु किन्तु, निरङ्कुशः अप्रतिहतः, महिमानुभावः महिम्नः प्रभावः यस्य स तथोक्तः; कोऽप्यनिर्वाच्यः पुरुषः पुरुषोत्तम इति यावत्। तव समभ्यर्चनाय विपरीत लक्षयणा

समुन्मूलनार्थं, भुवि भूलोके, समुद्भूत उत्पन्न एव, भवान् त्वं सावधानं एकाग्रचित्तत्व मवधानं तत्सहितं यथा तथा तदेव त्वदन्तकजनन मेव, अवधारयतु जानातु विचारय त्वित्यर्थः– इति सा कंस मवादी दिति पूर्वे णान्वयः ॥ ११५

**ग ॥ कंसोऽपि नितान्त मरुन्तुदवचनझर्झरितहृदयकोटरः कमपि कर्कशदशा-विशेष मुपगम्य वसुदेव एव शरणीकरणीय इति धिय मयासीत् ॥ ११६**

कंसोऽपीति– कंसोऽपि कंसश्च, नितान्त मत्यन्त, मरुन्तुदैः मर्मभेदकैः, वचनैः बालिका-वाक्यैः, झर्झरितं विदारितं, हृदयं मनः, कोटरमिव गह्वर मिव, हृदयकोटरं यस्य स तथोक्तस्सन् , कमप्यनिर्वाच्यं, कर्कशदशाविशेषं कष्टदशातिशय, मुपगम्य प्राप्य, वसुदेवएव शरणीकरणीयः शरणं गन्तुं योग्य इत्यर्थः । अशरणं शरणं करणीय श्शरणीकरणीयः । 'अभूततद्भावे च्विः' इति धियं बुद्धिं, मयासी दभजत । वसुदेव एव मम शरण इति निश्चिका येति भावः ॥ ११६

**श्लो ॥ प्राप्तोऽपि पुत्त्रार्दनवज्रघातान्**
**कंसाम्बुवाहा द्वसुदेवशैलः**
**बभार तस्यैव वचोऽम्बुधारा**
**श्शीर्षेणः गुर्वी खलु जीवनाशा ॥ ११७**

प्राप्तोऽपीति– वसुदेवशैलः वसुदेवरूपः पर्वतः, कंसाम्बुवाहात् कंसरूपा न्मेघा, दपादानात् सकाशादितिवा –पुत्त्रार्दनवज्रघातान् शिशुमारणरूपाशनिक्षतानि, प्राप्तोऽपि प्राप्यापीत्यर्थः; तस्य कंसाम्बुवाहस्यैव वचोऽम्बुधाराः वाग्रूपजलधाराः, शीर्षेण शिरसा शृङ्गेण च, बभार धृतवान् । वाचां शीर्षधारणं नाम तद्बहुमानन, मङ्गीकारएवेति यावत् । उक्त मर्थ मर्थान्तरन्यासेन द्रढयति । जीवनाशा जीवितस्पृहा, उदकवाञ्छेति च, गुर्वी विस्तृता, खलु प्रसिद्धिः । सामान्येन विशेषसमर्थन रूपोऽर्थान्तरन्यासालङ्कारः । सावयवरूपकस्य अस्य च संसृष्टिः । अन्योन्यनैरपेक्ष्यात् अयं चार्थान्तर-न्यासः जीवनशब्दश्लेषवशा दुत्थापित इति श्लेषानुप्राणित इति विवेकः । यदि कंसोक्तं मया नाद्रियेत तर्हि कंसो मां हन्या दिति भिया कंस माश्वासयामास वसुदेवः नतु प्रेम्णा; कंसस्य कृता पराधत्वा दिति भावः ॥ ११७

**ग ॥ देवकी च सान्त्ववचनै रभ्यर्थयमान मेनं सानुशय माशयसन्धुक्षण-विचक्षणं तत्क्षण मानन्दयामास ॥ ११८**

देवकीचेति– देवकी च सान्त्ववचनैः सामवाक्यैः, अभ्यर्थयमानं प्रार्थयन्तं, सानुशयं सपश्चात्तापं, आशयस्य मनसः, सन्धुक्षणे उल्लासने, विचक्षणं निपुण, मेनं कंसं, तत्क्षणं तदैव, आनन्दयामास । सान्त्ववचनै रेन मानन्दयामासेति वा अन्वयः ॥ ११८

**ग ॥ एवं प्रसादमेदुरहृदयारविन्दौ दम्पती पुण्डरीकविलोचनविलोकनविकल सकलबन्धा वपि विगळितनिगळबन्धा वाधाय ताभ्या माश्वासितः कंसोऽपि निज- सदन माससाद ॥** ११९

एव मिति– एव मुक्तरीत्या, प्रसादेन अनुग्रहेण, मेदुरे बन्धुरे, हृदये अरविन्दे इव हृदयारविन्दे ययो स्तौ, तौ दम्पती जायाच पतिश्च दम्पती जायाया दम्भावो जम्भावश्च वा निपात्यते इत्यभिधाना द्म्भावः । तौ पुण्डरीकविलोचनस्य पुण्डरीकाक्षस्य, कृष्णस्येत्यर्थः । विलोक- नेन दर्शनेन हेतुना, विकलाः गळिताः, सकलाः सर्वे, बन्धाः सांसारिकक्लेशाः ययो स्तौ तथोक्तौ, ते च विगळितः अपहृतः, निगळबन्धः शृङ्खलाबन्धः ययो स्तौ तथोक्तौ, आधाय कृत्वा, गळित- बन्धस्य पुनर्बन्धापसारणं विरोधः । मानसिकबन्धो विगळितः पुरा; इदानीं तु कायिक इति तत्परिहारः । अतो विरोधाभासालङ्कारः । कंसोऽपि कंसश्च, ताभ्यां दम्पतिभ्या, माश्वासितः अनुनीतस्सन्, निजसदनं स्वगृह, माससाद प्राप ॥ ११९

**ग ॥ ततः** १२०

ततः– कंसगृहप्रवेशानन्तर मित्यर्थः ॥ १२०

**ग ॥ अपचितरुचिनिचयहिमकरविरहविधुरितरजनीयुवतीपरिदेवनविरा- वायितनानाविधपतगविरुतमुखरितेषु हरिन्मुखेषु किन्तु खलु पूर्वसर्वंसहाभृदवलम्ब्य- मानभासुरमणिमुकुर मिदं, किमुत परिसरविसृमरकेसरवासरकमलाविलासकोकनद मिद, माहोस्वि दवनीतलावतीर्णमधुसूदननिषेवणाय बलिसदनसमुद्गतभुजगपरिबृढ- चूडाशोणरत्न मिद, मथवा रथाङ्गविहङ्गदूरीकृतविरहानलज्वालापटल मिदं, किमुत द्विजराजवसुहरणसमुपनतविगर्हणानिबर्हणाय वासरकरसमुदक्ततप्तलोहफलक मिद; मेव मुच्चावच मुल्लिख्यमाने हरिहयहरिन्मुखचुम्ब्यमाने समुदश्चति भगवति भास्वति ॥** १२१

अपचितेति– हरिन्मुखेषु दिङ्मुखेषु, अपचितरुचिनिचयस्य अरुणोदयसान्निध्यात् क्षीण- कान्तिसन्तानस्य, हिमकरस्य चन्द्रस्य, पत्युरिति भावः; विरहेण वियोगेन, विधुरितायाः विवशीकृतायाः, यथा रोगेण क्षीणसत्वे भर्तरि क्रमेण मृते सति तत्पत्नी विह्वला भवति तद्व दिति भावः; रजन्याएव युवत्याः इति रूपकम्, परिदेवनविरावाः विलापध्वनयः, तद्वदाचरितैः परिदेवनविरावायितैः, उपमा लङ्कारः । नानाविधानां नानाजातीयानां, पतगानां पक्षीणां, विरुतैः ध्वनिभिः, मुखरितेषु सञ्जात- मुखरेषु शब्दायमानेषु सत्सु; प्रभाते हि पक्षिणो रुदन्ति । तद्रोदनन्तु चन्द्ररूपभर्तृवियोगेन विधुरि- तायाः रात्रिकामिन्याः रोदनध्वनिव द्भातीति भावः । इदं परिदृश्यमानं वस्तु, पूर्वसर्वंसहाभृत्

पूर्वपर्वतः, सएव प्राग्देशभूपति रिति श्लिष्टरूपकं । तेन अवलम्ब्यमानं प्रातःकाले शुभार्थं गृह्यमाणं, भासुरं प्रकाशमानं, मणिमुकुरं मणिमयं दर्पणं, किन्तु किमु ! इत्युत्प्रेक्षा, खलु वाक्यालङ्कारे। इयञ्च श्लेषोज्जीवितेति बोध्यम् । इदं परिसरविसृमरकेसरं प्रान्तदेशप्रसृतकिञ्जल्कं, वासरकमलायाः दिनलक्ष्म्या एव लक्ष्म्या इति श्लिष्टरूपकम् । विलासकोकनदं लीलारक्तोत्पलं किमुत! अत्रापि रूपकोज्जीवितोत्प्रेक्षालङ्कारः । लक्ष्म्या हि लीलाकमलधारणं प्रसिद्धं । इह लीलाकोकनदधारण मुत्प्रेक्षित मिति बोध्यम् । आहोस्वित् अथवा, इदम् अवनीतलावतीर्णस्य भूम्याविर्भूतस्य, मधुसूदनस्य कृष्णस्य, निषेवणाय सेवनार्थं, बलिसदनात् रसातला, त्समुद्गतस्य उत्थितस्य, भुजगपरिवृढस्य सर्पेन्द्रस्य, चूडाशोणरत्नं मकुटस्थपद्मरागमणिः किमु ! अथवा यद्वा, इदं रथाङ्गविहगैः चक्रवाकपक्षिभिः, दूरीकृतस्य त्यक्तस्य, विरहानलस्य वियोगाग्नेः, ज्वालानां शिखानां, पटलं समूहः, किमु ! इदं द्विजराज श्चन्द्र, स्सएव ब्राह्मणश्रेष्ठ इति श्लिष्टरूपकं । तस्य वसुहरणं कान्त्यपहरणं, तदेव धनापहरण मिति पूर्ववद्रूपकम् । तेन समुपनतायाः सम्प्राप्तायाः, विगर्हणायाः निन्दायाः, लोकापवादस्येति यावत् ; निबर्हणाय विध्वंसनार्थं, वासरकरेण दिनकरेण सूर्येणेत्यर्थः । तेनैव वासरस्य तन्नामकस्य कस्यचि त्पुरुषस्य, करेण हस्तेनेति श्लिष्टरूपकम् ; समुदक्त मुद्धृतं, तप्तमग्निदग्धं, लोहफलकं लोहमयं फलकं, किमु! यथा लोकापवादनिर्हरणार्थं तद्विश्वासहेतवे तप्तायःफलकं करेणोद्गृह्णाति तद्व दिति भावः । एव मुक्तरीत्या उच्चावच मनेकभेदं यथा तथा, उल्लिख्यमाने वर्ण्यमाने, हरिहयस्य इन्द्रस्य, हरि द्दिक् प्राची, तस्याः मुखेन आरम्भेण, चुम्ब्यमाने संयुज्यमाने, प्राग्दिगारम्भसम्बन्धवतीत्यर्थः । अत्र हरिहयहरि दिति इन्द्रपत्नी काचन स्त्री तया मुखेन चुम्ब्यमाने इति प्रतीयते । भगवति षड्गुणशालिनि, भास्वति सूर्ये, समुदञ्चति सति सम्यक् उत् उपरि, अञ्चति गच्छति सति, ऊर्ध्वं प्रसरति सतीत्यर्थः ॥ १२१

**श्लो ॥ दुर्मन्त्रिभि रसा वाशु । सम्मन्त्रयितु मन्तरात्**
**समाज माजगा माथ । कंस स्सन्तानपांसनः ॥** १२२

दुर्मन्त्रिभि रिति– अथ सूर्योदयानन्तरं, असौ एषः, सन्तानपांसनः कुलदूषकः, कंसः दुर्मन्त्रिभि स्सह दुष्टै र्मन्त्रिभि स्समं, सम्मन्त्रयितुं आलोचयितु, माशु द्रुतं, अन्तरा दन्तःपुरात् , समाजं सभा, माजगाम आययौ । अत्रानुप्रास श्शब्दालङ्कारः स्फुटः ॥ १२२

**ग ॥ सोऽय ममुया कपटबालिकया सल्लपित मखिलमपि तेभ्यो निवेद्य तदनुविधेय मभिदधे ॥** १२३

सोऽय मिति– सोऽयं कंसः, अमुया पूर्वोक्तया, कपटबालिकया मायाबालिकया, सल्लपित मुक्त, मखिलमपि सर्वं च, तेभ्यो मन्त्रिभ्यः, निवेद्य उक्त्वा, तदनुविधेयं तदनन्तरकर्तव्य, मभिदधे उवाच । यत्कर्तव्यं तत् अर्था त्सकलशिशुहनन मुवाचेति भावः ॥ १२३

ग ॥ तेऽपि मन्त्रिण स्तन्नियन्त्रणपरतन्त्रिता स्सकलवसुमतीवास्तव्यपृथुकमथन कृतनिश्चया न्निश्चक्रमुः । स्वयमपि निजनिलय मयासीत् ॥ १२४

तेऽपीति— तेऽपि मन्त्रिणः, तन्नियन्त्रणपरतन्त्रिताः कंसाज्ञासञ्जातपरतन्त्राः, तदाज्ञावशा इति यावत्; सन्तः, अतएव सकलानां सर्वेषां, वसुमतीवास्तव्यानां भुविनिवसतां, पृथुकानां शिशूनां, 'पृथुक श्शावक शिशु' रित्यभिधानम् । मथने विनाशने विषये, कृतात् गृहीतात् दृढा दिति वा, निश्चयात् अभिनिवेशात्, निश्चक्रमुः निरगमन् । सकलशिशुविनाशनार्थं निर्ययु रिति भावः । स्वयमपि कंसश्च, निजनिलयं स्वगृह, मयासीत् प्राप ॥ १२४

श्लो ॥ तदैव नन्द स्सुतभावभाजः
परस्य साक्षात्करणेन पुंसः
निर्वाण मापाऽनकदुन्दुभे स्तु
बन्धो भव चक्रधरे परोक्षे ॥ १२५

तदै वेति— तदैव तदानीमेव, आदत्त नन्दरमर्णाति यशोदानिर्वाणसमकाले एवेत्यर्थः । सुतभावभाजः पुत्रत्वं प्राप्तस्य, परस्य परमस्य, पुंसः पुरुषस्य पुरुषोत्तम स्येत्यर्थः । साक्षात्करणेन हेतुना दर्शनाद्धेतोः, नन्दः निर्वाणं सुखं, माप प्राप । चक्रधरे श्रीकृष्णे, परोक्षेसति अप्रत्यक्षेसति, श्रीकृष्णस्य नन्दव्रजगमनानन्तर मित्यर्थः । आनकदुन्दुभे र्वसुदेवस्य तु, बन्धो निगळबन्धः, अभवत् । चरणौ निगळै राशु यथापुर मसज्यते त्युक्तत्त्वात् । अत्र परमात्मसाक्षात्कारेण नन्दस्य मुक्तिः; तत्पारोक्ष्या द्वसुदेवस्य संसारबन्ध श्चाभूता मिति ध्वन्यते ॥ १२५

श्लो ॥ स्थाने त मादाय तदा यशोदाऽ
प्यमन्द मानन्द मविन्द तेति
हृदा मुदा यं परिरभ्य लीला
लोला विरागा यतयोपि भूताः ॥ १२६

स्थाने इति— तदा तदानीं, तं भगवन्तं, शिशु, मादाय गृहीत्वा, यशोदापि नन्दपत्नी च, अमन्द ममितं, मानन्द मविन्दत अभज, दिति स्थाने युक्तं; विरागाः वीतकामादिरागाः, यतयः मुनयोऽपि, मुदा सन्तोषेण हेतुना, हृदा मनसा करणेन, वक्षसेतिच, यं भगवन्तं, परिरभ्य ध्यात्वा आलिङ्ग्येति च, लीलालोलाः तद्विलासासक्ताः, तद्विलासचिन्तनरता इत्यर्थः; क्रीडासक्ता इति च गम्यते; भूताः बभूवुः; त मिति पूर्वेणान्वयः । विरागाणां यतीनामपि, तदीयलीलापारवश्ये किमुत मातु रित्यर्थापत्ति रलङ्कारः । सच श्लेषोत्थापित इति विवेकः । मनसा भगवद्ध्याने एव यतीनां परमानन्दोदये सति साक्षा द्भगवद्दर्शने किमुत ! यशोदाया आनन्दो वाचां विषय इत्यप्यर्थापत्ति

रस्ति । अत्र विरागा यतयोऽपि यं भगवन्तं श्रीरामं हृदा मनसा, नतु वक्षसा, दुर्लभत्वात्- परिरभ्य आलिङ्ग्य, मनसैव तदालिङ्गनसुख मनुभूयेत्यर्थः । तावता अनिर्वृतत्वात् लीलालोलाः तेन सह क्रीडनासक्ता स्सन्तः, भूताः । अधुना गोपिकास्वरूपेण जाता इत्यर्थान्तरं ध्वन्यते । तेन च श्रीकृष्णस्य निरतिशयसौन्दर्यं वस्तु व्यज्यते ॥ १२६

श्लो ॥ बभूव चित्रं वसुदेवसूनो
मायावृताया अपि नन्दवध्वाः
प्रकाश मानन्द ममुष्य तत्त्वं
मत्वापि नेदं वसुदेवतन्व्याः ॥ १२७

बभूवेति– वसुदेवसूनोः श्रीकृष्णस्य, मायावृतायाः मायया आवृतायाः छन्नायाः, स्वसुता-देवकीपुत्त्रयो र्विनिमयात्मकं देवरहस्य मजानानाया इत्यर्थः– भगवन्मायापहृतात्मयाथार्थ्याया इत्य प्यर्थो गम्यते । एवं विधाया अपि यशोदायाः सम्बन्धि आनन्दं सुखं, आनन्दशब्दस्य क्लीबत्वे अयमेव कविः प्रमाणम् । पुत्त्रलाभजन्यानन्द इत्यर्थः । प्रकाशं प्रकटं बभूव । आनन्दं ब्रह्म, प्रकाशं प्रत्यक्षं, बभूव । ब्रह्मसाक्षात्कारो बभूवेति च गम्यते । अतोऽत्र विशेषालङ्कारो व्यङ्ग्यः-'कार्योत्पत्ति स्तृतीया स्यां त्सत्यपि प्रतिबन्धके इति तल्लक्षणात् । नहि मायावरणरूपप्रतिबन्धशालिनः ब्रह्मसाक्षा-त्कारो भवितु मर्हति । प्रकृतार्थे तु देवरहस्याज्ञानादेव यशोदा देवकीसुतं स्वसुतं मत्वा भृशं ननन्द । अय मानन्दस्तु सर्वजनविदित एव इति भावः । अमुष्य श्रीकृष्णस्य, तत्त्वं स्वपुत्त्रत्वरूपं याथार्थ्यं, मत्वापि ज्ञात्वापि सच्चिदानन्दलक्षणं स्वस्वरूपं ज्ञात्वापीति व्यज्यते । वसुदेवतन्व्याः देवक्याः, इद मानन्दप्रकटनं, न नास्ति । कंसभया त्पुत्त्रलाभजन्यानन्दं न प्रकटयामासेति भावः । इदं ब्रह्म प्रत्यक्षं नेति च गम्यते । तत्त्वज्ञाने सत्यपि ब्रह्मानन्दानुभवो नासी दिति व्यङ्ग्यार्थे विशेषालङ्कारः । 'कार्याजनि र्विशेषोक्ति स्सति पुष्कलकारणे' इति-चित्र मिदं द्वय चित्र मित्यर्थः । प्रतिबन्धकसत्त्वेपि कार्योत्पत्तिः पुष्कलकारणे सत्यपि कार्याजनिरिति चैतत् द्वयं व्यङ्ग्यं, चित्र मिति भावः । वस्तुतस्तु वसुदेवसूनो र्मायावृतायाः अज्ञानच्छन्नाया अपि नन्दवध्वाः, आनन्दं ब्रह्म, प्रकाशं बभूवेति विरोधः । तस्य आनन्दं सुखं प्रकाशं बभूवेति परिहारः । तेन विरोधाभासा-लङ्कारः । वसुदेवतन्व्याः अमुष्य तत्त्वं सच्चिदानन्दलक्षणं ज्ञात्वापि पारोक्ष्येण विदित्वापीत्यर्थः । इदं ब्रह्म प्रकाशो नेति विरोधः । तस्य तत्त्वं स्वपुत्त्रत्वरूपं याथार्थ्यं, ज्ञात्वा इदं सुखप्रकटनं नेति परिहारः । तेनात्रापि विरोधाभासालङ्कारः । अलङ्कारद्वयस्य संसृष्टिः विरोधदृष्ट्या च चित्र मित्युक्त मिति बोध्यम् । आभ्यां च विरोधाभासाभ्यां विशेषालङ्कारद्वयं व्यज्यते एवेति अलङ्कारेण अलङ्कारवस्तुध्वनि रिति विवेकः । पूर्वव्याख्याया मर्थस्य व्यङ्ग्यत्व मधुना तु अलङ्कारस्यैवेति विवेकः इति ॥ १२७

ग ॥ नन्दोपि तदनु नन्दनसमुदयसमयसमुचित मानन्द मनुभूय पयस्विनीशत मपरिमितकनक म प्यवनीसुरसा द्विधाय तोरणपताकानिकायभूषितेषु निकेतनेषु दुन्दुभिपटहनिस्साणराणमुखरितेषु हरिन्मुखेषु लास्यविलासलालसासु वेशमत्तकाशिनीषु श्रुतिरुजापहारिगानरसायनेषु गायनेषु विकीर्णसुमनोगणेषु सुमनोगणेषु प्रकटितकल्याणगाथेषु मागधेषु समुदितानन्दपल्लवेषु वल्लवेषु प्रवर्तितमङ्गळसूक्तजातेषु च तत्क्षण मात्मजन्मनो जातकर्ममङ्गळं निर्वर्तयामास ॥ १२८

नन्दोऽपीति— तदनु ततः, नन्दोपि नन्दश्च, नन्दनस्य सुतस्य, समुदयसमयः आविर्भावकालः, तस्य समुचित मनुकूलं, तत्र समुचित मितिवा, आनन्दं सुख, मनुभूय प्राप्य, पयस्विनीशतं गोसहस्र, मपरिमितकनक ममितसुवर्ण मपि, अवनीसुरसा द्भूसुराधीनं विधाय कृत्वा, निकेतनेषु गृहेषु, तोरणपताकानिकायभूषितेषु पुष्पमालिकादिबन्धनार्थं द्वारा द्बहि रुभयपार्श्वयोः द्वाराकारेण प्रतिष्ठितं स्तम्भद्वयं तोरण मित्युच्यते । 'तोरणोऽस्त्री बहिर्द्वार' मित्यमरः । 'पताका वैजयन्ती स्या त्केतनं ध्वज मस्त्रिया' मिति चामरः । तोरणानां पताकानां च निकायैः स्समूहैः, भूषितेषु अलङ्कृतेषु सत्सु, हरिन्मुखेषु दिगङ्गणेषु, दुन्दुभीनां भेरीणां, पटहाना मानकानां च, निस्साणराणैः निस्साण ध्वनिभिः, मुखरितेषु शब्दितेषु सत्सु, वेशमत्तकाशिनीषु वेशे वेश्यागृहे, मत्तकाशिन्यः स्त्रियः, तथोक्ताः वेश्या इत्यर्थः । नेपथ्ये गृहमाले च वेशो वेश्यागृहेपि चेति रभसः । लास्यविलासलालसासु लास्यं नृत्तविशेषः, तस्य विलासे लीलायां, लालसाः लोलाः, तासु तथोक्तासु सतीषु, गायनेषु गायकेषु, ण्युट्चेति कर्तरि ण्युट् । श्रुतिरुजापहारिगानरसायनेषु श्रोत्ररुगपहारगीतरूपरसायनवत्सु सत्सु, रसायनेन रोगइव गानेन श्रोत्रपीडा अपह्रियते इति गानस्य रसायनसादृश्यम् । श्रुतिमनोहरं गायत्सु स त्स्वित्यर्थः । सुमनोगणेषु देवबृन्देषु, विकीर्णसुमनोगणेषु वृष्टपुष्पबृन्देषु सत्सु, मागधेषु मगधेषु, वंशावळीपाठकेष्वित्यर्थः । प्रकटितकल्याणगाथेषु प्रकाशितमङ्गळचरित्रेषु सत्सु, वल्लवेषु गोपेषु, समुदिता आनन्दपल्लवा सुकन्दळा येषां तेषु सत्सु, द्विजातेषु ब्राह्मणेषु, प्रवर्तितानि प्रकटितानि मङ्गळानि, शुभानि, मङ्गळहेतौ मङ्गळत्वारोपः- सूक्तजालानि, 'नवो नवो भवतीत्यादिसूक्तसमूहाः यै स्तेषु तथोक्तेषु सत्सु, तत्क्षणं तदैव, आत्मजन्मनः कुमारस्य, जातकर्ममङ्गळं जातकर्माख्यं शुभकर्म, निर्वर्तयामास अनुष्ठितवान् ॥ १२८

श्लो ॥ क्रमेण ववृधे शौरि । र्धर्मो विग्रहवा निव
तथा दुर्विनयाङ्कूरः । कंसस्य च निरङ्कुशः ॥ १२९

क्रमेणेति— विग्रहवान् सशरीरः धर्मइव स्थितः, शौरिः कृष्णः, क्रमेण ववृधे वृद्धिं प्राप। तथा तेन प्रकारेण, कंसस्य दुर्विनयाङ्कूरः दुर्विनयस्य दुष्टत्वस्य अङ्कूरः अङ्कुरः 'अङ्कोऽपि प्ररोह स्स्या दङ्कूरोऽङ्कुर मस्त्रिया' मिति वैजयन्ती- निरङ्कुशः अप्रतिबन्धस्सन्, क्रमेण ववृधे इत्यन्वयः ।

अत्र कंसदुर्विनयाङ्कुरश्रीकृष्णयोः वृद्धिरूपैकधर्मान्वया त्तुल्ययोगितालङ्कारः । 'वदन्ति वर्ण्या वर्ण्यानां धर्मैक्यं तुल्ययोगितेति' लक्षणात् । अयं च धर्म इवे त्युत्प्रेक्षासंसृष्ट इति बोध्यम् ॥ १२९

**ग ॥ अथ कदाचि दुपहारवितरणाय व्रजपरित्राणभर मखिलमपि निज मनुजीविजनसा द्विधाय समधिगतमधुरानगर मुपहृतसमस्तवस्तुनिकरतया परितोषितपरिवृढं नन्दगोप मुपगत माकर्ण्य वसुदेव स्सत्वर मदसीय मुदवसित मयासीत् ॥**

अथेति– अथ ततः, कदाचि त्कस्मिंश्चित्काले, निजं स्वकीयं, अखिलं समस्तमपि, व्रजपरित्राणभरं व्रजरक्षाभरं, अनुजीविजनसात् भृत्यजनाधीनं, विधाय कृत्वा, उपहृतसमस्तवस्तुनिकरतया समर्पितसर्ववस्तुभारत्वेन हेतुना, परितोषितपरिवृढं सन्तोषितप्रभुं, नन्दगोपं नन्द इति गोपः गोपालकः तं, उपगत मागत, माकर्ण्य, उपहारवितरणाय बलिदानार्थं, समधिगतमधुरानगरं प्राप्त मधुराभिधपत्तनम्, श्रुत्वा वसुदेवः सत्वरं शीघ्रम्, अदसीयं आमुष्येदं वृद्धाच्छः, नन्दसम्बन्धीत्यर्थः । उदवसितं गृह, मयासीत् अभजत् यया विति वा ॥ १३०

**श्लो ॥ ता वथ भ्रातरौ स्निग्धौ । दैवा त्कृतसमागमौ**
**परस्परं परिष्वज्य । पप्रच्छतु रनामयम् ॥ १३१**

ता वथेति– अथ वसुदेवस्य नन्दगृहगमनानन्तरं, स्निग्धौ वयस्यौ अतएव भ्रातरौ नन्दवसुदेवयोः वैश्यक्षत्रिययो र्भ्रातृभाव स्स्नेहकृत इति भावः । नच नन्दस्य गोपत्वेन शूद्रत्वं शङ्क्यं गोरक्षणस्य वैश्यवृत्तित्वात् । दैवा द्विधिवशात्, कृतसमागमौ सञ्जातसङ्गमौ, तौ नन्दवसुदेवौ, परस्पर मन्योन्यं, परिष्वज्य आलिङ्ग्य, अनामयं आरोग्य, मिद मुपलक्षणं क्षेमस्य 'ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धु मनामयं वैश्यं क्षेमं सदा पृच्छे' दिति वचनात् । नन्दो वसुदेव मनामयं, वसुदेवो नन्दं क्षेमं चेति विवेकः । पप्रच्छतुः ऊचतु रित्यर्थः ॥ १३१

तत्र वसुदेवकृतप्रश्नप्रकार माह भ्रात रिति चतुर्भिः श्लोकैः –

**श्लो ॥ भ्रात ! स्तनयसारेण । मधुरेण विवर्धसे**
**जाता च्युतसुताशस्य । य दच्युतसुतस्पृहा ॥ १३२**

भ्रात रिति– हे भ्रातः! मधुरेण मनोज्ञेन, तनयसारेण श्रेष्ठतनयेन अर्थात् श्रीकृष्णेन, मयूरव्यंसकादित्वा त्सारस्य पूर्वनिपाताभावः । विवर्धसे विशेषेण वृद्धिं यासि, यद्वा मधुरेण स्वादुना, तनयशब्दो लक्षणया तल्लीलापरः तनयसारेण पुत्रलीलारसेन, 'सारो बले स्थिरांशेर्थे न्याये क्लीबं वरे त्रिषु क्लीब मम्बु' नीति रत्नमाला- विवर्द्धसे मधुरतनयलीलारसं पीत्वा भृशं नन्दसि किमित्यर्थः । यत् यस्मात्, च्युतसुताशस्य गतयौवनत्वा त्पुत्रप्राप्तिविषये निराशस्येत्यर्थः । अच्युतसुतस्पृहा निरवधिकसुतानुरागः, अच्युतरूपे सुते अनुरागश्चेति व्यज्यते; जाता आसीत् । बहुकाला

दपुत्रस्य स्थविरस्य तव, इदानीं सुतलीलारसानुभवः अतिवाञ्छाविषयत्वेन अतिश्लाघ्यः इत्येकोऽर्थः। साक्षाद्भगवानेव तव पुत्र आसी दि त्यहो तव तल्लीलारसानुभवानन्द इति व्यङ्ग्यार्थः ॥ १३२

श्लो ॥ कुशली रौहिणेय स्ते । भास्वतः किमु सद्मनि
तातसद्मीयति प्रौढ्या । किं वा मित्रगृहीयति ॥ १३३

कुशलीति– भास्वतः तेजस्विनः, ते तव, सद्मनि रौहिणेयो बलभद्रः, कुशली कुशलवान्, किमु? आस्ते इति शेषः। आस्ते कि मित्यर्थः। रौहिणेय इति पद मत्रा प्युत्तरत्र च अन्वेतव्यं। तातसद्मीयति तातस्य पितुः, स्सद्म गृहं, तातसद्म, त दात्मन इच्छतीति तातसद्मीयति 'सुप आत्मनः क्यच्, नः क्य इति पदसंज्ञायां' नलोपः। क्यचिचे तीकारः। मौग्ध्या जनकगृहं त्यक्त्वा बालै-स्सह क्रीडनार्थं मन्यत्र गन्तुं बिभेति कि मिति भावः। प्रौढ्या प्रौढत्वेन, मित्रगृहीयति वा मित्रस्य सुहृदः, गृह मात्मन इच्छति कि मित्यर्थः। बालै स्साकं क्रीडनार्थं तेषां गृहान् गन्तुं शक्नोति किमिति भावः। अत्र तातस्य मम सद्म आत्मन इच्छति वा; अथवा मित्रस्य तव गृह मिति प्रश्नो व्यङ्ग्यः। यद्वा कुशली रौहिणेयः भास्वत स्ते सद्मनि, तातसद्मीयति किमु तातसद्म-नीव आचरति किं? 'अधिकरणा च्चेत्याचारार्थे क्यच्' मौग्ध्या त्वामेव तातं मन्यते कि मित्यर्थः। प्रौढ्या मित्रगृहीयति वा, मित्रगृहे इवाचरति किम्? मम पिता वसुदेव एव, नन्दस्तु मित्र मिति मन्यते कि मित्यर्थः। अयमपि व्यङ्ग्यार्थ एव; नतु वाच्यार्थः। एतदर्थस्य वाच्यत्वेनेष्यमा-णत्वे वसुदेवेन देवरहस्य मुद्भावितं स्यात्। नन्दस्य कृष्णे आत्मजत्वबुद्धि रपि नश्ये दिति मह दनिष्टं बोध्यम्। अत्र अन्योऽप्यर्थो व्यज्यते। रौहिणेयो बुधः, भास्वत स्सूर्यस्य, सद्मनि सिंहराशौ, तातसद्मीयति किमु तातसद्मनी वाचरति किम्? 'राजानौ रविसीतगू क्षितिसुतो नेता कुमारो बुध' इति बुधस्य सूर्यकुमारव्यवहारसत्वात्। किंवा मित्रगृहीयति मित्रे सूर्यसुतौ बुधस्येति शास्त्रात्। यद्वा तातस्य चन्द्रस्य सद्मनि कटके इवाचरति किम्? नाचरत्येवेत्यर्थः। किंवा किन्तु अव्ययाना मनेकार्थत्वात् मित्रगृहीयति सूर्यबुधयो र्मित्रत्वा दित्यन्वेतव्यम्। एवंसति बुधस्य सूर्यसुतत्वशङ्कापि नोदेतीति बोध्यम्॥ १३३

कंसाज्ञया पूतना व्रजं गमिष्यतीति चेतसि कृत्वा आह–

श्लो ॥ तवार्पितकर स्याद्य । नादेय मिह किञ्चन
अतोऽर्हसि व्रजं गन्तुं । कर्तुं नैवासनग्रहम् ॥ १३४

तवेति– अर्पितकरस्य दत्तोपायनस्य, सर्वं धनमपि राजसात्कृतवत इत्यर्थः। अद्य अधुना, इह मधुरापुरि, आदेय मादातुं योग्यं– प्राप्य मिति यावत्, किञ्चन किञ्चिदपि, न नास्ति। कुतः? धनाभावा दिति भावः। अतः प्रयोजनाभावा दित्यर्थः। व्रजं गन्तुं यातु, मर्हसि अर्हो भवसि। आसनग्रहं कर्तुं स्थातुं, नैव नार्हस्येव। अत्र अर्पितकरस्य दत्तपाणे स्तव, आदेयं किञ्चनापीह

नास्ति । आदानस्य पाणिविषयत्वात् पाण्यभावे आदानं न घटत इति भाव: । अतो व्रजं गन्तु मर्हसि, पाणिवैकल्येपि पादवैकल्याभावात् । आसनग्रहं पित्राद्यासनग्रहणं कर्तुं नार्हस्येव पाणिवैकल्यादिति भाव: इत्यर्थ: प्रतीयते ॥ १३४

**श्लो ॥ भ्रात र्व्रज मुपेक्षस्व । नोत्पातशतसङ्कुलम्**
**विररा माभिधा येदं । नन्द मानकदुन्दुभिः ॥ १३५**

भ्रात रिति– हे भ्रात: ! उत्पातशतसङ्कुलं अमितारिष्टपरीतं, व्रजं नोपेक्षस्व व्रजविषये उपेक्षां माकुर्वित्यर्थ: । एतेन कंस स्तव शिशुनाशनाय बहून्यरिष्टानि कारयिष्यतीति तत्र सावधानो भवेति नन्दं प्रति वसुदेवोऽदेश इति व्यज्यते । एव मुक्तरीत्या, अभिधाय उक्त्वा, आनकदुन्दुभि र्वसुदेव:, विरराम विरतोऽभवत्, तूष्णी मभव दित्यर्थ: । बहुभाषणे देवरहस्यप्रकटनभया दिति भाव: ॥१३५

**श्लो ॥ प्रमुदितहृदयं विधाय शौरिं**
**तदभिहितं हित माकलय्य भूयः**
**भवन मनु तत श्चचाल नन्द**
**स्सम मनुजीविभि राहतै र्गवीशैः ॥ १३६**

प्रमुदितेति – नन्द: शौरिं वसुदेवं, प्रमुदितहृदयं पुत्रकुशलवृत्तान्तकथनेन सन्तुष्टान्तरङ्गं, विधाय कृत्वा, तदभिहितं वसुदेववाक्यं, हित मिष्ट, माकलय्य ज्ञात्वा, तत: ज्ञानानन्तरं, आहतै: स्वेन वसुदेवेन वा सम्मानितै:, अनुजीविभि: भृत्यै:, गवीशै: गोपै, स्समं सह, भवनं गृह, मनु उद्दिश्य, चचाल ययौ ॥ १३६

**श्लो ॥ पूतना तदनु नन्दमन्दिरं । पातनाय सकलार्भसन्ततेः**
**यातनासु निपुणा समाययौ । चेतनार्दनपरायणाशया ॥ १६७**

पूतनेति– तदनु नन्दनिर्गमनानन्तरं, यातनासु पीडनेषु, निपुणा कुशला, पूतना तन्नाम्ना असुरस्त्री, चेतनार्दनपरायणाशया चेतनानां शिशूना, मर्दनं हिंसनमेव, परायणं परमप्राप्य, मित्याशया इच्छया; चेतनार्दनो जनार्दन: कृष्णएव परायण मित्याशयेति च गम्यते । श्रीकृष्णसायुज्याभिलाषयेति व्यङ्ग्याशय: । सकलार्भसन्ततेः सर्वशिशुसन्तानस्य, पातनाय नाशनार्थं, नन्दमन्दिरं नन्दव्रजं, समाययौ समाजगाम ॥ १३७

**ग ॥ सेय मवतंसितकंसशासना कमनीयतरकामिनीरूपसम्पदतिसंहितवसुन्धरा बालिशपरासनपरायणा नन्दभवनभूषणीभूत मुपधिबालिशं वनमालिन मतिवेलबाललीलाविलोकनलालसेव करग्राहं गृहीत्वा तदीयमधुरतरभारतीभरनिशमनपरवशनिज्ञाङ्गयेव क्रमपि प्रमोदभर मभिनीय हालाहलनिलय मात्मनस्तनयुगळ मपाययत् ॥१३८**

सेय मिति— अवतंसितं श्रवणभूषणीकृतं, कंसस्य शासन माज्ञा, यया सा तथोक्ता। कंस-शासन मरविन्दमिव श्रवणेन गृहीत्वेत्यर्थः । तदाज्ञापरतन्त्रेति यावत् । अतएव बालिशानां बालानां, परासनं मारणं, तदेव परायणं मुख्यकृत्यं यस्या स्सा तथोक्ता । कमनीयतरस्य सुन्दरस्य, कामिनी-रूपस्य अङ्गनाकारस्य, सम्पदा विभवेन, अतिसंहिता वञ्चिता, वसुन्धरा यया सा तथोक्ता । सेयं नन्दमन्दिर मुपगता पूतना नन्दभवनभूषणीभूतं नन्दगृहाभरणायमान मुपधिबालिशं कपटबालकं, वनमालिनं कृष्णं, अतिवेलबाललीलाना मत्यर्थं बालविलासानां, विलोकने दर्शने, लालसेव, लोलेव। वस्तुतस्तु न तथेति भावः । करग्राहं गृहीत्वा करेण गृहीत्वा, हस्ते वर्तिग्रहो रिति णमुल् । तदीयस्य कृष्णसम्बन्धिनः, मधुरतरस्य अतिस्वादुनः, भारतीभरस्य वाग्विलासस्य, निशमनेन श्रवणेन हेतुना, परवशः परतन्त्रः विवश इत्यर्थः । निज स्स्वीयः, आशयः हृदयं, यस्या स्सा तथोक्ता । तथाविधेव कम प्यनिर्वाच्यं, प्रमोदभर मानन्दराशि, मभिनीय अभिनयमुखेन द्रष्टृणां प्रदर्शयित्वे-त्यर्थः । हालाहलनिलयं विषनिवासभूत, मात्मनः स्वस्य, स्तनयुगळं कुचद्वन्द्वं, अपाययत् पायया-मास । श्रीकृष्णाय स्वस्तन्यपान मदा दित्यर्थः ॥ १३८

**ग ॥ यदुनन्दनोऽपि त्रिभुवनमोहनविशारद मपि मा मिय मतिसन्धातु मध्यवस्यतीति तदीयच्छन्द मनुसन्दधान स्तदीय मपरिमितशरीरबल मवलेपमपि प्राणसमीरणै स्सम मसिस्वदत् ॥ १३९**

यद्विति— यदुनन्दनोपि यदोः स्ववंशमूलपुरुषस्य, यदूनामिति वा, नन्दनः आनन्दकरः, यदुवंशवर्धन इत्यर्थः । एतेन श्रीकृष्णस्य दीर्घायुष्मत्त्वं व्यज्यते । तेन च पूतनाविषपाना दर्भकस्य न कापि क्षति रिति व्यज्यते । त्रिभुवनमोहनविशारदं त्रिलोकसम्मोहनपण्डितं, मा मपि इयं पूतना अतिसन्धातुं वञ्चितु, मध्यवस्यति निश्चिनोति, उद्युङ्क्ते इत्यर्थः । इति एवं तदीयच्छन्दं तस्या अभिप्रायं, अनुसन्दधानएव जानन्नेव, तदीयं तस्या स्सम्बन्धि, अपरिमितशरीरबल ममितदेह पाटवं, अवलेपमपि गर्वं च, मनोबलं चेत्यर्थः । प्राणसमीरणै स्समं प्राणवायुभिस्सह तत्प्राणान-पीत्यर्थः । असिस्वदत् आस्वादयामास अपजहा रेत्यर्थः । १३९

**श्लो ॥ यत्पूतनाप्राणसमीरवार । मसौ स्तनास्वादनिभा दधासीत् ॥**
**चक्री ततोऽसौ निरधारि किन्तु । चित्तं सुपर्णप्रणयित्व मस्मिन् ॥१४०**

य दिति— य द्यस्मात्, असौ श्रीकृष्णः, पूतनाप्राणसमीरवारं पूतनाप्राणवायुसमूहं, प्राणस्य दशविधत्वा दिय मुक्तिः । स्तनास्वादनिभात् स्तनपानमिषात्, अधासी त्पपौ । तत स्तस्माद्धेतोः, असौ शिशुः चक्री विष्णुरिति सर्प इति च व्यज्यते, निरधारि निश्चितः लोकै रिति शेषः । महामायिन्याः पूतनायाः मारकोऽयं नार्भकः प्राकृतः किन्तु भगवानेवेति तदानीं जनाः तं शिशुं भगवन्तं मेनिरे इति भावः । सर्पस्य वाताशनत्वात् पूतनाप्राणवायुभक्षकोऽयं शिशु र्न बालः किन्तु

सर्प एवेति लोका निरणय न्निति व्यङ्ग्याशयः। व्यङ्ग्यार्थ माश्रित्य अद्भुत माविष्करोति। किन्त्विति-किन्तु अस्मिन् चक्रिणि, सुपर्णप्रणयित्वं गरुडसख्यं, चित्रं सर्पगरुडयो र्वैरित्या दिति भावः। भगवतः कृष्णस्य गरुडध्वजत्वेन गरुडसख्यं न चित्र मिपि वास्तवार्थः; किन्त्विति तुरीयपादेन कविना स्वयमेव चक्रिपदव्यङ्ग्य स्याविष्करणात् गुणीभूतव्यङ्ग्य मिदम् ॥ १४०

श्लो ॥ साऽऽसी ज्जगत्प्राणधयी स चास्याः
प्राणानिला नेव निनाय नाशम्
तुल्येऽपराधे मरुतां हितोऽभू
दसौ रिपु स्सेति विचित्र मेतत् ॥ १४१

साऽऽसी दिति— सा पूतना, जगत्प्राणधयी जगतः लक्षणया तत्स्थजनानां प्राणानां प्राणवायूनां धयी पायिनी अपहारिणीति यावत्। 'पाघ्राध्मेति' धेट श्शप्रत्ययः टित्त्वात् स्त्रियां ङीप्। खशोन्यत्र नेष्यते इति हरदत्तमते तु ङीब्दुर्लभ इति धंया इत्येव पाठ्यम्। आसीत् बभूव। सच सोऽपि कृष्णः, अस्याः पूतनायाः, प्राणानिलानेव प्राणवायूनेव, नाश मदर्शनं, निनाय प्रापयामास, अपजहारेत्यर्थः। जगत्प्राणापहारिण्याः प्राणानेव जगदन्तःपाती शिशु रपाहर दिति प्रतीतस्य विरोधस्य तस्य शिशो रप्राकृतत्वेन जगदन्तःपातित्वाभावा त्तदपहरणं युक्तमेवेति परिहारः। अपराधे प्राणवाय्वपहरणरूपे द्रोहे, तुल्येपि समानेपि, असौ कृष्णः मरुतां देवानां, वायूनाञ्च, 'मरुतौ पवनामरा' वित्यमरः। हितः सुहृत्, अभूत्। सा पूतना, रिपु श्शत्रु रभूत्; अर्था न्मरुतामेव। इत्येतत् इतीदं, विचित्र मद्भुतम्। प्राणानां वायुत्वेन तदपहारिणो रुभयोरपि वायुद्रोहित्वे तुल्ये एको वातानां हितः, अन्योऽहित इति कथनं विचित्र मिति भावः। अस्य विचित्रस्य एको देवहितः, अन्या देवाहिते त्यर्थाश्रयणा त्परिहार इति विवेकः। अत्रायं व्यङ्ग्यार्थः। सा जगत्प्राणधयी वायुद्रोहिणी आसीत् 'समीरमारुतमरुज्जगत्प्राणसमीरणा' इत्यमरः। इदं जगत्प्राणपद मुपलक्षण मिन्द्रादिदेवानाम्, देवसमूहद्रोहिणीति फलितार्थः। स तु कृष्णः अस्याः देवद्रोहिण्या एव प्राणानिला न्नाशं निनाय। एव मपराधे प्राणिद्रोहरूपे तुल्येपि असौ मरुतां देवानां हितोऽभूत् स्वशत्रुनाशकत्वात्। सर्पादिमरणेन सन्त स्सन्तुष्यन्त्येव, न तु तत्रोद्विग्ना भवन्तीति भावः। सा पूतनारिपु रभवत् स्वद्रोहकरत्वा दितिभावः। इत्येतत् विचित्र मद्भुत मिति काकुः; नाद्भुत मेवेत्यर्थः॥ १४१

श्लो ॥ निपीय तस्या गरळायितानि। न विव्यथे स्तन्यपयांसि सोऽयम्
आवासभूमि र्विषधि स्सुताऽपि। तस्यैव यस्येष्टतमेति चित्रम् ॥ १४२

निपीयेति—गरळायितानि गरळव दाचरितानि, तस्याः पूतनायाः, स्तन्यपयांसि स्तने भवानि स्तन्यानि, तत्र भव इति भवार्थे शरीरावयवाच्चेति यत्। तानि च तानि पयांसि स्तन्यपयांसि,

स्तनप्रस्नुतक्षीराणीत्यर्थः । निपीय पीत्वा, सोऽयं भगवान् कृष्णः, न विव्यधे व्यथां नायासीत् । गरळपाने कारणे सत्यपि व्यथारूपकार्याभाववर्णना द्विशेषालङ्कारः । ‘कार्याजनि र्विशेषोक्ति स्सति पुष्कलकारणे’ इतिलक्षणात् । उक्त मर्थं समर्थयति आवासेति- यस्य कृष्णस्य, विषधि स्समुद्रः गरळनिधिश्च ‘क्ष्वेडस्तु गरळो विषम्’ मित्यमरा द्विषशब्दस्य जले प्रयोगः । आवासभूमिः निवासदेशः भवति । तस्य विषधेरेव, सुता पुत्रिका, लक्ष्मी रित्यर्थः । यस्य कृष्णस्य, इष्टतमा प्रियतमा प्रेयसीत्यर्थः, भवति; इति वित्तं प्रसिद्धम् । ‘विषघुणन्यायेन जीवा म्यह’ मिति वचनात् नित्यविषसम्बन्धस्य अन्यविषा द्व्यथाभावो युक्त एवेति भावः । वाक्यार्थ-हेतुकं काव्यलिङ्ग मलङ्कारः, स च श्लेषोज्जीवितः ॥ १४२

श्लो ॥ अल मल मिति वादिनी ततोऽसौ
झडिति विभिन्नसमग्रसन्धिबन्धा
अधिधरणि पपात नष्टसंज्ञा
गिरि रिव दुस्सहरौद्रवज्रघातात् ॥ १४३

अल मिति—ततः श्रीकृष्णस्तन्यपानानन्तर, मसौ पूतना, अल मलं सम्भ्रमात् द्विरुक्तिः । स्तन्यपानेन कृत मित्यर्थः । इति वादिनी भाषिणी सती, झडिति तत्क्षणमेव, विभिन्नाः विशीर्णाः, समग्रा स्सर्वे, सन्धिबन्धाः अस्थिसन्धिबन्धनानि यस्या स्सा विभिन्नसमग्रसन्धिबन्धा सती, अतएव दुस्सहरौद्रवज्रघातात् दुर्मर्षभीषणाशनिक्षता द्धेतोः, गिरिः पर्वत इव, नष्टसंज्ञा निश्चेतना सती, अधिधरणि भुवि, ‘विभक्त्यर्थेऽव्ययीभावः । सुपो लुक् - अदन्तत्वाभावा न्नाम्’ । पपात अपतत् । उपमालङ्कारः । तेन पर्वततुल्य मस्या रूप मिति वस्तु व्यज्यते ॥ १४३

श्लो ॥ अपपुर मिदमीयं गात्र माधाय घोरं
कलयति शिशुरक्षां रक्षिणां चक्रवाळे
निजसदन मुपागा न्नन्दगोप स्सहासै
र्निशमितसुतवार्तो विस्मयं च व्यतानीत् ॥ १४४

अपपुर मिति— घोरं भयङ्करं, इदमीयं पूतनासम्बन्धि ‘वृद्धा च्छः’ गात्रं कळेबरं, अपपुरं ग्रामाद्बहि रित्यर्थः । ‘अप परि बहि रञ्चवः पञ्चम्ये’ त्यव्ययीभावः । आधाय कृत्वा, पातयित्वेत्यर्थः । रक्षिणां पालकानां, चक्रवाळे मण्डले, शिशुरक्षां कृष्णरक्षां, कलयति कुर्वति सति, आप्तै रिष्टैः, स्सह नन्दगोपः निजसदनं स्वगृहं, उपागात् आजगाम । ‘नन्दगोप’ इति पद मत्राप्यन्वेति । निशमितसुतवार्तः श्रुतपुत्रवृत्तान्त स्सन् , विस्मय माश्चर्यं च, व्यतानीत् विस्तार-यामास, प्रापेति यावत् । स्तनन्धयः राक्षसीं मारयामासेति वृत्तान्तं श्रुत्वा को वा न विस्मय-तीति भावः ॥ १४४

ग ॥ अथ कदाचि दौत्थानिकमहोत्सवसमुत्सुकसकलवल्लवविलासिनीकुलकल-कलकबळितासु हरिद्दरीषु पयःपिपासासमाकुलयशोदाकिशोरचरणतलसमीरितविशङ्कट-निकटशकटझर्झरीभाव मुत्पातशत माशङ्कमाना नन्दगोपपुरोगमा स्तत्कर्मणा प्यनभि-भूत मर्भक मवलोक्य कमपि प्रमोद मनुबभूवुः ॥ १४५

अथेति— अथ पूतनानाशनानन्तरं, कदाचि त्कस्मिंश्चि त्काले, बाल्स्य तृतीये मासीत्यर्थः। हरिद्दरीषु दिक्कुहरेषु, उत्थाने भव औत्थानिकः, अध्यात्मादित्वात् ठञ् ' स चासौ महा नुत्सवः औत्थानिकमहोत्सवः। 'उत्सूते हर्ष मित्येष उत्सवः परिकीर्तित' इत्युत्सवलक्षणम्। बालकृष्णस्य उत्थानसमये कृतः महोत्सव इत्यर्थः। तस्मिन् सम्य गुत्सुकाना मुत्कण्ठितानां, सकलानां सर्वासां, वल्लवविलासिनीनां गोपाङ्गनानां, कुलस्य बृन्दस्य, कलकलैः तादृशध्वनिभिः, कबळितासु व्याप्तासु सतीषु, पयःपिपासया क्षीरपानेच्छया, समाकुलस्य सम्भ्रान्तस्य, यशोदायाः किशोरस्य शिशोः, चरणतलेन पादाधःप्रदेशेन, समीरितस्य क्षिप्तस्य, विशङ्कटस्य विशालस्य, निकटशकटस्य समीपस्थस्य अनसः झर्झरीभावो विशीर्णता यस्मिं स्तत् तथोक्तं यस्मि न्नुत्पातशते शकटझर्झरीभावोऽन्त-र्भूय वर्तते त दित्यर्थः। शकटझर्झरीभावादिक मिति यावत्। उत्पातशत ममिता नुत्पाता नित्यर्थः। आशङ्कमानाः सम्भावयन्तः, उत्पातशतं प्रति आ समन्ता, च्छङ्कमाना इतिवा, नन्दगोपपुरोगमाः नन्दादयो गोपाः तत्कर्मणापि शकटझर्झरीभावक्रिययापि, अनभिभूत मतिरस्कृत, मर्भकं शिशु, मवलोक्य दृष्ट्वा, कम प्यनिर्वाच्यं, प्रमोद मानन्द, मनुबभूवुः अनुभवन्ति स्म। प्रापु रित्यर्थः ॥ १४५

ग ॥ एव मुत्पातशतमपि परिभवन्त मनन्तमहिमान मेन मर्भकं यशोदा कदाचि दुत्सङ्गसङ्गिन माधाय वर्तमाना गिरिशिखरभर मिव तत्कळेबरभरं निमिष-मपि न विषेहे ॥ १४६

एव मिति— एवंप्रकारेण उत्पातशतमपि अमितान्य प्यरिष्टानि, परिभवन्तं नाशयन्तं, अतएव अनन्तमहिमान ममितमहत्त्वशालिन, मेनं पूर्वोक्तं, अर्भकं शिशुं, कदाचित् उत्सङ्गसङ्गिनं सक्थिगत, माधाय कृत्वा, वर्तमाना स्थिता, यशोदा गिरिशिखरभरमिव पर्वतशृङ्गभारमिव, वर्तमान मित्युपमा। तत्कळेबरभरं श्रीकृष्णशरीरभारं, निमिष मपि क्षणकालमपि, 'कालाध्वनो रत्यन्तसंयोगे द्वितीया' न विषेहे वोढुं न शशाकेत्यर्थः। सन्निहिततृणावृत्तचक्रानिलभारहेतवे भगवान् स्वयं दुर्भरो बभूवेति भावः ॥ १४६

श्लो ॥ कुक्षिस्थाखिललोकोऽय । मबला नन्दसुन्दरी
विसया विषये प्यस्मिन् । व्यसयन्त तदा जनाः ॥ १४७

कुक्षिस्थेति– अयं कृष्णः, कुक्षिस्थाखिललोकः गर्भीकृतचतुर्दशभुवन इत्यर्थः, भवति । नन्द सुन्दरी यशोदा, अबला दुर्बला, स्त्रीति च विस्मयाविषयेपि आश्चर्यस्य अविषयेपि, अनवकाशोपीत्यर्थः । अस्मिन् गिरिशिखरव त्कृष्णकळेबरस्य दुर्भरत्वे विषये, तदा तदानीं, जनाः व्यस्मयन्त विस्मय मभज न्नित्यर्थः । अत्र विस्मयाविषयेपि व्यस्मयन्तेति विरोधस्य श्रीकृष्णतत्त्वाज्ञाना दिति परिहारः । तेन विरोधाभासालङ्कारः । एतेन तृणावृत्तमायाकृतो नायं शिशुकळेबरभारः किन्तु भगवदिच्छयै वेति स्पष्टम् ॥ १४७

श्लो ॥ अद्भुतं पर मास्थाय । जननी भारपीडिता
अवतार्य शिशुं भूमौ । कर्मसु व्यापृताऽभवत् ॥ १४८

अद्भुत मिति– भारपीडिता श्रीकृष्णकळेबरभारव्यथिता, जननी यशोदा, पर मत्यन्त, मद्भुत मास्थाय प्राप्य, शिशो र्गिरिशिखरवत् दुर्भरत्वस्य काप्यदृष्टश्रुतत्वा दद्भुत मिति भावः । शिशुं भूमौ भूतले, अवतार्य अवरोहयित्वेत्यर्थः । स्थापयित्वेति यावत् । कर्मसु गृहकृत्येषु, व्यापृता व्यग्रा, अभवत् बभूव । एवं विस्मिताया यशोदायाः कर्मव्यापृतिरपि भगवन्मायाकृतैवेति बोध्यम् ॥ १४८

श्लो ॥ तृणावृत्तः क्रव्या त्तदनुकृतचक्रानिलतनु
र्यथा तूलं नीत्वा शिशु मुपरि भारार्दितकरः
व्यवस्य न्नुत्स्रष्टुं पृथुककरनिष्पीडितगळो
गळत्प्राणः प्राया द्धरणि मिद मत्यद्भुत मभूत् ॥ १४९

तृणावृत्त इति– तदनु यशोदाया स्सुतत्यागानन्तरं, क्रव्या द्राक्षसः तृणावृत्तः– कृतचक्रानिलतनुः विधृतचक्रवातशरीरस्सन् । मण्डलाकारवायु र्भूत्वेत्यर्थः । तूलं यथा पिचुमिव, शिशुं बाल, मुपरि ऊर्ध्वं, नीत्वा भारार्दितकरः भारेण शिशुशरीरभरेण, अर्दितौ पीडितौ करौ यस्य स तथोक्तः । अतएव उत्स्रष्टुं शिशुं त्यक्तुं, व्यवस्यन् उद्युञ्जमानः, तदैव पृथुककरनिष्पीडितगळः पृथुकस्य शिशोः, कराभ्यां निष्पीडितः नितरां बाधितः, गळः कण्ठः यस्य स तथोक्तः । अतएव गळत्प्राणः गळन् भ्रश्यन्, प्राणो यस्य सः ऊर्ध्वगतप्राण इत्यर्थः । धरणिं भूमिं, प्राया दभजत । भुव्यपत दित्यर्थः । इदं तृणावृत्तहननं मत्यद्भुत मतिविस्मयावह, मभूत् जातम् । अत्र शिशुमारणे प्रवृत्तस्य तृणावृत्तस्य स्वतएव मरणात् विषमालङ्कारः । यशोदया अवतारितं गिरिशिखरवत् दुर्भरमपि शिशुं तूलव त्तृणावृत्त उपरि निनाये त्यनेन तृणावृत्त स्यात्यद्भुतबलं प्रतीयते । चक्रानिल स्तूलमिव तृणावृत्त शिशु मुपरि निनाये त्युपमालङ्कारः ॥ १४९

ग ॥ तदनु यदुकुलपुरोधा गर्गाभिधानो महामुनि र्वसुदेवनिदेशेन नन्दमन्दिर मधिगम्य यथाविधि समभ्यर्चित स्तनययो रनुरहस मेव नामकर्ममङ्गळं विधिव द्विधातु मारभत ॥ ततः ॥ १५०

तदन्विति– तदनु तृणावृत्तहननानन्तरं, यदुकुलपुरोधाः यदुवंशपुरोहितः, गर्गइ त्यभिधानं नाम, यस्य स गर्गाभिधानः, महामुनिः महर्षिः, वसुदेवस्य स्वदातुः, निदेशेन आज्ञया, नन्दव्रज मधिगम्य प्राप्य, विधि मनतिक्रम्य यथाविधि यथाशास्त्रं, समभ्यर्चितः सम्पूजितः, नन्देनेति शेषः । अनुरहस मेकान्ते एव, कंसभया दिति भावः । अन्ववतप्तादेहस इति समासान्तोऽच्प्रत्ययः । तनययोः रामकृष्णयोः, नामकर्ममङ्गळं नामकरणरूपं शुभं, विधिवत् शास्त्रयुक्तं, ' यथातथा क्षत्रियत्वा द्भस्तुत इति भावः । विधातुं कर्तुं, मारभत उपचक्राम । ततः विघ्नेश्वरादिपूजानन्तर मित्यर्थः ॥

श्लो ॥ रौहिणेयं बलो राम । स्सङ्कर्षण इति द्विजः
अवद द्वासुदेवोऽसौ । कृष्ण इत्यपि नन्दजम् ॥ १५१

रौहिणेय मिति– द्विजो गर्गाभिधो ब्राह्मणः, रौहिणेयं रोहिण्या अपत्यं, स्त्रीभ्यो ढक् । बल इति राम इति सङ्कर्षण इति च, अवदत् उवाच । तस्य नामत्रयं चकारेत्यर्थः । बलं भगवत्पर्यङ्कत्वेन भगवच्छरीरधारणोपयोगि शरीरपाटव मस्यास्तीति बलः । आर्श आदित्वा दच् । रमते भगवतीति रामः; भगवद्ध्यानानन्दपरवश इत्यर्थः । सङ्कर्ष त्येकीकरोति प्रपञ्चं भगवता प्रळये इति सङ्कर्षणः । प्रळये हि प्रपञ्च मुदरेकृत्य भगवान् शेषे शेते सङ्कर्षण स्यादिशेषस्य फूत्कारवातेन सर्वप्रपञ्चदहनं भवतीति च प्रसिद्धम् । इति शेषांशत्वाख्यापकं नामत्रयम् असौ द्विजः नन्दजं नन्दसुतं, वसुदेव इति कृष्ण इति च, अवद दिति पूर्वे णान्वयः । वसुदेवस्यायं वासुदेव अपत्यत्वाविवक्षया अत इञोऽभावः । ' प्रदीयतां दाशरथाय मैथिलीति वत ' तस्येद मित्यण् । नायं तव सुतः किन्तु वसुदेवसुत एवेति नामकरणव्याजेन नन्दं प्रति बोधयामासेति भावः । वस्तुतस्तु वसन्ति जग न्त्यस्मि न्निति वसति जगत्त्रय मिति वा वासुः, दीव्यति भूतपालनादिना क्रीडतीति देवः; वासु श्चासौ देवश्च वासुदेवः । नायं वसुदेवसुतः । नच त्वत्सुतः; किन्तु सर्वकारणभूतः परमात्मैवेति भावः । कृष्णः परमानन्दस्वरूप इत्यर्थः । ' कृषि र्भूवाचक श्शब्दः णश्च निर्वृतिवाचकः । तयो रैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ' इति निरुक्तत्वात् ॥ १५१

श्लो ॥ न पोतः पोतोऽसौ निरवधिकसंसारजलधे
र्न पाकः पाकोयं यदुकुलगळद्बेलतपसाम्

तथा प्येतौ पोतप्रकृति मवल म्ब्याथ जगतीं
निजै र्लीलाजालै रहह! विदधाते प्रमुदिताम् ॥ १५२

न पोतइति— असौ कृष्णः पोत शिशु र्न भवति किन्तु निरवधिकसंसारजलधेः दुस्तर संसारसमुद्रस्य पोतः तारक इति यावत्, भवति । अत्र न पोत इति निषिध्य पोत इति पुनर्वचना द्विरोधः । तस्य नौ रिति परिहारः । अतो विरोधाभासालङ्कारः । एव मुत्तरपादेपि बोध्यम् । किञ्च 'निरुक्ति र्योगतो नाम्ना मन्यार्थत्वप्रकल्पन' मिति पोतपाकशब्दयो रर्थान्तरनिर्वचनलक्षणो निरुक्त्य लङ्कारः । असौ रामः पाक शिशु र्न भवति किन्तु यदुकुलगळद्वेलतपसां यदुकुलस्य यदुवंशस्य सम्बन्धिनां गळन्ती वेळा मर्यादा येषां तेषां, गळद्वेलाना ममिताना मित्यर्थः । तपसां सुकृतानां, पाकः परिपाको, भवति । तथापि भगवत्त्वेन भगवदंशत्वेन च अप्राकृतं शिशुस्वभाव मवलम्ब्य धृत्वा, मायाबला दिति भावः । अथ ततः जगतीं भूमिं, निजैः स्वीयैः, लीलाजालैः विलाससमूहैः, प्रमुदितां सन्तुष्टां, विदधाते कुर्वाते । अहहेत्याश्चर्यं । भगवतो बाललीला इतीद मद्भुत मिति भावः । इति द्वितीय-विलासे प्रथमतो वर्णनीयानां बाललीलाना मय मुपोद्धातः । विलासान्ते जगदानन्दविधानवर्णनेन मङ्गळमपि कृत मिति बोध्यम् ॥ १५२

अथ 'याव त्कीर्ति र्मनुष्यस्य लोके तिष्ठति शाश्वती । ताव त्पुण्यकृतान् लोका ननन्ता न्पुरुषोऽश्नुते' इति शास्त्रार्थ मनुसन्दधानः प्रबन्धे निजनामाख्यानपूर्वकं परिच्छेदसमाप्तिं कथयति ॥

श्लो ॥ यस्मिन् शङ्करदारसौरभजरीजृम्भत्कटाक्षच्छटा-
पाताः कल्पलतावितानसुमनोगुम्भप्रियम्भावुकाः
तस्यासौ नवकाळिदासविदुष श्चम्पूप्रबन्धाऽमृते
पूर्वः काव्यविदां प्रकल्पितसमुल्लासो विलासोऽगमत् ॥ १५३

यस्मि न्निति— कल्पलतावितानसुमनोगुम्भप्रियम्भावुकाः कल्पलतावितानस्य कल्पवृक्षसमूहस्य' सम्बन्धी सुमनोगुम्भाः पुष्पमालाः ता इव प्रियंभावुकाः प्रिया इत्यर्थः 'कर्तरि भुवः खिष्णुच्खुकञा' विति च्वर्थे भवतेः खुकञ् । अप्रियाः प्रियाः भवन्तीति विग्रहः । शङ्करदारसौरभजरीजृम्भत्कटाक्ष च्छटापाताः — शङ्करदाराणां भवान्याः, सौरभं सौन्दर्यं, 'सुगन्धौ च मनोज्ञे च वाच्यव त्सुरभि स्स्मृत' इति विश्वः । तेन सुरभि र्मनोज्ञः, तस्येदं सौरभम् 'तस्येद मित्यण्' सौन्दर्यमिति फलितार्थकथनम् । तेन जरीजृम्भन्तः अतिशयेन विजृम्भमाणाः, अतिसुन्दरा इत्यर्थः । स्त्रीकटाक्षाणां स्वत स्सुन्दरत्वेपि पार्वतीसौन्दर्यसंक्रान्त्या अतिसौन्दर्य मिति भावः । कल्पलतावितानसुमनोगुम्भे सौरभस्य सुगन्धस्य जरीजृम्भण मस्ति । अत्र तु शङ्करदारसौरभस्येति बिम्बप्रतिबिम्बभावेन सामान्य-

धर्मः, ये कटाक्षाः तेषां भटानां समूहाना, मपाङ्गसङ्घाना मित्यर्थः । पाताः प्रवृत्तयः, यस्मिन् सन्तीति शेषः । मालाकारसादृश्यार्थं कटाक्षच्छटे त्युक्तम् । तेन च निरतिशया कविविषया भगवत्याः करुणा व्यज्यते । कल्पलतेति विशेषणेन पार्वत्यपाङ्गानां श्वेतत्वं व्यज्यते । अभीष्टदातृत्वञ्चेति तस्य नवकालिदासविदुषः नवकालिदास इति विद्वान् कविः, तस्य चम्पूप्रबन्धाऽमृते चम्पूप्रबन्धरूपे अमृते सुधायां, पूर्वः प्रथमः, काव्यविदां सहृदयानां, प्रकल्पितसमुल्लासः प्रकर्षेण कल्पित स्सम्यगुल्लासः आनन्दः येन स तथोक्तः । असौ विलासः ' विलास ' इति परिच्छेदस्य संज्ञा। अगमत् समाप्त इत्यर्थः ॥ १५३

इति श्रीहयवदनरदनरुचिसदृनवदनफेनमधुरतररससमास्वादनित्यतृप्तस्य,
फणितरमापरिणयादिप्रबन्धस्य पुलिघल्ल रामसूरिकरुणासमासादितानवद्यशब्दविद्यस्य,
बेलङ्कोण्डोपनामक मोहनरायतनूभवस्य रामस्य कृतिषु
चम्पूभागवतव्याख्यायां, मन्धरसमाख्यायां

**प्र थ मो वि ला सः ।**

श्रीहयग्रीवार्पण मस्तु ।



ॐ

श्रीहयवदनपरब्रह्मणे नमः

# श्रीचम्पूभागवतम्

## द्वितीयो विलासः



श्लो ॥ मत्सर्वस्व! मदीयजीवित! मम प्राणाऽम्ब! तातेति तं
प्रेम्णा येन मुहु श्चुचुम्ब जननी यद्वा हरि र्बालिशः
स्मेरास्यः किमपि ब्रुवन् निजजनन्यालोकनात् दुर्लल
ल्लीलाजाल ममूल्य मादित नम स्तस्मै च तस्मै च नः ॥ १

अथ– द्वितीयविलासप्रारम्भे नमस्कारात्मकं मङ्गळं ग्रन्थतो निबध्नाति- मत्सर्वस्वेति– हे मत्सर्वस्व! स्वशब्दोऽत्र धनवाची, मदीयसर्वधन!, मम सर्वं धनं त्वमेव, नतु त्वत्तोऽन्य द्धनं ममास्तीति भावः। एतेन प्रेमास्पदत्वं व्यक्तम्। हे मदीयजीवित! ममेदं मदीयं, वृद्धाच्छः तच्च त ज्जीवितं जीवनं, तस्य सम्बुद्धिः, मम त्वमेव जीवनं नान्य दिति भावः। एतेन धनादपि पर प्रेमास्पदत्वं व्यक्तम्। हे मम प्राण! यद्यपि 'प्राणाः पुंसि च भूम्न्ये' वेति कोशा द्बहुत्वं वक्तुं युक्तं, तथा प्यत्र एक एव प्राणः पञ्चधा भिन्न इति व्यवहार माश्रित्य एकत्व मुक्तम्। एतेन धनजीविताभ्यामपि परप्रेमास्पदत्वं व्यक्तम्। स्वप्राणापेक्षया धनजीवनयो र्निकृष्टत्वं लोकसिद्धमेव। यद्यपि जीवितं प्राणधारण मिति जीवितप्राणयो रेकत्वमेव प्रतिभाति, तथापि प्रकृते जीवितहेतौ जलादौ जीवितशब्दो लाक्षणिक इति ज्ञेयं। हे अम्ब! हे मातः! पुत्रेऽप्यम्बशब्दप्रयोगः रक्षकत्वाभिप्रायगर्भः प्रेमकृत इति बोध्यम्। एवं हेतात! इत्यत्रापि बोध्म्। हेपितः इत्येवं रीत्या ब्रुवाणेति शेषः। वदन्ती सतीत्यर्थः। तं भगवन्तं कृष्णं, जननी यशोदा, येन प्रेम्णा मुहु श्चुचुम्ब 'चुबि वक्त्रसंयोगे' वस्तुतस्तु 'त्वमेव माता च पिता त्वमे' वेत्युक्तवचनानुसारेण भगवत एवं विधत्व मुचित मेवेति बोध्म्। यद्वा 'सर्वं खल्विदं ब्रह्मे'ति श्रुत्या, 'यतो वा इमानि भूतानि जायन्ते' इति कारणश्रुत्या च भगवति सर्वश्रुत्यादिरूपण मम्बात्वादिरूपणं चोचितमेव। बालिशः बालः, हरिः कृष्णः, निजजनन्याः स्वमातुः, आलोकनं दर्शनं, तस्मात् निजजनन्यालोकनात् यशोदाकर्मकदर्शना द्धेतो, रित्यर्थः। स्मेरास्यः स्मितवक्त्रः, किमपि यत्किञ्चित्, ब्रुवत् वदन् सन्, 'स्मित पूर्वाभिभाषी च पूर्वभाषी च राघव' इत्युक्तत्वात्– स्मितपूर्वं भाषमाण इति भावः। उल्ललत् लच

विलासे उच्चै र्विलस दित्यर्थः । अमूल्यं अनर्घं; लोकोत्तर मित्यर्थः । यद्वा यच्च लीलाजालं विलास-समूहं, बालक्रीडा इति यावत् । आदित जग्राह, चकारेति यावत् । तस्मै यशोदाप्रेम्णे च, तस्मै कृष्णलीलाजालाय च, नः अस्माकं, सम्बन्धि नमः प्रणतिः, अस्तीति गम्यते । 'अस्ति भवन्ति परोऽप्रयुज्यमानोऽप्यस्ती' ति महाभाष्यवचनात् । त द्यशोदाप्रेमं तद्वा कृष्णलीलाजालं वर्णयितुं नास्माकं शक्ति रस्ति; किन्तु केवलं तदुभयं नमस्करोमीति कवे राशयः । एतेन मङ्गळश्लोकेन अत्र विलासे प्राधान्येन भगवतो बालकृष्णस्य लीला वर्ण्यन्ते इति व्यज्यते ॥ १

श्लो ॥ गुणै रनवलम्बितां नियमिचित्तडोलां गमा
गमत्यज मणीयसी मसदनुच्चभूताश्रिताम्
जगद्गुरु रपि श्रित स्स्वय मवाप य स्सम्मदं
चला धृतगुणा गुरु र्न किमु तस्य डोला मुदे ॥ २

गुणैरिति— गुणै श्शब्दादिभि र्विषयैः, सत्त्वादिभि र्वा, अन्यत्र रज्जुभि रिति गम्यते । अनवलम्बितां अनाश्रितां, गुणरहिता मित्यर्थः । अतएव गमागमत्यजं गमागमौ गमनागमने त्यजतीति तथोक्तां, गतागतरहिता मित्यर्थः । वैराग्येण निश्चला मिति चित्तपक्षे यावदर्थः । अणीयसीं अणुपरिमाणां, नैयायिकमते मनसोऽणुत्वाभ्युपगमात् । अन्यत्र अल्पां शयनार्थं मपर्याप्ता मित्यर्थः । असदनुच्चभूताश्रितां - असद्भिः अपरमार्थैः, अनुच्चभूतैः भूतसूक्ष्मै, राश्रितां व्याप्तां, सूक्ष्मभूतमयी मित्यर्थः । लिङ्गशरीरे मनसि सूक्ष्मरूपेण भूतानि सन्तीति प्रसिद्धिः । अन्यत्र असद्भिः दुष्टैः, अनुच्चभूतैः क्षुद्रजन्तुभिः, मत्कुणादिभिः आश्रितां व्याप्ता मित्यर्थः । एवंविधां नियमिचित्तडोलां नियमिनां योगिनां, चित्तं मनएव, डोला प्रेङ्खा, तां; स्वयं जगद्गुरुरपि जगदीश्वरोऽपि, अन्यत्र जगतोऽपि गुरु, रतिस्थूलोऽपि सन्, यः श्रितस्सन्, डोला माश्रित्येत्यर्थः । सम्मद मानन्द, मवाप । तस्य तादृशबहुदोषपूरितडोलाम प्राश्रित्य सुखितस्येत्यर्थः । धृतगुणा रज्जुभि र्बद्धा इत्यर्थः । अतएव चला चञ्चला, गुरुः महती, 'वोतो गुणवचना' दिति ङीष्विकल्पः । डोला मुदे सन्तोषाय, न किमु न भवति किं ? भव त्येवेत्यर्थः । अत्र जगद्गुरुरपि अणीयसीं डोलां श्रितइति आधारा धेययो रानुरूप्याभावा दधिकालङ्कारः । प्रतीतस्य विरोधस्य तु जगदीश्वर इत्यर्थवर्णनेन परिहारा द्विरोधाभासालङ्कारश्च । जीवत्वादिविशेषणैः नियमिचित्तडोलापेक्षया प्रसिद्धडोलायाः व्यतिरेक उक्त इति व्यतिरेकालङ्कारः । चित्तडोलेत्यत्र रूपकं । तच्च गुणादिशब्दगतश्लेषोत्थापित मिति विवेकः । किञ्च गुणानवलम्बनादयो गुणा अपि दोषत्वेन प्रतिपादिता इति लेशालङ्कारः । निर्गुणापि डोला यस्य मुदे तस्य सगुणा मुदे भवतीति किमुतेति कैमुत्ये नार्थसंसिद्धिवर्णना दर्थापत्ति रलङ्कारः । जगदीश्वरोऽपि दरिद्रव दत्यल्पां डोला माश्रित्य मुमोदेति भगवतः अतिलुब्धत्वं व्यज्यते । वस्तुतस्तु परमकारुणिकत्वं व्यज्यते इति बोध्यम् । अलङ्काराणान्तु यथायथं संसृष्टिसङ्करादिक मूह्य मिति संक्षेपः ॥ २

श्लो ॥ य त्स्या दजस्रामृतदं कराब्जं । विगृह्य यद्वा मधुसार माधात्
तत्सङ्गिनी मंगुलि मेष नित्यं । बालो हरि श्चुम्बतु नात्र चित्रम् ॥ ३

य त्स्यादिति– यत् कराब्जं अब्जमिव कर इत्युपमितसमासः, करकमल मित्यर्थः। अजस्रामृतदं अजस्रं यथातथा अमृतं मोक्षं सुधां च, ददातीति तथोक्तं स्यात् भवेत् – यद्वा यच्च करकमलं विगृह्य विरुध्य, मधुसारं मधुनामकराक्षसबलं, क्षौद्रस्थिरांशं च 'सारो बले स्थिरांशे' इति कोशात्। आधात् आ समन्ता त्पपौ अपजहारेत्यर्थः। आङ्पूर्वका द्धेट्पाने इति धातोर्लुङ्। विभाषा घ्राधे डिति सिचः पक्षे लुक्। तत्सङ्गिनीं तस्य करकमलस्य, सङ्गः सम्बन्धोऽस्य अस्तीति तत्सङ्गिनी तां, अत इनिठनौ ऋन्नेभ्यो ङीप् तदीया मित्यर्थः। अङ्गुलिं करशाखं, एष बालो, हरिः कृष्णः, नित्यं अविरतं, चुम्बतु। अत्र अङ्गुलिचुम्बनविषये चित्र मद्भुतं, न नास्ति। बाल स्ताव द्बालभावा दङ्गुलिं चुम्बति। तत्र बालभावस्य अज्ञानस्य सत्त्वा त्र त दद्भुतं। प्रकृते तु, भगवतो बालत्वेपि अलुप्तज्ञानत्वेन अङ्गुलिचुम्बन मद्भुत मिति प्राप्ते सुधामधुसम्बन्धसत्त्वा दङ्गुल्यां तत्पानं भगवतोऽपि युज्यते एवेति समाधापित मिति कूलङ्कषो भावः। अत्र बालभावसुलभे अङ्गुलिपाने चित्र मुद्भाव्य प्रतिषेधा दाक्षेपालङ्कारः, सच श्लेषोज्जीवितः। चित्र मुद्भावयितुं साभिप्रायेण हरि रिति पदं निर्दिष्ट मिति परिकरालङ्कारः। बालकर्तृकाङ्गुलिपानं नाद्भुतं किन्तु हरिकर्तृकाङ्गुलिपानमेव ह्यद्भुतं हरे स्सर्वज्ञत्वा दिति दिक् ॥ ३

श्लो ॥ पुराभवे किं करवालमात्रं । यो मे कृशानु र्न शशाक दग्धुम्
स मे किया नेष इतीव बाल । स्स्प्रष्टुं हरि र्दीपशिखां व्यवास्यत् ॥ ४

पुरेति– पुराभवे पूर्वजन्मनि, रामावतारे इत्यर्थः। मे मम, किङ्करवालमात्रं किङ्करस्य दासस्य हनुमत इत्यर्थः। वालमात्रं पुच्छमात्रं, बवयो रभेदात्। किङ्कर श्चासौ बालश्च किङ्करबालः, तन्मात्रमिति च गम्यते। दग्धुं यः कृशानुः अग्निः न शशाक न समर्थ इत्यर्थः। इतीव इतीति मत्वेव, बालः कृष्णः, दीपशिखां दीपज्वालां, स्प्रष्टुं गृहीतुं, व्यवास्यत् व्यवसितोऽभवत् उद्युक्तोऽभूदिति यावत्। अत्र बालभावसुलभस्य फलाबुद्धिप्रयुक्त दीपशिखास्पर्शनस्य किङ्करवालमात्रदाहाशक्तिकृशानुविषयतुच्छत्वबुद्धिप्रयुक्तत्त्वोत्प्रेक्षणा द्धेतूत्प्रेक्षा ॥ ४

श्लो ॥ मनोगतं स्वप्रपिबिम्ब माप्तुं । चक्रे हरि र्य च्छिथिलं मनः प्राक्
स्मृत्वैव त द्दर्पणगं स्व माप्तुं । बालो नखै स्त च्छिथिलं व्यथित्सत् ॥ ५

मनोगत मिति– हरि र्भगवान्, प्राक् बालभावापत्तेः पूर्वावस्थायां, मनोगत मन्तःकरणगतं, स्वप्रतिबिम्बं स्वस्य परमात्मनः प्रतिबिम्बभूतं जीव मित्यर्थः। अन्तःकरणगतपरमात्मप्रतिबिम्बत्वा जीवस्येति भावः! आप्तुं प्राप्तं, स्वभिन्नं कर्तुं मित्यर्थः। मनः शिथिलं चक्रे; ज्ञानसम्पादनद्वारा नाशयामासेत्यर्थः। अन्तःकरणलये सति जीवस्य ब्रह्मभावव्यपदेशा दिति भावः। इति यत्

त दधुना स्मृत्वैव इत्युत्प्रेक्षा । बालः कृष्णः, दर्पणगं मुकुरस्थं, स्वं स्वप्रतिबिम्ब मित्यर्थः । आप्तुं तद्दर्पणगं नखैः शिथिलं भिन्नं, व्यधित्सत् विधातु मैच्छत् । दर्पणे भग्नेसति भग्नपेटिकान्तस्स्थमिव भग्नदर्पणान्तस्स्थः प्रतिबिम्बः, सुग्रहणो भवतीति बालस्याशय इति भावः ॥ ५

श्लो ॥ पुरातन स्याभिनवस्य वा स्या । द्भक्तस्य निर्वाण मितो मुकुन्दात्
महोत्सवे कापि नवीन भक्ता । द्बभूव निर्वाण ममुष्य चित्रम् ॥ ६

पुरातनस्येति– पुरातनस्य प्राचीनस्य, अभिनवस्य नूतनस्य च, भक्तस्य आश्रितस्य, इतः एतस्मा न्मुकुन्दा त्सकाशात्, निर्वाणं मोक्षः, स्यात् भवेत् । खट्वांगवत् तात्कालिकभक्त्या भरतादिव द्दहुकालिकभक्त्या च सन्तुष्टो भगवा नाश्रितेभ्यो मुक्तिं ददातीति भावः । मुकुं मोक्षं ददातीति मुकुन्द इति साभिप्राय मिदं पदम् । कापि महोत्सवे अन्नप्राशनमहोत्सवे इत्यर्थः । अमुष्य बालकृष्णस्य, नवीनभक्तात् नूतनान्नादिभि, स्सा स्त्री, भक्त मन्धोऽन्नमि कोशात् नूतनाश्रिता दिति च गम्यते । निर्वाणं सुखं मोक्षं च बभूव अभूत् । चित्र मद्भुतं भक्तनिर्वाणदस्य भक्ता न्निर्वाणप्राप्ति राश्चर्य मित्यर्थः । विरोधाभासालङ्कारः ॥ ६

श्लो ॥ चित्ते निरुद्धस्य चिरं मुनीनां । बद्धस्यचापि स्मृतितन्तुजालैः
निरर्गळो निष्क्रमणोत्सवेन । युक्तो मुकुन्दस्य शिशोः प्रमोदः ॥ ७

चित्तेइति– मुनीनां योगिनां, चित्ते मनसि, चिरं निरुद्धस्य स्थापितस्येत्यर्थः । कारागृहव दिति भावः । अपिच किञ्च, स्मृतितन्तुजालैः स्मृतिरूपतन्तुसमूहैः, बद्धस्य सन्धानितस्य, निगळै-रिवेति भावः । शिशो र्बालस्य, मुकुन्दस्य कृष्णस्य, निष्क्रमणोत्सवेन निष्क्रमणं निष्क्रान्तिः सञ्चार इत्यर्थः– तदेवोत्सवः तेन हेतुना, जात इति शेषः । निरर्गळः उद्वेलः, प्रमोद स्सन्तोषः, युक्तः योग्यएव । यथा कारागृहस्थापितस्य निगळै र्बद्धस्य च चोरस्य शिक्षावध्यनन्तरं कारागृहा न्निष्क्रमणे लब्धे सति परमानन्दो जायते तद्व दस्यापीति युक्तमे वेद मिति भावः । अत्र स्वभावोक्ति रलङ्कारः । स च स्मृतितन्तुरूपकोज्जीवितः । उपमालङ्कारस्तु ध्वन्यते ॥ ७

श्लो ॥ माता पिता त्वं भवसीति कस्याः । प्रेम्णानुयुक्त स्स यशोदयाऽर्भकः
तवेति य त्प्राह न त न्मृषाऽभू । त्समीकृतं प्राकृतपोतवाचा ॥ ८

मातेति– हे कृष्णेति शेषः । त्वं कस्याः माता भवसि, कस्याः पिता भवसि ? इत्येवं प्रकारेण, प्रेम्णा हेतुना, यशोदया कर्त्र्या, अर्भक शिशुः, कृष्णः, अनुयुक्तः पृष्टस्सन्, 'प्रश्नोऽनुयोगः पृच्छा ' चेत्यमरः । तव ते, इति तवैव माता पिता च भवामीत्यर्थः; य द्वचः प्राह उवाच, तद्वचः मृषा असत्यं, नाभूत् । ननु यशोदायाः पुत्रस्य कथं यशोदायाः पितृत्व मसत्यं न भवे दत आह समीकृत मिति–त दिति सम्बध्यते । तद्वचः प्राकृतपोतवाचा प्राकृतस्य प्रकृतिसंसृष्टस्य, पोतस्य बालस्य, वाचा वाक्येन, समीकृतं असमं समङ्कृत मित्यर्थः । प्रकृति र्माया,

तस्या अयं प्राकृतः, मायाप्रतिबिम्बितं चैतन्य मित्यर्थः । एवं च पोतस्य ईश्वरत्वात् ईश्वरस्य जगज्जनकत्वा च यशोदायाः पितृत्व मस्य ईश्वरपोतस्य सत्यमेवेति भावः । यद्वा प्राकृतपोतवाचा समीकृतं तद्वचः मृषा नाभू दित्येक एवान्वयः । प्राकृतस्य प्रकृतिपरतन्त्रस्य अज्ञस्येति यावत् । पोतस्य शिशो, र्वाचा समीकृतं समाधापित मित्यर्थः । स्वमातरं प्रति तवै वाहं मातेति शिशो रुक्ति रज्ञत्वा त्सङ्गच्छते इत्येवं समाधापित मिति भावः । एव मज्ञत्वहेतुना समाधापितस्यापि वाक्यस्य असत्यत्वाभावस्तु नायं प्राकृतपोतः किन्त्वप्राकृत एवेति जगज्जनकत्वा दप्राकृतस्य ईश्वरस्य इदं वचनं सत्यमे वे त्युन्नेयः । यशोदाया अयं प्रश्नस्तु प्रेमकृतः न तु मौग्ध्यकृत इति प्रथमश्लोके एव प्रतिपादितम् ॥ ८

**श्लो ॥ स्तम्भं समालम्ब्य गृहान्तरस्थ । मादा वुदस्था त्स हरिः किशोरः**
**प्रह्लादवृद्धिः प्रळयोऽपि किन्तु । पितु र्न तस्यास्तु विलोकनेन ॥ ९**

स्तम्भ मिति– सः पूर्वोक्तः, किशोर शिशुः, हरिः कृष्णः, आदौ प्रथमतः, गृहान्तरस्थं गृहमध्यगतं, स्तम्भं गृहाधारदारुविशेषं, समालम्ब्य सम्य गवष्टभ्य, उदस्थात् उत्थितोऽभवत् । उत्पूर्वकात् ष्ठागतिनिवृत्ताविति धातो र्लुङि गातिस्थेति सिचो लुक् । उदोनूर्ध्वकर्मणी त्यूर्ध्वकर्मणि परस्मैपदमेव । तस्य बालकृष्णस्य, विलोकनेन दर्शनेन, पितुः नन्दस्य, प्रह्लादवृद्धिः सन्तोषातिशयः, प्रळयोऽपि प्रलयाख्य स्सात्त्विकभावश्च नास्तु किम् ? स्यादे वेत्यर्थः । पुत्रस्य स्तम्भाद्यवलम्बनेन उत्थानशक्त्युदये सति तदुत्थानं वीक्ष्य पिता नन्दस्ये वेति भावः । व्यङ्ग्यार्थस्तु सः किशोरः गौणवृत्त्या नवीन इत्यर्थः । हरिः सिंहः, नायं प्राचीनः । सर्वजनविदित स्सिंहः, किन्तु नवीनः असाधारण इति किशोरो हरि रित्यनेन नरसिंह इति फलितम् । आदौ पूर्वकाले, गृहान्तरस्थम्– अन्तः तिष्ठतीति अन्तरस्थम्, गृहस्यान्तरस्थं गृहान्तरस्थं, अर्थात् सभाद्वारगतं स्तम्भं समालम्ब्य उत्पत्तिक्षेत्रत्वेन स्वीकृत्य नृसिंहाकारेण व्याप्य स्थित्वेति वा, उदस्थात् उत्थायाजगाम अर्थात् स्तम्भा दित्येव । उत्थानपूर्वकस्य गमनस्य ऊर्ध्वकर्मत्वा दुदोनूर्ध्वेति न तङ् । स्तम्भं समालम्ब्य निर्भिद्य उदस्थात् उज्जगामेत्यर्थकथने तु तङ् दुर्वार एव स्या दिति बोध्यम् । तस्य स्तम्भा दुत्थितस्य नरसिंहस्य विलोकनेन हेतुना प्रह्लादवृद्धिः प्रह्लादस्य भक्तस्य, वृद्धि रभ्युदयः, नास्तु किं । एवं पितु र्हिरण्यकशिपो, प्रळयो नाशश्च नास्तु कि मिति प्रत्येकान्वयः ॥ ९

**श्लो ॥ पदेपदे सस्खलनं स बाल । श्चचाल य त्त ज्जयतु श्रियै नः**
**सती गति स्संस्मरणेन यस्य । मुग्धै रवाप्येति न चित्र मल्पम् ॥ १०**

पदेपदे इति– सः बालः, पदेपदे प्रतिपदं, नित्यवीप्सयो रिति द्विर्भावः । सस्खलनं सभ्रंशं, यथातथा चचाल अचल दिति यत्, तत् नः अस्माकं, श्रियै ऐश्वर्यार्थं, जयतु सर्वोत्कर्षेण वर्ततात् । यस्य स्खलितगमनस्य संस्मरणेन सम्यक् मन स्यनुध्यानेनेत्यर्थः । हेतुना मुग्धै र्मूढैः, सती श्रेष्ठा अस्खलितेत्यर्थः । गति र्गमन, मवाप्या प्राप्तुं योग्येति विरोधः सती, निस्संशया गतिः

ज्ञानं परमात्मविषयक मित्यर्थः अवाप्य भवतीति परिहारः। भगवत स्साकारध्यानेन मनसि परिशुद्धे सति परमात्मसाक्षात्कारो भवतीति भावः। इतीदं अल्पं चित्रं न भवति किन्तु अत्यधिक मेवेत्यर्थः। लोके हि गजादिगतिविशेषदर्शनाहितसंस्कारे मनसि स्थिते सति अभ्यासपाटवेन विदग्धै स्तत्सजातीया गति रवाप्यते इतीदं सहजम्। अत्र तु श्रीकृष्णस्खलितगतिस्मरणेनैवे त्येको विरोधः। मुग्धै रवाप्यते इत्यन्यो विरोधः। तद्विजातीया सती गति रवाप्यते इति तृतीयः। एवं बहु विरोधास्पदत्वा दधिक मिद मद्भुत मिति भावः। विरोधाभासालङ्कारः॥ १०

श्लो ॥ स मन्दमन्दं विचचार चारु। तदा यदा नन्दपदं त दस्तु
प्राप्तै र्विपद्भाव मपि प्रकाम। मुच्चैर्गति र्यत्कलनेन गम्या॥ ११

स इति– सः बालकृष्णः, तदा तदानीम्, मन्दं मन्दं प्रकारे गुणवचनस्येति द्विर्भावः। कर्मधारयवद्भावा त्सुब्लुक्। अतिमन्दं यथा तथा, चारु रम्यं, यथा तथा च, विचचार सञ्चचारेति यत्, तत् मन्दसञ्चरणम्, आनन्दपदं सुखस्थानम्, 'पदं व्यवसित त्राण स्थान लक्ष्मांघ्रि वस्तु' ष्विति कोशात्। अस्तु भवतु। स्मर्तॄणां तत्सुखप्रद मिति भावः। तदेव विवृणोति। प्राप्तैरिति- प्रकाम मत्यन्तं, विपद्भावं विगतौ पदौ यस्य सः विपत् पङ्गु रित्यर्थः। तस्य भावः विपद्भावः। तं 'पदंघ्रिश्चरणोऽस्त्रिया' मित्यमरः इति विरोधः। विपदा मापदां भाव स्तत्ता त मिति परिहारः। प्राप्तैरपि यत्कलनेन यस्य श्रीकृष्णसम्बन्धिमन्दमन्दसञ्चारस्य कलनेन स्मरणेन हेतुना, उच्चैः उत्कृष्टा गतिः गमन मिति विरोधः। गतिः स्थानं वैकुण्ठाख्य मिति परिहारः। गम्या गन्तुं योग्या प्राप्येत्यर्थः भवति। पङ्गुभि रुच्चैर्गमनं प्राप्यते इति प्रतीतस्य विरोधस्य विपत्परम्परापराभूतै वैकुण्ठपदं गम्यते इति परिहारात् विरोधाभासः। अनेन च अघटितघटनापटीयस्तमत्वं भगवतो व्यज्यते॥ ११

श्लो ॥ सती गति स्तत्पदमात्रलभ्या। यत स्ततोऽसौ न कथन्नु हंसः
अतिस्फुटे कृष्णपदे प्यमुष्मि। न्न धार्तराष्ट्रत्व मिदं तु चित्रम्॥ १२

सतीति– यतः यस्माद्धेतोः, सती उत्कृष्टा गति, र्मोक्ष इत्यर्थः। तत्पदमात्रलभ्या तस्य कृष्णस्य, पदमात्रेण चरणमात्रेण, चरणध्यानेनै वेत्यर्थः। लभ्या लब्धुं शक्या, भक्तैरिति शेषः। ततः तस्मात्, असौ कृष्णः, हंसः परमात्मा, न कथन्नु कथंवा न भवेत्? भवे देवेत्यर्थः। असौ कृष्णः परमात्मा भवितु मर्हति ध्यातृमुक्तिपदचरणकमलत्वात्। यथा श्रीमन्नारायणः इति प्रयोगोऽत्रानुसन्धेयः इति वास्तवार्थः। अत्र यतो यस्मात्, सती श्रेष्ठा गति र्गमनं, तत्पदमात्रलभ्या तदीयचरणेनैव लभ्या, ततो हेतोः, असौ हंसः पक्षिविशेषः कथन्नु न भवेत्? हंसो न चेत् ईदृशगतिसौन्दर्य मस्य न घटे तेत्यर्थः इति व्यङ्ग्यार्थः। अमुमे वाश्रित्य विरोध माह अतिस्फुटे इति– कृष्णपदे नीलचरणे, अतिस्फुटे सत्यपि स्फुटं यथा तथा दृश्यमाने सत्यपीत्यर्थः। अमुष्मिन् हंसे, धार्तराष्ट्रत्वं तन्नामकहंसविशेषत्वं न नास्तीतीदन्तु चित्र मद्भुतम् 'राजहंसास्तु ते चञ्चुचरणै

र्लोहितै स्सिताः । मलिनै र्मल्लिकाक्षा स्ते धार्तराष्ट्रा स्सितेतैर' रित्यमरः। कृष्णपदे कृष्णत्वे पाण्डव-पक्षपातित्वे इति यावत् अतिस्फुटे सति धार्तराष्ट्रत्वं धृतराष्ट्रसम्बन्धित्वं, तत्पक्षपातित्व मित्यर्थः। अमुष्मिन् श्रीकृष्णे, न नास्तीति वास्तवार्थेन तत्परिहार इति विरोधाभासालङ्कारः । अत्राप्रस्तुतार्थ-प्रतीति र्ध्वनि रिति न भ्रमितव्यम् । कृष्णपदेपी त्यपि शब्दबलात् इदं तु चित्रमिति वाक्यार्थबलाच्च वाच्यार्थे कश्चन विरोधोऽवश्यं प्रतीयेत । व्यङ्ग्यार्थानाश्रयणे तु न त त्प्रतीति रिति व्यङ्ग्यार्थोऽत्र वाच्यसिध्यङ्ग मेवेति कृत्वा नासौ ध्वनिः । किन्तु विरोधाभास एवेति सुष्ठु । पूर्वार्धे तु ध्वनिरेव स च उत्तरवाक्येन कविना स्वयमेव प्रकटित इति गुणीभूतव्यङ्ग्यम त दिति बोध्यम्॥ १२

श्लो ॥ तत्पादपङ्केरुहमुद्रितासु । भूमीषु लक्ष्म्या न कथञ्चिदासः
नवीन मेतत् स्थलपद्मगापि । सरोजलक्ष्मी मतियाति सेति ॥ १३

तत्पादेति– तस्य कृष्णस्य, पादरूपैः पङ्केरुहैः कमलै, र्मुद्रिता श्चिह्निताः, तासु तथोक्तासु, भूमीषु धरायां, अवान्तरविशेष माश्रित्य बहुवचननिर्देशः स्थलविशेषे ष्वित्यर्थः। लक्ष्म्या श्शोभायाः, लक्ष्मीदेव्याश्च, निवासः स्थितिः, कथं न नास्ति ? अस्त्येवेत्यर्थः । लक्ष्म्याः कमलालयत्वात् भगव-त्पादकमलचिह्नरूपेष्वपि कमलेषु लक्ष्म्या निवास उचित एवेति भावः। कमलचिह्नयुक्तेषु स्थलेषु कमलकृतशोभानिवासश्च युक्तएवेति च भावः। अथ अयुक्तमाह । स्थलपद्मगा भूगतचिह्नभूतकमलस्था, सा लक्ष्मीः शोभा, देवी च सरोजलक्ष्मीं, कमलगतां शोभां, लक्ष्मीदेवी मिति च अतियाति अति-शेते, इत्येतत् नवीनं चित्र मित्यर्थः । सरोजापेक्षया स्थलकमलस्य निकृष्टत्वा दिद मद्भुत मिति भावः । अन्यत्र भगवत्पादकमलाङ्कगतायाः सरोजनिवासिन्याश्च लक्ष्म्या देव्या एकत्वे उचिते सति ता मतियातीति भेदप्रतिपादनं चित्र मिति भावः । अत्र ध्वनिरेव वाच्यार्थे प्रतीतस्य विरोधस्य तु स्थलगतान्यपि इमानि पद्मानि न साधारणानि; किन्तु विलक्षणानि। भगवत्पादसम्बन्धित्वादिति कृत्वा सरोजापेक्षया भगवत्पादकमलचिह्नस्य अतिशयो युज्यते एवेति परिहारः॥ १३

श्लो ॥ अक्काम्ब तातेति वचांसि तूर्णं । शिशुं प्रसू र्ग्राहयति स्म शौरिम्
कदाचि देनं न गिर स्स्पृशेयु । रिति श्रुति स्सा कथ मावभाषे? १४

अक्केति– अक्क अम्ब 'अम्बार्थनद्योर्ह्रस्व' इति ह्रस्वः। तात इत्येवं वचांसि प्रसू र्जननी, शिशुं शौरिं कृष्णं, ग्राहयतिस्म उपदिदेशेत्यर्थः । अक्केत्यम्बेति मा माह्वय; तातेति नन्द माह्वयेति वाक्यानि ग्राहयितुं प्रथमं पदमात्रं ग्राहयामासेति भावः। एनं कृष्णं, कदाचिदपि गिरः वाक्यानि-न स्पृशेयुः न भजेयुः । अयं मूको भवे दित्यर्थः । वाचा मविषय इति चेति प्रतीयते । इत्येवं, रीत्याह । प्रसिद्धा श्रुतिः 'यतो वाचो निवर्तन्ते' इति श्रुतिरिति भावः । कथ मावभाषे कथ मवदत् ? श्रुतेः प्रमाणत्वेन श्रुत्युक्त स्यान्यथाभावो न युज्यते । प्रकृते तु जनन्युपदिष्टानि अक्का-म्बेत्यादिवचांसि भगवता गृहीतान्येवेति कृत्वा श्रुत्युक्तस्य भगवन्निष्ठस्य वा गग्रहणस्य अन्यथाभूत-

त्वात् श्रुते र प्यप्रामाण्य मापादित मिति भावः । एवं प्रतीयमानस्य विरोधस्य कदाचि देनं न गिरस्स्पृशेयु रिति वाक्यस्य वाचा मविषय इत्यर्थवर्णना त्परिहारः । इति विरोधाभासालङ्कारः । अत्रालङ्कारे च कश्चन विरोधाभासालङ्कारो ध्वन्यते । तथाहि वागविषयस्य भगवतः कथंवा वाग्विषयत्व मिति विरोधस्य वस्तुतो वागविषयत्वं भगवतः क्रीडामनुजबालकत्वा द्वाग्विषयत्वं चेति परिहार इति ॥ १४

श्लो ॥ यस्मि न्नसङ्कीर्ण मशेषवर्ण । निर्माणचातुर्य मनन्यलभ्यम्
अशिक्षि कृष्णोऽपि समस्तवर्ण । परिग्रहे सोऽय मिदं नवीनम् ॥ १५

यस्मि न्निति– यस्मिन् भगवति कृष्णे, अनन्यलभ्यं अन्यै र्लब्धु मशक्यं, असङ्कीर्णं यथा पूर्वोत्तराक्षरयो स्संसर्गो यथा न भवति तथेत्यर्थः । अशेषवर्णनिर्माणचातुर्यं सकलकाद्यक्षरलेखन-पाण्डित्यं, अस्तीति गम्यते इति प्रतीयमानो विरोधार्थः । वास्तवार्थस्तु असङ्कीर्णं गुणकर्मविभागेन अशेषवर्णनिर्माणचातुर्यं समस्तब्राह्मणादिवर्णसृष्टिकौशल मस्तीति विरोधपरिहारः । भगवतः कृष्णस्य परमेश्वरत्वेन सकलजगज्जनकत्वा दिति भावः । सोऽयं कृष्णोऽपि समस्तवर्णपरिग्रहे अक्षराभ्यासे इत्यर्थः । अशिक्षि शिक्षितः; गुरुणेति शेषः । इदं नवीनचित्र मित्यर्थः । स्वयमे वाक्षरनिर्मातु रक्षराभ्यास इत्याश्चर्य मिति भावः । सर्वजगत्स्रष्टापि भगवान् क्रीडामनुजबालकीभूय अक्षराभ्यास-विषये शिक्षित इव नः प्रतीयते मायया, नतु वस्तुत इति वास्तवार्थः । अत्रापि विरोधाभासा-लङ्कारः । अत्र कृष्णोऽपि नीलोऽपि समस्तश्वेतादिवर्णपरिग्रहे विषये अशिक्षीति ध्वन्यते ॥ १५

श्लो ॥ प्रौढानपि ग्राहयितुं रुणद्धि । सदक्षरं गाढ मनश्नतो यः
स दम्भडिम्भः कथ मक्षराप्त्यै । पलायदक्षो गुरुणा निरोध्यः ॥ १६

प्रौढानपीति–यः गाढं चिर, मनश्नतः अभुञ्जानान् प्रौढानपि, सत् निर्दुष्टमक्षरं कादिवर्णं, ग्राहयितुं स्वीकारयितुं, रुणद्धि निर्बध्नाति । लोके वयसा प्रौढाः चिर मनश्नतो बालका नक्षरग्रहणाय निरुन्धन्ति । अत्र तु तद्वैपरीत्यमिति तात्पर्यम् । यः कृष्णः गाढ मनश्नतः अनशनरूपं तपः कुर्वाणान् प्रौढान् अधीतसाङ्गस्वाध्यायान्, सच्छलाघ्यं परमार्थ मिति वा अक्षरं ब्रह्म अक्षरं ब्रह्मवर्णयो रिति रुद्रः । ग्राहयितुं, प्रापयितुं, रुणद्धि विषयेभ्यो निवर्तयति चेत्यर्थः। 'तेषा महं समुद्धर्ता मृत्यु संसारसागरा' दिति गीतावचनात् इति वास्तवार्थः । सः पलायदक्षः पलायनसमर्थः, दम्भडिम्भः कपट-बालकः, अक्षराप्त्यै अक्षरस्वीकारार्थं, गुरुणा कथं निरोध्यः निर्बन्धनीयः ? प्रौढान् गुरूनपि अक्षराप्त्यर्थं निर्बध्नतः कृष्णस्य गुरुकृतो निर्बन्ध आश्चर्यावह इति भावः । अत्र पलायदक्षो डिम्भः गुरुणा स्थूलकायेन वृद्धेन वा, कथं निरोध्यः न कथमपीति ध्वनिः ॥ १६

श्लो ॥ अयं गजोऽयं वृषभो ममेति । स जन्तुभि र्दारुमयै रखेलत्
यत्क्रीडनं प्रौढपदे प्युदार । काष्ठाश्रितेनैव वृषेण चित्रम् ॥ १७

अय मिति– अय मेष गजः लाक्षादिनिर्मितो हस्ती, मम मदीयः, तथा अयं वृषभः अनड्वान्, मम इत्येवंरीत्या सः कृष्णः, दारुमयैः दारुविकारैः, जन्तुभिः गजादिभि, स्सम मखेलत् क्रीडतिस्म। बाल्ये अज्ञाना त्पुलिकाभिः क्रीडन मुचितमेवेति भावः। प्रौढपदेऽपि प्रोढत्वेऽपि, उदारकाष्टाश्रितेन स्थूलदारुमयेन, वयोगौरववशेन स्थूलदारुमयवृषभापेक्षेति भावः। अन्यत्र उदारकाष्ठा अत्युत्कर्षः, ता माश्रितेन अत्युत्कृष्टेनेत्यर्थः। वृषेण वृषभेण सह, अन्यत्र सुकृतेन सह, यत्क्रीडनं यस्य कृष्णस्य क्रीडनं, भवतीति शेषः। चित्रं बाल्ये अज्ञाना द्दारुमय-वृषभक्रीडनं युज्यते एव। प्रौढत्वे तत्क्रीडन मद्भुत मिति भावः। उक्ताद्भुतस्य अर्थान्तरवर्णनेन परिहार इति विरोधाभासालङ्कारः। अत्र वृषभेति जात्येकवचन मत्युत्कृष्टे वृषभै स्सह यत्क्रीडन मिति वृषभसप्तकमर्दनं गम्यते। तद्धि चित्रं तेषां वृषभाणां दुर्दान्तत्वा दिति ध्वनिरेव। अत्र अन्योऽप्यर्थः प्रतीयते। तथाहि बाल्या दारभ्य यस्य यत्र अभिरुचिः तत्र स प्रौडत्वे परिनिष्णातो भवतीति सर्वजनविदितं हीदम्। एवं स्थिते श्रीकृष्णः बाल्ये गोवृषभादिभिः क्रीडितवानिति बाल्यापगमेऽपि नन्दगोवृषभपरिपालनेन क्रीडितवानिति अस्मिन्नर्थे तु चित्र मिति मूलस्थस्य पदस्य काक्वा नचित्र मित्यर्थः कल्प्यः॥ १७

**श्लो ॥ य देष वत्सा न्परिगृह्य रेमे। त दस्य युक्तं खलु वत्सलत्वम्,**
**विचारयन्तः कथ मन्यधा तु। जनार्दने वत्सलतां प्रतीमः॥ १८**

यदिति– य द्यस्मा, देष कृष्णः, वत्सान् गोशिशून्, परिगृह्य पाल्यत्वेन स्वीकृत्य, रेमे क्रीडितवान्, त त्तस्मात्, अस्य कृष्णस्य, वत्सलत्वं वत्सान् लाति आदत्ते इति वत्सलः तस्य भाव स्तत्त्वं, वत्सपरिग्रहीतृत्व मिति यावत्। दयालुत्व मितिच गम्यते। युक्तंखलु अन्यधा पूर्वोक्ता द्भिन्नप्रकारेण, विचारयन्तः परिशीलयन्तस्तु, वय मित्याक्षिप्यते। जनार्दने जना नर्दयतीति जनार्दनः, 'नन्द्यादित्वा ल्ल्युः' तस्मिन्, वत्सलतां वात्सल्यं, कथं प्रतीमः जानीमः? न केनापि प्रकारेणेत्यर्थः। 'वत्सलो वत्सरो वत्सी रत्नगर्भो धनञ्जय' इति जनार्दने भगवति वत्सलशब्दप्रयोगः विष्णुसहस्रनामसुप्रसिद्धः। सतु नैव युज्यते जनाना मर्दनस्य नृशंसकर्मत्वेन जनार्दनत्ववत्सलत्वयो स्सामानाधिकरण्यस्य दुर्लभत्वा दितिकृत्वा तत्प्रयोगस्य का गति रिति विचारयन्त स्सुधियः वत्सान् लातीति वत्सल इति व्युत्पत्त्या जनार्दनस्य गोपत्वेन वत्सलशब्दप्रयोगो घटते इति निरणय न्निति भावः। अत्र निरुक्ति रलङ्कारः। 'निरुक्ति र्योगतो नाम्ना मन्यार्थत्वप्रकल्पन' मिति लक्षणात्। जनार्दने इत्यत्र तु परिकरालङ्कारः॥ १८

**श्लो ॥ कूरं सुधाकल्प मभुङ्क्त कृच्छ्रं। सोऽयं प्रतिग्रास मुपासनाभिः**
**निर्बध्नतामेव हि मौग्ध्य मासी। दजस्रतृप्तं त महो न तस्य॥ १९**

कूरमिति– सोऽयं कृष्णः सुधाकल्प ममृततुल्यम्, 'ईषदसमाप्ते कल्पप्' । कूर मन्नं, कूर माहार इत्यन्नपर्याये प्वजय्यः। प्रतिग्रासं प्रतिकबळं, उपासनाभिः प्रार्थनाभिः, कृच्छ्रं कष्टेन,

अभुङ्क्त बुभुजे । बाला: खलु क्रीडालोलुपतया आहार मनिच्छन्त: 'यवागूं पिब शिखा ते वर्धिष्यते' इत्यादिप्ररोचनावाक्यै: पित्रादिभि र्वञ्चिता: सन्त: कृच्छ्रे णान्न मश्नन्तीति स्वभावसिद्धस्यैव वर्णना त्स्वभावोक्ति रलङ्कार: । सुधाकल्प मित्यनेन आहारे नीरसत्व मनुसन्धाय नेद मनशनं किन्तु क्रीडादिभि स्तृप्तत्वादेवेति बाल्या देवेति वा ध्वन्यते । ननु किमेव मस्य मूर्खत्व मिति शङ्काया माह; निर्बध्नतामिति—अजस्रतृप्तं नित्यतृप्तं, चोरितदुग्धपानादिना सन्तृप्त मिति भाव: । अवाप्तसमस्तकाम मिति ध्वन्यते । तं बालकृष्णं, निर्बध्नतां निरुन्धतामेव, मौग्ध्यं मूढत्व मासीत् । तस्य निर्बध्यमानस्य कृष्णस्य, तु न मौग्ध्य मासी दित्यर्थ: । लोके इष्टसाधनताज्ञानशून्यस्य अभुञ्जानस्य बालस्य मौढ्यं निर्बध्नतान्तु प्रौढि: । अत्रतु तद्वैपरीत्य मिति अहो चित्र मिद मिति भाव: ॥ १९

श्लो ॥ य दर्थितो भोक्तु मसौ सवित्र्या । मुहु स्त दुद्वेलविलासमात्रम्
भक्तानुरक्त: कथ मन्यथा तु । स भक्तवैरस्यभरं बिभर्तु ॥ २०

य दिति— असौ कृष्ण:, सवित्र्या जनन्या, भोक्तुं भोजनार्थ मित्यर्थ: । मुहु: पुन:पुन:, अर्थित: प्रार्थित इति यत् तत् प्रार्थ्यमानत्वम्—उद्वेलविलासमात्रम् अतिशयलीलै वेत्यर्थ: । न त्वन्नवैरस्या दिति भाव: । अमुमेव भावार्थं विवृणोति उत्तरार्धेन । अन्यथा विलासमात्रत्वानङ्गीकारे तु भक्तानुरक्त: भक्ते अन्ने, अनुरक्त: अभिलाषी, भक्ते ष्वाश्रितेषु, अनुरक्त: कृपालु रिति च गम्यते । स: भक्तवैरस्यभरं भक्ते भक्तेषुच वैरस्यभरं विरसत्वातिशयं, कथं केन प्रकारेण, बिभर्तु भजतु; न कथमपीति भाव: । अत्र पूर्वार्धोक्तविलासमात्रत्वस्य उत्तरार्धेन समर्थना त्काव्यलिङ्गं । तच्च भक्तशब्दगतश्लेषोत्थापित मिति बोध्यम् । भक्ते ष्वनुरक्तस्य कृष्णस्य भक्तप्रार्थनाङ्गीकार उचित एवेति कृत्वा स्वाश्रितयशोदाकृतस्वभोजनप्रार्थनानङ्गीकारो यद्य प्यनुचित: तथापि मयीय मनुरक्ता वा नवा; तत्रापि धृढानुरक्ता वा नवेति तदाशयं परिशीलयितुं श्रीकृष्णस्यायं विलास एव, नतु भक्तेषु नैर्घृण्येन वैरस्या दिति ध्वनि: ॥ २०

श्लो ॥ उच्चै र्न्यधीयन्त पयांसि तस्य । पयोमुष: प्रेक्ष्य तु वामनत्वम्
अपाहर त्तानि तथापि केन । तस्यावगम्यं निखिलोन्नतत्वम् ? २१

उच्चैरिति— पयोमुष: क्षीरचोरस्य, तस्य कृष्णस्य, वामनत्वं ह्रस्वत्वं, प्रेक्ष्य दृष्ट्वा, ह्रस्वोऽय मिति विचार्येत्यर्थ: । पयांसि क्षीराणि, उच्चै: उपरि, न्यधीयन्त निहितानि, जनन्यादिभि रिति शेष: । तथापि तानि उच्चस्थानि पयांसि अपाहरत् हृतवान् स इति शेष: । तस्य कृष्णस्य, सम्बन्धि निखिलोन्नतत्वं सर्वाधिकत्वं, केन पुरुषेण, अवगम्यं ज्ञेयं ? न केनापीत्यर्थ: । ह्रस्वत्वेन दृश्यमानत्वा दयं ह्रस्व एवेति सर्वे जानन्ति पीठद्वारनिषण्णबालकगळारूढत्वेन सर्वेभ्योऽपि दीर्घएव भविष्यती त्येवं द्विधिरिसतं के जानीयु रिति भाव: । अत्रायं व्यङ्ग्यार्थ: । पयोमुष स्तस्ये त्यभेदेन निर्देश: । निदर्शनालङ्कारार्थ: । मेघतुल्यस्य विष्णो रित्यर्थ: । नच मेघे पयोमुट्छब्दप्रयोगो दुर्लभ इति

वाच्यम् । समुद्रगतानि पयांसि मेघोऽपहरतीति हेतुना पयोमुट्छब्दस्य तत्र यौगिकत्वा द्वामनत्वं वामनावतारत्वं प्रेक्ष्य ऊहित्वा, भगवान् वामनावतारे त्रिविक्रमो भूत्वा ब्रह्माण्ड माक्रमिष्यतीति योगदृष्ट्या मत्वेत्यर्थः । पयांसि ब्रह्माण्डावरकानि जलानि उच्चै रुपरि, न्यधीयन्त ब्रह्मणेति शेषः । ब्रह्माण्डं स्योर्ध्वकर्परा दुपरि जलानां वर्तमानत्वा दिद मुक्तम् । तथापि तानि पयांसि अपाहरत् । पादप्रसारणेन ब्रह्माण्डोर्ध्वकर्परं भित्वा जला न्यधःप्रसारयामासेति भावः । अतएवास्य गङ्गाजनकत्व-प्रसिद्धिः । तस्य त्रिविक्रमस्य, निखिलोन्नतत्वं केनावगम्यं ? न केनापि । ब्रह्मापि एतावत्पर्यन्तं विष्णु र्व्याप्तुं शक्नोतीति, य मवधिं निर्ममे तस्यापि भग्नत्वात् ब्रह्मसृष्टजन्तुषु को वा तन्महिमान मुन्नये दिति भावः ॥ २१

श्लो ॥ लब्धां स्वमातुरपि चौर्यवशा दवाप्ता
मास्वाद्य दुग्धलहरी मनवाप्ततृप्तिम्
संस्मृत्य बालवनमालिन माश्रितोऽसौ
दुग्धाम्बुधिं कुत इति व्यथिताऽद्य शङ्का ॥ २२

लब्धा मिति—स्वमातु र्यशोदाया, स्सकाशा ल्लब्धां प्राप्तां, तया दत्ता मित्यर्थः । चौर्यवशात् स्तेयकर्मबला, दवाप्तां प्राप्ताञ्च, दुग्धलहरीं क्षीरप्रवाह, मास्वाद्य पीत्वापि, अनवाप्ततृप्तिं अप्राप्ता-लम्बुद्धिं, बालवनमालिनं बालकृष्णम्, संस्मृत्य सम्यक् स्मृत्वा, एतत्स्मरणहेतुनेत्यर्थः । असौ कृष्णः, दुग्धाम्बुधिं क्षीरसमुद्रं, कुतः कस्माद्धेतो, राश्रितः भूते क्तः; पुरेति शेषः । इति शङ्का सन्देहः, अस्माक मिति शेषः । अद्य व्यथिता नष्टा, निरवधिकदुग्धपिपासासत्त्वा न्निरन्तरदुग्धाब्धिशायीति निश्चिनुम इति भावः । अत्र संस्मृत्य शङ्का व्यथितेति शङ्काया स्संस्मरणाधिकरणत्वासम्भवेऽपि वयं संस्मृत्य शङ्का मपाकुर्म इत्यर्थाश्रयणा त्कथंचि ल्ल्यप उपपत्ति र्बोध्या ॥ २२

श्लो ॥ भूत्वा स्वयं विधुरपि प्रकटं रिरंसु
र्येनासकृ द्विधु मसौ जननीं ययाचे
दुष्प्रापता मतिरपि स्वपदाश्रितेऽस्मिन्
तेनैव मौग्ध्य मिद मस्तु मुदां निदानम् ॥ २३

भूत्वेति— असौ कृष्णः, स्वयं विधु र्विष्णु, श्चन्द्रश्च, 'विधु र्विष्णौ चन्द्रमसी' त्यमरः । भूत्वा भव न्नपीत्यर्थः । प्रकटं यथातथा रिरंसुः रन्तु मिच्छुस्सन्, येन मौग्ध्येन हेतुना, जननीं यशोदां, विधुं चन्द्रं, असकृत् मुहुर्मुहुः, ययाचे याचितवान्, दुह्याच्पच्छेति याचति र्द्विकर्मकः । चन्द्र स्सुलभो, दुर्लभो वेत्यंश मविचार्य केवलमौग्ध्येन बाला श्चन्द्रं वाञ्छन्तीति प्रसिद्धिः । तथैवायं कृष्णोपीति भावः । अत्र स्वयं विधु स्सन्नपि विधुं ययाचे इति विरोधस्य विधु र्विष्णुरि

त्यर्थवर्णनेन परिहारा द्विरोधाभासः । तेन च इतरबालापेक्षया कृष्णस्य अतिमौग्ध्यं व्यज्यते । स्वभिन्नं विधुं ते वाञ्छन्ति अयन्तु स्वमेव विधु मजानं न्वाञ्छतीति भेदात् । तेन मौग्ध्येनैव स्वपदाश्रिते स्वस्य विष्णोः, पदं स्वपदं विष्णुपद माकाश इति यावत् । तदाश्रिते तत्र वर्तमान इत्यर्थः । स्वचरणसेवके इति च गम्यते । अस्मिन् विधौ दुष्प्रापतामतिरपि दुर्लभ इति बुद्धिरपि आसी दिति शेषः । अर्था त्तस्यैव स्वचरणसेवके दौर्लभ्यबुद्धि रिति विरोधः । व्योमगते दौर्लभ्य-बुद्धि रुचि तैवेति परिहारः । इदं श्रीकृष्णसम्बन्धि मौग्ध्य मज्ञानं, मुदां सन्तोषाणां, निदानं हेतु रस्तु । न स्सन्तोषप्रदं भवत्वित्यर्थः । अत्रायं व्यङ्ग्यार्थः । असौ परमात्मा, स्वयं विधु र्विष्णु, स्सर्वव्यापीत्यर्थः भूत्वापि ब्रह्मापीत्यर्थः, येन लीलावशेन हेतुना प्रकटं रिरंसुस्सन् जननीं प्रकृतिं, विधुं चन्द्र, मुपलक्षण मिदं सकलदेवादिचतुर्विधजन्तुजालस्य ययाचे प्रकृतिकार्यत्वा च्चन्द्रादीनां तदर्थं प्रकृतिप्रार्थन मिति भावः । 'मेने सन्त मिवात्मानं सुप्तशक्ति रसुप्तदृक् यदृच्छयै वोपगता मभ्यपद्यत लीलया' इति भागवतात् 'बहुस्यां प्रजायेयेति' श्रुतेश्च । परमात्मा ब्रह्मादिभिः क्रीडन-कैरिव लीलया चिक्रीडिषुः प्रकृतिं प्रपेदे इति परमार्थः । एवं लीलया प्रकृतिवशा त्प्रपञ्चाकारेण प्रतीयमानेपि स्वपदाश्रिते स्वस्वरूपे स्थितवति, अस्मिन् परमात्मनि, वस्तुत स्त स्याविकृतत्वा दिति भावः । तेनैव लीलावशेन दुष्प्रापतामतिर प्यस्माकं जाता भगवल्लीलया मोहिता वयं भगवदंशत्वेन भगव दभिन्ना वय मिति स्वस्वरूप मजानाना स्सन्तः भगवन्तं दुर्लभं मन्यामहे इत्यर्थः । इद मस्मदीयं मौग्ध्यं मुदां भगवत्संतोषाणां निदान मस्तु । स्वस्वरूपं विदित्वा यदि सर्वे वयं तूष्णी मासामहे, तर्हि भगवतः प्रपञ्चक्रीडैव लुप्येत । ततश्च तस्य महा नपरितोष स्स्यात् । चिक्रीडिषयैव भगवतः प्रकृतिस्वीकारात् । तस्मात् यदि वय मज्ञत्वेन देहादि ष्वात्मत्वभ्रान्त्या बहुभावशबलिताः प्रपञ्चान्तः-पतिताः पुत्राद्युत्पादनद्वारा प्रपञ्चं विस्तारयाम स्तर्हि भगवान् सन्तुष्यतीति भावः । अन्योऽप्यर्थः प्रतीयते । विधु र्विष्णुः स्वयं प्रकटं रिरंसु र्भूत्वा आत्मरतिं त्यक्त्वा स्त्रीरतिं वाञ्छन्नित्यर्थः । येन लीलावशेन जननीं लक्ष्मीं 'जननी जानकी साक्षा ज्जनको रघुनन्दन' इत्युक्तत्वा त्त्रिलोकजननी लक्ष्मी रित्यर्थः । विधुं चन्द्रं, विषयनिगरणेन मुखं ययाचे । याञ्चाप्रकारस्तु 'ईष द्दर्शय वक्त्रचन्द्र मधुना का तावता ते क्षति' रित्यादि र्मदीये रुक्मिणीपरिणये द्रष्टव्यः । ननु स्वोरुगतलक्ष्मीमुख-चन्द्रो बलादपि चुम्ब्यतां किं पुन र्याञ्चये त्यत आह दुष्प्रापेति । स्वपदाश्रितेपि निजोरुस्थानगतेपि, अस्मि न्मुखचन्द्रे, तेनैव दुष्प्रापतामति रासीदिति करावरोधा दतिमुदे बलात्कारेण, सुलभेपि लीलया दुर्लभत्व मेवेति भावः । बलात्कारे तु रतिवैरस्यं बोध्यम् । इदं मौग्ध्यं लक्ष्याः मुग्धात्वं नः मुदां निदान मस्तु । लक्ष्म्या अपि सुरतेच्छा वर्ततेएव; किन्तु मुग्धात्वा ल्लज्जया सा तिरोभूतेति भावः । इति प्रथमदिनसम्भोगः प्रतीयते ॥ २३

श्लो ॥ य दव्यक्ते वर्णे र्मधुरमधुरं व्याहर दसा
वहेतु हासं वा व्यतनुत दरस्मेरवदनम्

निरुद्धो य त्प्रेम्णा प्यसरदरमानर्तितकरो
न तस्मै को नाम स्पृहयतु विलासाय जगति ॥ २४

य दिति– असौ बालकृष्णः, अव्यक्तैः अस्पष्टैः, वर्णैः कादिभि रक्षरैः, मधुरमधुर मति-मधुरं, यथा तथा व्याहार दुवाचेति यत्, तथा दरस्मेरवदनं दरस्मेरः मन्दस्मितं, तद्युक्तं वदनं मुखं, यस्मिन् कर्मणि तद्यथा तथा। मन्दस्मितवदन स्स न्नित्यर्थः। अहेतुं निष्कारणं, हासं प्रकाशस्मितं, व्यतनुत विस्तारयामासेति यत् च, प्रेम्णा स्नेहेन, निरुद्धोऽपि निवारितोऽपि, मात्रेति शेषः; अर मीष, दानर्तितकरः प्रचालितहस्त स्सन्, असरत् चचालेति यत्, तस्मै विलासाय लीलाजालार्थं मित्यर्थः। जगति लोके को नाम पुरुषः न स्पृहयतु स्पृहां न करोतु। सर्वोऽपि स्पृहय त्येवेत्यर्थः। स्वभावोक्ति रलङ्कारः॥ २४

श्लो ॥ पयः पीत्वा चौर्या दमृतमनिगूढं वितरतः
नलं किञ्चि न्नीत्वा निखिलफलजालानि ददतः
मुषि त्वेष द्वित्तं स्वपदमपि तेभ्यो वितरतः
कथं भूय स्तस्याविनय मपि न क्षाम्यतु जनः ॥ २५

पय इति– चौर्यात् चौर्येणेत्यर्थः। पयः क्षीरं, पीत्वा अनिगूढं प्रकाशं यथा तथा, अमृतं सुधां, मोक्षं च, वितरतः ददतः, किञ्चित्फलं चूतादिकं, नीत्वा गृहीत्वा स्वीकृत्येत्यर्थः। निखिल-फलजालानि सर्वविधफलसमूहानि, सर्वपुरुषार्थानिति च, ददतः प्रयच्छतः, ईष द्वित्तं स्वल्पधनं, मुषित्वा चोरयित्वा, अपहृत्येति च 'यस्यानुग्रह मिच्छामि तस्य वित्तं हरा म्यह' मिति गीता-वचनात्। तेभ्यः 'संप्रदानत्वा चतुर्थी' स्वपदं स्वस्थानमपि वैकुण्ठमपीति च, वितरतः ददतः, तस्य कृष्णस्य, अविनयं दौर्जन्य, मपि जनः लोकः, कथं भूयः, कथं पुनः कथंवे त्यर्थः। न क्षाम्यतु न सहताम् अपितु सहेतै वेत्यर्थः। अविनया दपि स्वस्याधिकफललाभा दिति भावः। अत्र परि-वृत्तालङ्कारः। 'परिवृत्ति र्विनिमयो न्यूनाभ्यधिकयो र्मिथ' इति लक्षणात्। अत्र 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छ' तीति भगवद्वचनानुसारेण भक्त्या यद्यपि पयः फलादीनि भगवते कृष्णाय गोपा न समर्पयामासुः; तथापि चौर्येणापि गोपेभ्य स्सकाशा त्पयःफलादिकं गृहीत्वा भगवान् तेभ्यो मुक्तिं ददातीति भगवतः परमकारुणिकत्वं व्यज्यते। किञ्च यथा कश्चि च्चोरः स्वचौर्ये बहिर्गते सति स्वचोरितधना दधिकं तेभ्यो दत्वा स्वशिक्षा मपाकरोति, एवं कृष्णोऽपीति। अहो अस्य चोरस्य युक्ति रिति व्यज्यते॥ २५

श्लो ॥ पयः स्वादं स्वादं त्वरित मतिदूरं प्रसरतः
पुन र्मातु र्मुग्धै रनुनयनजल्पै रुपयतः
घृतक्षीरद्रप्साकलितवपुष स्तस्य हसत
स्सुखं लीलाजालैः कियदिव सवित्री न भजताम् ॥ २६

पय इति– पयः क्षीरं, स्वादं स्वादं आस्वाद्यास्वाद्येत्यर्थः । आभीक्ष्ण्ये णमुल् । त्वरितं शीघ्रमेव, अतिदूरं यथा तथा प्रसरतः प्रयातस्य, पुनः भूयः, मातु र्यशोदाया, स्सम्बन्धिभिः मुग्धैः रम्यैः, अनुनयनजल्पैः अनुनयवाक्यै र्हेतुभिः, उपयतः समीपं प्राप्तस्य, घृतक्षीरयोः द्रप्सैः बिन्दुभिः आकलितं व्याप्तं, वपु र्देहो, यस्य तस्य तथोक्तस्य, 'विप्रुट् स्त्री पृषतो बिन्दु स्तोको द्रप्स' इति वैजयन्ती । हसतः स्मयमानस्य, तस्य कृष्णस्य, सम्बन्धिभिः लीलाजालै र्विलाससमूहैः, कियदिव सुख मानन्दं, सविली जननी, न भजताम् न प्राप्नोतु ? परमानन्दं भजत्वेवेत्यर्थः ॥ २६

श्लो ॥ अकालुष्यं जज्ञे तदवयवधूळीव्यतिकरा
दभू त्पङ्कापाय स्त दुरु पदपङ्कच्छुरणतः
अभू न्निर्लिपत्वं तदविरळलालाप्लुततया
यशोदायाः कस्मा दिति खलु न विद्मः कथमपि ॥ २७

अकालुष्य मिति– यशोदायाः तदवयवधूळीव्यतिकरात् श्रीकृष्णशरीरपरागसम्पर्का द्धेतोः, अकालुष्यं मालिन्याभाव इति विरोधः मनःक्षोभराहित्य मिति परिहारः । जज्ञे जातम् । तथा यशोदायाः तदुरुपदपङ्कच्छुरणतः तस्य कृष्णस्य, उरु महान् यः पदपङ्कः चरणलग्नकर्दमः, तस्य छुरणतः लेपना द्धेतोः, पङ्कापायः कर्दमवियोगः, पापराहित्यञ्च, 'पङ्कोऽस्त्रीकर्दमैनसो' रिति वैजयन्ती- अभूत् । तथा यशोदायाः तदविरळलालाप्लुततया तस्य कृष्णस्य, अविरळया सान्द्रया, लालया वक्त्रस्रुतजलेनेत्यर्थः, 'सृणिका स्यंदिनी लाले' त्यमरः । आप्लुततया व्याप्तत्वेन हेतुना, निर्लेपत्वं द्रवीभूतवस्तुसंसर्गाभावः, पुण्यपापसम्बन्धराहित्यं च, 'तद्विद्वान् पुण्यपापे विधूयेति' श्रुतेः । अभूत् भगवत्सम्बन्धेन आदौ मनःक्षोभाभावः तत स्तद्धेतुभूतपापक्षयः ततः पुण्यस्यापि त्याग इति भावः । कस्मादिति कुत एवमिति कथमपि कृच्छ्रेणापि, न विद्मः खलु न जानीम एव; विरुद्धविषयत्वा दित्येकत्र अवाङ्मानसगोचरमहिमत्वा त्कृष्णस्ये त्यन्यत्र चेति भावः । यद्वा तदवयव-धूळीव्यतिकरा द्यशोदाया अकालुष्यं कस्मा ज्जज्ञे इत्येवं तत्तद्वाक्ये एव कस्मादिति पद मन्वेतव्यम् । इतीदं नु वयं कथमपि न विद्म इत्यन्वयः । विरुद्धकार्यस्योत्पत्तिरूपो विषमालङ्कारः । स च श्लेषोज्जीवितः ॥ २७

श्लो ॥ अनश्रुरुदितै रसा वसमये पयः प्रार्थनैः
कराम्बरविकर्षणै र्भुवि सरोष मुल्लुण्ठनैः
असांत्ववचनग्रहै रकृत विप्रियं य त्तदा
तपोनिचयसञ्चितं त दहितं जनन्याः कुतः ? २८

अनश्रुरुदितै रिति– असौ कृष्णः, अनश्रुरुदितैः अश्रुहीनरोदनैः, मिथ्याभूतैः रोदनै रिति भावः । वस्तुतो रोदने तु नेत्राभ्या मश्रुस्रवणस्य औचित्यात् । असमये अकाले, मध्याह्नादा

वित्यर्थः । पयःप्रार्थनैः क्षीराभ्यर्थनादिभिः, कराम्बरविकर्षणैः कराभ्या मम्बरस्य वस्त्रस्य, विशेषेण ग्रहणैः, भुवि भूमौ, सरोषं रोषयुक्तं यथा तथा, उल्लुण्ठनैः उद्भ्रमणैः, असान्त्ववचनग्रहैः सामवाक्याना मश्रवणैश्च, एतैः कृत्यैः जनन्याः यशोदायाः, य द्विप्रिय मप्रिय, मकृत चकार, तपोनिचयसञ्चितं सुकृतपरिपाकलब्धं, तत् बालकृष्णकर्तृकवस्त्राकर्षणादिकं विप्रियं. जनन्या मातुः, कुतः कथ, महित मप्रियं भवेत् ? न कथमपी त्यर्थः । केशाकर्षणनखदन्तव्रणादिकं प्रियकर्तृकं यथा कामिन्याः प्रियं तद्व त्पुत्रकर्तृक मम्बराकर्षणादिकं मातु रपि प्रियमेवेति भावः ॥ २८

श्लो ॥ मात! देहि पय, शिशो! कि मधुना वर्तेत दुग्धं? कदा
तर्ह्यायातु पितृप्रसूः, किं मधुना तातप्रसू र्जीवति ?
नो सायं, कि मिंद? तमःप्रकटता, सा गर्भगेहे स्फुटे
त्यालापोऽस्तु यशोदिकातनययो र्न श्श्रेयसे भूयसे ॥ २९

मातरिति– हे मातः जननि ! पयः क्षीरं, देहि दिश । हेशिशो कृष्ण ! अधुना अपराह्णे इत्यर्थः । दुग्धं पयः, वर्तेत किम् ? न वर्तते एवेत्यर्थः । कदा तर्हि तर्हि कदा दास्यसीति शिशोः प्रश्नः । पितृप्रसूः सायङ्कालः 'सायं सन्ध्यापितृप्रसू' रित्यमरः । पितु र्नन्दस्य प्रसू र्माता पितामहीति च । आयातु आगच्छतु इति मातु रुत्तरम् । तातप्रसूः पितामही, अधुना जीवति किम् ? प्राणिति किम् इति शिशोः प्रश्नः । नो न तथा । सायं सायङ्काल इति पितृप्रसू रिति पदस्यार्थ इति मातु रुत्तरम् । इद मेत त्किम् ? कोऽयं वर्तमानकाल इत्यर्थः । इति शिशुवाक्यं । तमःप्रकटता तमसः प्राकट्यं यत्रास्ति स सायङ्कालः; अयन्तु अपराह्णकाल एव; नतु साय मिति यशोदायाः उत्तरम् । सा तमःप्रकटता गर्भगेहे गृहान्तर्वर्ति गृहे, स्फुटा सूर्यकान्तिप्रसारणाभावेन गर्भगृहे तमस स्सत्त्वात्तत्र सायं वर्तते एवेति कृत्वा मम पयो देहीति शिशो राशयः । इति एवं रूपः यशोदिकातनययोः यशोदासुतयोः सम्बन्धी आलापः अन्योन्यभाषणम्, नः अस्माकं, भूयसे अमिताय, श्रेयसे मोक्षायेत्यर्थः । अस्तु भवतु । प्रश्नोत्तरिकालङ्कारः । 'अन्योन्यभाषणं य त्स्या त्सा प्रश्नोत्तरिका मतेति' लक्षणात् । २९

श्लो ॥ गायन्ती विविधाः कथा मुररिपोः पूर्वावताराश्रिता
डोलाचालन मादधे य दुदयन्मोदा यशोदा शिशोः
श्रुत्वैत त्सुखपारवश्य मभज यद्दास तन्द्री च्छला
दाकल्पं वितनोतु न स्त दुभयं कल्याणपारम्परीम् ॥ ३०

गायन्तीति– उदयन्मोदा उद्भूतसन्तोषा, यशोदा मुररिपो र्विष्णो, स्सम्बन्धिनीः पूर्वावताराश्रिताः प्राचीनमत्स्याद्यवताराश्रयाः, विविधाः बहुविधाः, कथाः गाथाः, गायन्ती कीर्तयन्ती सती, शिशोः कृष्णस्य, डोलाचलनं प्रेङ्खासञ्चारण, मादधे चकारेति यत्, एत द्यशोदागीतं

श्रुत्वा सः कृष्णः तन्द्रीछलात् निद्राव्याजात्, अपह्नवालङ्कारः। सुखपारवश्य मानन्दपरवशत्व, मभज प्रापेति यत्, तदुभयं तद्द्वयं नः आकल्पं प्रळयपर्यन्तं, कल्याणपारम्परीं शुभसमूहं वितनोतु विस्तारयतु। अत्र पूर्वार्धे स्वभावोक्तिः, उत्तरार्धे तु अपह्नवसंसृष्टा स्वभावोक्तिः॥ ३०

इति त्रिंशत् श्लोक्या कृष्णबाललीला वर्णयित्वा अथ कथां प्रस्तौतु मारभते—

**ग ॥ एव मतिदुर्ललितमपि कमनीयचरित्रं प्रतारितवल्लवयुवतीजन मनवरत-नवनीतचौर्यपर्युत्सुक मेन मर्भकं नियन्तु मपारयन्ती गोपसीमन्तिनीसंहति स्सम्भूय तदीय मविनयं मात्रे न्यवेदयत्॥ ३१**

एवमिति— एवं पूर्वोक्तरीत्या, अतिदुर्ललितं अतिदुर्विदग्धमपि, कमनीयचरित्रं मनोज्ञचरितं, प्रतारितवल्लवयुवतीजनं वञ्चितगोपीनिवहं, गोपिका वञ्चयित्वा तद्दुग्धनवनीतादिकं चौर्ये णापहृतवन्त मिति भावः। इममेव विवृणोति-अनवरतेति अनवरत मविरतं, यथा तथा नवनीतस्य दुग्धस्थिरांशस्य, चौर्ये स्तेयकर्मणि, पर्युत्सुकं समुल्लासं, तथोक्त मेन मर्भकं बालकृष्णं, नियन्तुं शिक्षितु, मपारयन्ती अशक्ता, प्रभुपुत्रत्वा दजेयत्वाच्चेति भावः। गोपसीमन्तिनीसंहतिः गोपिकानिवहः, सम्भूय मिळित्वा, तदीयं कृष्णसम्बन्धि, अविनयं दौर्जन्यं, मात्रे यशोदायै, न्यवेदयत् निवेदयामास। सर्वा अ प्येकग्रीवं कृष्णकृतनवनीतापहरणादिदुष्टचेष्टाः विज्ञापयामासु रिति भावः॥ ३१

**ग ॥ सापि समनन्तर मतिमात्रपुत्रवात्सल्या त्तत्समर्पित मशेषमपि तदुपा-लम्भभाषित मनाकर्णितकेन परिभूय तनयनियमन मनुरहस मभिनिनाय। ततः॥ ३२**

सापीति— सापि यशोदा च, समनन्तरं ततः, अतिमात्रपुत्रवात्सल्या दत्यन्तपुत्रस्नेहे नेत्यर्थः। तत्समर्पितं गोपीप्रतिपादितं, अशेषं सर्वमपि, तदुपालम्भभाषितं श्रीकृष्णविषयनिन्दावचनं, अनाकर्णितकेन अश्रवणनटनेन, परिभूय तिरस्कृत्य, अशृण्वानेव नटित्वेति भावः अनुरहस मेकान्ते, तनयनियमनं पुत्रशिक्षां, अभिनिनाय अभिनयति स। शिक्षा मभिनयन्तीव बभूव। नतु वस्तुत शिक्षां चकार वात्सल्या दिति भावः।

तत इति— शिक्षाभिनयानन्तर मित्यर्थः॥ ३२

**श्लो ॥ आलोकै श्चकितै स्सगद्गदरवै र्दीनै स्सुधासोदरै**
**रालापै रपराधमार्जनपरै र्बाष्पोद्भवै र्दाम्भिकैः**
**भीतिं नाटयत स्समीक्ष्य वदनं मायाविन श्श्रीपतेः**
**प्रेमार्द्रार्द्रमना मनागपि न सा वैरस्य मस्यातनोत्॥ ३३**

आलोकैरिति— चकितै र्भीतभीतै, रालोकै र्दृष्टिभिः, दीनैः सकरुणैः, अतएव सगद्गदरवैः गद्गदध्वनिसहितैः, तथापि सुधासोदरैः अमृतदायादैः, तद्व न्मधुरैरित्यर्थः। अपराधमार्जनपरैः स्वकृत-

स्यापराधस्य अप्रियस्य मार्जने निवारणे, परै र्व्यग्रैः, तदेकप्रयोजनै रित्यर्थः। आलापै र्भाषणैः, दाम्भिकैः, कृत्रिमै, र्बाष्पोद्भवैः अश्रूद्गमै श्च, भीतिं भयं, नाटयतः अभिनयतः, ननु वस्तुतो भीति रद्वितीयत्वा दिति भावः। मायाविनः मायाशालिनः, 'अस्मायेति विनिः'। अस्य श्रीपतेः कृष्णस्य, वदनं मुखं, समीक्ष्य प्रेमार्द्रार्द्रमनाः प्रेम्णा स्नेहेन, आर्द्रार्द्र मत्यन्तशीतलं, वीप्सायां द्विर्भावः। मन श्चित्तं, यस्या स्सा तथोक्ता सा यशोदा। मना गीषदपि, वैरस्यं विरसत्वं, अन्तःकरणस्य कोपेन अन्यथाभूतत्व मिति भावः। नातनोत् न विस्तारयामास न दधारेत्यर्थः॥ ३३

श्लो॥ पायं पायं रुचिमपि तनो र्लूनबालेन्दुलीलां
श्रावं श्रावं गिर मपि सुधासारसारा मुदाराम्
चुम्ब ञ्चुम्बं मुखमपि तनूजन्मन स्सानुरागं
श्लेषं श्लेषं तनु मपि न सा सौहिती माललम्बे॥ ३४

पायम्पाय मिति— लूनबालेन्दुलीलां लूनस्य छिन्नस्य, बालेन्दो स्तात्कालिकसम्पूर्णचन्द्रस्य, लीलेव लीला यस्या स्ता मिति निदर्शना वज्रादिकं हि टङ्कादिना छिन्नं स न्मध्ये देशे विशेषेण शोभते इति प्रसिद्धिः। एव मुदयपर्वतारूढ मरुणं चन्द्रबिम्बं यदि केनाप्युपायेन छिन्नं स्या त्तर्हि तदुदरं श्रीकृष्णदेहशोभ योपमाये तेति सम्भावितोपमा गम्यते। यद्यपि श्रीकृष्णतनु र्नीलैव तथापि तच्छोभा न नीलेति बोध्यम्। तनूजन्मन स्तनयस्य, तनोः शरीरस्य, रुचिं शोभां, पायं पायं पीत्वा पीत्वा पि, दृष्ट्वा दृष्ट्वा इत्यर्थः। सुधासारसारां सुधासारस्य अमृतसारस्येव सारः स्थिरांशः, माधुर्यमिति यावत्, यस्या स्तां; अत एव उदारां महतीं, तनूजन्मनः गिरं श्रावं श्रावं श्रुत्वा श्रुत्वा च; तथा तनूजन्मनः मुखमपि सानुरागं यथा तथा इदं पदं पूर्वत्रापि योज्यम् प्रेमसहितं यथा तथेत्यर्थः। चुम्बं चुम्बं चुम्बित्वा चुम्बित्वा, तथा तनूजन्मनः तनुमपि श्लेषं श्लेषं आलिङ्ग्यालिङ्ग्य, सा यशोदा, सौहितीं तृप्तिं, अलम्भाव मिति यावत्। नाललम्बे न प्राप॥ ३४

ग॥ अथ कदाचन व्रजनिवासिन स्सब्रह्मचारिण स्सकलबालका स्सम्भूय यदुनन्दन श्चखाद मृद मिति यशोदायै न्यवेदयन्॥ ३५

अथेति— अथ गोपिकाविज्ञापनानन्तरम्, कदाचन कस्मिंश्चि त्काले, व्रजनिवासिनः घोषस्थाः, सब्रह्मचारिण स्सवयस्याः, अर्था त्कृष्णस्येति बोध्यम्। सकलबालकाः सर्वे बालाः सम्भूय मिळित्वा, यदुनन्दनः कृष्णः, मृदं मृत्तिकां, चखाद जघास, इति यशोदायै न्यवेदयन् निवेदयामासुः॥ ३५

ग॥ सापि तदुदितनिशमना दनुनियमनकामनया सरय माहूय तनय मयि भो दुर्ललित! कि मिद मनार्य माचरसीति सरोष मुपालभत॥ ३६

सापीति— सापि यशोदाच, तदुदितनिशमनात् तेषां बालगोपालाना, मुदितस्य वाक्यस्य, निशमना च्छ्रवणात्, अनुनियमनकामनया तत्क्षणशिक्षेच्छया, सरयं ससम्भ्रमं, यथा तथा तनयं बाल, माहूय आकारयित्वा, अयीति प्रेम्णा सम्बुद्धिः। भो दुर्ललित भो दुर्विनीत! किं किमर्थ मिदं गोपालोक्त मनार्यं मृद्भक्षणरूप मकार्यं माचरसि करोषि। यद्वा इद मनार्य माचरसि कि मित्यन्वयः। इत्येवं सरोषं रोषेणसहितं, यथा तथा उपालभत तर्जयामास ॥ ३६

**ग ॥ सोऽपि सप्रश्रय 'मयि जननि! न विश्वसिहि विश्वमपि तदीय मालाप कलाप मवधारय जन मिम मुपगतासूय' मित्यभिधाय व्यादाय च वदन मदर्शयत् ॥ ३७**

सोऽपीति— सोऽपि कृष्णश्च, सप्रश्रयं सविनयं, यथा तथा अयि जननि हेमातः! विश्वं कृत्स्नं च, तदीयं गोपालसम्बन्धि, आलापकलापं भाषणसमुदायं, न विश्वसिहि न तत्र विश्वासं कुर्वित्यर्थः। तत्र हेतु माह। इमं जनं गोपालबालबृन्द, मुपगतासूयं मयि सञ्जातमत्सर, मवधारय जानीहि। मयि मात्सर्येणोक्तवन्तः; न तु पुन स्सत्य मिद मिति भावः। इत्येवं, अभिधाय उक्त्वा, तथापि सन्दिहानायाः यशोदाया विश्वासोत्पादनार्थं वदनं मुखं च, व्यादाय विस्तारयित्वा, अदर्शयत् दर्शयामास। मद्वदने मृ लग्ना वा नवा त्वमेव परिशीलयेति बालस्याशयः ॥ ३७

**ग ॥ यशोदा परिवदन मनालोकितचर मशेषमपि चराचर मवलोक्य विस्मयमानमानसा परमपुरुष एवाय मिति तत्क्षण मभिदधाना पुनरपि मोहगहन मगाहत ॥ ३८**

यशोदेति— यशोदा च परिवदनं वदने, अर्थात् कृष्णस्य अनालोकितचरं 'भूतपूर्वे चरट्'। पूर्वं यदा कदा प्यदृष्ट मित्यर्थः। अशेषं सर्वञ्च, चराचरं जगत् अवलोक्य दृष्ट्वा, विस्मयमानमानसा साश्चर्यहृदया, अयं कृष्णः परमपुरुष एव पुरुषोत्तम एव, एवकारा न्न प्राकृतबाल इत्यर्थः। इत्येवं तत्क्षणं तदा, अभिदधाना वदन्ती सती, पुनरपि भूयश्च, मोहगहनं अज्ञानरूपं कानन, मवजगाहे विवेश। भगवन्मायया मुमोहेत्यर्थः ॥ ३८

**ग ॥ अथ कदाचन विशङ्कटदधिघटविघटनसञ्जातरोषया यशोदया समुद्वेजित स्सपदि यदुनन्दन स्सरय मतिदूर मपासरत् ॥ ३९**

अथेति— अथ ततः, कदाचन विशङ्कटस्य विशालस्य, दधिघटस्य दधिभाण्डस्य, विघटनेन स्फुटनेन, सञ्जातः रोषः यस्या स्तया तथोक्तया यशोदया, समुद्वेजितः उद्वेगं गमितः, तर्जित इति यावत्। यदुनन्दनः कृष्णः, सपदि तत्क्षणमेव, सरयं सवेगं, यथा तथा अतिदूरं बहुदूरं, मपासरत्, अपससार, अपाद्रव दित्यर्थः ॥ ३९

ग ॥ तदनु त मनुधावमानया चित्रचक्रचचङ्क्रमणचतुरं अतिरुचिरमर्भक मेन मवलम्बितु मपारयन्त्या परिश्रमः पर मनुबभूवे स्थानेहि तत् ॥ ४०

तदन्विति– तदनु श्रीकृष्णापसरणानन्तरम्, तं कृष्ण, मनुधावमानया अनुसृत्य धावन्त्या, अनुपूर्वकधाव् गतिशुध्यो रिति धातोः स्वरितेत्त्वेन उभयपदित्वा दात्मनेपदं। शानच्केवलगत्यर्थ-स्यापि धावतेः प्रकरणा दत्र शीघ्रगत्यर्थकत्वम्। रत्नावळीकारै स्तु स्वगृतादिति धातोः ताच्छील्ये चानश् इत्युक्तम्। तच्चिन्त्यम्। पाघ्रेति सर्तें र्विहितो धौ इत्यय मादेशः इत्संज्ञकशकारादौ प्रत्यये परत एव भवति। न त्वित्संज्ञक शकारान्ते, तथात्वे पश्यपिपिभाव्यादेशापत्तेः। तस्मात् चानशि इत्संज्ञक शकारादित्वाभावा त्तास्मिन् परत स्सर्तेः धौ इत्यादेश स्स्यात्; येन धावमानेति रूपं सिध्येत् इति। चित्र मद्भुतं, यच्चक्रचङ्क्रमणं चक्राकारभ्रमणं, तत्र चतुरं पण्डितं, अतिरुचिर मति-मनोज्ञ, मेन मर्भकं बालकृष्ण, मवलम्बितुं गृहीतुं, अपारयन्त्या अशक्नुवा नयं यशोदयेति प्रकरणा लभ्यते। परं केवलं, परिश्रमः आयासः, अनुबभूवे अनुभूतः, न तु कृष्ण इति भावः। तत् श्रीकृष्णाग्रहणं, स्थाने हि युक्त मित्यर्थः। तदेव विवृणोति ॥ ४०

श्लो ॥ जङ्घालताया मुपमानभूतं। मनोऽपि य न्न प्रभवेद्गृहीतम्
कथन्नु गृह्णातु त मेन मेषा। सदानदन्तावळिमन्दयाना ॥ ४१

जङ्घालताया मिति– जङ्घालतायां वेगवत्ताया, मुपमानभूतं वाय्वादिभ्योऽत्यधिक मित्यर्थः। उपमानं स्यादधिकगुणं चन्द्रादीत्युक्तत्वा दुपमानस्याधिक्य मुपमेयस्य न्यूनत्वं च सहजमिति। मनोऽपि चित्तमपि यम् भयवन्तं कृष्णं, गृहीतुं धर्तुं, प्राप्तु मित्यर्थः। न प्रभवे न शक्तम्, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति' श्रुति रिति भावः। मनसोऽपि वेगवत्त्वेन मनोऽयं न भजे दिति व्यज्यते। त मेनं मनसोऽप्यतिदूरं कृष्णं सदानदन्तावळिमन्दयाना मदगजव न्मन्द-गमने त्युपमा, तया अतिगतिमान्द्यं व्यज्यते। एषा जननी कथं नु कथं वा, गृह्णातु, भजतु, न कथमपीत्यर्थः। मनसोऽपि वेगवान्, बालोऽपि कृष्णः, गजव न्मन्दगामिन्या तरुण्यापि यशोदया न ग्राह्य एवेति नात्र विस्मयः कार्य इति भावः ॥ ४१

तत इति– श्रीकृष्णं गृहीतुं स्वस्य अशक्ता वित्यर्थः –

श्लो ॥ मत्वा विना योग मलभ्य मेनं। समौन मालम्ब्य गतिं निगूढां
करेण जग्राह कथञ्चि देषा। ततो विमुक्तौ क इव प्रयत्नः ॥ ४२

मत्वेति– एषा यशोदा, योगं वञ्चनारूप मुपायं, विना, पृथग्विनेति तृतीयाया वैकल्पिकत्वा त्पक्षे द्वितीया। एनं कृष्ण मलभ्य मग्राह्यम्, मत्वा आलोच्य, समौनं निश्शब्दं, यथातथा निगूढां अप्रकटां, गतिं गमन, मालम्ब्य गृहीत्वा, पश्चा द्वागा त्रिश्शब्द मागत्येत्यर्थः। कथञ्चि त्कृच्छ्रेण, करेण हस्तेन, जग्राह बबन्ध। ततः करग्रहणानन्तरं, विमुक्तौ मोचनेविषये, प्रयत्नः अर्थात् श्रीकृष्ण-

कृतः करादिचालनरूपः यत्नः, कइव निष्फल इत्यर्थः । बालत्वा न्मोचयितु मात्मान मशक्तोऽभू दित्यर्थः । अत्रायं व्यङ्ग्यार्थः । एषो मुमुक्षुः योगं ध्यानं, विना, एन मात्मानं कृष्ण, मलभ्यं दुर्लभं, मत्वा 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति निदिध्यासस्य तुरीयप्रयत्नत्वा दिति भावः । समौनं लोकवार्ताकथनं हित्वेत्यर्थः । आलम्ब्य योग मधायेत्यर्थः । निगूढां रहस्यभूतां, गतिं ज्ञान, मात्मस्वरूप मित्यर्थः । 'प्रत्यग्धामा स्वयं ज्योति' रिति आत्मनो ज्ञानस्वरूपत्वप्रतिपादनात् । करेण जग्राह साक्षा दकरो दित्यर्थः । ततः विमुक्तौ मुक्तिविषये, प्रयत्नः कइव प्रयत्नान्तरेण किमित्यर्थः । इति अत्र समौनं गति मालम्ब्य करेण जग्राहेत्यनेन दमयन्ती हंस मिवे त्युपमालङ्कारोऽपि ध्वन्यते ।
४३

**ग ॥ आदाय च त मेन मुलूखलसीमनि निबद्धु मारभत ॥** ४४

आदायेति— आदाय करेण गृहीत्वा, त मेनं कृष्ण मुलूखलसीमनि उदूखलप्रदेशे, उदूखल मुलूखल मित्यमरः । निबद्धुम् नितरां बद्धु, मारभत उपचक्राम ॥ ४४

**श्लो ॥ पर्याप्तभावं बहवोऽपि तस्य । बन्धे गुणा नैव ययु स्तदानीम्**
**तत्कर्मणा विस्मितया तयाथ । बद्धो गुणातीततनुः कथञ्चित् ॥** ४५

पर्याप्तेति— तदानीं तदा, तस्य कृष्णस्य, बन्धे बन्धने, बहवोऽपि अमिता अपि, गुणास्तन्तवः, पर्याप्तभाव मलम्भावं, साकल्य मित्यर्थः । न ययुः न प्रापुरेव, अपर्याप्ता बभूवु रित्यर्थः । तत्कर्मणा तेन कर्मणा, विस्मिततया आश्चर्यं गमितया, अहो एकस्य बालकृष्णस्य बन्धे बहवोऽपि दीर्घतया रज्जवोऽपर्याप्ताइति विस्मयमानमानसयेत्यर्थः । अथ तया यशोदया, गुणातीततनुः रज्जु प्रमाणाधिकशरीरः कृष्णः, कथञ्चि त्कृच्छ्रेण, बद्धः भाविकार्यसिध्यर्थं स्वेनैव बन्धोऽङ्गीकृतः; नतु माता बला द्बद्ध इति भावः । व्यङ्ग्यार्थस्तु तस्य परमात्मनः बन्धे बहवोऽपि गुणा स्सत्त्वादयः यद्यपि गुणत्रयमेव । तथापि तन्मिश्रणे अन्यतरन्यूनाधिक्याभ्यां बहव स्सम्भवन्ति विशेषा इति बोध्यम् । पर्याप्तभावं सामर्थ्यं न ययुरेव स्वाधीनमायत्वा दीश्वरस्येति भावः । तत्कर्मणा विस्मितया तया मायया अहो सर्वजीवमोहिन्यापि मया नायं परमात्मा मोहं गमित इत्याश्चर्यहृदयया प्रकृत्या गुणातीततनुः निर्गुणस्वरूपः परमात्मा कथञ्चि द्बद्धः । भूभारहरणार्थं स्वेनैव लीलया मायागुणसम्बन्ध स्स्वीकृतः । नतु मायापारतन्त्र्या दिति भावः ॥ ४५

**ग ॥ तदनु यदुपति रपि पुरा विषमशरसङ्गतविगतसिचययुवतीशतपरिवृता वप्रावृतकळेबरौ तत्क्षणमेव तदवलोकनकुपितनारदवित्राणितशापव्यापारा दुपात्तार्जुनमहीरुहभावौ मणिग्रीवनलकूबराभिधेयौ नरवाहननन्दनौ मन्दिरपरिसरवर्तिना वञ्जिघृक्षु रुलूखलमपि समाकृष्य तत्सन्निथ मुपससर्प ॥** ४६

तदन्विति– तदनु उलूखलबन्धानन्तरम्, पुरा पूर्वकाले, विषमशरसङ्गते मन्मथसम्बन्धे सुरते इत्यर्थः। विगतसिचयेन गतवस्त्रेण, 'पटोऽस्त्री सिचय' इति वैजयन्ती। युवतीशतेन तरुणीबृन्देन, परिवृतौ परीतौ, अप्राकृत कळेबरौ दिव्यशरीरौ, तत्क्षणमेव तदैव, तदवलोकनेन विगतसिचययुवतीशतपरिवृतयो दर्शनेन हेतुना कुपितेन रुष्टेन, अहो मा मवलोक्यापि मत्तत येमौ यथा पुरं वर्तेते इति सरोषेणे त्यर्थः। विश्राणिता दत्तात्, शापव्यापारात् मत्ततायाः परमकाष्ठा स्थावरतां यतिशापा द्धेतो रित्यर्थः। उपात्तः स्वीकृतः, अर्जुन महीरुहयोः ककुभतर्वोः, 'नदीसर्जो वीरतरु रिन्द्रद्रुः ककुभोऽर्जुन' इत्यमरः। भावः स्वरूपः याभ्यां तौ तथोक्तौ मन्दिरपरिसरवर्तिनौ गृहप्रान्तस्थितौ, मणिग्रीवनलकूबरा वित्यभिधेयौ नामनी ययो स्तौ तथोक्तौ, नरवाहननन्दनौ कुबेरतनयौ, अनुजिघृक्षुः अनुग्रहीतु मिच्छुः। यदुपति रपि कृष्णश्च, उलूखल मपि उलूखलं च, समाकृष्य नीत्वा, तत्सविध मर्जुनतरुसमीप, मुपससर्प शीघ्रं जगाम॥ ४६

श्लो॥ साचीभूत मुलूखलं विधिवशा दाकृष्य शैलोपमं
तस्मिन् सत्वर मन्तरा तरुयुगं साटोपमाधावति
तत्संरम्भ समीरितौ निपतितौ क्षोणीरुहौ तत्क्षणा
त्तेनाभू न्निबिडीकृतं पटपटध्वानेन रोदोन्तरम्॥ ४७

साचीभूत मिति– शैलोपमं पर्वततुल्यं, साचीभूतं तिर्यग्भूत, मुलूखलं विधिवशात् विधेः दैवस्य स्वस्य, वशा द्बलात्। आकृष्य नीत्वा, तरुयुग मन्तरा तरुद्वयस्य मध्ये, अन्तरान्तरेणेति द्वितीया। साटोपं ससंरम्भं, यथा तथा तस्मिन् कृष्णे, आधावति शीघ्रं गच्छति सति; क्षोणीरुहौ अर्जुनवृक्षौ तत्संरम्भसमीरितौ, श्रीकृष्णधावनवेगपरिकम्पितौ, अत एव तत्क्षणात् निपतितौ भुवि पतितौ, बभूवतु रितिशेषः। तेन तरुयुगळपतनजन्येन पटपटध्वानेन पटत्पटदिति ध्वनिना, रोदोऽन्तरं ब्रह्माण्डमध्यभागः, रोदसो र्द्यावापृथिव्यो रन्तरं रोदोऽन्तरमिति समासः। 'द्यावाभूमी तु रोदसि' इत्यमरः। निबिडीकृतं व्याप्त, मभूत् बभूव॥ ४७

श्लो॥ बन्धो यदुतनूजस्य। मुनिशापविपन्नयोः
अभव द्बन्धमोक्षाय। यक्षराजतनूजयोः॥ ४८

बन्ध इति– यदुतनूजस्य कृष्णस्य, बन्धः उलूखलबन्धनं, मुनिशापविपन्नयोः नारदशापा द्विपत्तिं प्राप्तयोः, यक्षराजतनूजयो र्नलकूबरमणिकूबराख्यकुबेरपुत्रयोः बन्धमोक्षाय संसारपाशा न्मुक्तये, निश्रेयसार्थमिति यावत्। अभवत् श्रीकृष्णस्पर्शेन तौ मुक्तौ बभूवतु रिति भावः। अत्र बन्धो मोक्षा याभव दित्येको विरोधः। यदुतनूजबन्धः यक्षराजतनूजमोक्षायाभव दित्यन्यः। उलूखल-बन्धं व्याजीकृत्य भगवान् तयोर्निश्श्रेयस मदा दिति तयोः परिहारः। विषमालङ्कारः। विरुद्धकार्य स्योत्पत्ति रितितल्लक्षणात्। बन्धात्कारणात् मुक्तेः कार्यस्योदयो हि विरुद्ध इत्यलम्॥ ४८

श्लो ॥ तौ ततः कृपया शौरेः । प्रकृतिं समतीत्य ताम्
उपगम्य निजं रूप । माश्रितौ गति मुत्तराम् ॥ ४९

ता विति– ततः भुवि निपातानन्तरं, तौ यक्षराजसुतौ, शौरेः कृष्णस्य, कृपया करुणया, तां प्रकृतिं स्वभाव, मर्जुनवृक्षत्व मिति यावत् । समतीत्य त्यक्त्वा, निंज स्वीयं, रूपं यक्षत्व, मुपगम्य उत्तरां उत्तरदिगभिमुखीं, लाक्षणिकोऽयं प्रयोगः । गतिं गमन, माश्रितौ प्राप्तौ । उत्तरदिगाभिमुख्येन ययु तु रित्यर्थः । ननु बन्धमोक्षा याभवदिति पूर्वं मुक्तिं प्रतिपाद्य कथ मधुना यक्षत्वरूपं बन्धमेव ययु तु रित्युक्तमिति चे न्नैष दोषः । स्थावरत्वत्यागपूर्वकयक्षशरीरप्राप्त्यनन्तरं तद्देहावसाने तयो र्मुक्ते र्भाव्यमानत्वेन भविष्य द्वति मालोच्य तथोक्तमिति। यद्वा बन्धमोक्षा येत्यस्य बन्धस्य स्थावरत्वरूपस्य, मोक्षाय त्यागायेत्यर्थो वाच्यः । अत्रेदं व्यङ्ग्यम् । तौ शौरेः कृपया भववरसङ्कल्पे नेत्यर्थः । तां प्रकृतिं मायां, समतीत्य तीर्त्वा, निजरूपं स्वस्वरूप, मुपगम्य प्राप्य, मायया स्वस्मि न्नारोपित देहादितादात्म्याकृतदुन्दुभित्वादिजीववेष मपहाय सच्चिदानन्दोऽह मित्यात्मस्वरूपयाथात्म्यसाक्षात्कारशालिनौ भूत्वेतिभावः । उत्तरां श्रेष्ठां, गतिं मोक्षं, देहावसाने इति भावः । आश्रितौ प्राप्तौ इति ॥ ४९

ग ॥ अथ नन्दगोपपुरोगमाः प्रावृषेण्यपयोवाहनिवहनिर्घोषपारम्परी सब्रह्मचारिण माकस्मिक मनोकहपतनसम्भूत पटपटारव माकर्ण्य किमिद मुपस्थित मतिभयानक मिति विस्मयपरीत मत यस्त्वरित मापत्य शतधारविदारित मिव धारधर शिखरयुगळ मालिङ्गितमहीतल मर्जुनमहीरुहयुगळ मन्तरा तरुयुगळ मुद्घूर्णमान मुलूखलनिबद्ध मकुतोभय मर्भकमपि निज मवलोक्य सकल मिद मेत दर्भककृत मिति परिसरविसरदर्भकभारत्या मसम्भूतविस्रम्भाविमुच्यच पृथुक मुत्पातशीतपरीतं पद मिद मनिवासयोग्य मिति सम्मन्त्र्य मन्त्रिभि स्सद्य एव शृङ्गवाद्यनिनद मापाद्य गोधनमपि पुरोधाय कुम्भिनीरम्भायिताभि राभीरभीरुभि स्सम मशेष मपि परिच्छद मारोप्य शकट मतिविस्मयनीयकामनीयक मन्वर्थाभिधान गोवर्धनधाराधरवर्तनमनोरमं कैलासमिव नीलकण्ठनिलयं वैकुण्ठमिव हरिनिकेतनं चतुरानन मिव सकलागमसेवधिं यामुनपुलिन लोभनीयं बृन्दावनोद्देश मविशन् ॥ ५०

अथेति– अथ यक्षतनूजनिर्गमनानन्तम्, नन्दगोपः पुरोगमः पुरस्सरः मुख्य इति यावत्– येषा न्ते तथोक्ताः नन्दादिगोपा इत्यर्थः । प्रावृषिभवः प्रावृषेण्यः । प्रावृष एण्य इत्येण्यः । वार्षिक इत्यर्थः । स चासौ पयोवाह निवहः मेघसमूहः, तस्य निर्घोषपारम्पर्याः गर्जितसन्तानस्य सब्रह्मचारिणं सवयस्यं, तत्तुल्यमित्यर्थः । आकस्मिकं मकस्मा, दुद्भूतं अनोकहयोः वृक्षयोः पतना त्पाता, त्सम्भूतं जातं, पटपटारवं पटपटेति ध्वनिं, आकर्ण्य श्रुत्वा, किं किमर्थं, मतिभयानक मतिभयङ्कर,

मिद मुपस्थितं प्राप्त मिति यद्वा अतिभयानक मुपस्थित मिदं किमि त्यन्वयः – इत्येवं विस्मयपरीतमतयः आश्चर्यरसनिर्मग्नस्वान्ताः, ससन्तः त्वरितं शीघ्रं, मापत्य यत्र दिशि शब्द श्श्रुतः तत्र गत्वेत्यर्थः । शतधारविदारितं वज्रायुधनिर्भिन्नं, धराधरशिखरयुगळमिव पर्वतशिखरद्वन्द्वमिव, आलिङ्गितमहीतलं भूतलपतित मित्यर्थः । अर्जुनमहीरुहयुगळं ककुभवृक्षद्वयं, शतधारविदारितं धराधरशिखरयुगळं यथा आलिङ्गितमहीतलं भवति तद्व दुलूखलनिर्भिन्नं तरुयुगळ मालिङ्गितमहीतल मित्युपमालङ्कारः । अत्र आलिङ्गितेत्यनेन यथा केनापि हेतुना निर्भिन्नाङ्गः पुत्रः जननी मालिङ्ग्य वर्तते तद्वत् भूजा वपि भुव मालिङ्गेयति ध्वनिः । तथाऽन्तरा तरुयुगळ वृक्षद्वयमध्ये उद्घूर्णमानं उच्चैः परिभ्रमणशीलं, उलूखलनिबद्धं उलूखले बद्धं, अकुतोभयं कुतश्चि द्भयरहितं, निजं स्वीय, मर्भक मपि बालञ्च, अवलोक्य दृष्ट्वा, इदं सकलं वृक्षपातनरूप मेतत्सर्वं, कृत्यं, एतदर्भककृतं एत द्बालनिर्वर्तितं भवतीत्येवंरूपायां परिसरविसरतां प्रान्तचारिणां, अर्भकानां बालानां, भारत्यां वचि, असम्भूतविस्रम्भाः अजातविश्वासा, ससन्तः बालः क अर्जुनमहीरुहपातनं क इति विषमबुद्ध्यो भूत्वेति भावः । पृथुकं बालं, विमुच्य मोचयित्वा च, उलूखलबन्धा दिति शेषः । उत्पातशतपरीत मरिष्टसन्ततिसम्बद्धं, मिदं, पदं स्थानं, अनिवासयोग्यं निवास स्यायोग्य, मित्येवं मन्त्रिभिस्सह सम्मन्त्र्य आलोच्य, सद्यः तत्क्षणे एव, शृङ्गवाद्यनिनदं शृङ्गाणां तदितरभेर्यादिवाद्यानां च, निनदं ध्वनिं, आपाद्य प्रवर्तयित्वा, मङ्गळार्थ मिति भावः । गोधनमपि गोरूपं द्रव्यमपि, गोपानां गाव एव हि धनम् । पुरोधाय अग्रेकृत्वा, कुम्भिनीरंभायिताभिः भूगतरम्भा इवाचरिताभिः, भुवि रम्भा इव आचरन्तीभि रितिवा । यथा स्वर्गो रम्भया भूष्यते एवं भू राभि र्भूष्यते इति भावः । आभीरभीरुभिः गोपाङ्गनाभि, स्समं सह अशेषं सर्वमपि, परिच्छदं वस्त्रभूषणादि वस्तुजातम्, शकट मारोप्य गोपाङ्गनानां वस्त्रादि वस्तूनि च शकटेषु स्थापयित्वेत्यर्थः । अतिविस्मयनीयं अत्याश्चर्यकरं, कामनीयकं सौन्दर्यं यस्य तत् । अन्वर्थं सार्थकं, अभिधानं गोवर्धन इति नाम यस्य तस्य-गाः वर्धयतीति गोवर्धन इति योगरूढनामवत इत्यर्थः । गोवर्धनधाराधरस्य गोवर्धनपर्वतस्य, वर्तनेन स्थित्या, मनोरमं मनोज्ञं, पर्वते तृणादिबाहुल्या द्रवां पर्वतप्रदेशो निवासयोग्य इतीदं विशेषण मुक्तम् । कैलासमिव नीलकण्ठनिलयं हंसनिवास, मन्यत्र शिवनिवासं च; श्लिष्टसाधर्म्येय मुपमा । एव मुत्तरत्रापि । वैकुण्ठमिव हरिनिकेतनं सिंहनिलयम्, विष्णुनिवासं च; एव मुपमाद्वयेन कैलासवैकुण्ठलोकव दस्य सुजनसेव्यत्वं गम्यते । चतुराननमिव ब्रह्माणमिव, सकलागमसेवधिं सर्ववृक्षनिधिं, सर्ववेदनिधि मिति च; यामुनपुळिनलोभनीयं यमुनानदीसम्बन्धिसैकतमनोहरं, बृन्दावनोद्देशं बृन्दायाः कस्यचिद्राक्षसस्य पत्न्या वनं बृन्दावनं, तदे वोद्देशः तस्यउद्देश इति वा, तं बृन्दावनप्रदेश मित्यर्थः । अविशत् प्रविष्टा बभूवुः ॥ ५०

श्लो ॥ बृन्दावनपदे दीन । बृन्दावनपरायणाः
गोपा विरचयन्ति स्म । गोपालनकृते व्रजम् ॥ ५१

बृन्दावनेति— दीनबृन्दावनपरायणाः दीनानां कृपणाना, मनाथाना मिति यावत् । बृन्दस्य सङ्घस्य, अवने रक्षणे, परायणाः व्यग्राः; यद्वा अवनमेव परायणं परमप्राप्यं दृढकृत्य मिति यावत् येषां ते तथोक्ताः । गोपाः नन्दादयः, गोपालनकृते गोरक्षणार्थं, बृन्दावनपदे बृन्दावनस्थाने, व्रजं गोष्ठं, विरचयन्तिस्म चक्रुः । छेकानुप्रासः ॥ ५१

श्लो ॥ तौ ततः पितृनिदेशत स्तुतौ । वत्सपालपद मन्वतिष्ठताम्
तद्विहाय वसुदेवसन्निधिं । गोपमन्दिरसमाश्रितेः फलम् ॥ ५२

ता विति— ततः बृन्दावने व्रजनिर्माणानन्तरम्, तासु तौ रामकृष्णौ, पितृनिदेशतः नन्दस्याज्ञातः, वत्सपालपदं गोशिशुपालस्थान, मन्वतिष्ठतां अधिष्ठितवन्तौ । गोशिशुपालनार्थं पित्रा नियोजिता वित्यर्थः । तत् वत्सपालपदलाभः॰ वसुदेवसन्निधिं वसुदेवस्य यदुवंशीयस्य स्वपितु, स्सन्निधिं समीपस्थितिं॰ वसुदेवस्य धनपते स्सन्निधि मिति च गम्यते । विहाय गोपमन्दिरसमाश्रितेः नन्दगृहाश्रयणस्य फलं भवतीति शेषः । वसुदेवस्य राजन्यत्वेन तद्वंशे जातयो रनयोः गोपालनकथा यद्यपि दूरा, तथापि बाल्ये एव तत्सन्निधित्यागपूर्वकनन्दमन्दिरस्वीकारा द्धेतोः गोपालनाधिकार- स्तयो रासी दिति भावः । उत्तमकुलजोऽपि मौढ्या यदि धनपतिसान्निध्यं त्यजति तर्हि तस्य गोपालनादिनीचवृत्ति रेव भवतीति ध्वनिः— ५२

श्लो ॥ अरमत मुरवैरी मल्लयुद्धै स्तदा य
त्किमु त दिद मफाली न्मल्लचाणूरघातम्
यदपि मुहु रखेल त्कन्तुकै र्गोपकान्ता
कुचकलशविमर्दप्रौढय स्त त्कृता नु ॥ ५३

अरम तेति— तदा तदानीं, मुरवैरी कृष्णः, मल्लयुद्धैः बाहाबाहव्यादिभिः । मल्लसङ्गरैः, अरमतेति यत् क्रीडितवानिति यत्, तदिदं क्रीडनं मल्लचाणूरघातं मल्लचाणूरयोर्हननं, तत्स्वरूपेणे त्यर्थः । अफालीत्किमु निष्पन्नं किम्? फल निष्पत्ता विति धातो र्लुङ् । बालभावाभ्यस्तमल्लयुद्ध- क्रीडनं बाल्यापगमे मल्लचाणूरघातात्मनाऽपरिणम तेति भावः । तथा मुरवैरी कन्तुकैः क्रीडा साधनैः, मुहुः पुनः पुनः, अखेलदिति यत् क्रीडितवानिति यत्, गोपकान्ताकुचकलशविमर्द- प्रौढयः- गोपकान्तानां गोपाङ्गनानां, कुचकलशयोः कुचकुम्भयोः, विमर्दप्रौढयः मर्दनपाण्डित्यानि, तत्कृतानु—तस्मात् कन्तुक क्रीडना, त्कृता जाना, नु किम्? बालभावाभ्यस्तकन्तुकक्रीडनं तारुण्ये कुचकलशविमर्दनपाण्डित्यं जनयामासेति भावः । उत्प्रेक्षाद्वयस्य अन्योन्यनैरापेक्ष्यात संसृष्टिः ॥ ५३

श्लो ॥ वृषत्रिवर्तपदं प्रथितं ययो । र्वृषभवेषभृतो श्शिशुचापलात्
गुणसमुन्नतयो र्न तयोः पर । स्परसलीलविलङ्घन मद्भुतम् ॥ ५४

वृषेति– गुणसमुन्नतियोः गुणै रभ्यधिकयो, ययोः रामकृष्णयोः, वृषविवर्तपदं सुकृतपरिणामत्वं, वृषभविकारत्वञ्चेति गम्यते । प्रथितं प्रसिद्धम् । शिशुचापलात् बालचापल्याद् वृषभवेषभृतोः वृषभवेषधारिणो, स्तयोः परस्परसलीलविलङ्घनं परस्परस्य अन्योन्यस्य, सलीलं सविलासं, यथा तथा विलङ्घन माक्रमणं, लीलायुद्ध मिति यावत् । नाद्भुतं न चित्रम् । स्वत एव वृषविवर्तयो स्तयो र्वृषभवेषेण क्रीडनं न चित्र मवृषभस्य तु तद्वत्क्रीडनं चित्र मिति भावः । यद्वा शिशुचापलाद् वृषभवेषभृतो रत एव ययो र्वृषविवर्तपदं प्रथितं रामकृष्णयो स्स्वतस्सिद्धस्य वृषविवर्तत्वस्य बालभावप्रयुक्तवृषभवेषधारणजन्यत्वोत्प्रेक्षणा दुत्प्रेक्षा । सा च व्यञ्जकाप्रयोगा द्गम्या । वृषशब्दगतश्लेषोत्थापिता च । गुणसमुन्नतयोः प्रसिद्धयो र्वृषयोस्तु शरीरौन्नत्यमात्र मनयो स्तु गुणौन्नत्य मिति वृषभव्यतिरेकः प्रतीयते । तयोः परस्परसलीलविलङ्घनं नाद्भुत मुभयो र्वृषविवर्तत्वसाम्यादिति भावः । यद्याभ्या मन्यः कश्चि द्वृषांशरहितः अनयो रन्यतरं लीलया लङ्घये त्तर्हि चित्रमिति बोध्यम् ॥ ५४

श्लो ॥ सकलसत्त्वगुणास्पदता ययो
रविशया न तयो रितयोगयोः
निखिलसत्परता सुकृतिक्रिया
विलसितोपनतं सुख मद्भुतम् ॥ ५५

सकलेति– ययो स्ससमीयम्, यन्निष्ठेत्यर्थः । सकलसत्त्वगुणास्पदता सकलानां सत्त्वानां प्राणिनां, गुणाना मिन्द्रियाणां, च आस्पदता आश्रयत्वं, अविशया निस्संशया । सकलजीवाभिन्नत्वा दिति भावः । इतयोगयोः प्राप्तसम्बन्धयो स्तयोः, निखिलेषु सत्सु सज्जनेषु, परतया व्यग्रतया, हेतुना या सुकृतिक्रिया सत्कार्यकरणं, तस्याः विलसितेन विलासेन, उपनतं प्राप्तं, तथोक्तम् सुखं नाद्भुतं । यद्वा तयो स्सुखं निखिलसत्परता सुकृतिक्रियाविलसितोपनत मिति नाद्भुत मित्यन्वयः । सकलजीवाभिन्नयो स्सकलसत्त्वप्रवणत्वं युक्तम् । तेन च सत्कार्यकरणं युक्तम् । तेन च अदृष्टद्वारा सुखप्राप्तिरपि युक्तैवेति भावः । एतेन तौ बृन्दावने सज्जनबाधकान् वत्सबकादीन् हत्वा सुख मूषतु रिति भविष्यत्कथा सूचिता । यद्वा सकलसत्त्वगुणास्पदता समग्रसत्त्वगुणस्य आश्रयत्वं विष्णुत्व मिति यावत् । अन्य त्सर्वं समानम् । तथा च सत्त्वगुणपौष्कल्या त्सर्वसज्जनरक्षा अनयो रुचितैवेति भावः ॥ ५५

ग ॥ इत्थ मतिशयितशकृत्करिपरिपालनलालस मासादितानन्द मादृतपितृनिदेशं हृषीकेश मभिबुभूषु रुग्रसेनसुतनियन्त्रित स्त्वरित माजगाम वत्साभिधानो यातुधानः ॥ ५६

इत्थमिति– इत्थ मेवं, अतिशयितानां सञ्जातातिशयानां, शकृत्करीणां वत्सानां, 'शकृत्करिस्तु वत्स स्स्या' दित्यमरः । परिपालने रक्षणे, यद्वा अतिशयिते शकृत्करिपरिपालने इति

बोध्यम् । लालस मासक्तं, अत्र हेतु माह । आद्दतपितृनिदेश मिति । आहत शिरसाङ्गीकृतः, पितु र्नन्दस्य, निदेशः आज्ञा येन तम् पितृवाक्यपरिपालनार्थं गोपालकत्व मङ्गीकृतं; नतु मौग्ध्या दिति भावः । आसादितानन्दः प्राप्तसुखं, 'क भोग माप्नोति न भाग्यभा ग्जन' इति न्यायात् । वने गोपालत्वेनापि कृष्णस्य सुख मनर्गळमिति भावः । हृषीकेशं कृष्णं, मभिबुभूषुः अभिभूतुं तिरस्कर्तुं, मिच्छु स्सन् उग्रसेनसुतनियन्त्रितः, कंसप्रेरितः, वत्साभिधानः वत्सनामकः, यातुधानः राक्षसः त्वरितं क्षिप्रं, माजगाम कृष्णं प्रत्यागत इत्यर्थः ॥ ५६

श्लो ॥ हिताहितज्ञानविशेषशून्यः । पराशनायागत एष वत्सः
ततोऽनु गोविन्दभुजोरुदन्ड । नुन्न स्तृणावर्तपदं प्रपेदे ॥ ५७

॥ हितेति— हिताहितयोः प्रियाप्रिययोः, ज्ञानेन तद्विषयज्ञानेनेत्यर्थः । विशेषशून्य अतिशून्यः तथोक्तः । इदं हित मिद महित मिति ज्ञान मीषदपि तस्य नास्तीत्यर्थः प्रबलविरोधा दिति भावः । पराशनाय परस्य परमात्मनः कृष्णस्य, अशनाय भक्षणाय, मारणार्थं मिति यावत् । आगतः एष वत्सः तन्नामा यातुधानः, ततोऽनु ततः, गोविन्दभुजोरुदण्डनुन्नः गोविन्दस्य विष्णोः, कृष्णस्ये त्यर्थः । भुज एव उरुदण्डः महान् लगुडः, तेन नुन्नः ताडितस्सन्, तृणावर्तपदं तृणावर्तस्थानं, प्रपेदे अभजत् । तद्वन्मृत इत्यर्थः । पर्यायोक्त मलङ्कारः । मृत इत्यनुक्त्वा तृणावर्तपदं प्रपेदे इति मङ्ग्यन्तरेण चरुतरे णाभिधानात् 'पर्यायोक्तन्तु गम्यस्य वचो मङ्ग्यन्तराश्रय' इति लक्षणात् । अत्रेदं व्यङ्ग्यम् । हिताहितज्ञानविशेषशून्यः पशुत्वा दिति भावः । पराशनायागत इत्येकं पदं—परा मधिका, मशनायां बुभुक्षां, गतः प्राप्तः । 'अशनाया बुभुक्षा क्षु' दित्यमरः । एष वत्सः तर्णकः, ततोनु ततः, गोविन्दस्य गोपस्य, 'गोष्ठाध्यक्षेपि गोविन्द' इत्यमरः । भुजे यः उरु दण्डः तेन नुन्नः प्रेरितः तृणाना मा समन्तात् वर्तन मावर्तः । भावे घञ् । तस्य पदं स्थानं, तृणप्रचुरप्रदेश मित्यर्थः प्रपेदे इति ॥ ५७

ग ॥ बकोऽपि तदनु यदुनन्दनपरिबुभूषया सत्वर मापत्य पूतनासाहचर्य मलभत ॥ ५८

बकोऽपीति— बकश्च तदनु ततः, यदुनन्दनस्य कृष्णस्य, परिबुभूषया परिभवेच्छया, तं तिरस्कर्तु मित्यर्थः । सत्वरं क्षिप्रं, मापत्य आगत्य, पूतनासाहचर्यं पूतनासहचरत्व, मभजत आप; तद्वन्मृत इत्यर्थः । अत्र बकः पूतनासाहचर्य मभजतेत्यनेन कामुकस्य कामिनीसाहचर्यप्राप्ति र्ध्वन्यते ॥ ५८

श्लो ॥ हंसं सन्मानसावास । माश्लिष्टकमलाकरम्
उदारबलसम्पृक्तं । बकः परिभवे त्कथम्? ॥ ५९

हंस मिति– सन्मानसावासं सतां बुधानां, मानसं हृदयमेव आवासो निलयो, यस्य तं तथोक्तं, आश्लिष्टकमलाकरं–आश्लिष्टः पीडितः, कमलाया लक्ष्म्याः करो येन तं लक्ष्मीपति मित्यर्थः । पाणिग्रहणे पाणिपीडनशब्दप्रयोगः प्रायिकः । 'पाणिपीडनमहं दमयन्त्याः कामयेमहि महीमिहिकांशो' इति श्रीहर्षः । यद्वा आश्लिष्टः आलिङ्गितः, कमलाया आकरः उत्पत्तिस्थानं, क्षीराब्धिरिति यावत्, येन तं क्षीराब्धिशायिन मित्यर्थः । अथवा आश्लिष्टः कमलाकरः पद्मसरः येन तं, 'तुलसीकाननं यत्र यत्र पद्मवनानि च सन्ति भागवता यत्र तत्र सन्निहितो हरि' रिति शास्त्रात् । यद्वा आश्लिष्टौ आङ्पूर्वकश्लिषधातोः कर्तरि क्तः । आलिङ्गितवन्ता वित्यर्थः । कमलायाः करौ यं तं कमलाकरालिङ्गित मित्यर्थः । उदारबलसम्पृक्तं उदारेण महता, बलेन बलभद्रेण, संपृक्तं युक्तं, हंसं, परमात्मानं, बकः बकासुरः, कथं परिभवेत् तिरस्कुर्यात् । न कथमपीत्यर्थः । सद्भिः परिवेष्टितं तत्रापि कमलया समालिङ्गितं तत्रापि बलरामरक्षितं भगवन्त मेको बकः कथंवा परिभवेत्? न कथमपीति भावः । अत्रेदं व्यङ्ग्यम् । सत् श्रेष्ठं मानसं तन्नामकं सरः, आवासो यस्य तं आश्लिष्टः आलिङ्गितः, कमलाकरः पद्मसरो येन तम्; यद्यपि मानससरोऽपि कमलाकर एवेति पौनरुक्त्य मापद्यते । तथापि निवासस्थानं मानसं मार्गवशात्तु तदितरकमलाकरा आवासभूता स्तस्येति परिहारो बोध्यः । एतेन यत्रकुत्रापि कमलाकरे एव वर्तते नतु बकवत् क्षुद्रह्रदे इति फलितम् । उदारेण महता बलेन शरीरपाटवेन, सम्पृक्तं युक्तं, प्रबलमिति यावत् । हंसं पक्षिविशेषं बकः पक्षिविशेषः, कथं परिभवे त्रकथ मपीति ॥ ५९

श्लो ॥ **मुष्टीमुष्टिविहारसारसरसा गोपालबाला स्तदा**
**जाता स्तेन पराजिताः किमिद मित्याश्चर्यपर्याकुलाः**
**गूढं तस्य चतुर्भुजत्वमपि वा सत्त्वैकसंवासतां**
**वैदग्ध्यं च बलिप्रतारणविधौ को नाम जानातु तत् ॥** ६०

मुष्टीमुष्टीति– मुष्टिभिश्च मुष्टिभि श्च प्रहृत्येदं युद्धं प्रवृत्तमिति मुष्टीमुष्टि, तत्र तेनेद मिति सरूपे इतिसमासः । अन्येषामपि दृश्यते इति पूर्वपदस्य दीर्घः । मुष्टामुष्टीति त्वपपाठ एव । तदेव विहारः क्रीडा, तत्र विहार इतिवा तस्मिन् सारसरसाः अत्यन्तरसिकाः, गोपालबालाः बालगोपाः, तदा तेन कृष्णेन, पराजिताः पराभूताः, इदं कि मित्याश्चर्यपर्याकुला विस्मयाकुलाः, जाताः बभूवुः । बहवोऽपि वय मेकेन कृष्णेन मुष्टीमुष्टि युद्धे पराजिता इति तत्र कारणाज्ञाना द्विस्मयं प्रपेदिरे इति भावः । तत्र कारणं कवि स्स्वयं वदति । गूढमिति तस्य कृष्णस्य सम्बन्धि त त्प्रसिद्धं, गूढं वेदैकसमधिगम्यं, चतुर्भुजत्वं विष्णुत्वं, भुजचतुष्टयशालित्वं च, सत्त्वैकसंवासतां सत्त्वं गुणो बलं च तस्य एकसंवासता मुख्याश्रयत्वं, बलिप्रतारणविधौ बलिचक्रवर्तिवञ्चनविधौ, बलवत्पुरुषवञ्चनविधौ च, वैदग्ध्यं चातुर्यं च, को नाम कोवा, जानातु न कोपीत्यर्थः । देवरहस्यत्वा दिति भावः । कृष्णो हि चतुर्भुजः ते तु द्विभुजा एवेति । तेनैषां पराजयो युक्तएव । ननु गोपा

बहवो मिळित्वा बहुभुजा एवेत्यत आह । सत्त्वैकसंवासतामिति । सन्तु नाम मिळितानां तेषां बहवो बाहवः नतु तेषां बलमस्तीति बलिनानेन तत्पराजयो युक्त एव । ननु 'बहूना मल्पसाराणां समवायो दुरत्यय' इति न्याया दुर्बलैरपि बहुभि रेक एव जय्य इत्यत आह । बलिप्रतारणविधौ वैदग्ध्यमिति । नराः गज मिव श्रीकृष्णः गोपसङ्घम् उपायेन जितवानिति । नास्त्युपायतुल्यं लोके किञ्चि द्वस्त्विति भावः। इति व्यङ्ग्याशयः । वस्तुतस्तु श्रीकृष्णस्य भगवत्त्वा त्तज्जयो युक्त एवेति भावः ॥ ६०

श्लो ॥ यामुनेषु पुलिनेषु स शौरि । स्सेतुबन्धविधिभि र्य दरंस्त
त त्पुरा परिपयोनिधि सेतो । स्स्पष्ट मारचनवासनयेति ॥ ६१

यामुनेष्विति– सः शौरिः कृष्णः, यामुनेषु यमुनासम्बन्धिषु, पुलिनेषु तोयोद्धिततटेषु, सेतुबन्धविधिभिः सेतुनिर्माणकृत्यै, ररंस्त क्रीडितवानिति यत् तत्क्रीडनं पुरा रामावतारे परिपयोनिधि समुद्रे विभक्त्यर्थेऽव्ययीभावः । सेतोः आरचनवासनया विर्माणसंस्कारेणेति, स्पष्टं सर्वविदित मित्यथः । श्रीरामस्यात्मनि लग्नः सेतुनिर्माणसंस्कारः रामावतारानन्तरं कृष्णावतारेऽपि यमुनायां सेतुं कारितवा निति भावः । उत्प्रेक्षालङ्कारः ॥ ६१

ग ॥ एव मानकदुन्दुभिनयनाम्भोजदुर्लभाभि राभीरशाबकभागधेयपरम्परापरिणतिभि रम्भोजसम्भवप्रमुखबर्हिर्मुखनिकरलोभनीयाभि र्भकलीलाभि रशेषमपि भुवन मानन्दयन्ता वाश्विनेयाविव वसुन्धराज्वरनिवर्तनाय मध्यमलोकभाजौ मदनमाधवाविव वनसञ्चारिणौ जयन्तनळकूबराविव भूलोकविलोकनलालसौ इष्टापूर्तजन्यसुकृतसञ्चयाविव सशरीरबन्धौ रामणीयकसर्वस्वविश्रमप्रदेशौ वत्सपरिपालनाय विपिनवर्त्मना सञ्चरमाणौ गुञ्जामणिपुञ्जरञ्जिता ववतंसितनानाकुसुमदामसमुदायौ वनदेवताभिरपि सविस्मय मवलोकयमानौ परश्शताभि राभीरकिशोरराजिभि रनुगम्यमानौ तावेतौ रौहिणेयनन्दनन्दना वध्यक्षय न्नतिरूक्षः क्षणदाचरः कश्चिदघाभिधानोऽसन्निधाय सोदरनिषूदनसञ्जातवैरनिर्यातनसमुत्सुकः कमपि महामहीधरविडम्बिविलेशयकळेबर मालम्ब्य व्यादाय च वदन मनुविपिन मवतस्थे ॥ ६२

एव मिति– एव मुक्तरीत्या, आनकदुन्दुभे र्वसुदेवस्य, नयनाम्भोजयोः नेत्रकमलयोः, दुर्लभाभिः लब्धु मशक्याभिः, आभीरशाबकानां गोपालबालानां, सम्बन्धिनीनां, भागधेयपरम्पराणां सुकृतसमूहानां, परिणतिभिः परिणामभूताभि रित्यर्थः । भाग्यवशा त्तेषां सुलभाभिरिति भावः । तत्र हेतु माह । अम्भोजेति अम्भोजसम्भवो ब्रह्मा, प्रमुख मादि र्येषान्तेषां बर्हिर्मुखानां देवानां, निकरेण समूहेनापि, लोभनीयाभिः स्पृहणीयाभिः ब्रह्मादिलोभविषयाणां लीलानां, गोपालबालगोचरत्वे

हेतु स्तदीयानेकजन्मसञ्चितसुकृतपरिपाक एवेति भावः। एतेन श्रीकृष्णप्रसवहेतुबहुळसुकृताभ्यां देवकीवसुदेवाभ्यामपि गोपबाला एव धन्या इति भगवत स्सौलभ्यं व्यज्यते। अर्भकलीलाभिः बालक्रीडाभिः, अशेषं समस्त मपि, भुवनं जग, दानन्दयन्तौ सुखयन्तौ, वसुन्धरज्वरनिवर्तनाय भूतापनिवारणार्थं, भूदेवीज्वरनिर्यातनार्थं च, मध्यमलोकभाजौ भूलोकं प्राप्तवन्तौ, आश्विनेयाविव अश्विनाविव स्थितौ, वनसञ्चारिणौ बृन्दावने सञ्चरन्तौ, मदनमाधवाविव मन्मथवसन्ताविव स्थितौ, भूलोकविलोकनलालसौ मध्यमलोकदर्शनासक्तौ, जयन्तनलकूबराविव इन्द्रकुबेरतनयाविव स्थितौ, सशरीरबन्धौ शरीरधारिणौ, इष्टं यागादि, पूर्तं वापीतटाकादिनिर्माणं, ताभ्यां जन्यौ जातौ, सुकृतसञ्चयौ पुण्यसमूहाविव स्थितौ, इष्टजन्यसुकृतसञ्चय एकः—पूर्तजन्यसुकृतसञ्चयोऽन्यः। एता वुभौ रामकृष्णाकारेण सशरीरौ इति भावः। इत्युत्प्रेक्षाचतुष्टयम्। इवशब्दस्य सम्भावनायां पर्यवसानात्। सम्भावन स्स्या दुत्प्रेक्षेति तल्लक्षणम्। रामणीयकसर्वस्वस्य रमणीयतारूपसर्वधनस्य, विश्रमप्रदेशौ विश्रान्तिस्थानभूतौ, वत्सपरिपालनाय तर्णकरक्षार्थं, विपिनवर्त्मना वनमार्गेण, सञ्चरमाणौ चरन्तौ, सम स्तृतीयायुक्ता दित्यात्मनेपदम्। गुञ्जाभि र्मणिपुञ्जैः, रत्नसमुदायै श्च रञ्जितौ, यद्वागुञ्जामणयः श्रेष्ठगुञ्जाः, तेषां पुञ्जेन रञ्जितौ अलङ्कृतौ। 'काकचिञ्चीगुञ्जा कृष्णला' इत्यमरः (आन्ध्रे 'गुरिगिञ्ज') अवतंसितः कर्णभूषणीकृतः, भूषणीकृत इत्येव वा, नानाविधानां कुसुमदाम्नां पुष्पमालानां, समुदाय स्समूहः, याभ्यं तौ तथोक्तौ, वनदेवताभि रपि काननाधिदेवताभिरपि, अपिना किमुत भूलोकस्थनारीभि रित्यर्थः। सविस्मयं साद्भुत, मवलोकयमानौ दृश्यमानौ, परश्शताभि रमिताभि, राभीरकिशोरराजिभिः गोपबालपङ्क्तिभिः, अनुगम्यमानौ अनुसृतौ, तौ प्रसिद्धौ, एतौ पूर्वोक्तौ, रौहिणेयः बलः, नन्दनन्दनः कृष्णः, तौ अध्यक्षयन् पश्यन्नित्यर्थः। अतिरूक्षः अतिक्रूरः, अघाभिधानः अघ इति नामधेयवान् कश्चित् क्षणदाचरः निशाचरः, असन्निधाय सन्निधिं त्यक्त्वा, दूरे इत्यर्थः। स्वस्वरूपं तिरोधायेति वा। सोदरस्य अनुजस्य, बकस्य, निषूदनेन नाशनेन, सञ्जातस्य वैरस्य शत्रुत्वस्य, निर्यातने निवारणे, समुत्सुकः उत्कण्ठित स्सन्, सोदरमारणानिष्टप्रतीकारेच्छु स्सन्नित्यर्थः। कमप्यनिर्वचनीयं, महीधरं पर्वतं, विडम्बयति अनुकरोतीति महीधरविडम्बी स चासौ बिलेशयकळेबर स्सर्पशरीरः, त मालम्ब्य गृहीत्वा, मायाबलादिति भावः। वदनं वक्त्रं, व्यादाय विस्तारयित्वा, विघटयित्वेति यावत्। अनुविपिनं विपिने, अवतस्थे स्थितवान्। यद्यपि व्यादाय वदन मित्यत्र भूतपूर्वे क्त्वोल्यबिति भूतकालानुसरण मुचितं, तथापि प्रकृतोपयोगात् वर्तमानकाल एव गृहीतव्यः। अन्यथा वदने वत्सगोपप्रवेशासम्भवात्। ल्यप उपपत्ति स्तु वक्त्रं व्यादाय स्वपितीतिव त्कथञ्चि द्बोध्या ॥ ६२

**ग ॥ त मेन माभीरशावका स्सर्वेऽपि निर्वर्ण्य कमपि बृन्दावनसदेशवास्तव्य मवनीधरं मन्वाना निध्यायत गिरि रय मुरस्सर इव तदीयकन्दरोदर मानन मितर मिव गह्वरपरिसरवर्तिगण्डोपलयुगळ मिदमीयदंष्ट्रायुगळ मिव तदन्तरप्रदृश्यमान-**

घण्टापथसरणि रायता रसज्ञेव तत्रत्यदावपावकपरिचितसमीरण श्श्वासानल इव दवदहनदग्धसत्त्वदुर्गन्ध स्तदशितोज्झितपिशितपूतिगन्धइव शिखरोपरि घूर्णमान मभ्रपटल मिदमीयफणानीलमणिकिरणनिकुरुम्बमिव नितान्तव्यात्तदरीमुखतया गिळितु मस्मानिव सोऽय मुत्सुक इति परस्पर मुत्प्रेक्षमाणा यदि पुनरिद मवितथमेव तर्हि बकलावं लाविष्यत इति साकूतस्थितकरताळ मधोक्षज मवलोकयन्त स्सत्वर मविमृश्य सहशक्रुत्करीभि रदसीयवदनोदरप्रदेश मविशन् ॥ ६२

त मेन मिति— तं पूर्वोक्त, मेनं सर्परूपिण मघासुरं, निर्वर्ण्य दृष्ट्वा, सर्वेऽपि आभीरशावकाः गोपबालाः, कमपि कञ्चित्, बृन्दावनसदेशवास्तव्यं बृन्दावनसमीपस्थित, मवनीधरं पर्वतं, मन्वाना जानन्तः सन्तः, बाला इति शेषः । हेबालाः ! निध्यायत पश्यत, अयं गिरिः पर्वतः, उरस्सर इव सर्प इव भातीति शेषः । सर्वत्रेद मन्वेतव्यं । वस्तुत स्सर्पमेव गिरिं मत्वा सर्पत्वेन त मुत्प्रेक्षन्तीति भ्रान्तिहेतुकोऽय मुत्प्रेक्षालङ्कार स्स्वभावोक्तौ पर्यवस्यति । वस्तुतस्तु अय मुरस्सरो गिरिरिव भातीति वक्तव्ये प्रतीपवचनात् प्रतीपालङ्कारः । 'प्रतीप मुपमान स्योपमेयत्वकल्पन' मिति तल्लक्षणात् । बालास्तु प्रतीपालङ्कारविवक्षया नैव मुक्तवन्तः । किन्तु भ्रान्त्येति स च भ्रान्तिहेतुक इति बोध्यम्। एव मुत्तरत्रापि । तदीयकन्दरोदरं पर्वतसम्बन्धिगुहान्तःप्रदेशं, आननमिव सर्पस्य वदनमिव, अत्र आनन मितर मिवेति पाठः प्रामादिकः । आननशब्दस्य क्लीबत्वेन इतरदिति वक्तव्यत्वात् । तथा इतरत्पदनिवेशो व्यर्थ इति स च मयापनीत इति बोध्यम् । गह्वरस्य गुहायाः, परिसरवर्तिनोः प्रान्तस्थयोः, गण्डोपलयोः पर्वतच्युतस्थूलोपलयोः, युगळं द्वयम् ; इदमीयम् इदं शब्दा त्तस्येद मित्यर्थे वृद्धाच्छः । सर्पसम्बन्धीत्यर्थः । दंष्ट्रायुगळमिव आशीर्द्वन्द्वमिव, तदन्तरे पर्वतमध्ये, प्रदृश्यमाना अवलोक्यमाना, घण्टापथसरणिः राजमार्गः । यद्यपि घण्टापदशब्देनैव तादृशार्थप्रतीतौ पुनः मार्गपर्यायसरणिशब्दप्रयोगो व्यर्थ स्तथापि करिकलभकर्णावतंसादिव त्सामान्यविशेषभावेन तदुपपत्ति र्बोध्या । आयता दीर्घा, रसज्ञा रसनेव । 'रसज्ञा रसना जिह्वे' त्यमरः । तत्रत्य दावपावकपरिचितसमीरणः पर्वतस्थदावानलेन सञ्जातपरिचयो वायुः । अव्यया त्यबिति त्यप् । परिचित इत्यत्र तु तारकादित्वा दितच् । श्वासानिलइव फूत्कारवायुरिव, विषलिप्तत्वेन अत्युष्णत्वा च्छ्वासवायोः तत्साधर्म्यार्थं दावपावकपरिचितत्वं समीरणस्योक्तमिति बोध्यम् । दवदहनेन दावाग्निना, दग्धानां भस्मीकृतानां, सत्त्वानां प्राणिनां, सम्बन्धी दुर्गन्धः दुष्टगन्धः: अशितं च तदुज्झितं च अशितोज्झितं स्नातानुलिप्तव त्समासः । तेन सर्पेण अशितोज्झितं अतिभक्षणा द्वान्त मित्यर्थः । तस्य पिशितस्य मांसस्य, पूतिगन्धः दुर्गन्धः इव 'पूतिगन्धस्तु दुर्गन्ध' इत्यमरः । शिखरोपरि शृङ्गाग्रे, घूर्णमानं भ्रमणशील, मभ्रपटलं मेघसमूहः, इदमीयायां सर्पसम्बन्धिन्यां, फणायां स्फटायां, यः नीलमणिः इन्द्रनीलमणिः, तस्य किरणनिकुरुम्बं कान्तिसन्दोह इव । यद्यपि मणे र्भ्रमणं नास्ति तथापि तत्किरणानां प्रसरणधर्मत्वात् घूर्णमानेत्यभ्रविशेषणं दत्तं तत्साम्या दिति ज्ञेयम् । नितान्तं अत्यन्तं,

व्यात्तं विस्तारितं, दरीकन्दरः मुखमिव यस्य तस्य भावस्तत्ता तया प्रक्रमभङ्गभीत्या दरीमुखेत्यत्र उपमितसमास स्स्वीकृतः । अस्मान् गिळितुं सोऽयं पर्वत उत्सुकः उल्लासवानिवेति । एवं रूपेण परस्पर मन्योन्य, मुत्प्रेक्षमाणाः सम्भावयन्त स्सन्तः, यदि पुनः यदितु, इद मस्माभि रुत्प्रेक्ष्यमाणं सर्पत्वं अवितथमेव सत्यमेव, भवेदिति शेषः । वस्तुत स्सर्प एव स्या न्नत्वयं पर्वत इति यदीष्ट मित्यर्थः । तर्हि बकलावं लाविष्यते बकव द्धनिष्यते, मयेति शेषः कृष्णे नेत्यर्थः । उपमा कर्मणि चेति णमुल् । कषादिषु यथाविध्यनुप्रयोगः । सामान्यविशेषभावा दभेदान्वयः । इत्येवं साकूतस्थितकरताळं साभिप्रायकृतकरताळं, वालास्तु मौग्ध्या त्सर्पे पर्वतत्व मारोप्य पुन स्सर्पत्वं य दुत्प्रेक्षितवन्तः त दिसद्धवत्कृत्य यद्ययं वस्तुत स्सर्प स्तर्हि बकगति रस्य स्या दिति वदन् श्रीकृष्णः करताळध्वनि मकरो दिति भावः । अधोक्षजं कृष्ण, मवलोकयन्तः पश्यन्तः, अविमृश्य कृष्णः कि मेव मभिदधातीति तद्वचन मप्यनालोच्येत्यर्थः । सत्वरं शीघ्रं, यथा तथा शकृत्करीभिस्सह वत्सैस्समम्, अदसीयस्य अदश्शब्दा त्तस्येद मित्यर्थे वृद्धाच्छः । त्यदादीनिचेति वृद्धसंज्ञा । सर्पसम्बन्धिन इत्यर्थः । वदनस्य वक्त्रस्य, उदरप्रदेशं मध्यभागं, अविशन् प्रविष्टा बभूवुः ॥ ६३

**ग ॥ भगवानपि तस्य मायाविनो मायानुभावं विभावयन् सतीर्थ्यकुशल मभ्यर्थयमान स्तदीयवदनकोटर मयासीत् ॥ ६४**

भगवा निति— भगवान् कृष्णश्च, मायाविनः मायिनः, तस्य अघासुरस्य, मायानुभावं सर्पवेषधारणरूपं मायाबलं, विभावयन् पश्यन्, सतीर्थ्यकुशलं सवयस्यक्षेमं, समानतीर्थे वासीति यत् । यद्यपि सतीर्थ्यशब्दः एकत्र गुरौ विद्या मभ्यस्यत्सु छात्रेषु प्रसिद्ध स्तथापीह औपचारिक इति बोध्यम् । अभ्यर्थयमानः वाञ्छन्, तदीयवदनकोटरं सर्पवक्त्ररूपगह्वरं, अयासीत् प्राप । दीनरक्षणार्थं भगवत्प्रवेशनं नतु बाल्या दिति भावः ॥ ६४

**श्लो ॥ वेगा दाननकन्दरान्तरगत स्त्रैविक्रमं प्रक्रमं**
**चक्रे चक्रधर स्तदा नियमितश्वासानिलापूरणः**
**तेनासौ बलिचक्रवर्त्यपि ततो मुश्च न्नधःप्रस्थितं**
**निर्यत्प्राणसमीरण श्शिरपथा दातिष्ठ मुच्चैः पदम् ॥ ६५**

वेगा दिति— चक्रधरः कृष्णः, वेगात् न तु विलम्भात्, विलम्बे सति सतीर्थ्यनाशात् । आननकन्दरान्तरगत स्सन् सर्पवदनगह्वरं प्राप्तस्सन् । तदा नियमितं बन्धितं, श्वासानिलापूरणं श्वासवायुप्रसारणं, येन स तथोक्तः । सर्पसम्बन्धिप्राणवायुप्रसारणं निरुध्येत्यर्थः । अवकाशेसति हि वायुप्रसारः । प्रकृते तु शरीरान्तस्सर्वच्छिद्र मभिव्याप्य श्रीकृष्णे वर्तमाने सति निरवकाशा द्वायुनिरोध आसी दिति भावः । यद्वा नियमितैः श्वासानिलैः स्वीयैरेव, आ समन्तात्पूरणं वृद्धि र्यस्य स तथोक्तः । स्वदेहे श्वासा न्पूरयित्वा देह मुज्जृम्भयन्निति भावः । त्रैविक्रमं त्रिविक्रमावतार-

सम्बन्धिनं प्रक्रमं रीतिं, चक्रे । अतिस्थौल्य मभज दित्यर्थः । तेन श्रीकृष्णस्य स्वान्तर्निरवकाश-व्याप्त्या सञ्जातप्राणनिरोधेनेत्यर्थः । भगवत स्त्रैविक्रमप्रक्रमाश्रयणेनेति वा । असौ अघासुरः बलिचक्रवर्त्यपि बलिनां चक्रवर्ती बलवदग्रेसरोऽपीत्यर्थः । शिरपथा न्मस्तकमार्गात् । ब्रह्मरन्ध्रा-दित्यर्थः । 'रजोवाचे रजोदन्त शिशरोवाची शिर स्तथेति' कण्ठभूषणकोशा ददन्तोयं शिरशब्दः । तथा 'विचकर्त शिरान् द्रौणि' रिति भारते प्रयोगश्च । ऋक्पूरब्धूः पथामानक्षे इति समासान्तोऽच्-प्रत्ययः । शिरस्य पन्थाः शिरपथ मिति समासः । निर्यत्प्राणसमीरणस्सन् निर्गच्छत्प्राणवायुस्सन्, अधःप्रस्थितिं अधोलोकगमनं, मुञ्चन् त्यजन्, नरकाभिमुखगमनं त्यक्त्वेत्यर्थः । उच्चैःपदं वैकुण्ठ, मातिष्ठत् आश्रितः । नहि भगवता हतस्य दुर्गतिः । द्वेषा चैद्यादयो नृपा इति वचनादिति भावः । अत्र तेन भगवत स्त्रैविक्रमप्रक्रमाश्रयणेनापि बलिचक्रवर्ती बल्यभिधराक्षसचक्रवर्ती अधःप्रस्थितिं पाताळगमनं, मुञ्चन् त्यक्त्वा, उच्चैःपदं स्वर्गं, मातिष्टदिति विरोधो ध्वन्यते । भगवता नियमितस्य बलिचक्रवर्तिनः पाताळगमनश्रवणादिति भावः ॥ ६५

श्लो ॥ व्यमुच्य तावेन हरेः प्रसादा । दानन्द मासी त्परमं नराणाम्
बुधैरपि प्रीति रहो विशाला । कथं ससिद्धान्त इति व्यधायि ॥ ६६

व्यमुच्यतेति— हरेः कृष्णस्य, प्रसादा दनुग्रहा द्धेतोः, अघेन अघासुरेण, व्यमुच्यत भावे लङ् । अघासुरो मुक्तोऽभू दित्यर्थः । नराणां जनानां, परम मुत्कृष्ट, मानन्द मासीत् । जगदपकारिणोऽघस्य नाशे जग त्तुतोषेत्यर्थः । सः अघः, कथं केन प्रकारेण, सिद्धान्त इति सिद्धः निर्वृत्तः, अन्तः नाशः, यस्य स सिद्धान्तः, मृत इत्यर्थः । बुधै र्देवैरपि, विशाला अधिका, प्रीतिः प्रेम, अर्था सद्धन्तरि कृष्णे व्यधायि । अहो देवानामपि हृदयशल्यायित इति चित्र मस्य सामर्थ्यमिति भावः । अत्र पूर्वार्धे एकस्य मुक्ति रन्य स्यानन्द इति असङ्गत्यलङ्कारो व्यज्यते । 'विरुद्धभिन्नदेशत्वं कार्यहेत्वो रसङ्गति' रिति लक्षणात् । सः पूर्वार्धप्रतीतवक्यार्थः । मुक्त्यानन्द यो र्वैयधिकरणस्य प्रतिपादनपरत्वेन अपसिद्धान्तभूत इति भावः । सिद्धान्त इति । उत्तरपक्ष इति । बुधै र्विद्वद्भि स्तत्र सिद्धान्ताभासे विशाला प्रीतिः कथं व्यधायि । अहो विदुषामपि व्यामोह श्चित्र मित्यर्थः इति ध्वनिः । अत्रान्योऽप्यर्थः प्रतीयते । हरेः ईश्वरस्य, प्रसादा त्सङ्कल्परूपा दनुग्रहा, दघेन पापेन, व्यमुच्यत पापं मुक्तं, त्यक्तमभव दित्यर्थः । आत्मनो नित्यमुक्तत्वा न्न तस्य ईश्वरप्रसादा त्पुन र्मुक्तिर्भवितु मर्हति । किन्तु आत्मनिष्ठपापवासनामुक्तिरेव मुक्तिरिति भावः । नराणां जीवानां, न रियन्ते न क्षीयन्ते इति नरा इति व्युत्पत्तेः । परमानन्द मासीत् । पापनाशे सति मनश्शुद्धिद्वारा सच्चिदानन्दलक्षणस्वस्वरूपसाक्षात्कारो भवतीति भावः । सः भगवत्सङ्कल्पादेव जीवानां मुक्तिः नतु कैवलात् ज्ञाना दित्ययं योगमतानुसारी वाक्यार्थः । सिद्धान्तः निश्चय इति बुधैः ज्ञानिभि स्साङ्ख्यैरिति यावत् । विशाला प्रीति र्व्यधायी त्यहो साङ्ख्यानां निरीश्वरत्वेन ईश्वर-प्रसादा न्मुक्ति रित्यस्यानङ्गीकारा चित्र मिद मिति भावः ॥ ६६

ग ॥ अथ सङ्क्रान्तया तदीयतेजस्सम्पदा सम्पन्नः कृतान्तनिशान्तादिव त्तदीयवदनकन्दरा दापतद्भि स्सवत्सै र्वत्सपालै रभिनन्द्यमान स्तदपदानमुदितदिविष- दुपपादितमन्दारकुसुमवीचिभि रभ्यर्च्यमान श्चक्रधरः कमपि वचसा मविषयं हर्ष मभजत । ततः ॥ ६७

अथेति– अथ अघासुरप्राणापायानन्तरं, सङ्क्रान्तया स्वस्मिन् मिळितया, तदीयतेजस्सम्पदा अघासुरसम्बन्धितेजोराशिना, लिङ्गशरीररूपेणेत्यर्थः । तस्यैव तेजोमयत्वप्रतिपादनात् नचात्मज्योति रिदमिति भ्रमितव्यम् । आत्मनः ज्ञानैकाकारतया तेजोरूपत्वाभावात् ; नच स्वयं ज्योतिष्ट्वव्याघातः । तत्र ज्योतिश्शब्दस्य ज्ञानार्थकत्वात् । सम्पन्नः युक्तः; एतेन अघासुरः कृष्णसायुज्य माप्तवानिति फलितम् । ननु लिङ्गभङ्गे हि मोक्षः कथ मधुना सलिङ्गस्याघस्य मोक्षः प्रत्यपादीतिचे दुच्यते । मुक्ति र्द्विविधा निर्गुणा सगुणा चेति । तत्र निर्गुणमुक्ति र्ब्रह्मविद **एव**। तस्य प्राणोत्क्रमणन्तु नास्ति । 'तस्य प्राणा नोत्काम' न्तीति श्रुतेः । अत्र मुक्तौ लिङ्गभङ्ग एव । सगुणायास्तु न लिङ्गभङ्गः, नापि प्राणोत्क्रमणाभावः । इदमेव हीश्वरसायुज्यन्नामेत्यलम् । कृतान्तनिशान्तादिव यमसदनादिव, तदीयवदनकन्दरा त्सर्पवक्त्रगह्वरा त्सकाशा, दापतद्भि रागच्छद्भिः, सवत्सैः तर्णकसहितैः, वत्सपालैः गोपै, रभिनन्द्यमानः श्लाघ्यमानः, तदपदानेन तेनाद्भुतकर्मणा, मुदितैः तुष्टैः, दिविषद्भिः देवै, रुपपादिताभि र्वृष्टाभि रित्यर्थः । मन्दारकुसुमवीचिभिः देवतरुपुष्पमालाभिः, अभ्यर्च्यमानः पूज्यमानः, अलङ्कृत इति यावत् । चक्रधरः कृष्णः, कम प्यनिर्वचनीयं, इदमेव स्पष्ट माह । वचसा मविषयमिति, वागगोचर मित्यर्थः । ब्रह्मानन्दत्वा दिति भावः । हर्षं सन्तोष मभजत आप, कृतकृत्यत्वा दिति भावः । ततः अघनाशनानन्तर मित्यर्थः । अघवदननिर्गमनानन्तर मिति वा ॥ ६७

श्लो ॥ अघवदनविमुक्तै स्तत्र गोपालबालै
स्तटभुवि यमुनाया स्सादरं सेव्यमानः
अविरतपरितृप्तोऽप्येष शौरि स्सजग्धि
व्यतनुत ललिताभि र्नन्दय न्नर्मवाग्भिः ॥ ६८

अथेति– तत्र बृन्दावने, यमुनाया स्तन्नामकनद्याः, तटभुवि तीरप्रदेशे, अघवदनविमुक्तैः अघासुरवक्त्रनिर्मुक्तैः, गोपबालै र्वत्सपालै, स्सादरं यथा तथा सप्रेम यथा तथा, सेव्यमानः परिचर्यमाणः, एष पूर्वोक्त श्शौरिः कृष्णः, ललिताभि स्सुन्दराभिः, नर्मवाग्भिः क्रीडावाक्यैः, नन्दयन् सतीर्थ्या नानन्दयन्, सन् अविरतपरितृप्तोऽपि नित्यतृप्तोपि, अवाप्तसमस्तकामत्वा दिति भावः । सजग्धि सहभोजनं, 'सजग्धि सहभोजन' मित्यमरः । व्यतनुत अकरोत् । यमुनातीरे गोपैस्समं शिक्यस्थ मोदनं बुभुजे इति भावः । स्वभावोक्तिः ॥ ६८

श्लो ॥ कूरं मुरारिकमनीयकथोपदंश
माधाय भाजनपुटेषु सुधावधीरि
मोदा त्तदा निजजनान्नरुचिप्रकाश
माचामति स सुरभीशकिशोरराशिः ॥ ६९

कूर मिति– सुरभीशकिशोरराशिः गोपबालपङ्क्तिः, तत्समूह इत्यर्थः । तदा श्रीकृष्ण-भोजनसमकाले, सुधावधीरि अमृततिरस्कृतिचण मित्यर्थः । अमृतादपि स्वाद्विति यावत् । कूर मन्नं, भाजनपुटेषु पात्रभूतेषु पत्रपुटेषु, आदाय स्थापयित्वा, मुरारिकमनीयकथोपदंशं मुरारेः कृष्णस्य, कमनीयाभि र्मनोहराभिः कथाभिः, पूतनानाशनादिवृत्तान्तैः, उपदंशं मुरारिकमनीयकथोपदंशं मुरारिकमनीयकथाः उपदंश्येत्यर्थः । उपदंश स्तृतीयाया मिति णमुल् । 'उपदंशस्तु भक्षण' मित्यमरः ( आन्ध्रे ऊरुगाय ) मांसादिकमिव मुरारिकथा एव उपदंशीकृत्येति यावत् । निजजनान्न-रुचिप्रकाशं निजजनस्य स्वीयजनस्य, अन्नरुचेः स्वभुज्यमानोदनस्वादुत्वस्य, प्रकाशः प्रकटनं, यस्मिन् कर्मणि तत् यथा भवति तथा । परस्पर मन्नस्वादं प्रकाश्येत्यर्थः । मोदा त्सन्तोषा, दाचामति स बुभुजे । आङि चम इति दीर्घः । स्वभावोक्ति रलङ्कारः । मुरारीति विशेषणेन भोजनमध्ये भगवन्नाम-स्मरणस्य कर्तव्यत्वं प्रतिपादितम् । उपदंशेत्यनेन सुधावधीरि कूरादपि भगवत्कथामृतस्य स्वादुत्वाति-शयः फलितः । अन्ना दधिकरुचिमद्वस्तु हि उपदंशीक्रियते । मुरारिकथासु उपदंशत्वरूपणा द्रूपकालङ्कारः ॥ ६९

श्लो ॥ गोपालबालकुलसङ्कुलमूर्ति रेष । वेषं पुपोष पुलिने तलिनेतराभः
राकासुधाकरकरप्रकरस्य तस्य । ताराग्रहैः परिवृतस्य खमध्यभाजः ॥७०

गोपालेति– गोपालानां ये बालाः तेषां कुलेन समूहेन, वत्सपालसङ्घेनेत्यर्थः । सङ्कुला वेष्टिता, मूर्तिर्विग्रहो यस्य स तथोक्तः, तलिनेतराभः अधिककान्तिः । 'तलिनं विरळे स्तोके' त्यमरः । पुलिने तोयोद्धितनदीतटप्रदेशे, 'तोयोद्धितं त त्पुलिन' मित्यमरः । स्थित इति शेषः । एष कृष्णः, ताराग्रहैः ताराः अश्विन्यादयः, ग्रहाः कुजादयः पञ्च, तैः परिवृतस्य परिवेष्टितस्य खमध्यभाजः आकाशमध्यगतस्य, तस्य प्रसिद्धस्य, राकासुधाकरकरप्रकरस्य सुधाया आकराः उत्पत्तिस्थानभूताः, करप्रकराः शेरणसङ्घाः, यस्य स सुधाकरकरप्रकरः अमृतांशु . रित्यर्थः । राकायां पूर्णिमायां, य स्सुधाकर, स्तस्य पूर्णचन्द्रस्येति यावत् । वेषं, पुपोष दधार । तद्वेष-तुल्यवेषधरो बभूवेति निदर्शनालङ्कारः । गोपालबाला स्ताराग्रहवत् पुलिनं खमध्यवत् कृष्ण श्चन्द्रवच्च बभा विति भावः । तत्र कृष्णे प्रसक्तस्य तलिनेतराभत्वविशेषणस्य प्रतिनिर्देशार्थं राकेत्युक्त मिति बोध्यम् । राकासुधाकरेत्यनेनै वाभीष्टार्थसिद्धौ करप्रकरस्येति वचनेन चन्द्रकराः यथा अमृताकरा स्तद्वत्कृष्णकान्तयो ऽप्यमृतस्राविण्य एवेत्याह्लादकत्वतिशयो व्यज्यते ॥ ७०

ग ॥ ततः ॥ तत इति— भोजनानन्तर मित्यर्थः ॥

श्लो ॥ प्रभूतमधुसूदनप्रियकथासुधामाधुरी
विजृम्भपरिरम्भजप्रमदभूमविस्मारिता
तदा न बुबुधे तरा मतिदवीयसी मप्यसौ
शकृत्करिपरम्परां सुरभिपालबालावलिः ॥ ७१

प्रभूतेति— प्रभूतः समग्रो, मधुसूदनस्य कृष्णस्य, सम्बन्धिनीषु प्रियासु कथासु वार्तास्वेव सुधासु अमृतेषु, यः माधुरीविजृम्भः माधुर्यातिशयः, तस्य परिरम्भजेन आस्वादनजातेन, प्रमद भूम्ना आनन्दातिशयेन, प्रकृष्टमदातिरेकेणेति च गम्यते। विस्मारिता विस्मृतिं गमिता, तथोक्ता असौ सुरभिपालबालावलिः गोपालबालसङ्घः, तदा स्वभोजनावसरे अतिदवीयसी मतिदूरामपि, शकृत्करिपरम्परां वत्ससङ्घं, न बुबुधे तराम् अत्यन्तं नोबोदेत्यर्थः। किमेतिङित्याम्। अत्र उत्तरवाक्यार्थस्य वत्साज्ञानस्य प्रभूतेति पदार्थहेतुकत्वा त्काव्यलिङ्गम्। प्रमदेत्यनेन वासो यथा परिहृतं मदिरामदान्ध इत्युपमा ध्वन्यते। किञ्च भगवदेकरसता मापद्य वत्साः किमपि नविदुरिति सगुणध्यानस्य पराकाष्ठा च सूचिता। 'देहं च नश्वर मवस्थित मुद्धितं वा सिद्धो न पश्यति यतोध्यगम त्स्वरूप' मित्युक्तत्वात् ॥ ७१

ग ॥ समनन्तरं समं ततः प्रसार्य विलोचन मवलोकनपथ मतिक्रान्तं वत्स-सञ्चय मनालक्ष्य वैलक्ष्यविषादकबळितेषु वत्सपालेषु ॥ ७२

समनन्तर मिति— समनन्तरं स्वप्रमादेन वत्सापसरणानन्तर मित्यर्थः। समं ततः सर्वदिक्षु विलोचनं दृष्टिं, प्रसार्य सर्वत्र दृष्ट्वेत्यर्थः। अवलोकनपथं दृष्टिमार्गं, अतिक्रान्त मतिक्रम्य वर्तमानं, वत्ससञ्चयं तर्णकसङ्घं, मनालक्ष्य अदृष्ट्वा, वत्सपालेषु गोपबालेषु, वैलक्ष्यं त्रपा, वत्सै र्वञ्चितत्वादिति भावः। विषादः खेदः, स्वपाल्यवत्सापगमेन तत्प्रभुसकाशा च्छिक्षाप्राप्तिसम्भावनायेति भावः। ताभ्यां कबळितेषु व्याप्तेषु सत्स्वित्यर्थः ॥ ७२

श्लो ॥ यशोदादायादो निरवधिपरीतापलहरी
परीता नातन्वन् सपदि मुदितान् गोपतिसुतान्
विचिन्वन् वत्सानां चरणसरणिं मंक्षु गहनं
जगाहे भक्तार्तिच्छिदुरमधुरस्मेरवदनः ॥ ७३

यशोदेति— यशोदादायादः कृष्णः, निरवधिपरीतापलहरीपरीतान् दुरन्तचिन्तासन्तानदन्तुरि-तान्, अत्यन्तपरितप्ता नित्यर्थः। गोपतिसुतान् गोपालबालान्, सपदि तत्काले, मुदितान् तुष्टान्, आतन्वन् कुर्वन्, पूतनादिनाशनेन भगवदनुभावस्य विदितत्वात्। कृष्णोऽस्मदीयान् वत्सान्

ध्रुव मानेष्यतीति श्रीकृष्णं शरणं गतानां, वत्सानां वत्सान्वेषणे भगवतः प्रवृत्त्या महान् सन्तोष आसी दिति भावः। वत्सानां चरणसरणिं पादमार्गं, पादन्यासपथ मित्यर्थः। पादरीति मितिवा। विचिन्वन् अन्वेषयन् भक्तार्तिच्छिदुरमधुरस्मेरवदनः भक्ताना मार्तिच्छिदुरः पीडानिवारणशीलः, मधुरः मनोज्ञः, स्मेरः स्मितं, वदने यस्य सः तादृशस्मेरयुक्तं वदनं यस्येति वा तथोक्त स्सन्। मंक्षु शीघ्रं, गहनं वनं, जगाहे विवेश। गोपालानां वत्सापगमजन्या मार्तिं स्मेरेणैव हृतवान्; किं पुन र्वत्सान्वेषणेनेत्यर्थापत्ति र्व्यज्यते। किञ्च स्मेरवदन इत्यनेन अयं कृष्णो न वत्सपालसजातीयानुभावः किन्तु तद्विलक्षणः परमानन्द ईश्वरएवेति कृत्वा नास्य स्ववत्सापहरणजं दुःख मीषदपीति गम्यते। अपिच यशोदादायादः अतिसुकुमारोऽपि भक्तार्तिच्छेदार्थं गहनं जगाहे इत्यहो अस्य भक्तपक्षपातित्व मिति गम्यते। अत्यार्तानपि सपदि मुदिता नातन्व न्नित्यनेन भगवच्छरणागतिरेव दुःखपरम्पराया अवधिरिति सूचितम्। आर्तगोपतिसुतसन्तोषणाभिप्रायगर्भं भक्तार्तीत्यादि कृष्णविशेषणमिति परिकरालङ्कारः॥ ७३

**ग॥ तमेव समय मम्भोजसम्भव स्सरभस मघासुरावष्टम्भसम्भारविघटनसमय मनुभूतमपि भगवत श्चतुर्भुजस्य महिमानुभाव मसम्भूतविस्रम्भतया भूयोपि विभावयितुकाम स्समापत्य सवत्सान् वत्सपाला नपजहार॥ ७४**

त मिति– तमेव समयं 'कालाध्वनो रत्यन्तसंयोगे' इति द्वितीया। तस्मिन्नेव समये इत्यर्थः। अम्भोजसम्भवः ब्रह्मा, अघासुरस्य अवष्टम्भसम्भारस्य गर्वातिशयस्य, विघटनसमयं विनाशनसमये, अनुभूतं साक्षात्कृतमपि, भगवत श्चतुर्भुजस्य कृष्णस्य, महिमानुभावं महिमातिशयं, असम्भूत विस्रम्भतया अजातविश्वासत्वेन हेतुना, भूयः पुनरपि, विभावयितुकामः दिदृक्षुः सन्, सरभसं शीघ्रं, मापत्य आगत्य, सवत्सान् वत्ससहितान्, वत्सपालान् गोपालबालान्, अपजहार अपहृतवान्। पुलिनस्थान् वत्सपालान् वनान्तरस्थान् वत्सांश्च कृष्णपरोक्षस्था नपजहारेति भावः॥ ७४

**ग॥ भगवानपि विपिनसीमनि विचित्य चिरतर मलब्धवत्सोपलब्धिः पुनरपि पुलिनोपकण्ठ मासाद्य तत्र वत्सपाला नप्यनवलोकयन् मुहूर्तमात्रमिव चित्रीयमाणचित्त स्सकल मेतदपि कमलसम्भवदम्भसम्भूत मिति दिव्यचक्षुषा साक्षात्कुर्वाण स्तत्क्षणमेव तदुभयात्मक मात्मान मकल्पयत्॥ ७५**

भगवा निति– भगवानपि कृष्णश्च, विपिनसीमनि वनदेशे, चिरतरं चिरा, द्विचित्य अन्वेषयित्वा, अलब्धवत्सोपलब्धिः अप्राप्तवत्सप्राप्तिः, वत्सा नप्राप्येत्यर्थः। पुनरपि पुलिनोपकण्ठं पुलिनसमीप, मासाद्य प्राप्य, तत्र पुलिने, वत्सपालानपि अनवलोकयन् अपश्यन्, मुहूर्तमात्रं मुहूर्तपरिमितिकाले, चित्रीयमाणचित्त इव विस्मितमना इव, भूत्वेति शेषः। नतु वस्तुत स्तथेति इव शब्दनिवेशाभिप्रायः। एतत्सकलमपि वत्सवत्सपालापहरणम् सर्वं कार्यं, कमलसम्भवस्य ब्रह्मणो,

दम्भा दूर्वा, त्सम्भूतं जातं, इत्येवं दिव्यचक्षुषा यौगिकज्ञानेन, साक्षात्कुर्वाणः जानन्, तत्क्षणमेव आत्मानं स्वं, तदुभयात्मकं वत्सवत्सपालमय, मकल्पय न्निर्ममे। मायया एकोपि स्वयं तदु भयात्मना ऽपरिणमतेत्यर्थः। 'बहुस्यां प्रजायेयेति' सङ्कल्प्य 'सच्च त्यच्चाभव' दिति ईश्वरस्य प्रपञ्चाकारपरिणामश्रवणात्। प्रकृतवत्साद्यात्मकपरिणामो न चित्र इत्यभिप्रायेण भगवानिति पदं प्रयुक्तं मूलकृता। वस्तुतो निर्गुणस्यापि मायावशात् षाड्गुण्यपरिपूर्ति रिति मायिन स्तस्य एवं परिणामः युक्त एवेति भावः॥ ७५

श्लो॥ वत्सा स्ते वत्सपाला यदुतनयमया स्साय मासाद्य सद्म
स्वं स्वं प्रेम्णप्ररोहं परिपुपुषु रमी पूर्ववं त्स्वस्वमातुः
यावत्संवत्स मेवं विहरणपरता मस्य गूढा मवागा
द्रामो वा नैव चित्रं विकृति रुदभव त्तेषु न प्राग्दशायाः॥ ७६

वत्सा इति– ते पूर्वोक्ताः, अमी एते, यदुतनयमयाः कृष्णात्मकाः वत्साः वत्सपाला श्च, सायं सायङ्काले, स्वं स्वं नियत मित्यर्थः। सद्म गृह, मासाद्य प्राप्य, पूर्वव त्पूर्वदिने इव, स्वस्वमातुः स्वा स्वा माता स्वस्वमाता तस्याः वीप्सायां द्विर्भावः। स्त्रियाः पुंवदिति पुंवद्भावः; प्रतिनियतायाः जनन्या इत्यर्थः। तत्सम्बन्धिनं प्रेमप्ररोहं स्नेहाङ्कुरं, परिपुपुषुः पोषयामासुः। अस्य कृष्णस्य, गूढां रहस्या, मेवंविहरणपरतां एवंरीत्या विहारासक्ततां, यावत्संवत्सं संवत्सरपर्यन्तं, 'संवत्सरशारदो वत्स' इति निघण्टुसारे। रामो वा बलभद्रोऽपि, नित्यसहचरोऽपी त्यपे र्थः। नावागादेव नैव बुबुधे। तेषु वत्सेषु वत्सपालेषु च प्राग्दशायाः पूर्वावस्थातः, तदपेक्षयेत्यर्थः। विकृति र्विकारः, वैपरीत्य मिति यावत्। नोदभवत् नोद्भूता, विकृतौ सत्यां रामो जानीयादिति भावः। चित्र माश्चर्यम्। श्रीकृष्णस्यायं विहारोऽद्भुत इति भावः॥ ७६

श्लो॥ गवां गोपालाना मपि निजनिजापत्यविषये
निपीय प्रेमाणं निरवधि मनास्वादितचरम्
बलो विस्मेरान्तःकरणसरणि र्वर्षविरतौ
कथञ्चि त्ता नेका न्मुररिपुविवर्ता न्निरचिनोत्॥ ७७

गवा मिति– गवां वत्सजननीनां, गोपालानां वत्सपालजनकानां च, निजनिजापत्यविषये स्वस्वपुत्रविषये, जातमिति शेषः। नास्वादितचरं अननुभूतपूर्वं, 'भूतपूर्वे चरट्'। निरवधिं अतिवेलं, प्रेमाणं प्रीतिं, निपीय दृष्ट्वा, परमप्रेमास्पदत्वं दृष्ट्वेत्यर्थः। विस्मेरान्तःकरणसरणिः विस्मेरो विस्मयः, तद्युक्ता अन्तःकरणसरणिः मनोरीति र्यस्य सः, विस्मितमना इत्यर्थः। बलः बलरामः, वर्षविरतौ संवत्सरान्ते, ता नेतान् वत्सवत्सपालान्, मुररिपुविवर्तान् श्रीकृष्णपरिणाम

भूतान्, तदात्मका निति यावत्। कथञ्चि त्कृच्छ्रेण, निरचिनो न्निश्चितवान्। इदानीं गावो गोपाला श्च स्वस्वापत्येषु परमप्रेम कुर्वन्ति; पूर्वन्तु प्रेममात्रं। परमप्रेमास्पदत्वं च स्वस्वात्मन एव घटते; नतु जायापुत्रादेः। कृष्णस्य तु परमप्रेमास्पदत्वं युज्यते; स्वस्वात्माभिन्नत्वात्। अत एते वत्सा वत्सपाला श्च सर्वे मुररिपुमया एवेति निर्धारितवा नित्यर्थः॥ ७७

**ग॥ चतुराननोऽपि संवत्सरावसाने वसुमती मवतीर्य यथापुर मेव विहरमाणान् सवत्सान् वत्सपाला नवलोकयन् किमपि मोहगहन मवगाह्य याथार्थ्य मवगन्तु मसमर्थः पुरुषोत्तम मस्तौषीत्। तथाहि॥ ७८**

चतुरानन इति– चतुराननोऽपि ब्रह्मा च, संवत्सरावसाने मानुषमानेन संवत्सरपरिमितकालस्यान्ते इत्यर्थः। वसुमतीं भुव, मवतीर्य प्राप्य, यथापुरमेव पूर्ववदेव, विहरमाणान् क्रीडतः, सवत्सान् वत्ससहितान्, वत्सपाला नवलोकयन् पश्यन्, किम प्यनिर्वाच्यं, मोहगहनं मोहरूपं कानन, मवगाह्य प्रविश्य, मोहं प्राप्येत्यर्थः। स्वनीतवत्सवत्सपालानां गुहान्त स्वरुध्यमानत्वा दत्र पुन स्तद्दर्शनेन किं ममै वायं व्यामोहः उत भगवन्मायेति सन्दिह्येति भावः। याथार्थ्यं भगवत स्तत्व मवगन्तुं ज्ञातु मसमर्थस्सन् यद्वा याथार्थ्यं दृश्यमानवत्सवत्सपालयथार्थस्थिति मित्यर्थः। पुरुषोत्तमं पुरुषेषु जीवेषु, उत्तमं मायाऽनभिभूतत्वा च्छ्रेष्ठ मित्यर्थः। कृष्णमिति यावत्। अस्तौषीत् स्तुतवान्। ष्टुञ् स्तुता वित्यस्मा ल्लुङ्। तथाहि स्तुतिप्रकारमेव प्रतिपादयति कवि रित्यर्थः॥ ७८

तावत् मायया प्रपञ्चाकारेण परिणतस्य तव वत्साद्यात्मना परिणामोऽयं न चित्र इत्याह–

**श्लो॥ जगज्जीवाभेदस्फुटनपरयैव श्रुतिगिरा**<br>
**निरस्तं द्वैतं ते स्वगतमपि नैवाद्भुत मिदम्**<br>
**तथापि प्रागल्भ्यं त्वयि भजति यत्पञ्चजनता**<br>
**तदस्माकं मायाकबलितहृदां वञ्चनकला॥ ७९**

जगज्जीवेति– जग दचेतनम्, जीव श्चेतनं, ताभ्या मभेदः जगज्जीवाभेदः, चेतनाचेतनद्वयप्रयुक्तभेदाभाव इत्यर्थः। तस्य स्फुटनं प्रकटनं, तत्र परया व्यग्रया, आसक्तयेत्यर्थः। तव जगत्सकाशात् जीवसकाशाच्च भेदाभावं प्रतिपादयितुं प्रवृत्तयेति यावत्। श्रुतिगिरा 'एक मेवाद्वितीयं ब्रह्मेति' श्रुत्या, ते स्वगत मपि चैतन्यं भेदः द्वित्वं चेति गम्यते। निरस्त मेव। भेदो हि त्रिविधः। सजातीयो विजातीय स्स्वगतश्चेति। यथा वृक्षस्य वृक्षान्तरा त्सजातीयः, पर्वतादे र्विजातीयः, स्वगतफलपुष्पादिना स्वगतश्च। एवं प्रकृते चेतनस्य ब्रह्मणः अचेतना ज्जगतो न विजातीयभेदः 'सर्वं खल्विदं ब्रह्मे' ति जगतो ब्रह्मात्मकत्वश्रवणात्। नापि जीवा त्सजातीयभेदः 'अय मात्मा ब्रह्मे' ति जीवब्रह्मणो रेकत्वश्रवणात्। नापि स्वगतभेदः अविकृतत्वश्रवणात्। नन्वेवम् श्रुत्यन्तरै र्भेदत्रयं प्रतिषिद्धं भवतु नाम। कथ मेक मे वाद्वितीयं ब्रह्मेति श्रुत्यै वेत्युक्त

मितिचे दुच्यते । अद्वितीय मित्यनेन विजातीय भेदनिषेधः । एक मित्यनेन सजातीयभेदनिषेधः। एवेत्यनेन स्वगतभेदनिषेध इति । तस्मात् इदं नैवाद्भुतं न चित्रमेव । ब्रह्मण स्त्वत्तः भिन्नस्य कस्य चिदपि वस्तुनोऽभावात् । इमे वत्सादयः त्वदात्मिका एवेति नाश्चर्यमिति भावः । नन्वेवं यद्यहं परमात्मा तर्हि किमिति तथापकृतं त्वयेत्यत आह । तथापीति तथापि, तव परमात्मत्वेपीत्यर्थः । त्वयि परमेश्वरे, पञ्चजनता मानुषत्वं, पञ्चसङ्ख्यायुक्तजनत्वं च गत्यते । प्रागल्भ्यं भजतीति यत् प्रकाशं प्राप्नोतीति यत् , त्वं मानुषाकारेण प्रतीयसे इति य दित्यर्थः । तत् मानुषत्वाश्रयणम् मायाकबळितहृदां त्वत्प्रकृत्यपहृतज्ञानानां अस्माकं जीवानां, वञ्चनकला प्रतारणचातुरी भवति । लीलामानुषं परमात्मानं भवन्तं त्वन्मायामोहितत्वेन प्राकृतमानुषं मत्वा मया तथाऽपकृतम् । अयं चापकारस्त्वय्येव विश्राम्यति न तु मयि; मम त्वन्मायापरतन्त्रत्वा दिति भावः । यस्मिन् द्वित्वमेव श्रुत्या निषिध्यते तस्मिन् पञ्चजनत्व मत्यन्तासम्भवितं; तथापि तत्प्रकटनं वञ्चनै वेति ध्वनिः ॥ ७९

श्लो ॥ सतो दुःखस्यान्तो नहि सुख मसद्वा तव विभो !
फलं साक्षात्कारा दपि तु निजरूपेण भवनम्
अमत्वेदं तत्त्वं किमपि फल मुद्दिश्य भजता
मबोधानां प्रान्ते फल मुपनतभ्रान्तिविलयः ॥ ८०

सत इति– हे हरे ! तव साक्षात्कारा ज्जायमान मिति शेषः । फलं सतः सत्यस्य, दुःखस्य अन्तो नाशो न भवति 'तरति शोक मात्मवि' दिति श्रुत्या ज्ञानविवर्त्यत्वेनावगतस्य शोकस्य शुक्तिरजतव न्मिथ्यात्वेन सत्यस्य दुःखस्यै वाभावा दिति भावः । ( यदि दुःखस्य सत्यत्वं तर्हि ज्ञाननिवर्त्यत्वं न भवत्वेव । न हि सत्या शुक्ति र्ज्ञानेन निवर्त्यते; किन्तु नेदं रजतं किन्तु शुक्तिरेवेति प्रमया मिथ्याभूतं रजतमेव निवर्त्यते । तथा सत्यदुःखस्य ज्ञानानिवर्त्यत्वे सिद्धे 'तरति शोक मात्मवि' दिति श्रुते रप्रामाण्यं स्या दित्याशयः । ) असत् मिथ्याभूतं, सुखं वा न हि न भवत्येव । किन्तु सत्यसुख मेवेत्यर्थः । ब्रह्मसाक्षात्कारस्य स्वरूपसुखाभिव्यक्तिफलकत्वेन विषयवत् क्षुद्रसुखजनकत्वाभावादिति भावः । यद्वा असत् अविद्यमानं, सुखं वा न भवति; किन्तु विद्यमान-मेवेत्यर्थः । कण्ठचामीकरन्यायेन नित्यसिद्धसुखस्याविर्भावमात्रं; न तु त्वत्साक्षात्कारे णाविद्यमानः कश्चि दानन्दो जायते इति भावः– अपितु किन्तु, निजरूपेण स्वस्वरूपेण, भवन मवस्थानं, काल्पनिकं जीवत्ववेष मपहाय सच्चिदानन्दलक्षणेन स्वस्वरूपे णावस्थानमित्यर्थः । फलं भवति– इदं तत्त्वं याथार्थ्यं, अमत्वा अज्ञात्वा, तत्त्व मज्ञातमिति पश्चात्तापं प्राप्येत्यर्थः । किम प्यनिर्वचनीयं फलं मोक्ष मुद्दिश्य अपेक्ष्य, भजतां सेवमानानां, अबोधाना मनिष्पन्नतत्त्वज्ञानानां, अनुदरा कन्येतिव दीर्घदर्थे समासः । प्रान्ते समाधिनिष्पत्त्यनन्तरं उपनतभ्रान्तिविलयः उपनतायाः प्राक्सिद्धायाः, भ्रान्तेः अविद्याकृतस्य, देहादि ष्वहमिति भ्रमस्य, विलयो निवृत्तिः, फलम् आत्म-साक्षात्कारे सति अनात्मस्वात्मत्वबुद्धि निर्वर्तते इति भावः । अत्रेदं व्यङ्ग्यम् । हे विभो

स्वामिन्! तव साक्षात्कारा द्दर्शना त्फलं, सतः विद्यमानस्य दुःखस्यान्तो न भवति। दारिद्य दुःखं नापसरतीति भावः। एतेन अनिष्टनिवारणरूपपुरुषार्थाभाव उक्तः। असत् त्वदाश्रयणा त्पूर्वं मविद्यमानं, सुखं वस्तुवाहनादिलाभजन्य आनन्दः नहि। यद्वा असत् स्वल्पमपि सुखं नहि। लुब्धाग्रेसरेण त्वया कियतोऽपि धनादे रवितीर्णत्वात्। अनेन इष्टप्राप्तिरूपपुरुषार्थाभाव उक्तः। अपितु निजरूपेण भवनं फलं त्वदाश्रयणा त्पूर्वं यादृश मवस्थानं तादृशमे वाधुनापीत्यर्थः। गृहालम्बिकुमारीव नैधते, न च शुष्यतीति न्याया दिति भावः। किमपि मरुमरीचिकाजलव दसम्भावितं फल मुद्दिश्य भजतां त्वां सेवमानानां, अबोधाना मज्ञानां, परकीयकपट मजानता मित्यर्थः। प्रान्ते चिरसेवाकृतनिर्वेदानन्तरं, उपनतायाः प्रभुणा पुनः पुनः क्रियमाणै श्शुष्कप्रियै रुत्पन्नायाः इत्यर्थः। भ्रान्तेः लुब्धप्रभुविषयकदातृत्वभ्रमस्येत्यर्थः। विलयो नाशः, फलं दातृत्वभ्रमनिवृत्त्यनन्तरं निरर्थकसेवाप्रवृत्त्यभावा द्भ्रमनाशस्य फलत्वमिति भावः। व्यङ्ग्यार्थोऽप्ययं वस्तुतो भगवति योजयितुं शक्यएव। तथाहि 'यस्यानुग्रह मिच्छामि तस्य वित्तं हरा म्यह' मित्यादिवचनात् भक्तिदार्ढ्यपरीक्षार्थं भगवान् भक्तेभ्यः दुःखस्यानन्तरं दुःखमेव प्रदत्ते नतु सुख मिति श्रीविष्णुसेवया विद्यमानदुःखनिवृत्ति र्नास्त्येव। अस दविद्यमानसुख मपि नहि। विद्यमानं सुखमपि योऽपहृत्य दुःखं प्रदत्ते स कथ मविद्यमानं सुखं दद्या दिति भावः। अपितु निजरूपेण भवनं फलम् यथा उत्पत्तिदशाया मसहायः तथाऽधुनापि केवलं वर्तते न पुन रलमलकमालम प्यवशिष्यते इति भावः। इदं तत्त्वं भगवत्सेवया सांसारिकसुखं सर्व मप्यपैतीति याथार्थ्य मज्ञात्वा किमपि गजाश्वादि लाभरूपं फल मुद्दिश्य भजता मज्ञानिनां प्रान्ते दारपुत्रादिसर्वस्यापहरणानन्तरं उपनतभ्रान्तिविलयः फलं गृहदेहादिगताहंममेति भ्रमनिवृत्तिरेव फल मिति भावः॥ ८०

श्लो॥ पुराण स्त्वं माया तव च गृहिणी त्वं च नितरा
मसङ्ग स्सापि त्वां स्पृशति न कदापि प्रणयतः
तवेयं सान्निध्या त्परमपि तु सूते जग दिति
प्रवादोऽयं मिथ्या न भवतु कथं निश्चितधियाम्॥ ८१

पुराण इति– त्वं पुराणः अनादिः, तव गृहिणी भार्या माया, प्रकृतिश्च; चा त्पुराणशब्दानुकर्षः। स चानुकृष्टः पुराणशब्दः स्त्र्यन्तत्वेन विपरिणम्यते। पुराणी अनादिरित्यर्थः। 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभाव' पीति वचनात्। त्वं नितरा मत्यन्तं, असङ्ग स्सङ्गरहितश्च 'असङ्गो ह्ययं पुरुष' इति श्रुतेः। सापि माया, त्वां प्रणयतः स्नेहात्, कदापि कदाचिदपि, न स्पृशति न बध्नातीत्यर्थः। ईश्वरस्य स्वाधीनमायत्वा दिति भावः। अपितु किन्तु, इयं माया, तव सान्निध्या त्परं सन्निधिमात्रादेव, जग त्प्रपञ्चं, सूते कल्पयति। अयस्कान्तव न्निर्विकारस्यापि तव सन्निधिमात्रेण जडापि माया जगत्कल्पनसमर्था भवतीत्यर्थः। इत्ययं प्रवादः प्रकृष्टोपवादः, श्रुतिप्रघोष इत्यर्थः। निश्चितधियां ज्ञानिनां, मिथ्या न कथं भवतु? पामरदृष्ट्यैव प्रपञ्च स्सत्यः,

तत्त्वदृष्ट्यातु मिथ्यैवेति परमार्थः । जगत स्सत्यत्वे प्रवादस्य सत्यत्वं स्यात् । यथा जग न्मिथ्या तथैव प्रवादोऽपि मिथ्येति भावः । जगतो मिथ्यात्वन्तु मायाकार्यत्वा दिति बोध्यम् । व्यङ्ग्यार्थस्तु त्वं पुराणः वृद्धः तव गृहिणी माया तन्नाम्नी काचन स्त्री पुराणी वृद्धा । एतेन उभयोरपि प्रजोत्पादनानर्हता सूचिता । क्वचित् वृद्धानामपि रिरंसा दृश्यते । तव तु सापि नास्ती त्याह असङ्ग इति– अनुरागरहित इत्यर्थः । मास्तु तव तस्या मनुरागः । गृहिणी रिरंसुश्चे त्प्रजा सम्भवेत्, तदपि नास्तीत्याह । सापि त्वामिति– स्पर्शएव नास्तीति सम्भोगार्हता तु दूरत एवेति भावः । अपितु तव सान्निध्या त्परं जग त्सूते । जगच्छब्देन तत्स्था जना लक्ष्यन्ते । तेन बहुप्रजत्वं वस्तु व्यज्यते, इत्यजहल्लक्षणामूलो वस्तुध्वनिः । बहुप्रजाः जनयतीत्यर्थः । इत्ययं प्रवादः लोकापवादः । निश्चितधियां तत्त्वमिथ्याविवेचनचतुराणा मित्यर्थः । मिथ्या कथं न भवतु ? मूढास्तु किंकिं न सम्भाव्यन्ते इति न्यायेन तदपि सत्यं मन्वते नतु सुधिय इति भावः ॥ ८१

**श्लो ॥ मन स्स्वैरं लोके विहरदुपरुध्यामितफले**
**प्रकल्प्याशां बोधाङ्कुरभरणकृत्ये नियमयन्**
**फलं भुङ्क्षे तस्यामृतमय मुपान्ते जड मिति**
**प्रतार्येदं ; माया कथमिव निवर्त्या तव जनैः ?** ८२

मन इति– स्वैरं यथेच्छं, लोके विहरत् भ्राम्यत्, विक्षिप्तमिति यावत् । मनः चित्त, मुपरुध्य निरुध्य, अभ्यासवैराग्याभ्या मुपरतवृत्तिकं कृत्वेत्यर्थः । अमितफले मोक्षे, आशां प्रकल्प्य उत्पादयित्वा, मुमुक्षाया मनोधर्मत्वादिति भावः । बोधाङ्कुरभरणकृत्ये बोधाङ्कुरस्य ज्ञानाङ्कुरस्य, षडङ्गाध्ययनजन्यस्य आपातब्रह्मज्ञानस्येत्यर्थः। भरणकृत्ये पोषणविधौ, नियमयन् नियुक्तं कुर्वन्, उत्पन्नोपि ज्ञानाङ्कुरः मनस्स्थैर्याभावे नश्यतीति भावः । तस्य ज्ञानाङ्कुरस्य सम्बन्धि, अमृतमयं मोक्षरूपं फलं, उपान्ते प्रान्ते, जड मचेतन मिति हेतोः । इदं मनः, प्रतार्य वञ्चयित्वा, भुङ्क्षे अनुभवसि; मोक्षदशायां जडस्य मिथ्याभूतस्य मनसोऽपि कतकरेणुन्यायेन नाशा दिति भावः । तव माया जनैः कथं निवर्त्या निरसनीया ? न कथञ्चिदित्यर्थः । पूर्वार्धेन भगवतः परमकृपालुत्व मन्तर्यामित्वं च फलं भुङ्क्षे इत्यनेन फलभोक्तुरात्मन स्सकाशा द्भेदाभावश्च उक्तं भवति । व्यङ्ग्यार्थस्तु स्वैरं लोके विहरत् तत्र तत्र यथेष्टसञ्चारेणोदरभरणं कुर्वाण मित्यर्थः । मन इति क्लीबत्वनिर्देशेन कश्चि त्पुरुषकाररहितो जनो व्यज्यते । त मुपरुध्य अमितफले अधिकफले आशां प्रकल्प्य बोध उपायः तत्पूर्वक मङ्कुरभरणकृत्यं तत्र नियमयन् अङ्कुररक्षणे कृते तव महान् लाभो भविष्यतीति आशा मुत्पाद्य अनन्यव्यापारतया तत्र स्थापयन्नित्यर्थः । तस्य अङ्कुरस्य चूतादिप्ररोहस्येति यावत् । अमृतमय मतिमधुर मित्यर्थः । फलं उपान्ते इदं मनः, अयं जनः, जडः मूढ इति प्रतार्य तं वञ्चयित्वेत्यर्थः– भुङ्क्षे । तव माया कपटः, जनैः कथमिव निवर्त्या ? परहृदय स्याप्रत्यक्षत्वा दिति भावः ॥ ८२

श्लो ॥ पुराण स्त्वं जाया प्रकृति रसती हन्त निखिला
जडा स्त्वत्तो जाता इति तव जगत्या अपि विभोः
न संसारे सौख्यं य दिह रुचि मुच्चां विघटयन्
करोषि त्वत्तुल्यं श्रितमपि नवीनं तु त दिमम् ॥ ८३

पुराण इति– त्वं पुराणः अनादिः, उपलक्षण मिदं मध्यान्ताभावयोः, तथा त्रिकालाबाध्य इत्यर्थः; सत्य इति यावत् । जाया अनपायिततरा तव भार्याभूता प्रकृति र्माया, असती मिथ्याभूता, ज्ञाननिवर्त्यत्वा दिति भावः । त्वत्तस्सकाशा ज्जाता उदिताः, निखिलाः सर्वे, आकाशादयः पदार्थाः- 'आत्मन आकाश स्सम्भूत' इत्यादि श्रुतेः– जडा अचेतनाः, 'अजो नित्य श्शाश्वतोऽयं पुराण' इति श्रुते र्जीवो न जायते एवेति भगवत स्सकाशा दचेतनाना मेवाविर्भावः नतु चेतनाना मिति भावः । इति हेतोः परमेश्वरत्वा दिति भावः । जगत्याः लोकस्य, विभोः ईश्वरस्य, तव संसारे सौख्यं क्षुद्रसुख मित्यर्थः । न नास्ति । आत्मरतत्वा दिति भावः । जीवास्त्वन्मायापारतन्त्र्या त्क्षुद्रसुख मीहन्ते; त्वन्तु मायित्वा न्नतथेति मुख्यार्थः । इह संसारे उच्चां स्वभाववशा दधिकां, रुचिं प्रीतिं, विघटयन् । दारपुत्राद्यपहरणद्वारा सर्व मनित्यमिति दृढं ज्ञान मुत्पाद्य विषयवैराग्यं जनयन्निति भावः । श्रितं भक्तमपि, त्वत्तुल्यं परमेश्वरं करोषीति यत् त्वत्सायुज्यं तदासीति य दित्यर्थः । त दिदं तु नवीनं चित्रम् न कश्चिदपि सेवकस्य स्वं पदं ददाति; त्वन्तु स्वमेव ददासीति तव कृपालुना आश्चर्यकरीत्यर्थः । अत्रेदं व्यङ्ग्यम् । त्वं पुराणः वृद्धः । अनेन सम्भोगानर्हशरीरता सूचिता । जाया प्रकृतिः भार्यास्वभावः असती दुष्टा, अनेन अनुकूलदाम्पत्याभाव स्सूचितः । त्वत्तो जाता निखिला स्सुताः जडाः मूढाः; विद्याहीन्या त्पशव इत्यर्थः । 'पुत्र श्शत्रु रपण्डित' इति न्याया दिदं मह द्दुःख मिति भावः । इतिहेतोः जगत्याः विभोः पतेः, महाराजस्येत्यर्थः । अपि तव संसारे सुखं नास्त्येव । भूपतेरपि दारपुत्राद्यानुकूल्यमूलकं हि संसारसुखमिति भावः । इह संसारे उच्चां रुचिं विघटयन् श्रितमपि त्वत्तुल्यं स्वामिव संसारसुखरहितं करोषीतीदन्तु नवीन मित्यर्थः । ईदृशी पुन रसूया न क्वापि दृष्टचरेति भावः ॥ ८३

एवं पञ्चभिः स्तुत्वा अधुना स्वापराधक्षमं प्रार्थयते–

श्लो ॥ तवापाङ्गै स्तुङ्गै स्सरसिजविलासप्रतिभटै
र्दयासारै स्सारै रमृतरसकल्लोलमधुरैः
प्रतप्त स्सिक्तं मां विरचय यदज्ञानविधया
कृतं वा चापल्यं तदपि सपदि क्षाम्यतु भवान् ॥ ८४

तवेति—प्रतप्तं सांसारिकतापसन्तप्तं, मां एतेन 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जु' नेति गीतावचनात् ब्रह्मणोऽपि स्थानभ्रंशादिसन्तापोऽस्तीति फलितम् । सरसिजविलासप्रतिभटैः कमललीलातुल्यलीलाशालिभि रित्यर्थः । एतेन भगवतः पुण्डरीकाक्षत्वं सिद्धम् । अमृतरसकल्लोलभरितैः सुधारसतरङ्गपरिपूरितैः एतेन परमाह्लादकत्व मुक्तं भवति । दयासारैः कृपाधारासम्पादितैरिति भेदेप्यभेदातिशयोक्तिः । दयारसवर्षिभि रित्यर्थः । सारैः श्रेष्ठैः, तुङ्गैः रुन्नतै, रमितप्रभावै रित्यर्थः । तव अपाङ्गैः कटाक्षैः, सिक्तं आर्द्रीकृतं विरचय कुरु । अज्ञानविधया ज्ञानाभावरीत्या मोहरीत्येतिवा । यद्वा यच्च चापल्यं चपलत्व मपराध इति यावत् । कृतं मयेति शेषः । तत् सपदि इदानीं भवान् त्वं क्षाम्यतु क्षमस्वेत्यर्थः । प्रार्थनायां लोट् । नायं बुद्धिपूर्वकृतापराधः मद्बुद्धे स्त्वन्मायापरतन्त्रत्वादिति तव मायाकारितं त्वं क्षन्तु मर्हसीति भावः ॥ ८४

**श्लो ॥ विरिञ्चि श्श्रेयसां दायं । धायं त्रिजगतामपि**
**स्तुत्वैव मखिलेशान । मगम त्पद मात्मनः ॥ ८५**

विरिञ्चिरिति— विरिञ्चि र्ब्रह्मा, श्रेयसां शुभानां, दायं दातारं, त्रिजगतां लोकत्रयस्यापि, धायं धर्तारम् । डुदाञ् दाने डुधाञ् धारणपोषणयोरिति धात्वोः श्याद्यधे त्यादन्तलक्षणो णप्रत्ययः । आतो युगिति युक्च । अखिलेशानां सर्वेश्वरं, कृष्णं एव मुक्तरीत्या, स्तुत्वा उपष्टूय, आत्मनः स्वस्य, पदं स्थानं, सत्यलोकमिति यावत् । अगमत् ययौ ॥ ८५

**श्लो ॥ करुणावरुणालय स्ततोऽसौ । हरि राश्वास्य वयस्यवत्सपालान्**
**व्रज माप तदाऽपदान मस्य । व्रजसीम्नि प्रससार विस्मयाय ॥ ८६**

करुणेति— ततः ब्रह्मनिर्गमनानन्तरं, करुणावरुणालयः दयासमुद्रः, असौ हरिः कृष्णः, वयस्यवत्सपालान् वयस्यान् स्निग्धान्, वत्सपालान् गोपालबालान्, आश्वास्य अनुनीय, व्रजं गोष्ठ, माप ययौ । अस्य कृष्णस्य सम्बन्धि तद्ब्रह्मस्तुतिरूप मपदानं अद्भुतवृत्तं व्रजसीम्नि गोष्ठप्रदेशे विस्मयाय आश्चर्यार्थं प्रससार प्रसृत मभूत् । तदपदानं श्रुत्वा सर्वे विस्मिता बभूवु र्व्रजे इति भावः ॥ ८६

**ग ॥ अथ कदाचन विपिनशुण्डालशुण्डाघातसमुद्घूर्णमाननानानोकह निवहशिखरकुसुमकोटरोदरसमुच्चरदमन्दमकरन्दबिन्दुसन्दोहमेदुरीभूतैः कलिन्दनन्दनाकल्लोलमालिकासलिलसलीलोच्चलितसितपतत्त्रसंरम्भसंभूततुषारपृषत्कदम्बकर म्बिताकारै रुरगपरिवृढविवर्तीभूतसङ्कर्षणसंसेवनाय मलयशैलवेलानिवासिनीभि रुरस्सरविलासिनीभि रादरादिव समीरितै रुदरविसरदासवास्वादमदशब्दायमान चञ्चरीकनिचय-**

**वाचालितविकचकुटजचाम्पेयमचर्चिकापरिचयसमुदञ्चितामोदै र्वनदेवतावदनमारुतपरीरम्भजृम्भितै र्बालानिलै रुपलाल्यमानं नन्दनमिव हरिनन्दनं सदनुग्रह मिव सकलफलास्पदं बृन्दावनान्तरालगतं तालविपिन मनुचरसमभ्यर्थनाभि स्सङ्कर्षणमधुसूदनौ सरभस मभजताम्। तत्र खलु ॥ ८७**

अथेति– अथ ततः, कदाचन कस्मिंश्चित्काले, बालानिलै र्मन्दमारुतै, रुपलाल्यमानं अनुनीयमानं, तद्युक्त मित्यर्थः। अनेन यथा पिता पुत्र मुपलालयति तद्वद्वायु र्वनमिति गम्यते। नन्दनमिव इन्द्रवनमिव, हरिनन्दनं इन्द्राह्लादकं कृष्णाह्लादकरञ्च, नन्दिग्रहेति ल्युः; सदनुग्रहं सतां प्रसादमिव। सकलफलास्पदं सकलपुरुषार्थप्रदं, सर्वविधफलनिलयं च बृन्दावनान्तरगतं बृन्दावनमध्यस्थं, तालविपिनं तालानां वनं, अनुचरसमभ्यर्थनाभिः वयस्यप्रार्थनैः, तैरर्थिता वित्यर्थः। सङ्कर्षणमधुसूदनौ रामकृष्णौ, सरभसं शीघ्रं, सहर्षं वा अभजतां प्राप्तवन्तौ। बालानिलान् विशिनष्टि विपिनेत्यादिभिः विपिनशुण्डालानां वनगजानां शुण्डाघातैः करताडनैः समुद्धूर्णमानस्य उद्भ्रमतः नानानोकहनिवहस्य बहुविधतरुसमूहस्य शिखरेषु अग्रेषु यानि कुसुमानि तेषां कोटरोदरेभ्यः गह्वरतुल्यान्तस्स्थलेभ्य स्सकाशात् समुच्चरतां सम्य गूर्ध्वं प्रसरतां, अमन्दाना मधिकानां, मकरन्दबिन्दूनां मधुपृषतां, सन्दोहेन समूहेन, मेदुरीभूतैः व्याप्तै रित्यर्थः। एतेन वायूनां सुगन्धवत्त्व मुक्तं भवति। कलिन्दनन्दनायाः यमुनायाः कल्लोलमालिकानां तरङ्गसङ्घानां सलिलेषु जलेषु सलीलं सविलासं यथा तथा उच्चलिताः उद्भ्रमणशीला ये सितपत्राः हंसाः तेषां पतत्रसंरम्भा स्पक्षविक्षेपा स्तत्सम्भूतेन जातेन तुषारपृषत्कदम्बेन शीतलबिन्दुसमूहेन करम्बिताकारैः व्याप्तस्वरूपैः। एतेन शैत्य मुक्तम्। उरगपरिवृढस्य शेषस्य विवर्तीभूतः रूपान्तरायितः अवतार इत्यर्थः। यः सङ्कर्षणः बलरामः तस्य संसेवनाय सेवार्थं मलयशैलवेलानिवासिनाभिः चन्दनाचलसीमस्थाभिः उरस्सरविलासिनीभि स्सर्पाङ्गनाभिः, आदरात् प्रीत्या, समीरितैः प्रेषितैरिवस्थितैः, प्रेयस्यः प्रियाय श्लाघ्यवस्तु प्रेषयन्तीति भावः। एतेन वायूनां मलयजत्वं गतिमान्द्यं चोक्तं भवति। उदरेषु पुष्पाणामन्तः विसरतः प्रसरतः, आसवस्य मकरन्दस्य, आस्वादा दनुभवा द्यो मदः गर्वः तेन शब्दायमानानां शब्दं कुर्वाणानां शब्दवैरेति कर्मणिक्यङ्। चञ्चरीकाणां भृङ्गाणां निचयेन समूहेन वाचालितानां मुखरितानां स्वगतभृङ्गध्वनिव्याजा त्पुष्पाणि शब्दं कुर्वन्तीवेति भान्तीति भावः। कुटजो गिरिमल्लिका तत्पुष्पमपि कुटजमेव। चाम्पेयं चम्पकपुष्पं विकचानां विकसितानां कुटजचाम्पेयमचर्चिकानां प्रशस्तकुटजचम्पकपुष्पाणां, परिचया त्सम्बन्धात्, समुदञ्चितः प्रवृद्धः, आमोदः परिमलः, येषां तैः एतेन गन्धातिशय उक्तः। वनदेवतावदनमारुतपरीरम्भेण वनदेवतामुखवायुसम्बन्धेन, जृम्भितैः प्रवृद्धैः, अनेन च गन्धातिशय उक्तः। वदने ताम्बूलादिगन्धसत्त्वात्। खलु प्रसिद्धौ। तत्र तालवने ॥ ८७

श्लो ॥ पूरय न्नारवै र्यातुरोषनाडिन्धमै र्वनम्
राम स्सवयसां तुष्ट्यै फलभार मपातयत् ॥ ८८

पूरयन्निति— यातुरोषनाडिन्धमैः नाडिं धमन्तीति नाडिन्धमाः नाडीमुष्ट्योश्चेति खश् । सिराभेदका इत्यर्थः । रोषस्य नाडिन्धमा रोषनाडिन्धमाः रोषाश्रयीभूतसिराभेदका इत्यर्थः । यातूनां यातुधानानां, रोषनाडिन्धमाः तैः तथोक्तैः राक्षसानां रोषोत्पादकै रित्यर्थः । राक्षसालयत्वा त्तद्वनस्येति भावः । आरवैः ध्वनिभिः, वनं काननं, पूरयन् निबिडीकुर्वन्, रामः बलभद्रः, सवयसां वयस्यानां, तुष्ट्यै सन्तोषार्थं, फलभारं फलराशिं, मपातयत् पातयामास ॥ ८८

श्लो ॥ तत्र तालफलपातनजन्मा । कोप्यभू च्छटछटध्वनि रुच्चैः
तन्निशम्य कुपितः खररूपी । धेनुक स्सपदि सन्निदधेऽपि ॥ ८९

तत्रेति— तत्र ताळवने, ताळफलपातनजन्मा ताळफलाना मधःपतना दुद्भूत इत्यर्थः । उच्चैः अधिकः, कोऽप्यनिर्वाच्यः, छटछटध्वनिः छटछटेति शब्दः, अभूत् प्रससारेत्यर्थः । तं ध्वनिं, निमम्य श्रुत्वा, कुपित स्सञ्जातकोपः, खररूपी गर्दभाकारः, देनुकः धेनुकासुरः, सपदि तदानीं, सन्निदधेऽपि सन्निहितोऽभवच्च । अत्र धेनुको धेनुरपि खररूपी सन्निदधे इति विरोधः प्रतीयते ॥ ८९

श्लो ॥ असौ वत्सापायव्यथितहृदयो धेनुपदभृ
त्पद वत्सस्यैव त्वरित मथ निन्ये हलभृता
शशंसु स्ते बाला स्तदनु कृतसाकूतहसिता
बलं हर्षोत्कर्षा दय मबलजय्यः कथमिति ॥ ९०

असाविति— अथ धेनुकसन्निधानानन्तरं, वत्सापायव्यथितहृदयः वत्सस्य वत्सासुरस्य सख्यु रपायेन नाशेन, व्यथितं सञ्जातव्यथं, हृदयं मनः, यस्य स तथोक्तः । धेनुपदभृत् धेनुपदवान्, असौ धेनुकः, धेनुकशब्दे धेनुपदसद्भावात् धेनुपदभृच्छब्दवाच्यः, धेनुकशब्दः शब्दपरशब्देना प्यर्थो बोध्यते इति तेन धेनुकासुर इत्यर्थः प्रतीयते इति बोध्यम् । हलभृता रामेण, हलायुधत्वा द्बलभद्रस्येति भावः । त्वरितं शीघ्रं, वत्सस्य पदमेव स्थानमेव, निन्ये प्रापितः, तद्वन्मारित इत्यर्थः । तदनु धेनुकमरणानन्तरं, कृतसाकूतहसिताः कृतसाभिप्रायस्मिताः, ते बाला वत्सपालाः, बलं रामं, अयं धेनुकः अबलजय्यः बलभद्रव्यतिरिक्तेन जेतुं शक्यः, कथं भवति न कथमपीत्यर्थः । दुर्बलजय्यः कथमिति च प्रतीयते । इत्येवं हर्षोत्कर्षात् आनन्दातिशया च्छशंसुः श्लाघयामासुः । यद्वा हर्षोत्कर्षा त्कृतसाकूतहसिता इत्यन्वयः । अत्रपूर्वार्धे इदं व्यङ्ग्यम् । वत्सस्य तर्णकस्य, अपायः अपगतिः, तेन व्यथितहृदय इति लिङ्गविपरिणामः । असौ धेनुपदं धेनुत्वं बिभर्तीति धेनुपदभृत् धेनु रित्यर्थः । हलभृता कृषीवलेन, वत्सस्य पदं स्थानं, त्वरितं निन्ये वत्सेन योजित इत्यर्थः ॥ ९०

ग ॥ तदनु तदनुचरनिकरमपि खरतरफेरववेषभीषण मतिरोषणौ रामकेशवौ समूलकाष मकषताम् ॥ ९१

तदन्विति– तदनु धेनुकनाशनानन्तरं, खरतरफेरववेषभीषणं तीक्ष्णसृगालवेषेण भयङ्करं, तदनुचरनिकरमपि धेनुकस्य वयस्यसङ्घमपि, अतिभीषणौ अतिभीकरौ रामकेशवौ बलकृष्णौ, समूलकाष मकषतां समूलघातं जघ्नतु रित्यर्थः । निमूलसमूलयोः कष इति णमुल् । यथाविध्यनुप्रयोगः । निर्मूलध्वंसं चक्रतुरिति भावः ॥ ९१

श्लो ॥ ततो भुजङ्गेन पृथग्जनेन । कदर्ध्यमाना ममलां प्रकृत्या
सहोदरीं पापनियामकस्य । गोप्तुं प्रतस्थे पुरुषोत्तम स्ताम् ॥ ९२

तत इति– ततः धेनुकासुरनिबर्हणानन्तरं, पृथग्जनेन नीचेन "मूर्खनीचौ पृथग्जना" वित्यमरः । भुजङ्गेन काळीयाभिधसर्पेण, कदर्ध्यमानां विषप्रक्षेपणादिना कलुषीक्रियमाणां, प्रकृत्या स्वभावतः, अमलां स्वच्छां, तां प्रसिद्धां, पापनियामकस्य पापशब्दोत्र पापवत्द्रव्यवाची । 'शस्तं बाधत्रिषु द्रव्ये पापपुण्यसुखानि चे' त्यमरः । पापानां पापिनां, नियामक शिशक्षकः, तस्य अर्थाद्यमस्य सहोदरीं सोदरीं, यमुना मित्यर्थः । उभयो स्सूर्यापत्यत्वादिति भावः । गोप्तुं रक्षितुं, काळीयनिष्कासनेन सुप्रवेशां कर्तु मित्यर्थः । पुरुषोत्तमः कृष्णः, प्रतस्थे प्रस्थितोऽभवत् । साधुजनरक्षणार्थं दुर्जनशिक्षणार्थं च परमेश्वर स्यावतीर्णत्वा त्तदुभयार्थ मस्य प्रवृत्ति रिति बोध्यम् । व्यङ्ग्यार्थस्तु पृथग्जनेन मूर्खेण, एतेन बलात्कारो व्यज्यते । भुजङ्गेन विटेन, 'भुजङ्गो विटसर्पयो' रित्यमरः । कदर्ध्यमानां भोगाय निर्बध्यमानां, प्रकृत्या अमलां निर्दोषां, पतिव्रता मित्यर्थः । पापनियामकस्य स्वयमेव न केवलं धर्मतत्परः किन्तु परानपि पापा न्निवर्तयतीति कश्चि त्पुरुषधौरेयो व्यज्यते । सहोदरीं एतेन सत्कुलप्रसूति र्व्यज्यते । तां गोप्तुं, विटहननेन तस्याः पातिव्रत्यं रक्षितुमित्यर्थः प्रतस्थे इति ॥ ९२

ग ॥ तत् क्षणमेव खरतरकिरणकिरणसम्पातसम्पादितपरितापातिरेकसमुदितोदन्यातिप्रसङ्गतया काळियव्याळनिष्ठ्यूतनिरर्गळगरळकबळितकळिन्दनंदनासलिलरसमास्वाद्य मूर्छायितेषु सवत्सेषु वत्सहितेषु ॥ ९३

तत्क्षणमेवेति– तदैव खरतरकिरणस्य उष्णांशोः, किरणाना मंशूनां; सम्पातेन सम्यक्प्रसरणेन, सम्पादितः प्राप्तः, यः परितापातिरेकः सन्तापातिशयः, तस्मा त्तेनेति वा, समुदितः जातः, उदन्यातिप्रसङ्गः पिपासातिशयः, येषां तेषां भाव स्तत्ता तया, तथोक्तं काळिय इति व्याळ स्सर्पः–तेन निष्ठ्यूतेन वान्तेन, निरर्गळेन अधिकेन, गरळेन विषेण, शबळितस्य सञ्जातशबलवर्णस्य, कळिन्दनन्दनाया यमुनाया, स्सम्बन्धिनः सलिलस्य उदकस्य, रसं स्वाद मास्वाद्य पीत्वा, सवत्सेषु वत्ससहितेषु, वत्सपालेषु मूर्छायितेषु मूर्छितेषु सत्सु ॥ ९३

श्लो ॥ कारुण्यामृतपूरसारभरितै स्तुङ्गै रपाङ्गै र्मुहु
स्संसिच्य स्वपदाम्बुजैकशरणा नेतान् समुज्जीवयन्
मध्ये यामुनवारिभूरिगरळज्वालावलीढान्तरं
सार्पं सद्म विवेश सालशिखरा ल्लीलाकुलायो हरिः ॥ ९४

कारुण्येति– लीलाकुलायः विलासनिलयः, हरिः कृष्णः, स्वपदाम्बुजैकशरणान् स्वचरण-कमलाश्रयान्, एतान् मूर्छितान्, सवत्सान् वत्सपालान्, कारुण्यामृतपूरसारभरितैः–कारुण्यं करुणा, गुणवचनत्वात् स्वार्थे ष्यञ् । तदे वामृतसुधा, तस्य पूरं प्रवाहः, तस्य सारेण स्थिरांशेन, भरितैः पूरितैः, दयारसभरितत्वेनामृनायमानै रित्यर्थः । तुङ्गै रधिकैः, रपाङ्गैः कटाक्षैः, मुहुः बहुवारं, संसिच्य आर्द्रीकृत्य, समुज्जीवयन् उत्पन्नजीवान् कुर्वन्, मूर्छा मपनुद्य चेतय न्नित्यर्थः । अमृतं यथा विषतापं निवार्य चेतयति तद्वदस्यापाङ्गा इति कृत्वा अमृतेत्याद्युक्तम् । अतएव परिकरालङ्कारः । मध्येयामुनवारि यमुनाजलस्य मध्ये, स्थितमितिशेषः । भूरिगरळज्वालावलीढान्तरं बहुविषज्वालाव्याप्तमध्यभागं, सार्पं, सर्पस्येदं; तस्येद मित्यण् । सद्म निलयं, सालशिखरात् सालस्य कदम्बभूजस्य, शृङ्ग मारुह्येति ल्यब्लोपे पञ्चमी । विवेश लङ्घितवान् । उन्नतस्थला दुदकमध्ये लङ्घने कृते सति उदकाधःप्रदेशप्राप्ति स्सुलभेति सालशिखरा लङ्घन मिति बोध्यम् ॥ ९४

श्लो ॥ स्वभवनपरिभवसम्भवरोषा । दाया दथासु भुजगेन्द्रः
मुररिपु मरुचिरचरितो । घोराकारै र्ददंश दशनैश्च ॥ ९५

स्वभवनेति– अथ श्रीकृष्णलङ्घनानन्तरम्, भुजगेन्द्रः काळीयः, स्वभवनपरिभवसम्भवरोषात् स्वगृहतिरस्कारजन्यकोपात्, गृहतिरस्कारो नाम गृहाक्रमणमेव । आशुद्रुत, माया दाजगाम । अरुचिरचरितः दुष्टचरित्रः, काळियः । घोराकारै र्भयङ्करैः, दशनै र्दंष्ट्राभिः, मुररिपुं कृष्णं, ददंश च दष्टवान् । आगमनक्षण एव दशनव्यापारोऽपि संवृत्त इति सूचयितुम् चकार ग्रहणम् ॥ ९५

श्लो ॥ शौरि राप न भुजङ्गविषाग्नि । ज्वालजालजनितां परिभूतिम्
चक्रिणो र्यदि परस्परयुद्धं । क्ष्वेळतो हि न तदान्यतरार्तिः ॥ ९६

शौरि रिति– भुजङ्गस्य काळियस्य, विषरूपो, योऽग्निः तज्ज्वालजालात् तच्छिखासमूहात्, जनिता मुत्पन्नां, तथोक्तां परिभूतिं तिरस्कृतिं, सन्तापमिति यावत् । शौरिः कृष्णः, नाप न प्राप । उक्त मर्थं समर्थयति । चक्रिणोः कृष्णकाळिययोः 'चक्री कृष्णे कुलालेऽहौ' इति भास्करः । सर्पयो रिति च, परस्परयुद्धं यदि अन्योन्यसङ्ग्रामं स्याद्यदि, तदा युद्धे, क्ष्वेळतः विषात्, अन्यतरार्तिः उभयो रेकस्य पीडा, नहि नभवति हि । सर्पस्य सर्पविषबाधा नेति भावः । अर्थान्तरन्यासालङ्कारः । स च चक्रिशब्दगतश्लेषोज्जीवितः । कृष्णस्य परमेश्वरत्वा न्न विषबाधेति परमार्थः ॥ ९६

श्लो ॥ स्पन्दितुं स न शशाक तदैव । श्रीपति र्भुजगभोगपिनद्धः
चित्र मेव त दिदं कथ मस्मि । न्युज्यतां भुजगभोगजबन्धः ? ९७

स्पन्दितु मिति– तदा सः श्रीपतिः कृष्णः, भुजगभोगपिनद्धः सर्पदेहवेष्टितः, अत एव स्पन्दितु मेव चरितुमपि, न शशाक न सेहे । त दिदं कृष्णस्पन्दनासामर्थ्यं, चित्रमेव । ननु कुत श्चित्रं ? मनुष्या हि सर्पवेष्टिताः स्पन्दितुं न शक्नुवन्तीति युक्त मेवेद मत आह; कथमिति– अस्मिन् शेषशायिनि कृष्णे, भुजगभोगजबन्धः सर्पदेहकृतबन्धनं, कथं युज्यतां युक्तो भवतु ? य स्सर्पराजं अखिलभूभरणधुरीणं शेषमपि पर्यङ्कीकृत्य तत्र शेते तस्य कालिया तुच्छसर्पा द्बन्धोऽभव-दिति चित्रमेवेद मिति भावः । अत्रेदं व्यङ्ग्यम् । सः श्रीपतिः, अनेन कामुकत्वं व्यज्यते । भुजगभोगपिनद्धः–भुजगः भुजङ्गः विट इत्यर्थः । लक्षितलक्षणेयम् । तस्य भोगेनेति निदर्शना । भोगतुल्यभोगेनेत्यर्थः । तद्वद्विहरणेनेति यावत् । पिनद्धः बद्धः, संसारेनिर्बद्ध इत्यर्थः । स्पन्दितुमपि, किमुत संसारा दात्मानं मोचयितु मिति भावः । न शशाक । विटव दत्यन्तकामनया विहृत्य विहृत्य संसाराब्धौ निर्मग्न इति भावः । एतेन षोडशसहस्रगोपिका विहृति र्गम्यते । तदिदं चित्रमेव । अस्मिन् परमात्मनि, मायादूरे भुजगभोगजबन्धः कथं युज्यतां ? मायावश्यानां जीवानामेव भोगेन बन्धः; ईश्वरस्यकथ मिति भावः । एतेन श्रीकृष्णस्य वस्तुतः अस्खलितब्रह्मचारित्वं सूच्यते ॥ ९७

श्लो ॥ तदा बाला स्तस्मि न्नरिपरिभवं बन्धमपि त
त्कृतं दुःखं मोहा द्वितथ मविदित्वा जडधियः
कथं वा मुक्ति स्स्या त्कथमिव तदध्यक्षजनितं
सुखं न श्शोकोवा विरमतु कथं वेति विवशाः ॥ ९८

तदेति– तदा श्रीकृष्णस्य सर्पवेष्टनसमये, जडधियः मन्दबुद्धयः, बालाः वत्सपालाः, तस्मिन् कृष्णे विषये, अरिपरिभवं शत्रुभूतकालियकृततिरस्कारं, बन्धमपि रज्जुतुल्यसर्पशरीरकृत-वेष्टनं, च, तत्कृतं तादृशदृढबन्धनजन्यं दुःखं श्रीकृष्णशोकं च, वितथं व्यर्थं निष्फलमिति, मोहा दज्ञाना, दविदित्वा अज्ञात्वा, भगवत्तत्त्वे ज्ञाते सति मायामानुषस्य भगवतः कृष्णस्य परमेश्वरस्य एतत्सर्पबन्धादिकं लीलैव, नतु दुःखकर मिति निश्चयज्ञानं जायेत; तत्तत्त्वाज्ञाने तु प्राकृतमनुष्यव त्तस्यापि दुःखं सम्भाव्यमेवेति भावः । कथं वा केन प्रकारेण, मुक्तिः सर्पबन्धत्यागः, स्या द्भवेत् । अर्था त्कृष्णस्य तदध्यक्षजनितं आपादमस्तकं सर्पशरीरवेष्टिततया दुर्दर्शस्य तस्य कृष्णस्य, अध्यक्षा त्प्रत्यक्षा द्दर्शनादिति यावत् । जनितं जातं, सुख मानन्दः, नः अस्माकं, कथंवा स्यात् ? शोको वा दुःखं च, कथंवा विरमतु नश्यतु ? इत्येवं चिन्तया विवशाः मूर्छिताः, जाता इति शेषः । व्यङ्ग्यार्थस्तु–जडधियः अपरिशुद्धमनसः, अतएव बालाः अज्ञाः, तस्मिन् जीवे, अरिपरिभवं अन्तश्शत्रुकामादिपारवश्यं बन्धं, कर्मवश्यतां तत्कृतं कामादिजन्यं दुःखं च, वितथमनृतमिति,

मोहा दज्ञाना, दविदित्वा, मुक्ति रविद्याावियोगः कथं स्यात् ? तदध्यक्षजनितं तत्पदार्थसाक्षात्कारजन्यं सुखं कथं स्यात् ? ब्रह्मानन्दः कथं स्यादिति भावः । न श्शोकः सांसारिकं दुःखं, कथं विरमतु ? इति विवशा निर्विण्णाजाता इति ॥ ९८

**ग ॥ भगवानपि कश्चित्काल मबलभाव मभिनीय नितान्तचिन्तादन्तुरितान्तरङ्गेषु सहचरेषु सचमत्कार मुत्प्लुत्य मुहुर्मुहुश्चरणघात माहत्य च भुजङ्ग मतिमात्र मसमर्थं समर्थयामास ॥ ९९**

भगवानिति– भगवान् कृष्णश्च, कश्चित्काल मित्यत्यन्तसंयोगे द्वितीया । अबलभावं दुर्बलत्वं, सर्पबन्धमोचनासामर्थ्य मित्यर्थः । अभिनीय अनुकृत्येत्यर्थः । नतु वस्तुत स्तथा; ईश्वरत्वादिति भावः । सहचरेषु वयस्येषु, नितान्तया अत्यन्तया, चिन्तया दन्तुरितानि व्याप्तानि, अन्तरङ्गाणि मनांसि येषां तेषु अतिचिन्ताक्रान्तेषु सत्स्वित्यर्थः । सचमत्कारं सवैदग्ध्यं, यथा तथा उत्प्लुत्य उड्डीय, मुहु र्मुहुः भुजङ्गं कालियं, चरणघात माहत्य चरणेन हत्वेत्यर्थः । 'करणेहमिति णमुल् '। अतिमात्र मत्यन्त मसमर्थ मशक्तं,स्वदेवचालनेऽपि शक्तिरहित मित्यर्थः समर्थयामास चकार ॥ ९९

**ग ॥ ततः प्रयाणोन्मुखप्राणं प्राणेशं निशम्य तदङ्गनाजन स्सरभस मधोक्षजं शरण मभजत सविनय मनौषीच्च । तथा हि ॥ १००**

तत इति– ततः सर्पस्य दौर्बल्यप्राप्त्यनन्तरं, प्राणेशं भर्तारं, कालियं प्रयाणोन्मुखप्राणं गमनोन्मुखप्राणं, सन्निहितमरण मिति यावत् । निशम्य श्रुत्वा, तदङ्गनाजनः नागाङ्गनासमूहः, सरभसं सवेगं, यथा तथा विळम्बे सति तु प्राणेशो म्रियेतेति भावः । अधोक्षजं कृष्णं, शरणं, रक्षितार, मभजत प्राप । त्वमेव न श्शरणमिति श्रीकृष्णपादाक्रान्ता बभूवु रिति भावः । सविनयं यथा तथा विनयेन सहितं यथा तथा, अनौषीत् अस्तौषीच्च । णु स्तुतौ लुङ् अस्य .सेट्कत्वात् अनावीदिति पाठ्यम् । तथा हि– नागाङ्गनाकृतभगवत्स्तुतिमेव दर्शयति कवि रित्यर्थः ॥ १००

पञ्चभि स्तुवन्ति कृतमित्यादिभिः । तत्र निर्व्याजकृपासमुद्रव्य तव नेदं युक्त मित्याहुः प्रथमश्लोकेन–

**श्लो ॥ कृतं मात्सर्येण स्मरण मपि निर्वाणकरणं**
**हर त्यन्योद्देशा द्ग्रहणमपि नाम्नो भवभयम्**
**पयो वा पत्रं वा हित महह भक्तै रुपहृतं**
**हरे ! पारं विद्मो न तव करुणाया निरवधेः ॥ १०१**

कृत मिति– हे हरे कृष्ण! मात्सर्येण ईर्ष्यया, कृतमपि तव नाम्नः कृष्णे त्यभिधानस्य, स्मरणमपि स्मृतिरपि, निर्वाणकरणं सुखकरं, मोक्षकर मितिवा। अनेन 'द्वेषा चैद्यादयो नृपा' इति सूचितम्। अन्योद्देशात् अन्यव्याजात्, अन्य मुद्दिश्येत्यर्थः। कृतमपि नाम्नः ग्रहणं उच्चारणं भवभयं संसारभयं, हरति नाशयति। एतेन अजामीढकथा सूचिता। भक्तै रुपहृतं समर्पितं पयो वा क्षीरं वा, जलमिति वा पत्रं वा, तुलस्यादि दळंवा, हितं प्रियं, तवेति शेषः। अह हेत्याश्चर्ये। सर्वेश्वरस्यापि पयःपत्रमात्रेण प्रीति रिति निरभिमानिता। प्रत्याश्चर्यमिति भावः। अनेन कुचेलादिकथा सूचिता। निरवधेः अपारायाः, तव करुणायाः पारं अवधिं, न विद्मः नोपलभामहे; अपारत्वादेवेति भावः॥ १०१

श्लो॥ प्रियां प्राणप्रायां क्षणमपि विना भावविरसां
यया हित्वा यानं निभृत मनुजीविव्रजमपि
अयासी स्संभ्रान्त स्सपदि करिदीनारवभरैः
हरे! श्रेय स्सा नः फलतु तव कारुण्यलहरी॥ १०२

प्रिया मिति– हे हरे! यया करुण्यलहर्या हेतुभूतया क्षणमपि क्षणकालमपि, विना भावविरसां, वियोगासहनां, अतएव प्राणप्रायां प्राणतुल्यां, प्रियां प्रेयसीं, लक्ष्मीं तदा निभृतं विनीत, मनुजीविव्रजमपि भक्तसङ्घं च, हित्वा त्यक्त्वा, करिदीनारवभरैः गजेन्द्रकृपणध्वनिसम्पातैः, सम्भ्रान्तः सम्भ्रमं प्राप्तस्सन्, सपदि तदानीमेव, यानं गमन, मयासीः अभजः। यद्वा–हरे! करिदीनारवै स्सम्भ्रान्तः अतएव क्षणमपि विनाभावविरसा मत एव प्राणप्रायां प्रियां, निभृ। मनुजीविव्रजमपि हित्वा, यया यानमयासीः इत्यन्वयः। सा तव कारुण्यलहरी कृपाप्रवाहः, नः अस्माकं, श्रेयः शुभं, फलतु दिशतु। गजेन्द्ररक्षाकालिका कृपा इदानीं मस्मदर्थं स्वीक्रियता मिति मुख्यार्थः॥ १०२

श्लो॥ दीनात्मनां तावकनित्यसिद्ध। रसप्रभावा दपराधरीतिः
कळ्याणभावाय न कल्पते चे। दनर्थलाभः कथ मस्तु वार्यः? १०३

दीनात्मना मिति– दीनात्मनां कृपणमनसां, सम्बन्धिनी अपराधरीतिः अपराधविधा, तावकस्य त्वदीयस्य, नित्यसिद्धस्य सहजस्य, निरुपाधिकस्येत्यर्थः। रसस्य अनुरागस्य, कृपाया इति यावत्। प्रभावा त्सामर्थ्याद्धेतोः, कळ्याणभावाय श्रेयसा मुत्पत्तये, न कल्पते न सम्पद्यते, न भवतीति यावत्। चे द्यदि अनर्थ लाभः अनिष्टा वाप्तिः, कथं केन प्रकारेण, वार्यः निवा यितुं शक्यः, अस्तु भवतु? दीनकृता अपराधा स्त्वत्कृपाबला दपराधता मपहाय उपचारा एव भवन्ति। अन्थाप्रतिपद मनाथा स्संभवेयु रिति भावः। व्यङ्ग्यार्थस्तु दीनात्मनां दरिद्राणां, अपराधशब्दोऽत्र लाक्षणिकः अपराधवद्दुष्ट इत्यर्थः। रीति र्लोहविशेषः, 'रीति स्त्रिया मारकूट' मित्यमरः। तावको

यः नित्यः अक्षय्यः, सिद्धरसः पारदः, तत्प्रभावा तत्संपर्कमाहात्म्या द्रसभस्मप्रभावादिति भावः। कल्याणभावाय सुवर्णत्वाय, न कल्पते चेत् सुवर्णात्मना न परिणमते चेत्, अनर्थलाभः द्रव्य प्राप्त्यभावः, दारिद्र्यमिति यावत्। कथं वार्योऽस्तु न कथञ्चि दित्यर्थः॥ १०३

श्लो ॥ अनात्मज्ञस्थाने शुच मय मयासी द्विभु रिति
स्वरूपं मत्वा ते सपदि परिपुष्णा त्युपशमम्
परीभावं शोकै र्यदि स पुन रद्यापि भजते
प्रतीतिः केऽयं ते निरवधिकृपानीरधि रिति॥ १०४

अनात्मज्ञ इति– अय मनात्मज्ञः आत्मज्ञानशून्यः, विभुः नः पतिः, शुचं शोक, मयासी त्वापेति, स्थाने युक्तं, स्वपरबलाबलविवेकाभावात्। ईश्वरेण त्वया, युद्ध्वा प्राणसङ्कटं प्राप्त इतीद मविवेकिनोऽस्य उचितमेवेतिभावः। सपदि इदानीं, ते तव, स्वरूपं परमेश्वरत्वात्मकं, याथार्थ्यं मत्वा ज्ञात्वा, अयं सर्वेश्वरएव नतु प्राकृतः; अन्यथा कथममास्मा दीदृशी दशेति निश्चि त्येत्यर्थः। उपशमं शान्तिं, कोपेन कर्तव्याभावा दिति भावः। परिपुष्णाति भजति। पादरक्षानिय मिद वृश्चिकव दिति भावः। सः विभुः, पुन रद्यापि अधुनापि, त्वत्स्वरूपज्ञानोत्तरकालेपीत्यर्थः। शोकैः परीभावं तिरस्कारं, भजते यदि प्राप्नोति चेत्, त्वया निर्जित स्तव वश्यो भूत्वा, असद्द्वारा त्वां शरणागतिं प्राप्यापि पुन स्त्वया ताड्यमान श्शोचतिचेत्, ते तव, निरवधिकृपानीरधि रिति अपारकरुणासमुद्र इति, इयं प्रतीतिः प्रसिद्धिः, का कुत इत्यर्थः। प्रतीति र्न श्येदिति भावः। शरणागतपरित्राणजन्या कीर्ति रपगच्छे दिति मुख्यार्थः। व्यङ्ग्यार्थस्तु अयं विभुः व्यापको जीवः अनात्म ज्ञस्सन् सच्चिदानन्द लक्षण मात्मस्वरूप मविदित्वा शुचं संसारदुःख मयासी दिति स्थाने युक्तं। सपदि इदानीन्तु ते स्वात्माभिन्नस्य परमात्मन स्तव स्वरूपं सच्चिदानन्दलक्षणं तत्वं मत्वा सच्चिदानन्दलक्षणं ब्रह्मैवाह मस्मीति महावाक्यार्थमननेन निश्चित्येर्थः। उपशम मुपरतिं परिपुष्णाति कामादिभि रपरिभूत स्तूष्णी मास्ते इत्यर्थः। स पुनः आत्मवेत्ता जीवस्तु अद्यापि आत्मज्ञानोत्तर कालेपि, शोकैः परीभावं भजते यदि, ते तव, परमात्मनः निरवधिकृपानीरधि रितीयं प्रतीतिः का? 'मा मुपेत्य तु कौन्तेय! पुनर्जन्म न विद्य ते' 'तेषा महं समुद्धर्ता दुःखसंसारसागरा दित्यदभिः प्रसृतं यशो न श्येदिति भावः॥ १०४

श्लो ॥ सभोगिचूडामणि रेष पृथ्व्यां। वयं च भोगिन्य इति प्रतीतिः
घटेत नैत त्किल भोगभाक्त्वं। कृपां विना ते गरुडध्वजस्य॥ १०५

स इति– स एषः सोऽयं, भोगिचूडामणिः चूडायां मणि श्चूडामणिः, भोगिनां चूडामणि र्भोगिचूडामणि रिति गौणोऽयं प्रयोगः। नहि भोगिन श्चूडायां मणित्वे नामुं बिभ्रति; ततश्च यथा मणि श्शिरसा श्लाघ्यते तद्व दय मपीति; श्रेष्ठ इत्यर्थः पर्यवसन्नः। सर्पोत्तम इतिसमासार्थः।

भोगवदग्रेसर इति च गम्यते । वयं च वयं तु, भोगिन्यः भोगिन्छब्दात् 'ऋन्नेभ्य इति ङीप्' यद्वा भोगिनां स्त्रियः भोगिन्य इति पुंयोगे ङीष् । नागाङ्गना इत्यर्थः । भोगानुकूलाः स्त्रिय इति च प्रतीयते । 'भोगिन्योऽन्या नृपस्त्रिय' इत्यमरः । इत्येवं पृथ्व्यां भूमौ, प्रतीतिः प्रसिद्धि रस्ति । अस्तु, किं तत इत्यत आह–गरुडध्वजस्य भगवत स्ते तव, कृपां विना एतत्सर्वजनप्रतीतिविषय मस्मन्निष्ठं भोगभावत्वं सुखित्वं 'भोग स्सुखे स्त्र्यादि भृता वहेश्च फणकाययो' रित्यमरः । न घटेत किल न वर्तेतैव, नैव युज्येतेति वा । जगदीश्वरस्य तव कृपाऽभावे कुतो भोगः? प्रत्युत दुःखमेव स्यादित्यर्थः । सर्वभूमिप्रसिद्धा मस्मद्भोगवत्त्वप्रथां मानाशयेति भावः । अन्यत्र एतद्भोग-भावत्वं सर्पशरीरधारणं गरुडध्वजस्य तार्क्ष्यनियामकस्य, ते कृपा विना न घटेत न वर्तेत खलु, कृपया यदि भवन् गरुडं नियमति तर्हि वयं शरीरधारणं कुर्मः । नोचेत् गरुडोऽस्मान् हनिष्यत्येवेति भावः । एतेन एतत्कुत्सितभोगिमारणे कुत स्तवायं श्रमः? यदि तु तव अस्मासु आग्रह स्तर्हि त्वद्दीक्षानियन्त्रितः गरुड एव समूल मून्मूलये न्न इति कृत्वा तथा अकरणा द्धेतोः न तवाय मुद्यम स्सर्पमारणार्थः किन्तु विलासार्थ एवेति निश्चिनुम इति भगवद्धृदयगतो भावः नागाङ्गनाभि र्विदितः इति प्रतीयते । गरुडध्वजस्येति साभिप्रायविशेषणा द्व्यङ्ग्यार्थे परिकरालङ्कारः ॥ १०५

**श्लो ॥ त्वयि नाथेऽपि जगता । ममुना न स्सनाथता**
**तेन नः करुणासिन्धो ! हर । सौभाग्यविप्लवम् ॥ १०६**

त्वयीति– त्वयि जगतां चतुर्दशभुवनानां, नाथे प्रभौ भवतीति शेषः । भवति सत्यपि, नः अमुना सर्पेण सनाथता नाथः पतिः प्रभुश्च नाथवत्त्व मस्तीति गम्यते । सामान्याकारेण सर्वजगन्नाथ स्त्व मस्माकमपि यद्यपि नाथः तथापि विशेषाकारेण अयमे वास्माकं नाथः पति रिति भावः । हे करुणासिन्धो ! दयासमुद्र ! तेन हेतुना अस्यैवास्मत्पतित्वाद्धेतो रित्यर्थः । नः सम्बन्धिनं सौभाग्यविप्लवं सौभाग्योपद्रवं, पत्यौ मारितेसति अस्माकं सौभाग्यं नश्ये दिति भावः । हर नाशय । अयं भावः–अयं तु अस्माकं काल्पनिकः पतिः, भोगाय केवलं कल्पितः । त्वन्तु सर्वेश्वरो नित्यसिद्धः पतिः । अतः अस्माकं रक्षा तु त्वदधीनैवेति अत्रपूर्वार्थे त्वयि नाथेऽप्यमुना सनाथतेति विरोधोऽव्यज्यते । तस्य नाथः भोगहेतुः पति रित्यर्था त्परिहार इति विरोधाभासालङ्कारः । न स्सौभाग्यविप्लवं त्वमेव हरेत्युत्तरवाक्यार्थस्य त्वयि नाथेपि जगता मित्येतद्वाक्यार्थहेतुकत्वा त्काव्यलिङ्गम् सर्वजगन्नाथत्वा त्त्व मस्माकमपि नाथ एवे त्यस्मत्सौभाग्यविप्लवं हर्तुं क्षम इत्यर्थात् ॥ १०६

**ग ॥ एव मभिधाय वाष्पायमाणनयनाभि रूष्मायमाणहृदयाभि रजगरवधूटीभि रार्द्रीकृतचित्तवृत्तिः कारुण्यकल्लोलमाली वनमाली तथेति तत्क्षण मुररीकुर्वाण स्तत्क्षण मुपसर्पतु पयोनिधि मिह निवसतु निमिषमपि न भवा निति दन्दशूक मादिश्य समाश्वास्य च दून मनुचरनिकर मात्मसदन माससाद ॥ १०७**

एव मिति— एवमुक्तरीत्या, अभिधाय उक्त्वा, बाष्पायमाणनयनाभिः बाष्पायमाणे अश्रूद्गमने नयने यासां ताभिः, स्रवदश्रुनेत्राभि रित्यर्थः । उष्मायमाणं सोष्महृदयं, यासां ताभिः बाष्पोष्मभ्या मुद्गमने इति क्यङ् । अजगरवधूटीभिः सर्पाङ्गनाभिः, आर्द्रीकृता शीतलीकृता, चित्तवृत्ति र्मनोवृत्ति र्यस्य सः, कारुण्यकल्लोलमाली करुणासमुद्रः, वनमाली कृष्णः, तथेति युष्मत्सौभाग्यविप्लवं हरामीति, तत्क्षणं तदैव, उररीकुर्वाणः अङ्गीकुर्वन् , भवान् त्वं, तत्क्षण मधुनैव, पयोजिधिं समुद्र, मुपसर्पतु गच्छ, इह यमुनाह्रदे, निमिषमपि न निवसतु नतिष्ठ, इति दन्दशूकं सर्पं, कालिय मादिश्य आज्ञाप्य, दूनं खिन्न, मनुचरनिकरं सहचरसङ्घम् , समाश्वास्य च सम्य गाश्वास्य, आत्मन स्स्वस्य, सदनं गृह, माससाद प्राप ॥ १०७

ग ॥ अथ कदाचि दुपचितरणरणकनिस्साणराणकल्पानल्पशिलीमुखपटलझङ्कारकरम्बिताकारतया वनदेवताभि रिव विहितकुशलानुयोगाभि रुन्मीलितमल्लिकामतल्लिकापाटलपटलपरिमळपरिशीलनकषायाभि रनवरतजागरूकधारायन्त्रनिरर्गळविनिर्गळद्वारिधाराविरचितलीलाविहाराभि रतिवेळतरळशिखरतया वनराजिभि रिव सानन्द मभिनन्द्यमानसमागमाभिः प्रतिदिशमशनायितसरीसृपचर्व्यमाणतयेव विरळप्रचारभि र्मलयाचलबालानिलमालाभिः कथश्चन धार्यमाणप्राणप्राणिसन्दोहः स्वकीयपरितापातिरेक मसहमानाभिरिव प्रतिबिम्बदम्भा दभ्यन्तर मवगाहमानाभि रहिमकरकिरणपरम्पराभि र्मन्दोष्णीकृतसकलसलिलाशय स्समुदञ्चितमरुमरीचिकासलिलवीचिकाविहारवैखरीविषयपथिकजनमनोरथवैधुरीधुरीणमध्यंदिनविजृम्भण स्समुदितयौवनयोषाविशेषगवेषितपुष्पसमय श्चिरतरविरहिणीजननयनमात्रविश्रान्तवर्षासमुन्मेषः पितामहपुरुषायुषमात्रावलम्बिशरदायामः प्रबलतरसम्भावितानर्थपरिजिहीर्षया तुषारगिरिकन्दरान्तराळतपश्चर्यापर्युत्सुकहेमन्तसमयः तरुणीकुचकलशसञ्छन्नवास्तव्यशिशिरभावो भोज्यविशेषविरसपिपासासमाकुलसकललोकतया जीवनभाव मम्भस स्समर्थयमानः कायमाननिकायैः काननविलासिजनचिरपरित्यागकृतशोकातिरेकादिव बाष्पापदेशेन निरन्तरनिस्सरन्निश्वासश्वसनगर्भ भवनाभोगः पानकरसपानैकतानतां पटीरपङ्कालेपलोलुपतां प्रसूनचयसंस्पृहतां प्रपासन्निवेशसाशयतां वारिविहारसादरतां वारिजमालाकुतूहलितां निशाकरकरालोककामुकतां निशासमयसमुत्सुकतां च विषयलम्पटानां सम्पादयन् सुलभसलिलावगाहतया सुगमसच्छायप्रवेशतया परिधाननिरपेक्षया सुप्रापप्रपाशिशिरपानीयतया सुकरतालवृन्ततया च किञ्चि दकिञ्चनजनस्यापि भोग-

सुभगम्भावुक स्समुदश्चिदान्तरपरीतापमात्रपरिभूतविरहिणीजनसत्वरप्राणहरणाय बहिरपि समुन्मेषितोष्मातिभूमि रूष्मागमसमय स्समजृम्भत ॥ १०८

अथेति– अथ काळीयनिष्कासनानन्तरं, कदाचि दूष्मागमसमयः ग्रीष्मकालः, समजृम्भत सम्यक् जृम्भितवान् । जृम्भणप्रकारं दर्शयितु मादौ मलयानिला न्वर्णयति उपचितेति । उपचितं वर्धितं, रणरणक मुत्कण्ठा येन स उपचितरणरणकः मन्मथः, तस्य रणः कामयुद्धमित्यर्थः । 'आयलक मुत्कण्ठा स्यादुत्कलिका रतिश्च रणरणक' मिति हलायुधः । तत्र निस्साणराणकल्पैः निस्साणध्वनितुल्यैः, अनल्पैः अधिकैः, शिलीमुखपटलझङ्कारैः भृङ्गसङ्घझङ्कृतिभिः, करम्बिताकारतया व्यासविग्रहहत्त्वेन हेतुना, वनदेवताभिः विहितः कृतः, कुशलानुयोगः कुशलप्रश्नः, यासां ताभिरिव स्थिताभिः; वनदेवताः भृङ्गझङ्कारव्याजेन बालानिलमालानां स्वागतं पृच्छन्त्य इव वर्तन्ते इति भावः । उत्प्रेक्षालङ्कारः । भृङ्गझङ्काराणां गीतत्वरूपणव व्यक्तभाषणत्वरूपणम प्यस्ति । यथा नागानन्दे 'मधुरमिव वदन्ति स्वागतं भृङ्गशब्दै' रिति । उन्मीलितानां विकसितानां, मल्लिकामतल्लिकानां श्रेष्ठमल्लिकापुष्पाणां, पाटलानां कृष्णवृन्तारव्यपुष्पाणां च, पटलस्य समूहस्य, यः परिमळः आमोदः, तस्य परिशीलनेन सम्बन्धेन, कषायाभिः सुरभिभिः, एतेन गन्धातिशय उक्तः । अनवरतजागरूकेभ्यः निरन्तरोद्धाटितद्विरेभ्यः, धारायन्त्रेभ्यः उदकस्रावयन्त्रेभ्य, स्सकाशात् अत्र धारायन्त्रे अचेतने जागरण मनुपपन्नं सन्तापातिशयं व्यञ्जयती त्यजहल्लक्षणामूलो वस्तुध्वनिः । सकाशात् निरर्गळं अधिकं यथा तथा, विनिर्गळन्तीषु निर्गच्छन्तीषु, वारिधारासु जलधारासु, विरचितः कृतः, लीलाविहारः विलाससञ्चारः, जलक्रीडेतियावत् । याभि स्ताभि स्तथोक्ताभिः । अनेन शैत्य मुक्तम् । अतिवेलतरळानि अतिचञ्चलानि, शिखराणि अग्राणि, शिरस्तुल्यानीति भावः । यासां तासां भाव स्तत्ता तया वनराजिभिः सानन्दं यथा तथा अभिनन्द्यमानसमागमाभिरिव स्थिताभिः, अभिनन्द्यमानः श्लाघ्यमान, स्समागमः सम्बन्धः यसां ताभि रिति समासः । यथा नार्यः चिरप्रवासितसखीसमागमं सशिरः कम्पं ( शिरसा ) श्लाघयन्ति तद्वदिति भावः । प्रतिदिशं सर्वदिक्षु, अशनायितैः सञ्जात बुभुक्षैः, 'अशनाया बुभुक्षा स्या' दित्यमरः । सरीसृपै स्सर्पैः, चर्व्यमाणतया भुज्यमानतयेव, सर्पाणां वाताशनत्वात् उत्प्रेक्षा । विरळः कान्चित्कः मन्द इति यावत् । प्रचार स्सञ्चारो, यासां ताभिः । अनेन मान्द्य मुक्तम् । एवंविधाभिः मलयाचलः मलयशैलः, तस्य तत्सबन्धिनीभि रित्यर्थः । तस्मा दायाताभि रिति यावत् । बालानिलमालाभिः मन्दमारुतपरम्पराभिः, कथञ्चन अतिकृच्छ्रेण, धार्यमाणाः पोष्यमाणाः, प्राणाः यस्य सः प्राणिसन्दोहः प्राणिसमूहः, यस्मिन् सः इति ऊष्मागमसमयविशेषणं । ग्रीष्मसन्तापेन प्रयाणोन्मुखप्राणाः प्राणिनः मलयवायुस्पर्शवशा त्कथञ्चित्प्राणान् धारयन्तीति भावः । स्वकीयं ग्रीष्मसमयसम्बन्धिनं परितापातिरेकं सन्तापातिशय, मसहमानाभि रिव, सोढु मशक्नुवन्तीभि रिवेत्युत्प्रेक्षा । अनेन सूर्यमपि सन्तापय त्यहो ! ग्रीष्मसमय स्योष्मातिरेक इत्याश्चर्यं व्यज्यते । प्रतिबिम्बदम्भा त्प्रतिफलनव्याजात् ,

अभ्यन्तरं जालान्तर, मवगाहमानाभिः प्रविष्टाभिः, अहिमकरस्य सूर्यस्य, किरणपरम्पराभिः अंशुसमूहैः, मन्दोष्णीकृताः ईषदुष्णीकृताः, 'कोष्णं कवोष्णं मन्दोष्ण' मित्यमरः। सकला स्सर्वे, सलिलाशयाः ह्रदाः, यस्मिन् स इत्यूष्मागमविशेषणम्। एतेन जलस्यान्तः किञ्चि च्छैशिर्य मस्ति; नतु कुत्रापि तदन्यत्रेति व्यक्तम्। समुदञ्चितस्य सम्य गुदितस्य, मरुमरीचिकासलिलस्य निर्जलप्रदेशसङ्क्रान्तसूर्यकिरणेषु भ्रान्त्यावगतस्य उदकस्येत्यर्थः। वीचिकासु तरङ्गेषु, या विहारवैखरी क्रीडारीतिः, सैव विषयः गोचरो, यस्य तस्य पथिकजनमनोरथस्य पान्थजनकामस्य, वैधुरीधुरीणं विफलत्वापादकं, मध्यन्दिनस्य मध्याह्नस्य, विजृम्भणं उद्रेकः, यस्मिन् सः। पान्था हि तापातिरेका ज्जलावगाह मभिलषन्तः क्वापि प्रसिद्धं जल मनुपलभ्य मरुमरीचिकासु सलिलबुद्ध्या प्रविष्टा स्तत्र जलाभावा त्सन्तापशान्त्यभावरूपं वैधुर्यमेव भजन्तीति भावः। अथ ग्रीष्मव्यतिरिक्तानां पञ्चजन्तूनां ग्रीष्मप्रभावा दधिकं सङ्कोच माह; समुदितेत्यादिना समुदितं उत्पन्नं, यौवनं येषां तै र्योषाविशेषैः काश्चि न्मुग्धयोषाभि रित्यर्थः। गवेषितः अन्वेषितः, पुष्पसमयः वसन्तः, आर्तवसमय श्च यस्मिन् सः तथोक्तः। एतत्प्रभृति वाक्यपञ्चके परिसङ्ख्यालङ्कारः। स च श्लेषोज्जीवितः। 'एकस्य वस्तुनः प्राप्ता वनेकत्रैकदा यदा। एकस्य नियम स्सा हि परिसङ्ख्या निगद्यते' इति लक्षणात्। युवतिष्वेव पुष्पसमयो नान्यत्र; तत्रापि मुग्धास्वेव नत्वन्यास्विति भावः। चिरतरविरहिणीजनस्य बहुकाला द्वियोगाक्रान्तनारीसमूहस्य, नयनमाले नेत्रयोरेव विश्रान्तः स्थितः। वर्षासमुन्मेषः प्रावृड्विजृम्भणं, गौणोऽयं प्रयोगः; वर्षणमित्यर्थः। यस्मिन् नः विरहिणिजनो नेत्राभ्या मश्रुधाराः वर्षतीति भावः। पुरुषस्यायुः पुरुषायुषं, 'अचतुरेत्यादिषु अस्य निपातना त्समासान्तोऽच्'। शतसंवत्सरपरिमित मायु रित्यर्थः। पितामहस्य ब्रह्मणः, पुरुषायुषमेव पितामहपुरुषायुषमाल मवलम्बते इति तन्मात्रावलम्बी शारदायामः शरत्कालधर्मविजृम्भणं, संवत्सरदैर्घ्यञ्च यस्मिन् सः ब्रह्मापेक्षया अधिकायुष्मतोऽभावा दिय मुक्तिः। मानुषमानेन गणने कृते असङ्ख्येयसंवत्सरायुष्मान् ब्रह्मेति कृत्वा संवत्सरायामः ब्रह्मायुष एवेति भावः। प्रबलतरा दतिप्रबलाद्, ग्रीष्मसमया दिति भावः। सम्भावितस्य उत्प्रेक्षितस्य, अनर्थस्य परिजिहीर्षया परिहर्तु मिच्छया, तुषारगिरे र्हिमवतः, कन्दरान्तराळे दरीमध्ये, तपश्चर्यापर्युत्सुकः तपःकृत्ये कृतोत्साहः, हेमन्तसमयः हेमन्तऋतुः, उपचारेण तद्धर्म श्शैत्यं च यस्मिन् स तथोक्तः। यथा कश्चि त्प्रबला च्छत्रोः स्वस्य भय माशङ्क्य तन्निवारणार्थं पर्वतादौ तपस्यति तद्व द्धेमन्तऋतुरपीति भावः। हिमवति हिमाधिक्या च्छैत्यं वर्तते नत्वन्यत्र क्वापीति मुख्यार्थः। तरुणीनां नारीणां, कुचकलशेषु स्तनकुम्भेषु, सञ्छन्नवास्तव्यः गूढनिवासी, शिशिरभावः शीतलत्वं शिशिरऋतुश्च यस्मिन् स तथोक्तः। यथा कान्दिशीकः कश्चन तच्छत्रुभिया क्वापि गूढो वर्तते तद्वदिति भावः। ग्रीष्मेऽपि नारीकुचानां शीतलत्वं प्रसिद्धम्। भोज्यविशेषे आहारविशेषे, विरसाः निरनुरागाः, पिपासासमाकुलाः पानेच्छया व्याप्ताः, सकला स्सर्वे, लोका जना यस्मिं स्तस्य भाव स्तत्ता तया 'लोकस्तु भुवने जने' इत्यमरः। अम्भसः उदकस्य, जीवनभावं जीवनत्वं, जीवयतीति जीवनमिति व्युत्पत्त्या 'जीवनं भुवनं वन' मित्यमर-

कोशात्। उदके जीवनशब्दप्रयोग स्ताव दस्ति; अधुना त त्स्य सार्थकमिति भावः। समर्थयमानः सम्पादयन्, स्फुटीकुर्वन्निति वा। कायमानरूपो निकायः गृहं कायमानं निकाय इवेति वा कायमाननिकायः। कायमानं नाम उष्णकाले तृणादिनिर्मितं शिशिरोपचारबहुळं लीलागृहं; स एकं मुख्य मयनं निवासो यस्य तस्य विलासिजनस्य कामुकजनस्य नागरिकजनस्येतिवा चिर- परित्यागेन बहुकालवियोगेन, कृता दुदितात्, शोकातिरेकात् दुःखातिशया दिवेत्युत्प्रेक्षा। नतूपमेति भ्रमितव्यम्। गर्भभवनस्य अचेतनत्वेन चेतनधर्मान्वयासम्भवात्। बाष्पापदेशेन ऊष्म- व्याजेन, निरन्तरं निश्वसन् अत्यन्तं प्रसृतः निश्वासश्वसनः निश्वासवायुः, यस्य स तथोक्त। ईदृशः गर्भभवनाभोगः गर्भगृहविस्तारो यस्मिन्निति बहुव्रीहिगर्भो बहुव्रीहिः। यथा प्रियजनवियोगा न्निरन्तरं निश्वसन्ति विरहिण्य स्तद्वत गर्भगृहमपि विलासिजनवियोगा द्बाष्पव्याजेन निश्वसतीति भावः। ग्रीष्मऋतौ गर्भगृहेषु बहुळोष्मवत्त्वं प्रसिद्धम्। विषयलम्पटानां विषयासक्तानां, कामुकाना मित्यर्थः। पानकरसस्य द्राक्षादिपञ्चसारविशिष्टजलस्य, पाने एकतानता मुख्यासक्तत्वं, पटीरपङ्कस्य चन्दन गन्धस्य, आलेपे लेपने, लोलुपता मासक्ततां, प्रसूनचये पुष्पशय्यायां, संस्पृहता ममितासक्तत्वं प्रपासन्निवेशे पानीयशालागृहे, साशयतां मनोवत्त्व मासक्ति मिति यावत्। वारिविहारे जलक्रीडायां सादरतां प्रीतिमत्त्वम्, वारिजमालासु कमलस्रक्षु कुतूहलितां कुतूहलवत्त्वम्, निशाकरस्य चन्द्रस्य, कराणा मंशूना, मालोके दर्शने, कामुकतां लम्पटत्वं, निशासमये रात्रिकाले, समुत्सुकत्वं समुल्लासं च, सम्पादयन् जनयन्, सुलभः सलिलावगाहः जलप्रवेशः, जलक्रीडेति यावत् यस्मिं स्तस्य भाव स्तता तया। सुगमः सुप्रापः, सच्छायप्रदेशः छायासहितो देशः, यस्मिं स्तस्य भाव स्तता तया; प्रवेशतयेति पाठे तु छायया सहित स्सच्छायो देशः तत्र प्रवेशः सुगमः यस्मि न्निति बोध्यम्। परिधाननिरपेक्षतया वस्त्राकांक्षाराहित्येन; वस्त्रे सति स्वेदातिशया दिति भावः। सुप्रापं सुखेन प्राप्तुं शक्यं, सुलभ मित्यर्थः। प्रपायां शिशिरं शीतलं पानीयं यस्मिं स्तस्य भाव स्तता तया। सुकरा स्तालवृन्ताः व्यजनानि यस्मिं स्तस्य भाव स्तता तया च। अकिञ्चनजनस्यापि दरिद्रजनस्यापि किञ्चिद्भोगसुभगम्भावुकः भोगानुकूलः। अयं भावः- हेमन्तादिषु धनिनः उष्णोदकावगाहं कुर्वन्ति। दरिद्रास्तु काष्ठदैन्या त्तत्राशक्ताः। अधुना तु धनिनामपि शीतजलावगाहस्यैव आकांक्षत्वेन उभयो रपि न तत्र विशेष इति। किञ्च छायासहितगर्भगृहादिप्रदेशं बाष्पाभिव्याप्तमिति त्यक्त्वा धनिनोऽपि वटवृक्षादिच्छाया मधुना समालम्बन्ते। इतरऋतुषु गर्भगृहादिषु सुखेन वर्तन्ते। दरिद्राणान्तु गर्भगृहाणि दुर्लभानीति इतरऋतुषु न सौख्यं; ग्रीष्मे तु वृक्षाणां छाया स्सुलभा इति। अपि च दरिद्रदुर्लभं पट्टकम्बळादिकं परिधानं त्यक्त्वा धनिनोऽपि ग्रीष्मे स्वेदभया त्केवलं वर्तन्ते, दरिद्राणान्तु स्वतस्सिद्धो वस्त्राभाव इदानीं सुखहेतु रभूदिति। अपिच हेमन्तादिषु उष्णोदकं पिबन्तो धनिनोऽपि ग्रीष्मे दरिद्रव च्छीतमेव जलं पिबन्तीति दरिद्राणामप्यत्रांशे सुखमेव। किञ्च सर्वऋतुषु चामरादिभि र्धनिनो वीज्यन्ते। दरिद्रास्तु धनिकव दधुना ताळवृन्तवीजन मात्मनः कुर्वन्ति। अधुना ताळ वृन्तानां सुलभत्वादिति। समुदञ्चितः सम्यगाविर्भवतः आन्तरा द्धृदयस्था त्परीतापमात्रा द्वियोग-

जन्यसन्तापादेव । परिभूतस्य दुःखितस्य, विरहिणीजनस्य वियोगिनीसङ्घस्य, सत्वरं शीघ्रं, यथा तथा प्राणहरणाय प्राणापहारार्थं, बहिरपि समुन्मेषितः समुज्जृम्भितः । ऊष्मातिभूमिः ऊष्मातिशयः, येन स तथोक्तः । न केवल मन्तस्सन्तापः प्राणहरणे शक्नोतीति मत्वा स्वयं ग्रीष्मऋतुः बहिरपि तासां सन्तापं जनयतीति भावः– तत्र च– तत्रेति ग्रीष्मसमये ॥ १०८

श्लो ॥ अयामायामभावेन । कृशाङ्गी कामनीयकम्
सकला सकलानाथा । यामिनी कामिनी ययौ ॥ १०९

अयामेति– अयामायामभावेन यामानां प्रहराणा, मायामो दैर्घ्यं, यामायामः । यामायामो नविद्यते यस्मिं स्तत् अयामायाम, मिति सामान्ये नपुंसकं, तस्त भावः, तेन यामदैर्घ्याभावेन हेतुनेत्यर्थः । ग्रीष्मे रात्रिषु यामदैर्घ्याभावः प्रसिद्धः । कृशङ्गी क्षीणा, सकलानाथा कलानाथेन चन्द्रेण सहिता, सकला समस्तापि, यामिनीकामिनी रात्रितरुणी, कामनीयकं कमनीयतां, ययौ । कलानाथसहिता सर्वापि रात्रिः कमनीयेति भावः । अत्र प्रियसहिता कृशाङ्गी कामिनी कमनीयेति व्यज्यते ॥ १०९

श्लो ॥ त न्माधवबलाक्रान्त । बृन्दावनपदं तदा
शुशुभे न तथा प्यासी । द्विकस्वरपलाशताम् ॥ ११०

त दिति– तदा ग्रीष्मे, माधवबलाक्रान्तं, कृष्णरामाक्रान्तं अत्र यद्यपि ' अल्पाच्तर म्पूर्व' मिति बलमाधवेति वक्तव्यं; तथा ' प्यभ्यर्हितं पूर्वं ' मिति माधवस्य पूर्वनिपातः । नच अग्रजत्वा द्रामएवाभ्यर्हित इति वाच्यं। वस्तुतो रामस्य कृष्णपर्यङ्कत्वेन रामा त्कृष्णस्यै वाभ्यर्हितत्वात्। यद्वा ' लक्षणहेत्वोः क्रियाया ' इति निर्देशा त्पूर्वनिपातशास्त्र मनित्य मिति बोध्यम् । त द्बृन्दावनपदं प्रसिद्धं बृन्दावनस्थानं, शुशुभे चकाशे । तथा विकस्वरपलाशतापि विकस्वराः विजृम्भमाणाः पलाशाः, क्रव्यादाः यस्मिं, स्तस्य भाव स्तत्ता च नासीत् । एतेन दोषाभाव उक्तः । रामकृष्णनिवासभूमौ कुतो रक्षःप्रवृत्ति रिति भावः । व्यङ्ग्यन्तु माधवस्य वसन्तस्य, बलेन शक्त्या, आक्रान्तं त द्बृन्दावनं, तदा ग्रीष्मे, शुशुभे । अय मेको विरोधः । ग्रीष्मे वसन्ताक्रमणवर्णनात् । तथापि ग्रीष्मनिरसनेन वसन्तोन्मेषे रामकृष्णप्रभावादिति कथञ्चि दङ्गीकृतेऽपि विकस्वरपलाशता सम्फुल्लपलाशकुसुमवत्ता नासीत् । अर्था द्बृन्दावनस्तैवेति विशेषोक्तिः कारणे सत्यपि कार्यानुदयात् ॥ ११०

श्लो ॥ बृन्दावनपदे रम्ये । तदा विहरतो हरेः
वेणुनादविनोदेन । के वा नैवातिहर्षिताः? १११

-136



बृन्दावनेति— तदा ग्रीष्मे, रम्ये मनोहरे, बृन्दावने विहरतः क्रीडतः, हरेः कृष्णस्य, सम्बन्धिना वेणुनादविनोदेन वेणुध्वनिविलासेन, के वा पुरुषाः नैवातिहर्षिताः नैव सन्तोषिताः; किन्तु सर्वेऽपीत्यर्थः ॥

ग ॥ स्थाने हि तत् ॥

तत् भगवदीयवेणुनादेन सर्वजनहर्षणम्, स्थाने हि उचितमेवेत्यर्थः ॥ १११

श्लो ॥ छिद्रै र्मुहु र्मुखगतै रपि गायकाना
मागन्तुकैश्च सहजै र्बहुभि र्लघीयान्
वंश स्तदा हरिकरग्रहणानुभावा
त्प्राप्त श्श्रुतिं जनयतीति मुदं न चित्रम् ॥ ११२

छिद्रै रिति— मुहुः पुनः पुनः, गायकानां गायनानां, मुखगतैः वक्त्रं प्राप्तैः, वेणुच्छिद्रेषु मुखं क्षिप्त्वा गायन्तीति प्रसिद्धिः । आगन्तुकैः कल्पितैः, सहजैः स्वाभाविकैश्च, बहुभि रनेकैः, श्छिद्रैः रन्ध्रैः, लघीयान् भारहीनः, छिद्रस्थानीयकाष्ठस्थिरांशापगमा दिति भावः । वंशः वेणुः, तदा हरिकरग्रहणानुभावात् हरेः कृष्णस्य, करेण ग्रहणं स्वीकारः, तस्य अनुभावात् प्रभावात्, श्रुतिं श्रवणं, श्रोतॄणामिति भावः । प्राप्तस्सन् मुदं सन्तोषं, जनयति उत्पादयतीति, न चित्रं नाद्भुतं । वेणो रचेतनत्वेन स्वतो मञ्जुस्वनाभावेऽपि परकीयव्यापारेण वीणादिव त्कर्णप्रियङ्करत्वं न चित्र मित्यर्थः । वंशस्य श्रोतृश्रवणप्राप्तिः स्वीयध्वनिद्वारा सम्भवतीति बोध्यम् । व्यङ्ग्यार्थस्तु मुहु र्गायकानां दूषकाणां, मुखगतैः निरन्तरं तै रुद्घोष्यमाणै रित्यर्थः । आगन्तुकैः सहजैश्च बहुभिः छिद्रैः दोषैः, लघीयान् अतिलघुः, अश्लाघ्य इति यावत् । वंशः कुलं, तदा हरिकरग्रहणानुभावात् हरे रस्मिन् वंशे पाणिग्रहण प्रभावा द्धेतोः श्रुतिं प्राप्तस्सन् श्रुतस्सन्, मुदं जनयतीति न चित्रम् । अत्यल्पोऽपि वंशः महद्भि स्सह सम्बन्धा च्छ्लाघ्यतरो भवतीति · किं पुनर्हरिसम्बन्धा दिति भावः । अन्योऽप्यर्थः प्रतीयते । गायकानां दूषकाणां संसर्गादिति शेषः । आगन्तुकै रभ्यस्तैः सहजैश्च मुखगतैः बहुभि श्छिद्रै र्दोषैः अवाच्यवचनरूपै रित्यर्थः । लघीयान् दुष्टो वंशः लक्षणया तदुद्धारकः पुत्रोऽभिधीयते । हरिकरग्रहणानुभावात् भगवता हस्तेन स्वीकारानुभावा द्धेतोः भगवता दत्ताभयत्वादिति भावः । श्रुतिं वेदं प्राप्तस्सन् मुदं जनयति; अर्थात्पितुः इति न चित्रम् ध्रुवस्य शिरसि भगवता हस्ते दत्ते यथा स सर्वज्ञोऽभवदेव मन्योऽपि भवेदेवेति नात्राश्चर्यविषयं किञ्चिदपीति भावः ॥ ११२

ग ॥ तदैव गोरूपधारी प्रलम्बनामा निशाचर स्सङ्कर्षण मभिभूयधेनुकसिद्धि मलभत ॥ ११३

तदेति— तदैव गोरूपधारी गोस्वरूपभृत्, प्रलम्ब इति नाम आख्या यस्य सः, निशाचरः राक्षसः, सङ्कर्षणं राम, मभिभूय तिरस्कृत्य, तेन सह युद्धेत्यर्थः । त मधिक्षिप्येति वा अर्थः । धेनुकसिद्धिं धेनुकासुरप्राप्तफल मित्यर्थः । मृति मिति यावत् । अभजत प्राप ॥ ११३

**ग ॥ तदनु दन्दह्यमानदावानलज्वालामालावलयितेषु गोपालेषु ॥ ११४**

तदन्विति— तदनु प्रलम्बनाशनानन्तरम्, गोपालेषु वत्सपालेषु, दन्दह्यमानस्य विशेषेण दहतः, दावानलस्य दावाग्नेः, ज्वालामालाभिः शिखापङ्क्तिभिः, वलयितेषु वेष्टितेषु सत्सु ॥ ११४

**श्लो ॥ हा कृष्ण ! हा राम ! दयापयोधे ! । दीनार्तिहारिन् ! शरणं भवेति**
**आर्तप्रणादं कुररीविराव । सरूप मेषा मशृणो न्मुरारिः ॥ ११५**

हेति— हाकृष्ण हाराम हेदयापयोधे करुणासमुद्र, हेदीनार्तिहारिन् दीनाना मनाथाना, मार्तिं पीडां, हरतीति तद्धारी तस्य सम्बुद्धिः । यद्वा दयापयोधे दीनार्तिहारिन् हाराम हाकृष्ण इति रामकृष्णयो र्विशेषणद्वय मन्वेतव्यम् । शरणं रक्षको, भव प्रार्थनायां लोट् । पृथग्जनाना मस्मादृशानामपि केवलं प्राणिषु कदाचि द्दया वर्तते । तदवनसामर्थ्यन्तु नास्तीति तत्सामर्थ्यो-द्बोधनार्थं दीनार्तिहारिन्निति । इत्येवं रूपं एवां गोपालानां सम्बन्धिनं कुररीविरावसरूपं पक्षिध्वनितुल्यं, आर्तप्रणादं दीनारवं, मुरारिः कृष्णः अशृणोत् श्रुतवान् ॥ ११५

**श्लो ॥ श्रीपति श्श्रितवात्सल्या । त्कल्पान्तदहनोपमम्**
**तदा योगबला द्वह्नि । मुपसंहरति स तम् ॥ ११६**

श्रीपति रिति— श्रीपतिः कृष्णः, श्रियो लक्ष्म्याः, मायाः पति र्नियन्तेति, परमेश्वर त्वाभिप्रायगर्भ मिदम् । श्रितेषु आश्रितेषु, वात्सल्यात् स्नेहा, द्धेतोः तदा तदानीं, योगबला न्मायासामर्थ्यात्, कल्पान्तदहनोपमं प्रळयानलतुल्यं, तं वह्निं दावाग्निं, मुपसंहरति स पपौ । लट् स्मे इति लिडर्थे लट् ॥ ११६

अव— इतरै रित्यादिभि श्चतुर्भि र्वर्षर्तुं वर्णयति—

**श्लो ॥ इतरै स्सममेव सन्निधिस्था । किमु वर्षा अपि तापितातपेन**
**य दसौ स्तनितच्छला द्रटन्ती । रुदती वृष्टिमिषा त्तदाविरासीत् ॥ ११७**

इतरै रिति— सन्निधिस्था ग्रीष्मानन्तरभावित्वा त्समीपस्था, वर्षा अपि प्रावृडपि, ग्रीष्मतापापहरणक्षमापी त्यपे रर्थः । इतरै स्सममेव इतरा इवेत्यर्थः । तापेन ग्रीष्मेण, तापिता सन्तापिता, किमु इत्युपमासंसृष्टोत्प्रेक्षा । इयं च प्रावृट्तापोत्प्रेक्षा सन्निधिस्थेति पदार्थहेतुकत्वा

त्काव्यलिङ्गसङ्कीर्णा स्वोत्प्रेक्षां सिद्धवत्कृत्य वदति । य दसा विति य द्यसा दसौ वर्षा तदा ग्रीष्मावसाने, स्तनितच्छलात् गर्जितव्याजात्, रटन्ती शब्दायमाना सती, वृष्टिमिषा द्रुदती सती वर्षव्याजा दश्रुविमोचनं कुर्वन्ती सतीत्यर्थः । रुदिर् अश्रुविमोचने इति धातो श्शत्रन्तात् ऋन्नेभ्य इति ङीप् । आच्छीनद्यो रिति नुम्विकल्पः । आविरासी दाविर्बभूव । सन्तप्ता हि नार्यः उच्चै विलपन्त्यो रुदन्तीति प्रसिद्धम् । पूर्ववाक्यार्थस्य उत्तरवाक्यार्थेन हेतुना समर्थनात् काव्यलिङ्गम् ॥ ११७

श्लो ॥ नामोदितं तदा किं वा । कादम्बोन्मेषवैभवैः
चित्रं तथापि नामोदः । कादम्बोन्मेषजो नृणाम् ॥ ११८

नामोदित मिति– तदा वर्षाकाले, कादम्बोन्मेषवैभवैः कादम्बः कदम्बकुसुमसम्बन्धी, उन्मेषो विकासः, तस्य वैभवैः समृद्धिभिः, किंवा नामोदितं न सुरभितं, सर्वमपि सुरभित मेवेत्यर्थः । तथापि सर्वस्य सुरभितत्वेपि नृणां कादम्बोन्मेषजः कदम्बकुसुमविकासजन्यः, आमोदः परिमळः, न नासीदिति चित्रं । विरुद्धत्वात् कादम्बाः कलहंसाः, तेषा मुन्मेषः विजृम्भणं, तस्मा ज्जायते इति तज्जः, तज्जन्यः आमोदः हर्षः, नेति विरोधपरिहारः । 'कादम्बः कलहंस स्स्या' दित्यमरः । वर्षाकाले हंसाना मार्तिसम्भवा त्रतत्सञ्चार इति भावः । विरोधाभासालङ्कारः ॥ ११८

श्लो ॥ यदागति रयोगार्त । वधूजनविनाशिनी
प्रावृषि प्रसृतो वातः । कुत स्सोऽयं सदागतिः ॥ ११९

यदागति रिति– यदागतिः यस्य वायो, रागति रागमनं, अयोगार्तवधूजनविनाशिनी अयोगेन वियोगेन, आर्तस्य दुःखितस्य, वधूजनस्य स्त्रीसमूहस्य, विनाशिनी नाशकरी, वार्षिकमेघसकाशा दागत श्शीतो वायु र्विरहोद्दीपक इति तत्स्पर्शेन वियोगिनीनां दुःखातिशय इति भावः । प्रावृषि वर्षासु, प्रसृतः चलितः, सोऽयं वातः विरहिजनमारको वायुः, सदागतिः सती प्रशस्ता परोपकारार्थेति यावत् । आगतिः आगमनं यस्य सः तथोक्तः, 'वायुः मातरिश्वा सदागति' रित्यमरा द्वायो स्सदागतिपदवाच्यत्वं स्पष्टम् । कुतः कथं, भवति, दुरागति रेव भवतीति भावः । निरुक्ति रलङ्कारः–'निरुक्ति र्योगतो नाम्ना मन्यार्थत्वप्रकल्पन' मिति लक्षणात् । सदा सर्वदा, गतिः प्रसारो यस्येति व्युत्पत्त्या सदागतिशब्दः इतःप्रा ग्वायौ वर्तते; अधुना तु अन्यार्थत्वप्रकल्पनेन तद्विघटित मिति लक्ष्ये लक्षणसमन्वयः ॥ ११९

श्लो ॥ मलिनोऽप्यतिचञ्चलोऽपि मेघः
कलयन् सत्सु तिरस्क्रियां सदापि

**विषपूरमयाशयोऽपि दीनैः**
**प्रणुतः कैश्चन जीवनप्रदानात् ॥ १२०**

मलिन इति– मलिनो नीलः, पापीच । अतिचञ्चलः अधिकविद्युत्, 'विद्यु च्चञ्चला चपलापि चे' त्यमरः । अत्यन्तचपलचित्तश्च, सत्सु नक्षत्रेषु विषये, तिरस्क्रिया माच्छादनं, सदा सर्वदा, कलयन् कुर्वन्नपि, सत्सु साधुषु तिरस्क्रियां परिभवं, सदा कलयन्नपीति च विषपूरमयाशयः उदकपूरिताभ्यन्तरः, गरळप्रवाहप्रचुरचित्तश्च, अतिक्रूर इति यावत् । एवं भूतोऽपि मेघः जीवनप्रदाना द्धेतोः उदकदानात्, जीवनं जीविका धनादिरूपा वृत्ति रिति यावत् । तस्य प्रदाना दितिच, दीनैः कृपणैः दरिद्रैश्च, कैश्चन पुरुषैः, प्रणुतः स्तुतः; दुष्टोऽपि दानेन कीर्त्यते इति भावः । श्लेषालङ्कारः । नासौ ध्वनिः; मेघ इति विशेष्यस्य श्लिष्टत्वाभावात् । किञ्च एवंविधोपि मेघो दीनैः प्रणुत इति वाक्यार्थस्य जीवनप्रदाना दिति पदार्थहेतुकत्वा त्काव्यलिङ्गम् । किञ्च मलिनोऽपीत्यादिषु प्रतीतस्य पापित्वादिविरोधस्य नीलत्वादिभिः परिहारा द्विरोधाभावः– १२०

अव ॥ गर्जितै रित्यादिभि स्त्रिभि श्शरदं वर्णयति ॥

**श्लो ॥ गर्जितै स्तर्जिता मस्य । तटिद्भि र्भीषितामपि**
**सर्वंसहां स्थिरां नेतुं । प्रसादं शर दाययौ ॥ १२१**

गर्जितै रिति– अस्य मेघस्य, गर्जितैः स्वनितैः, तर्जिता मधिक्षिप्तां, तथा अस्य तटिद्भिः विद्युद्भिः, भीषितामपि भीतिं गमिताञ्च, सर्वंसहां तथापि सर्वंसहां सर्वं मेघकृतं परिभवं सहते इति सर्वंसहा तां, 'सर्वंसहा वसुमती' त्यमरा त्सर्वंसहाशब्दवाच्यां च, स्थिरां भूमिं, प्रसादं विमलत्वं, नेतुं गमयितुं, नयतिर्द्विकर्मकः । शरत् ऋतुः, आययौ आजगाम । वर्षासु पङ्कादिकलुषिता भूमि श्शरदागमे प्रसन्ना भवतीति भावः । अत्र भर्त्रा परुषोक्त्यादिभि स्तर्जितां भ्रूविक्षेपादिभि र्भीषितां तथापि तत्सर्वं सहमानां काञ्चन वधू मनुनेतुं काचन सखी आययाविति ध्वन्यते । तेन समासोक्ति रलङ्कारः । 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चे' दिति लक्षणात् । सर्वंसहेत्यत्र निरुक्ति रलङ्कारः ॥ १२१

**श्लो ॥ प्रतिपन्नघनागमान्तभागो । विमलीभूतजलाशयो विपङ्कः**
**समपद्यत मध्यमो हि लोको । न तदानीं कथ माविरस्तु हंसः ॥ १२२**

प्रतिपन्नेति– मध्यमो लोकः स्वर्गपाताळमध्यस्थो लोकः, भूलोक इत्यर्थः । प्रतिपन्नघनागमान्तभागः प्रतिपन्नः प्राप्तः, घनागमस्य, मेघागमस्य प्रावृष इति यावत् । अन्तभागः अवधिः, येन स तथोक्तः, निवृत्तवर्षाकाल इत्यर्थः । विमलीभूतजलाशयः विमलीभूताः निर्मलाः, जलाशयाः ह्रदाः, यस्मिन् सः; विपङ्कः कर्दमरहितः, एवंविध स्समपद्यत हि अभूत् खलु ।

तदानीं हंसः पक्षिविशेषः, कथं कुतो, नाविरस्तु न प्रादुर्भवतु ? किन्तु हंसप्रादुर्भाव श्शरद्युचित एवेति भावः । व्यङ्ग्यार्थस्तु मध्यमः न त्वज्ञः नापि प्राज्ञः किन्तु मध्यस्थो ज्ञानाधिकारीत्यर्थः । लोकः जनः, प्रतिपन्नः प्राप्तः, ज्ञात इत्यर्थः । घनः अधिकः, आगमान्तभागः वेदान्तभागः, येन सः तथोक्तः । इतः पूर्व मधीतवेदवेदाङ्गत्वा दिदानीं वेदान्तज्ञानं सौलभ्येन जात मिति भावः । अत एव विमलीभूतजलाशयः विमलीभूतः अस्मतत्त्वपरोक्षज्ञानेन निर्मलः लरयो रभेदात् जडः वेदान्तशास्त्राधिगमा त्पूर्व मपरिशुद्धः आशयः अन्तःकरणं, यस्य सः इतःप्रा ग्जडाशयः, इदानीन्तु विमलाशय इति भावः । अत एव विपङ्कः निष्पापः, 'ज्ञानाग्नि स्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुनेति' गीतावचनात् । प्राक्तनसर्वपुण्यपापात्मककर्मसञ्चयं नाशयित्वा उत्तरत्रापि जन्महेतुभूतपुण्यपापसम्बन्धं निर्मूलं नाशयन्निति भावः । एवंविध स्समपद्यत हि जातः खलु, तदानीं हंसः परमात्मा, कथं नाविरस्तु ब्रह्मसाक्षात्कार स्स्यादेवेत्यर्थः ॥ १२२

श्लो ॥ पक्षपात स्तदा नील । कण्ठैकविषयो भवत्
वासुदेवे परं रक्ता । तथापि सकला मही ॥ १२३

पक्षपात इति– तदा शरदि, पक्षपातः स्नेहः, नीलकण्ठैकविषयः नीलकण्ठः शिवएव, एकः मुख्यः, विषयः गोचरः, यस्य स तथोक्तः, अभवत् । शिवे एव पक्षपातः न त्वन्यदेवताया मिति भावः, इति विरोधार्थः । पक्षपातो गरुद्गळनं, नीलकण्ठः मयूरः, एको विषयः यस्य स तथोक्तः, अभवत् । शरदि नीलकण्ठानामेव पक्षगळनं न त्वन्यपक्षिणा मिति भावः; इति परिहारः । तथापि शिवपक्षपाते सत्यपि तथाचेति च सकला सर्वा, मही महीशब्देन तद्वर्तिनो जना लक्ष्यन्ते । वासुदेवे परं श्रीकृष्णे एव, रक्ता अनुरक्ता, अभवदिति पूर्वेणान्वयः । विरोधाभासालङ्कारः ॥ १२३

ग ॥ तदनु शरदि व्यतीतायाम् ॥

तदनु ततः, शरदि व्यतीताया मतिक्रान्तायां सत्याम् ॥

श्लो ॥ सन्तप्ता स्सुदृश स्तदा व्रजगता श्चित्तोद्भवव्याधिभि
र्मन्वाना हरि मन्तरेण विरसं संसारसंसेवनम्
कुर्वाणा गुणवर्णनं प्रतिमुहु र्गेयाः कथासन्ततेः
किं वा साधन मन्तरङ्ग मिति तत्प्राप्तौ विचाराकुलाः ॥ १२४

सन्तप्ता इति– तदा हेमन्तऋतुप्रादुर्भावे, व्रजगताः व्रजनिवासिन्यः, सुदृशः स्त्रियः, अनेन शोभने दृशौ यासा न्ता इति व्युत्पत्त्या नारीणा मासां सौन्दर्यातिशयो व्यज्यते । चित्तोद्भवव्याधिभिः मन्मथरुजाभि, स्सन्तप्ताः भृशं तप्ता, स्सत्यः हरिं कृष्ण, मन्तरेण विना, श्रीकृष्णभर्तृकत्वव्यतिरेकेणेत्यर्थः; श्रीकृष्णसम्भोगं विनेति परमार्थः । संसारसंसेवनं संसारसेवा, विरसं व्यर्थ मिति

मन्वानाः भगवत्सम्भोगं विना संसारासक्ति र्व्यर्थेति मत्वेत्यर्थः। प्रतिमुहुः मुहुर्मुहुः, गुणवर्णनं श्रीकृष्णगुणकीर्तनं, कुर्वाणाः कुर्वन्त्यः, अनेन प्रलापोनामावस्थाविशेष स्सूचितः। 'प्रलापः प्रियसंश्लिष्टगुणालापउदाहृत इति लक्षणात्' कथासन्ततेः कथासमूहस्य, कर्मणि षष्ठी। अर्था त्कृष्णस्यैव। गेयाः गायिन्यः, भव्यगेयेत्यादिना कर्तरि निपातः। तत्प्राप्तौ श्रीकृष्णप्राप्तिविषये, अन्तरङ्गं मुख्यं क्षिप्रसिद्धिकर मित्यर्थः। साधनं निकायः कायमानं नाम उष्णकाले तृणादि व्रतादिकं, किंवा किमिति, विचाराकुलाः चिन्तासङ्कुलाः, जाता इति शेषः। केन वा व्रतेन कृतेन सता अस्माकं श्रीहरिः पति र्भवेदिति विचाराक्रान्ता बभूवुरिति भावः। अत्र हरिसम्पर्कं विना संसारस्य अरम्यत्वकथना द्विनोक्ति रलङ्कारः। 'विनोक्ति श्चे द्विना किञ्चि त्प्रस्तुतं हीन मुच्यते' इति लक्षणात्। व्यङ्ग्यार्थस्तु—तदा व्रजगताः सुदृशः शोभना दृक् ज्ञानं येषान्ते सुदृशः, सुधियः चित्तोद्भवव्याधिभिः मनोजन्यकामादिदुःखैः, कामादीनां मनोधर्मत्वा दिति भावः। सन्तप्ता स्सन्तः; निर्विण्णा भूत्वेत्यर्थः। हरिं भगवन्त मन्तरेण, तद्ध्यानं विनेत्यर्थः। संसारसंसेवनं विरसं मन्वानाः संसारिणामपि जनकादीनां संसारविरोधेन हरिभजनस्य कृतत्वात्। संसारेपि हरिभजनमेव कर्तव्य मिति भावः। प्रतिमुहु र्गुणवर्णनं सत्यकामत्वादिभगवद्गुणकीर्तनं कुर्वाणाः, कथासन्ततेः मत्स्याद्यवतारीकृतवेदाहरणादितिवृत्तान्तसमूहस्य, गेयाः गायकाः, एतावता भक्तिनिष्ठा भूत्वेति सिद्धम्। तत्प्राप्तौ परब्रह्मसाक्षात्कारे, अन्तरङ्गं इतरानपेक्षं मुख्य मिति यावत्। साधनं किंवेति विचाराकुला जाताः। भक्तिरपि ज्ञानद्वारैव मोक्षहेतु, र्न साक्षा दिति स्व नुष्ठीयमानाया भक्ते र्बहिरङ्ग-साधनत्वा दन्तरङ्गसाधनं ज्ञानं कीदृशं कथं वानुष्ठेयमिति तत्र विचारं कृतवन्त इति भावः॥ १२४

**श्लो॥ नाथ स्त्रिजगतां नाथो। हरि रस्माक मस्त्विति**
**हैमन्ते प्रथमे मासि। चक्रुः कात्यायिनीव्रतम्॥** १२५

नाथ इति— त्रिजगतां त्रिलोकानां नाथः, प्रभुर्हरिः, कृष्णः अस्माकं नाथः पतिः, प्रभुरिति च अस्तु भवतु, इत्येवं सङ्कल्प्येति शेषः। हैमन्ते हेमन्तऋतुसम्बन्धिनि— सर्वत्राण् च तलोपश्चेति तलोपः। प्रथमे पूर्वस्मिन्, मासि मासे, अर्था न्मार्गशीर्षे कात्यायनीव्रतं काळीव्रतं, चक्रुः कृतवत्यः। सुदृश इति पूर्वश्लोका त्कर्तृपद मन्वेतव्यम्। अत्र त्रिजगतां नाथस्य हरेः जगदन्तःपातिनां गोपिकानामपि व्रतानुष्ठानात् प्रागेव नाथत्वात् पुन स्तन्नाथत्वार्थं व्रतानुष्ठानं पिष्ट-पेषण मिति विरोधः। तस्य नाथो भर्ते त्यर्थवर्णना त्परिहार इति विरोधाभासालङ्कारः प्रतीयते॥

**ग॥ अनन्तर मभ्यर्च्य च भगवतीं भवानीं विविधोपचारै रेव मस्तौषुः।** १२६
**तथा हि॥**

अनन्तर मिति— अनन्तरम् व्रतानुष्ठानानन्तरम्। भगवतीं षाड्गुण्यनिलयां, भवानीं भवस्य पत्नीं, इन्द्रवरुणभवेत्यानुक्; ङीष् च- पार्वती मित्यर्थः। विविधोपचारैः मधुपर्कादिबहुविधोपचारैः,

रभ्यर्च्य पूजयित्वा, एवं वक्ष्यमाणप्रकारेण, अस्तौषुः स्तुतिं चक्रुः। ष्टुञ् स्तुताविति धातो र्लुङ्॥ स्तुतिप्रकारमेव प्रतिपादयति कवि रित्यर्थः। १२६

अव॥ अथ। नाळीकद्युतीत्यादिभि र्नवभिः स्तुत्वा दशमेन स्वाभीप्सितं प्रार्थयन्ते–

श्लो॥ नाळीकद्युतिपश्यतोहर मद स्त्वत्पादपङ्केरुहं
वन्दे यन्मकरन्दबिन्दुलहरीदैन्यानलध्वंसिनी
यत्केळीकलहेषु विश्वजननि त्रासा न्नत श्शङ्कर
श्चूडापीडहिमद्युतिस्रुतसुधाधाराभि रासिञ्चति॥ १२७

नाळीकद्युतिरिति– हेविश्वजननि लोकमातः! अदः एतत्, मन्मनोगत मित्यर्थः। परिदृश्यमान मर्चाविग्रहगत मिति वा; नाळीकद्युतिपश्यतोहरं लोकस्य पश्यत स्सतः तदीयवित्तं हरतीति पश्यतोहरः नाडिन्दमादिः प्रसिद्ध श्चोरः नाळीकस्य कमलस्य, सम्बन्धिनीनां द्युतीनां कान्तीनां, पश्यतोहरं चोर, मपहर्तारमिति यावत्; नाळीका दप्यधिकद्युतिम दित्यर्थः। अत्र नाळीकस्य पश्यत स्सतः तदीयां द्युतिमेव वित्तं हरतीति नाळीकद्युतिपश्यतोहर मित्यखण्डार्थः। अचेतनस्य नाळीकस्य दर्शनासम्भवात् दर्शन मत्र लक्षणया विकसनमेव। ततश्च उत्फुल्लनाळीकद्युतिहर मिति लब्धम्। स्फुटकमल सदृशमिति यावत्। त्वत्पादपङ्केरुहं तव चरणरूपं कमलं, नचात्र उपमितसमास इति भ्रमितव्यम्। नाळीकेति विशेषणेन सह पौन रुक्त्यापत्तेः यन्मकरन्देति वक्ष्यमाणवाक्यार्थानन्वयापत्तेश्च नहि चरणे मकरन्दबिन्दुलहरी वर्तते। इदं च पादरूपितं कमलं न लोकसाधारणं; किन्तु लोकविलक्षणम्; अन्यथा नाळीकद्युतिपश्यतोहरत्वासम्भवात्; लोकसाधारणं कमलं नहि स्वेतरकमलद्युतिं हर्तुं क्षमते इति। वन्दे नमस्करोमि। प्रत्येकाभिप्रायो एकवचन निर्देशः। नमस्कारोद्दिष्टफलं व्यञ्जयन्ति तच्चरणरूपितं कमलधर्मविशेषं प्रस्तौति यदिति– यस्य चरणकमलस्य सम्बन्धिनी मकरन्दबिन्दुलहरी मधुपृषत्प्रवाहः, पादगतलावण्यप्रवाह एव निगीर्णाध्यवसान लक्षणातिशयोक्त्या मकरन्दबिन्दुलहरीत्वेन निरूपित इति ज्ञेयम्। दैन्यानलध्वंसिनी दैन्यं दीनत्वं, दुःखमिति यावत्। दारिद्र्यमिति च प्रतीयते; त देवानलः अग्निः, तस्य ध्वंसिनी नाशकरी भवतीति शेषः। पार्वतीचरणारविन्दसौन्दर्यं मनसि लग्नं चे त्सर्वदुःखशान्ति र्भवति; ऐश्वर्यहेतुत्वा त्सर्वदारिद्र्यनिवृत्तिश्च भवतीति प्रस्तुतार्थः। मकरन्दस्य जलविकारत्वेन तन्निवार्यत्वोपयोगितया अनलत्व त्सन्तापकरत्वेन च दैन्ये अनलत्वं रूपितम्। एतेन अनाथत्वप्रयुक्त मस्मद्दैन्य मपहर्तुं त्वच्चरणारविन्दवन्दन मिति सूचितम्। केळीकलहेषु प्रणयकलहेषु, त्रासा द्भया द्धेतोः, यत्पादारविन्दं कर्म नतः नम्रस्सन् शङ्करः शिवः, चूडापीडहिमद्युतस्रुतसुधाधाराभिः चूडाया मापीडः भूषणं, चूडापीडः मकुटालङ्कार इत्यर्थः। सचासौ हिमद्युति श्चन्द्रः, तस्मात् स्रुताभि स्स्रवन्तीभिः, सुधाधाराभिः अमृतासारैः, आसिञ्चति आसमन्ता त्सिञ्चति एतेन पार्वत्या श्चिरं

प्रसादाभावो व्यज्यते तेन च शिवेनमहा नपराधः कृत इति व्यज्यते । एतेन यथा त्वं स्वाधीन-भर्तृका तथास्मानपि कुर्विति प्रार्थना व्यज्यते ॥ १२७

श्लो ॥ मातः! स्तौति चतुर्मुखः, प्रणमति प्राचीनबर्हि र्मुहु,
व्याचष्टे मुरशासन स्तव गुणा न्मन्दारमाल्योपमान् ,
इत्थं पार्श्वचरोक्तिभिः कथमपि व्यापारयन्ती दृशः
प्रान्ते काचन मोहिनी विजयते लीलाशुकैकायना ॥ १२८

मातरिति— हेमातः! रक्षकत्वगुणयोगा न्मातृत्वव्यपदेशः। यद्वा प्रकृतिपुरुषयो र्जगत्कारण-त्वेन प्रकृति र्जगतो मातैवेति कृत्वा प्रकृतिस्वरूपत्वा द्वा चतुर्मुखः ब्रह्मा स्तौति स्तुतिं करोति। प्राचीनबर्हि रिन्द्रः, प्रणमति नमस्करोति। मुरशासनः विष्णुः, मन्दारमाल्योपमान् मन्दारपुष्पमाला-तुल्यान् , तद्वन्मधुरा नित्यर्थः। तव गुणान् मुहु रित्यर्थं, व्याचष्टे कीर्तयति। तत्थ मेवंरूपाभिः पार्श्वचरोक्तिभिः अनुचरवचनैः, कथमपि अतिकृच्छ्रेण, प्रान्ते परिसरदेशे दृशः दृष्टीः, व्यापारयन्ती प्रेरयन्ती, पश्यन्तीत्यर्थः। लीलाशुकैकायना लीलाशुकः विलासकीरः, एकं मुख्य, मयनं स्थानं, मनस इति भावः- यस्या स्सा तथोक्ता; शुकैकाग्रचित्तेत्यर्थः। अयमेव ब्रह्मादिकृतस्तुत्याद्यनुसन्धाना भावस्य हेतुरिति परिकरालङ्कारः। काव्यलिङ्गं वा। काचन अनिर्वचनीया मोहिनी ते जगन्मोहकरी। अर्था त्पार्वती विजयते सर्वोत्कर्षेण वर्तते। अत्र ब्रह्मादिभि रपि स्तूयते इति परमेश्वरीभावः पार्वत्या स्स्पष्टः। तत्कृतस्तुत्यादि ष्वप्यस्या आदरो नास्तीति ध्वनित त्वेन अतिगाम्भीर्यं व्यज्यते। लीलाशुकेत्यनेन दीनकृपालुत्वं व्यज्यते। तेन च ब्रह्मादि स्तुत्यादिक मप्यननुसन्धाय यथा केवलकृपया लीलाशुकं विनोदयति तद्व दस्मानपीति प्रार्थना व्यज्यते ॥ १२८

श्लो ॥ आनन्दाश्रुझरीपरीतनयना स्सम्फुल्लरोमच्छटाः
स्वेदापूरितगद्गदध्वनिभृत स्संक्षीणवेद्यान्तराः
धन्याः केचन चिन्मयीं पशुपते रानन्दकन्दायिता
मम्ब! त्वा मनुचिन्तयन्ति करुणाकल्लोलिनी मादरात् ॥ १२९

आनन्देति— हेअम्ब मातः! आनन्दाश्रुझरीपरीतनयनाः आनन्दबाष्पसन्तानव्याप्तनेत्राः, नेत्राभ्या मानन्दाश्रूणि मुञ्चन्त इत्यर्थः। सम्फुल्लरोमच्छटाः प्रहृष्टरोमपङ्क्तयः, सञ्जातरोमाञ्चा इत्यर्थः। स्वेदापूरितगद्गदध्वनिभृतः विशेषणद्वय मिदं अन्यतरस्य विशेष्यत्वविवक्षायां समासः। स्वेदेन घर्मजलेन, आपूरिताः व्याप्ताः, तथा गद्गदध्वनिं गद्गदस्वरं, बिभ्रतीति गद्गदध्वनिभृतः स्वेदापूरिता श्च, ते गद्गदध्वनिभृतश्च तथोक्ताः। संक्षीणवेद्यान्तराः सम्यक् क्षीणं नष्टं, वेद्यान्तरं अन्य द्वेद्यं इतरविषय इति यावत् , येषां ते इतरविषयज्ञानशून्या इत्यर्थः। त्वदेकायत्तचित्ता इति

यावत् । एवं विधाः अत एव धन्याः कृतार्थाः, केचन सुधियः केचनेत्यनेन एवंविधानां निष्कपट-भक्तानां विरळत्वं सूच्यते । करुणाकल्लोलिनीं दयातरङ्गिणीं, करुणानिधिमिति यावत् । पशुपते शिवस्य, आनन्दकन्दायितां 'कन्दो वृक्षादिमूले' चेति कोशादत्र उपचारेण केवलमूलार्थे कन्दशब्दो वर्तते । आनन्दस्य कन्दो मूल मानन्दकन्दः, तद्व दाचरितां तथोक्ताम् । शिवस्य इयमेवसुखहेतु रिति भावः । यद्वा आनन्दकन्दः परमानन्दः तद्वदाचरितां तथोक्तां, शिवस्य परमानन्दमयी मित्यर्थः । 'सच्चिन्मयश्शिव स्साक्षा तस्यानन्दमयी शिवे' ति वचनात् । सच्चिद्रूपे ब्रह्मणि शिवे उपलभ्य आनन्दः पार्वत्येवेति भावः । परब्रह्मण स्सच्चिदानन्दात्मकत्वात् सच्चिद्रूप शिवः आनन्दरूपा शक्तिश्च उभावपि ब्रह्मशब्दवाच्या विति निष्कर्षः । चिन्मयी चित् चेतनं ज्ञानमिति यावत्; तत्प्रचुर मुच्यते यस्यां सा चिन्मयी; प्रचुरज्ञाना सर्वज्ञेति यावत् । तां यद्वा चिदेव चिन्मयी स्वार्थे मयट् ज्ञानस्वरूपिणीत्यर्थः । तां एवंविधां त्वां, प्रत्यग्रूपिणीं त्वा मित्यर्थः । आदरात् प्रीत्या अनुचिन्तयन्ती ध्यायन्ती. निर्विकल्पसमाधा वनुभवन्तीति भावः । यद्वा वस्तुत श्चिन्मयीं पशुपते रानन्दमूलभूतां सरूपामेव त्वा मनुचिन्तयन्ति मनसि तव रूपं कल्पयित्वा ध्यायन्तीति भावः ॥ १२९

श्लो ॥ मुरान्तकपुरान्तक प्रभृतयो दयामेदुरा
न सन्ति किमु देवताः प्रणुतलालनालालसाः ?
तथापि मम मानसं कलितकल्पवल्लीनिभे
दयारसमयाशये महसि शङ्कराह्लादिनि ॥ १३०

मुरान्तकेति– दयामेदुराः करुणारसभरितान्तःकरणा इत्यर्थः । अत एव प्रणुत लालनालालसाः भक्तोल्लासनचतुराः, मुरान्तकः विष्णुः, पुरान्तक शिवः, मुरान्तक पुरान्तकौ प्रभृती आदी येषान्ते तथोक्ताः देवताः नित्यस्त्रीलिङ्गोऽयम् । देवा इत्यर्थः । न सन्ति किम् सन्त्येव । तथापि तेषां सत्त्वेपि, मम मानसं मनः कलितकल्पवल्लीनिभे कलिता स्वीकृता कल्पवल्लीनिभा कल्पलतासदृश्यं येन तस्मिन् तथोक्ते, आश्रिताभीष्टप्रदाना त्सौकुमार्याच्च कल्पलतासमे इत्यर्थः । दयारसमयाशये दयारसमयः कृपारसप्रचुरः, आशयः अन्तःकरणं, यस्य तस्मिन् यद्वा दयारसमयः करुणारसविकारः, आशयो यस्येति; एवञ्च कृपारस एव त्वदाशयात्मना परिणत इति फलितम् । शङ्कराह्लादिनि शिवसन्तोषके, तत्प्रेयसीभूतत्वादिति भावः । महसि तेजसि स्वयंप्रकाशस्वरूपे इत्यर्थः । अर्था त्पार्वत्यां वर्तते इति शेषः । पर्यायोक्त मलङ्कारः । एतेन 'महेश्वरे वा महता मधीश्वरे जनार्दने वा जगदन्तरात्मनि न वस्तुभेदप्रतिपत्ति रस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे' इति भर्तृहरिश्लोकानुगुण्येन मुरान्तकादीनां सर्वेषां ब्रह्मत्वाविशेषेपि पार्वत्यामेव मम भक्ति रिति सिद्धम् ॥ १३०

श्लो ॥ न कर्म रचयामहे न च तपांसि शिक्षामहे
न दैवत मुपास्महे न हृदि किञ्चि दाशास्महे
महः किमपि मङ्गळं परममङ्गळानामपि
त्रिलोचनतपःफलं हृदि विधातु मीहामहे ॥ १३१

न कर्मेति– वयं कर्म न रचयामहे न कुर्मः; तपांसि न शिक्षामहे च नैवाभ्यस्यामः; चित्तैकाग्रयलक्षणतपोऽभ्यासश्रमं न प्राप्नुम इति भावः। दैवत मिन्द्रादिदेवताबृन्दं, समूहार्थेऽण्; यद्वा देवतैव दैवत मिति स्वार्थे अण्; देवता मित्यर्थः– नोपास्महे न सेवामहे, इन्द्रादिदेवतोपासनां न कुर्म इत्यर्थः। हृदि मनसि, किञ्चिदपि नाशास्महे न काङ्क्षामः; परममङ्गळाना मत्यन्तशुभभूताना मपि वस्तूनां, मङ्गळं शुभकरं, मङ्गळहेतौ मङ्गळशब्दप्रयोग औपचारिकः– हेत्वलङ्कारः। 'हेतुहेतुमतो रैक्ये हेतुं केचि त्प्रचक्षते' इति लक्षणात्। नेत्रानन्देन चन्द्रेणे त्युदाहृतत्वाच्च। त्रिलोचनतपःफलं त्रिलोचनस्य शिवस्य, सम्बन्धिनः तपसः फलं परिपाकभूत मित्यर्थः। किम प्यनिर्वाच्यं, महः तेजः, अर्थात्पार्वतीं, हृदि हृदये, विधातुं कर्तुं, स्थापयितु मित्यर्थः। ईहामहे इच्छामः। अत्र कर्मादिकरणनिषेधोऽनुपपन्न स्स्वभक्त्यतिशये पर्यवस्यती त्याक्षेपालङ्कारः। 'निषेधाभास माक्षेपं बुधाः केचन मन्वते' इति लक्षणात्। अनेन कर्मतपोदेवार्चनाद्यपेक्षया मानसिका भगवद्रति रधिकेति व्यज्यते। पर्यायोक्त मलङ्कारः॥ १३१

श्लो ॥ तुषारगिरिसम्भवं मघवनीलनीलालकं
कळाधरकळाधरं कलितलोललीलाशुकम्
दयामयमयामहे शरण मिन्दुबिम्बाननं
मुदारुणमदारुणं किमपि हारिहारं महः ॥ १३२

तुषारेति– तुषारगिरिसम्भवं तुषारगिरेर्हिमवत, स्सम्भवः उत्पत्तिः यस्य तत्, एतेन मणिमयशरीरत्वं व्यज्यते। 'अनन्तरत्नप्रभवस्य यस्येति' वचनानुरोधेन हिमवतो मणिप्रभवत्वा त्तत स्सञ्जातेयमपि तथामणिमय्येव भवितु मर्हतीति सम्भावनाया स्सुशकत्वात्। तुषारेत्यनेन तु शीतलत्वं व्यज्यते। कारणगुणानां कार्ये सङ्क्रमणस्यौचित्यात्। मघवनीलनीलालकं मघोनः इन्द्रस्य, नीलाः इन्द्रनीलमणय इत्यर्थः। तद्वन्नीलाः अलका श्चूर्णकुन्तला यस्यतत्; एतेन शिरसि इन्द्रनीलमणिसमन्वय उक्तः। कळाधरकळाधरं कळाधरस्य चन्द्रस्य, कलाया श्शलस्य धरं धारकम्; एतेन चन्द्रकान्तमणिसमन्वयो व्यक्तः। कलितलोललीलाशुकं कलितः धृतः, लोल श्चपलः, लीलाशुकः विलासकीरः येन तत्; स्त्रियो हि लीलार्थं करेशुकं बिभ्रतीति प्रसिद्धिः। अनेन मरकतमणिसम्बन्धो व्यक्तः। अरुणं रक्तम्, एतेन पद्मरागमणिसमन्वयो

व्यक्तः। हारिहारं हारिणो मनोहराः, हाराः मणिस्रजः, यस्य तत्; एतेन साक्षा न्मणिसम्बन्ध उक्तः। एवं तुषारगिरिसम्भवमिति पदध्वनितं पार्वत्या नानाविधमणिमयत्वं स्पष्टं व्यञ्जयित्वा अथ शरण्यगुणाना माह। दयामय मित्यादिभिः। दयामयं प्रचुरदयम्, अदारुणं सौम्यं, प्रसन्नमिति यावत्। प्रसादमेव प्रकटयति, इन्दुबिम्बाननमिति— चन्द्रबिम्बतुल्यमुखव दित्यर्थः। उपमितसमासोऽयम्। बिम्बपदनिर्देशबलात् इन्दोः पूर्णत्वं व्यज्यते। न हि क्षीणेन्दो रस्ति वलयाकारः। सम्पूर्णचन्द्रव त्प्रसन्नम् अत एवाह्लादकं च अस्या मुख मिति भावः। किम प्यनिर्वाच्यं, लोकोत्तर मित्यर्थः। एतेन अप्राकृतत्वं व्यज्यते। महः तेजः, अर्था त्पार्वतीं मुदा सन्तोषेण, शरणं रक्षक, मयामहे भजामहे। हारिहार मित्यत्र हारिहारम् इति पदद्वयं वा, हारि मनोहरम्, हरस्येदं हारं; शिवसम्बन्धि इति तदर्थः। पर्यायोक्तालङ्कारः॥ १३२

**श्लो॥ सुधामधुविधाधरे सविधुखण्डचूडापदे**
**महीयसि महामहे महसि पद्मरागारुणे**
**निमज्जतु नमज्जनप्रचुरदैन्यदावानले**
**मनो मम मनोभवाहितमनोविनोदावहे॥** १३३

सुधेति— सुधामधुविधाधरे सुधाया अमृतस्य, मधुनो मकरन्दस्य च, विधा रीति रिव विधा यस्य सः तथोक्तः। अधरः अधरोष्ठः, यस्य तस्मिन्; अमृतमकरन्दरसतुल्यरसयुक्ताधर-बिम्बवतीति फलितार्थः। अत्र अधररसस्य सुधामधुविधावत्त्वे वक्तव्ये तथा अनुक्त्वा अधरस्यैव तद्वचना त्सर्वोऽप्यय मधरो रसमय एव न तु रसव्यतिरेका दस्त्यत्र कोप्यंश इति प्रतीयते। सविधुखण्डचूडापदे विधो श्चन्द्रस्य, खण्ड श्शकलं, तेन सहितं सविधुखण्डं, चूडेतिपदं चूडापदं, मकुटस्थान मित्यर्थः। सविधुखण्डं चूडापदं यस्यतस्मिन्; तथोक्ते चन्द्रशेखरे इत्यर्थः। महीयसि अतिमहति, महामहे महान् अधिकः, महः उत्सवः यस्य तस्मिन्; महोत्सवशालिनी-त्यर्थः। यद्वा महान् महः यस्मा त्तस्मिन्; भक्तेभ्यो महोत्सवप्रदायके इत्यर्थः। पद्मरागारुणे पद्मरागः अरुणमणिः, तद्व दरुणं रक्तं तस्मिन्; नमज्जनप्रचुरदैन्यदावानले नमतः प्रणतस्य, जनस्य भक्तजनस्येत्यर्थः सम्बन्धिनः प्रचुरस्य अधिकस्य, दैन्यस्य दुःखस्य, वनतुल्यस्येति भावः। दावानलः दावाग्निः, तस्मिन्; यद्वा दवो वनं, स एव दावः स्वार्थे अण्। दैन्यरूपस्य दावस्य अनलः तस्मिन्; रूपकालङ्कारः। मनोभवाहितमनोविनोदावहे मनोभवाहितः मन्मथान्तक शिवः, तस्य मनसः चित्तस्य, विनोद मावहति सम्पादयतीति तथोक्तं। तस्मिन्; महसि तेजसि पार्वत्या मित्यर्थः। मम मनो हृदयं, निमज्जतु मग्नं भवतु॥ १३३

**श्लो॥ विभावसुविभाझरीतुहिनरश्मिरश्मिच्छटा**
**शिखालयशिखावळीमिळितलोचनाब्जं महः**

सदामृतमुदावहं किमपि नीपवाटीतटी
निवासि गुणवासितं भजतु मामकीनं मनः ॥ १३४

विभावस्विति– विभावसो स्सूर्यस्य, विभाझरी कान्तिपूरः, तुहिनरश्मे र्हिमांशोः, रश्मिच्छटा किरणसमूहः, शिखालयस्य अग्ने, शिखावळी ज्वालासङ्घः एतेषा मितरेतरद्वन्द्वः एताभि र्मिळितानि युक्तानि, लोचनाब्जानि अब्जानीव लोचनानि, त्रित्वा द्बहुवचनं, यस्य त त्तथोक्तम् । सूर्यचन्द्राग्निमयनेत्रत्रयवदित्यर्थः । अमृतमुदावहं अमृतं सुधेव, मुदं सन्तोष, मावहति प्रापयतीति तथोक्तं । यद्वा अमृताः अमराः तेषां मुदावहं ; तच्छत्रुभूतमहिषासुराद्य-सुरविनाशद्वारा देवानां, प्रियकारिणी मिति भावः । नीपवाटीतटीनिवासि कदम्बवनतटनिलयं कदम्बतरुतटनिलयमिति, वा, गुणवासितं गुणै रानन्दादिभि, र्वासितं सुरभितं, सकलकल्याण-गुणपूर्ण मित्यर्थः । किम प्यनिर्वाच्यं, महः तेजः, कर्म– मामकीनं मदीयं, 'तवकममका वेकवचने' इति ममकादेशः । मनः चित्तं, सदा सर्वदा, भजतु सेवताम् । भज सेवायाम् ॥

श्लो ॥ दयारसकरम्बितै र्नवसुधातरङ्गोज्ज्वलै
स्सरोजपरिपन्थिभि स्स्नपय मा मुपाङ्गै श्शिवे
अनेन मम धन्यता न च तत्र श्रम स्तावता
यशोऽपि तव जृम्भति श्रितकृपाळुताहेतुकम् ॥ १३५

दयारसेति–हे शिवे पार्वति ! शिवा भवानी रुद्राणी' त्यमरः । दयारसकरम्बितैः करुणा-रसपूर्णैः, नवसुधातरङ्गोज्ज्वलैः नूतनामृतकल्लोलैरिव द्भासुरैः, सरोजपरिपन्थिभिः कमलतुल्यैः, परिपन्थिशब्दो यद्यपि शतृवाचकः; तथापीह उपमायां पर्यवसन्नः । अपाङ्गैः कटाक्षैः, मां स्नपय सिञ्च; त्वत्करुणाकटाक्षवर्षं मयि पातयेत्यर्थः । अनेन त्वदपाङ्गस्नपनेन मम धन्यता कृतार्थता स्या दिति शेषः । तावता स्नपनमात्रेण तव श्रमः आयासः, न च नैव भवति । दर्शनमात्रा त्त्व श्रम इति भावः । तवा प्यनेन किञ्चि त्फल मस्ती त्याह । यशोऽपीति श्रितकृपाळुताहेतुकं श्रितेषु कृपाळु र्दयाळु श्श्रितकृपाळुः, 'स्पृहिगृहिपतिदयी' त्यादिना दयतेरे वाळुच्प्रत्ययो विहितः । न तु कृपे रिति । यद्यपि कृपाळुशब्दो प्रामाणिक स्तथापि 'स्या द्दयाळुः कारुणिकः कृपाळु स्सुरत स्समा' इत्यमरकोशानुसारेण कृपां लातीति कृपाळुः औणादिकोऽय मुप्रत्यय इति कथञ्चि त्समाधेयम् । श्रितकृपाळो र्भाव श्श्रिताकृपाळुता सा हेतु र्यस्य त दिति बहुव्रीहिः, समासान्तः कप् । आश्रित-वात्सल्यप्रयुक्त मित्यर्थः । तव त्वत्सम्बन्धि, यशः कीर्तिश्च, जृम्भति व्याप्नोति; अनुदात्तेत्वलक्षण स्यात्मनेपद स्यानित्यत्वा त्परस्मैपदम् । न चाप्रयुक्तत्वदोषः 'तृष्णे जृम्भसि पापकर्मपिशुने' इति भर्तृहरिप्रयोगसत्वात् ॥ १३५

श्लो ॥ दयितो मे यशोदाया । दायादोऽयं दयामयः
देवि! ते दयया भूया । दायासोऽयं किया नये ॥ १३६

दयित इति– हेदेवि ! दयामय: प्रचुरदय:, अय मस्मद्व्रजगत: यशोदाया: दायाद स्सुत: कृष्ण इत्यर्थ: । 'दायादौ सुतबान्धवा' वित्यमर: । ते दयाया मे मम, दयित: पति:, भूयात् भवतु। अये गौरि ! ते तव, अयं मदभिलषितोऽर्थ:, किया नायास: श्रम:? अत्र न स्वल्पोऽपि तव श्रम इति भाव: । अत्र आयासहेता वायासशब्दप्रयोगा द्धेत्वलङ्कार: । दयावर्णयो र्बहुधा श्रवणा-च्छब्दालङ्कार स्स्पष्ट एव । श्रीकृष्ण: अन्यासां दयितो मास्तु । ममैकस्या एवास्तु इति सर्वा गोप्य: पार्वतीं प्रार्थितवत्य इति परमार्थ: ॥ १३६

**ग ॥ एवं भूयसा प्राशस्य भगवतीं भवानी मभीप्सित मभ्यर्थमाना वल्लवविला-सिन्यो यावन्मासं व्रत मन्वतिष्ठन् ॥ १३७**

एव मिति – एव मुक्तरीत्या, भगवतीं भवानीं गौरीं, भूयसा बहुधा, प्राशस्य स्तुत्वा अभीप्सित मभिलषित, मभ्यर्थयमाना: प्रार्थयमाना, स्सत्य: वल्लवविलासिन्य: गोपाङ्गना:, याव-न्मासं मासावधि, व्रत मन्वतिष्ठन् चक्रु: ॥ १३७

**श्लो ॥ यस्मि न्शङ्करदारसौरभझरीजृम्भत्कटाक्षच्छटा**
**पाता: कल्पलतावितानसुमनोगुम्भप्रियम्भावुका:**
**तस्यासी न्नवकालिदासविदुष: काव्ये द्वितीय: पुन**
**श्चम्पूनामनि धीमतां कृतसमुल्लासो विलासोऽगमत् ॥ १३८**

अव ॥ इति तृतीयविलासं वर्णयिष्यमाण: श्रीकृष्णगोपिकासम्भोग स्योपोद्घाततया गोपि-काव्रतं वर्णयित्वा द्वितियविलासस्य परिसमाप्तिं कथयति । यस्मिन्निति ॥

कल्पलतावितानसुमनोगुम्भप्रियम्भावुका: शङ्करदारसौरभझरीजृम्भत्कटाक्षच्छटापाता: यस्मिन् प्रसरन्ति तस्य नवकालिदासविदुष श्चम्पूनमनि काव्ये पुन: अधुना, अव्ययानामनेकार्थत्वात् । धीमतां कृतसमुल्लास: असौ द्वितीयो विलास: अगमत् ॥ १३८

इति श्री चम्पूभागवतव्याख्याने मन्दराख्याने

**द्वितीयो विलास:**

श्री हयग्रीवार्पणमस्तु



ॐ

श्रीहयवदनपरब्रह्मणे नमः

# श्रीचम्पूभागवतम्

## तृतीयो विलासः



अव– अथेदानीं व्रजयुवतीनां पूर्वविलासवर्णितकात्यायनीव्रतफलीभूतं भगवत्समागमं वर्णयितुकामः तदुपोद्घातत्वेन तावत् जलक्रीडां प्रस्तौति– अथेत्यादिना–

**श्लो ॥ अथ वारिविहारसादरा । विदरा वल्लवलोललोचनाः**
**अगम न्यमुना मनाविलां । कलयन्त्यो हृदि नन्दनन्दनम् ॥ १**

अथेति– अथशब्दो विलासारम्भे मङ्गळार्थः । अथ कात्यायनीव्रतसमाप्त्यनन्तर मित्यर्थः । वारिविहारसादराः वारिविहारे जलक्रीडायां, सादराः आदरेण सहिताः, उत्सुका इत्यर्थः । विदराः निर्भयाः, वल्लवलोललोचनाः लोले चञ्चले लोचनेयासां ताः लोललोचनाः चपलाक्ष्यः, स्त्रिय इतियावत् । वल्लवानां गोपानां, लोललोचनाः वल्लवलोललोचनाः गोपकान्ता इत्यर्थः । हृदि नन्दनन्दनं श्रीकृष्णं कलयन्त्यः, कुर्वयन्त्यः, ध्यायन्त्य इत्यर्थः । अनाविलां निर्मलां, यमुनां नदीं, मगमन् ययुः ॥ १

**श्लो ॥ वसनान्यपनीय यामुनी मवगाढा लहरीं तत स्त्रियः**
**च्युतकोशरतीशविस्फुर त्तरवारिप्रतिमां समागमन् ॥ २**

वसनानीति– ततः यमुनांप्रति गमनानन्तरं, स्त्रियः आभीरकान्ताः, वसनानिवस्त्राणि, अपनीय विसृज्य, यामुनीं यमुनासम्बन्धिनीं, 'तस्येद मित्यणि, टिड्ढाणञिति ङीप्' । लहरीं प्रवाह, मवगाढाः प्रविष्टास्सत्यः, च्युतः कोशः यस्य सः च्युतकोशः खड्गपिधाना द्बहिरानीत इत्यर्थः । 'कोशोऽस्त्री कुट्मले खड्गपिधाने ' इत्यमरः । रतीशस्य मन्मथस्य, सम्बन्धी, विस्फुरन् विशेषेण प्रकाशमानः, अनवरतव्यापारा दप्रासमल इत्यर्थः । तरवारिः खड्गः, च्युतकोश श्चासौ रतीश-विस्फुरत्तरवारिश्च तथोक्तः, तस्य प्रतिमां सादृश्यं, समागमन् भेजिरे । च्युतवस्त्राः स्त्रियः च्युतकोश-

रतीशखड्गव द्दभु रित्युपमालङ्कारः । यद्यपि लहरीप्रविष्टानां कान्तानां, जल मावरण मस्तीति न च्युतकोशखड्गौपम्यं सुघटं; तथापि जलस्य निर्मलत्वेन शरीरस्य रत्नवद्भासमानत्वेन च जलं शरीरस्य न वस्त्रवदावरक मिति कृत्वा एवमुक्त मिति बोध्यम् । यद्वा अवगाढा इति वर्तमाने क्तः । तेन अवगाहनसमये एव तत्साम्यं स्त्रीणां नत्ववगाहनानन्तरमिति, नास्ति जलावरणमिति बोध्यम् । अथवा स्त्रियः वसना न्यपनीय, च्युतकोशरतीशविस्फुरत्तरवारिप्रतिमां समागमन् । ततः यामुनीं लहरी मवगाढा इति– वाक्यभेदेनान्वयः ॥ २

अव ॥ यदर्थं जलक्रीडा प्रस्तुता तदधुना गोपिकावस्त्रापहरणं वदति–

**श्लो ॥ अथ नेत्रपरम्परां हरन् । हरि रासा मसर त्तरो श्शिरः**
**प्रमदा न तदप्यवागम । न्नतिवेलं जलसङ्गलालसाः ॥ ३**

अथेति– अथ स्त्रीणां यमुनाप्रवेशानन्तरं, हरिः कृष्णः, आसां स्त्रीणां, नेत्रपरम्परां वस्त्रसञ्चयं, 'स्या ज्जटांशुकयो र्नेत्र' मित्यमरः । हरन् गृह्णान् सन्, तरोः यमुनातीरगतकदम्ब-वृक्षस्य, शिरः अग्रं, न तु मध्यदेशं– गोपिकाग्रहणभयादिति भावः । वस्तुतस्तु तद्गोपीविहार-सन्दर्शनलालसतया गूढं स्थातुम् अग्रगतिः, मध्यस्थत्वे तु एनं दृष्ट्वा ताः क्रीडातो विरमेयुरिति भावः । अतिवेल मत्यन्तं, जलसङ्गलालसाः जलक्रीडासक्ताः, अत एव प्रमदाः स्त्रियः, तदपि श्रीकृष्णकृतवस्त्रापहरणमपि, नावागमन् न विदुः । अवपूर्वक 'गम्' धातो र्लङ् । व्यङ्ग्यार्थस्तु अथ सायंसमये आसां तिसृणां जगतीनां नेत्रपरम्परां नेत्रभूतस्वीयकिरणसन्दोहं नेत्रशब्दोऽपि गोशब्दं लक्षयन्, किरणार्थं लक्षितलक्षणया बोधयत्येव । तन्मते तु आसां प्रकाशकामिति शेषपूरणेन योज्यम् । ते जगत्प्रकाशकगोपरम्परामिति तदर्थः । तथा च प्रयोगः– 'विवस्वतानायिषतेव मिश्रास्स्वगोसहस्रेण समं जनानां, गावोऽपि नेत्रापरनामाधेया स्तेनेद मान्ध्यं खलु नान्धकारै' रिति । हरन् उपसंहरन्, हरि स्सूर्यः, तरोः पश्चिमपर्वतवृक्षस्य, पश्चिमसमुद्रवेलास्थितवृक्षस्येति वा, शिरः असरत् । समुद्रे लङ्घनार्थ मितिभावः । अतिवेलजलसङ्गे लडयो रभेदात्, जडसङ्गे अर्थात् द्यूतादौ लालसाः अत एव प्रमदाः मत्ताः, जनाः तदपि सूर्यास्तशिखरसान्निध्यमपि नावागमन् न विदुः; किमुत सन्ध्यावन्दनादिकृत्यस्मृति स्तेषा मिति अपिशब्दाभिप्रायः । किञ्चात्र हरि रासां नेत्र-परम्परां नयनसन्दोहं, हरन्निति तन्नेत्रापहरणमपि प्रमदाः स्त्रियो न विदु रिति च काचित्कः विरुद्धार्थः प्रतीयते । अत्र जलसङ्गलालसा इति साभिप्रायविशेषणनिर्देशा त्परिकरालङ्कारः । प्रकृष्टो मदो यासा न्ताः प्रमदा इति व्युत्पत्त्या विशेष्यस्यापि साभिप्रायत्वा त्परिकराङ्कुरालङ्कारश्च– 'साभिप्राये विशेष्ये तु भवे त्परिकराङ्कुर' इति लक्षणात् । पूर्वार्धे रवर्णस्य बहुधा श्रवणात् वृत्त्यनुप्रासालङ्कारः ॥ ३

ग ॥ तदनु चिरतरवारिविहारनितान्तपरिश्रान्ताः कान्ताः निर्गमनकामनया कूलोपकण्ठव्यापारितनयनान्ता स्तत्र दुकूलजाल मप्यनालक्ष्य समीपनीपपादपशिखरवास्तव्य मुपहृतपरिधान मरविन्दलोचन मवलोकयमाना विस्मयमानमानसा बभूवुः ॥

तदन्विति— तदनु वस्त्रापहरणानन्तरं, चिरतर मतिचिरं, वारिविहारः जलक्रीडा, तेन नितान्तं भृशं, परिश्रान्ताः आयासं प्राप्ताः, कान्ताः स्त्रियः, निर्गमनकामनया जला द्बहिर्गमनवाञ्छया, कूलोपकण्ठं तीरसमीपे, व्यापारिताः प्रसारिताः, नयनान्ताः अपाङ्गाः, याभिस्ता स्तथोक्ता स्सत्यः; तत्र कूले, दुकूलजालमपि स्वीयवस्त्रसञ्चयं च, अनालक्ष्य अदृष्ट्वा, समीपे सन्निधौ, यो नीपपादपः कदम्बतरुः, तस्य शिखरे अग्रे, वास्तव्यं स्थितं, उपहृतत्वानि तानिपरिधानानि अंशुकानि येन तं अरविन्दलोचनं कमलाक्षं, कृष्ण मित्यर्थः । अवलोकयमानाः पश्यन्त्यः विस्मयमानमानसा आश्चर्याक्रान्तहृदयाः, बभूवुः । अहो कात्यायनीव्रतफल मधुनैव प्रत्यक्षं; य दसत्कांक्षया श्रीकृष्ण स्स्वयमेव अस्मद्वसनजाल मपहृतवा निति । राजकुमारेण महानुभावेन कृष्णेनापि किं मेव मनार्यं कृत मिति वा । अस्मासु अवलोकयमानास्वेव अविज्ञातगमनं कथ मपजहाराय्ं अस्मदंशुकानि अहो! अस्य पश्यतोहरत्व मिति वा; बहुधा गोपिकानां विस्मयो निर्वर्ण्यः ॥ ४

श्लो ॥ तत्रेतरेतरविलोकनहासशङ्का
सङ्कोचविभ्रममनोहर मङ्गनानाम्
पाण्डित्य माङ्गज मनर्गळ माविरासी
दाकर्षि येन सविलास मधोक्षजोऽपि ॥ ५

तत्रेति— तत्र तदा अङ्गनानां सुदृशाम् , इतरेतरस्य अन्योन्यस्य, विलोकनं दर्शनं, हासः स्मेरः, शङ्का संशयः, सङ्कोचो लज्जा, विभ्रमो विलासः, एतै र्मनोहरं मनोज्ञं, आङ्गजं मन्मथसम्बन्धि, अनर्गळं अपारं, पाण्डित्यं प्रौढत्व, माविरासीत् प्रादुरभवत् । येन पाण्डित्येन, सविलासं सलीलं, यथा तथा लीलामात्रेणेति भावः । अधोक्षजोऽपि जितेन्द्रियोऽपि, कृष्णः अधःकृत मक्षज मिन्द्रियजन्यं ज्ञानं येन सः अधोक्षज इति व्युत्पत्तेः । आकर्षि आकृष्टोऽ भवत् । परिकराङ्कुरालङ्कारः । अत्र अधोक्षजोऽप्याकृष्ट इति विरोधो व्यज्यते । तेन च स्त्रीणां मान्मथपाण्डित्यस्य पराकाष्ठा सूच्यते । पादत्रये स्वभावोक्ति रलङ्कारः ॥ ५

ग॥ अथ ता स्तरुण्यः यदुतनय मेवं सविनयं व्यजिज्ञपन्- अयेकरुणापारावार! यशोदानन्दन ! ६

अथेति— अथ एवं शङ्कासङ्कोचाद्युत्पत्त्यनन्तरं, समीपनीपतरुशिखरगतभगवद्विलोकनानन्तर मितिवा; ताः पूर्वोक्ताः, हृतवस्त्रा इत्यर्थः । तरुण्यः गोपिकाः, तरुण्य इत्यनेन पुरुषदर्शने

व्रीडाप्राप्तियोग्ययौवनदशा सूच्यते । यदुतनयं कृष्ण, मेवं वक्ष्यमाणरीत्या, सविनयं विनयेन सहितं यथा तथा, व्यजिज्ञपन् विज्ञापयामासुः । ज्ञाधातो र्विपूर्वात् ण्यन्ताच्चङि द्वित्वं, सन्वद्भावश्च पुगागमश्चेति बोध्यम् । विज्ञापनामेव दर्शयति— अये इत्यादिना- अये इति प्रेमसम्बुद्धिः, करुणापारावार दयासमुद्र ! स्वीयवस्त्रप्रदानार्थं दयाळो स्तव नेद मुचित मित्यभिप्रायगर्भ मिदं विशेषणम् । यशोदानन्दन यशोदापुत्र ! तादृशमहाभागायाः यशोदायाः पुत्रो भूत्वा प्राप्तप्रतिष्ठस्य तव नेदं कृत्य मुचित मित्यभिप्रायगर्भ मिदम् ॥ ६

श्लो ॥ कस्यां दिशि न तेऽनन्तैः । कृत माच्छादनं गुणैः
अतो गुणनिधे र्युक्ता । नाबलाम्बरहारिता ॥ ७

कस्या मिति— ते त्वत्सम्बन्धिभिः गुणैः दानदाक्षिण्यादिभिः, कस्यां दिशि ककुभि, आच्छादनं आवरणं न कृतं ? का वा दिशो नाच्छादिताः ? दिगन्तविश्रान्ता स्तवगुणा इत्यर्थः । ततो हेतोः गुणनिधेः सकलकल्याणगुणपूर्णस्येत्यर्थः । तव अबलाम्बरहारिता स्त्रीवस्त्रापहरणं, न युक्ता नोचिता, गर्ह्यकर्मत्वा दिति भावः । व्यङ्ग्यार्थस्तु— ते अनन्तैर्गुणैस्तन्तुभिः कस्यां दिशि आच्छादनं न कृतं वस्त्रं न निर्मितं ? 'वस्त्र माच्छादनं वास ' इत्यमरः । सर्वत्रापि त्वदीयतन्तुभि रेव वस्त्राणि वयन्तीति भावः । ततो हेतोः गुणनिधेः तन्तुनिधे, स्तव अबलाम्बरहारिता दरिद्रवस्त्रापहरणं, न युक्ता । स्वत स्तन्तुवायस्य परेषां तन्तुवायानामपि तन्तुजालं वितरत स्तव दरिद्रकच्चरपटच्चरहरणं गर्हितमिति भावः । एतेन भगवतः कुविन्दत्वं व्यक्तम् ॥ ७

श्लो ॥ व्रतस्य फल मस्माकं । दासीभावा न्न ते परम्
आसादित मिदं देहि । वासो नः कृतगोपनम् ॥ ८

व्रतस्येति— ते तव, दासीभावात् दासीत्वा त्पर मन्यत्, अस्माकं अस्मदनुष्ठितस्येत्यर्थः । व्रतस्य कात्यायनीव्रतस्य, फलं न न भवति, तव दास्यो भूयास्मेति व्रत मकरवामेत्यर्थः । इदं एवं दासीत्वरूपं फल मासादितं दैवात्प्राप्तम्, कृतगोपनं कृतं गोपनं रक्षणं यस्य तत् रक्षित मित्यर्थः । नः सम्बन्धि वासः जात्येकवचनं वस्त्राणीत्यर्थः । देहि दिश । अङ्गीकृतदासीभावासु पराक्रमो न युक्त इति भावः । व्यङ्ग्यार्थस्तु, ते तव, दासीभावात् दासत्वा, 'दभूततद्भावे च्विः' । परं अन्यत्, अस्माकं व्रतस्य फलं न । त्व मस्माकं दासो भूया दिति व्रतं कृत मित्यर्थः । इदं दासत्व मासादितं स्नानावसरे अस्मद्वस्त्ररक्षणादिति भावः । कृतगोपनं नः वासो देहि । दासाः प्रभो स्स्नानसमये वस्त्राणि संरक्ष्य स्नानानन्तरं पुनः प्रयच्छन्तीति भावः ॥ ८

अ ॥ एव मृजुबुद्ध्या प्रार्थयमानासु तासु सकौटिल्य मरविन्दलोचनः प्रत्यभाषत ॥ ९

एव मिति– तासु गोपिकासु, एव मुक्तरीत्या, ऋजुबुद्ध्या, अकपटबुद्ध्या प्रार्थ्यमानासु सतीषु, एतेन श्रीकृष्णेनैव तत्र व्यङ्ग्यार्थ उद्घाटितः– नतु वस्तुतः स्त्रियः व्यङ्ग्यमर्यादा माश्रित्य ऊचु रिति सिद्धम् । अरविन्दलोचनः कृष्णः, कौटिल्यं सवक्रं, प्रत्यभाषत पुनः अवोचत् ॥ ९

श्लो ॥ कुविन्द स्त्वं व्रतेनासि । दासो न श्चेलपालकः
इति व श्श्लेषवाभङ्गि । रबोधि न मया किमु ? १०

कुविन्द इति– त्वं कुविन्द स्तन्तुवायः, व्रतेन हेतुना नः अस्माकं चेलपालकः वस्त्ररक्षकः, दास इति यावत् असि । इत्येवंरूपा वः युष्माकं सम्बन्धिनी श्लेषवाग्भङ्गिः श्लिष्टवाक्यरचना, मया नाबोधि किमु? न ज्ञाता कि मित्यर्थः । वक्रोक्ति रलङ्कारः । 'वक्रोक्ति श्श्लेषकाकुभ्या मन्यार्थस्य प्रकल्पन' मिति लक्षणात् । नच विवृतोक्ति रिति भ्रमितव्यं । श्लोकद्वयेन व्यङ्ग्यार्थस्य स्त्रीणा मविवक्षितत्वात् ॥ १०

श्लो ॥ प्रत्येकं यूय मायात । विनिर्याय जलाशयात्
तदा दास्यति दासोऽयं । वासांसि विनयेन वः ॥ ११

प्रत्येक मिति– यूयं एक मेकं प्रत्येकं, एकैकश इत्यर्थः । जलाशयात् ह्रदात्, विनिर्याय निर्गम्य, अयात आगच्छत । तदा तदानीं, अयं दासः अह मित्यर्थः । विनयेन सविनय मित्यर्थः । वः युष्माकं वासांसि वस्त्राणि, दास्यति वितरिष्यति । नहि बहुभ्यः प्रभुभ्यः एको दासः एकदा सविनयं वासोदानाय क्षमते इति भावः । स्वस्य नेत्रद्वयत्वेन युगपत्सर्वासा मागमने सति तदीय सर्वाङ्गलावण्यविवेक स्साकल्येन दुर्ग्रह इति मत्वा श्रीकृष्णेन प्रत्येकनिर्गमनं काङ्क्षितमिति बोध्यम् ॥ ११

ग ॥ एव मर्थान्तरपरिकल्पनया विडम्बनैकताने भवति भगवति गत्यन्तराभावा देकान्तशीतवेपिता वनिता वामहस्तसंवृतवराङ्गा नितान्तनमिताङ्गाः कथमपि सलिलाशया न्निश्चक्रमुः ॥ १२

एव मिति– भगवति कृष्णे, एव मर्थान्तरपरिकल्पनया उक्तरीत्या, स्वोक्तश्लोकयोः अर्थान्तरस्य भिन्नार्थस्य, स्वविवक्षिता दन्यार्थस्येत्यर्थः । परिकल्पनया विरचनया, विडम्बनैकताने अपहासप्रधाने, भवति सति, गत्यन्तराभावात् अन्यागति र्गत्यन्तरस्य अभावात्, अगतिकत्वा दित्यर्थः । एकान्तशीतवेपिताः हेमन्तऋतुत्वेन अत्यन्तशीतेन कम्पिताः, वनिताः स्त्रियः, वामहस्तेन अपसव्यकरेण, संवृतं छन्नं, वराङ्गं गुह्यं यासां ताः 'वराङ्गं मूर्धगुह्ययो' रित्यमरः । श्रीकृष्णदास्यमानवस्त्रग्रहणार्थं दक्षिणहस्त मुपरि निधाय गुह्यप्रकटनभया द्वामहस्तं

गुह्ये कृत्वेत्यर्थः। तथापि लज्जया नितान्तनमिताङ्गाः अत्यन्तनम्रशरीराः सत्यः, कथमपि अतिकृच्छ्रेण, सलिलाशयात् ह्रदा त्सकाशात्, निश्चक्रमुः निर्जग्मुः॥ १२

श्लो ॥ तदा तीरमपि प्राप्य । मज्जन्तीनां त्रपार्णवे
परस्परादृते तासा । मासी न्नैवावलम्बनम् ॥ १३

तदेति- तदा निर्गमनान्तरं, तीरं प्राप्यापि, त्रपार्णवतीरं प्याप्यापीति विरोधः। यमुनाकूलं प्राप्येति परिहारः। अत एव विरोधाभासालङ्कारः। त्रपार्णवे लज्जारूपे समुद्रे, मज्जन्तीनां तासां गोपीनां, परस्परा दृते अन्योन्यं विना, 'अन्यारादितरर्ते' इति पञ्चमी। अव-लम्बन माधारः, नासीदेव नैव बभूव। न दुःखं बहुभिस्सहेति न्यायादिति भावः॥ १३

श्लो ॥ ऊरुमूलपिहितं विलोकयन् । गोपमुग्धरमणीमणीगणम्
सन्तु ताः फलित मात्मनो व्रतं । प्रत्युतेति भगवा नचिन्तयत् ॥ १४

ऊरुमूलेति- भगवान् कृष्णः, ऊरुमूलपिहितं पिहितं छन्न मूरुमूलं गुह्यं यस्य तम्, मयूरव्यंस्सकादित्वा द्विशेषणस्य परनिपातः। यद्वा पिहितमिति कर्तरि क्तः। ऊरुमूले विषये पिहित माच्छादितवन्त मित्यर्थः। 'वष्टिभागुरि रल्लोप मवाप्यो रुपसर्गयो' रि त्यल्लोपः। गोपमुग्धरमणीमणीगणं गोपानां वल्लवानां, सम्बन्धिन्यः याः मुग्धरमणीमण्यः मुग्धाङ्गनोत्तमाः मुग्धशब्द स्सुन्दरवाची, यौवनारम्भवयोविशेषवाची वा, तासां गणं समूहं, विलोकयन् विशे-षेण पश्यन्, सर्वावयवावच्छेदेन तासु दृष्टिं प्रसारयित्वेत्यर्थः। ताः अनुष्ठितव्रताः गोप्यः, सन्तु तिष्ठन्तु। तासां व्रतं तथास्ता मित्यर्थः। प्रत्युत किन्तु. विचर्यमाणे सतीति वा, आत्मनः मम, व्रतं विवस्त्रगोपिका दिदृक्षारूपमिति भावः। फलितं सफलं जात मिति शेषः। इति अचिन्तयत् मेने॥ १४

श्लो ॥ गुह्य मस्तु किमु सर्ववेदिना । तासु नेक्षितचरं मुरारिणा
मोहनाय मनस स्तथा प्यसौ । सुभ्रुवा मिद मुवाच सस्मितः ॥ १५

गुह्य मिति- सर्ववेदिना सर्वज्ञेन, मुरारिणा कृष्णेन, तासु स्त्रीषु, विषये नेक्षितचर मदृष्टचरं, गुह्यं वराङ्ग मस्तु किमु ? न स्यादेवेत्यर्थः। सर्ववेदिनेति साभिप्रायविशेषणनिर्देशा त्परिकरालङ्कारः। अत्र सर्ववेदिना मुरारिणा तासु नेक्षितचरं गुह्यं रहस्यं, अस्तु किमु ? इति ध्वन्यते। स्वमेव पति मभिकाङ्क्षयन्त्यः- तदर्थं व्रतं चक्रु र्गोपिका इति य त्त त्सर्वं कृष्णेन विदितमेवेति ध्वन्याशयः। तथापि गुह्यवेदने सत्यपि सुभ्रुवां स्त्रीणां, मनसः हृदयस्य, मोहनाय मोहजननार्थं, असौ कृष्णः, सस्मितः स्मेरसहितस्सन्, इदं वक्ष्यमाणं वचः, उवाच अवोचत्।

स्वाभीप्सितेन पत्या यदि स्ववराङ्गः प्रदर्श्येत तर्हि तस्मिन् निरतिशयो मनोव्यामोह स्तासां भवे दित्येतदर्थं श्रीकृष्ण एव मुवाचेति भावः ॥ १५

**श्लो ॥ अञ्जलिं शिरसि संरचय्य चे । न्मां नमस्कुरुत भाव मान्तरम्**
**स्पष्ट माकलयता तदा मया । दीयतेऽभिलषितार्थसञ्चयः ॥ १६**

अञ्जलि मिति– अञ्जलिं करयुगपुटं, शिरशि मकुटे, संरचय्य धृत्वा, मां नमस्कुरुत; यूय मिति कर्तु राक्षेपः; प्रणमतेत्यर्थः । चेत् तथा युष्माभिः प्रणतं यदि, तदा आन्तरं मनोगत, मर्था द्युष्माक मित्येव । भाव मभिप्रायं, स्पष्टं यथातथा आकलयता सकपटं वा नवेति शोधय तेत्यर्थः । मया अभिलषितार्थसञ्चयः अभीष्टार्थसमूहः, अर्थात्प्रकृते वस्त्रसञ्चयः; तस्यैव गोपिकाभि रभिलष्यमाणत्वात् ; दीयते । वर्तमानसामीप्ये वर्तमानवद्वेति लट् । दास्यते इत्यर्थः । व्यङ्ग्यार्थस्तु– अञ्जलिं शिरसि संरचय्य मां नमस्कुरुत चेत् , आन्तरं हस्ताभ्यन्तरं भावं पदार्थं गुह्य मिति यावत् , स्पष्ट माकलयता मया अभिलषितार्थसञ्चयो दीयते इति । वामहस्तेन हि इतः पूर्वं वराङ्ग माच्छादितं; शिर स्यञ्जलि बन्धे तु अनावृतं त त्स्पष्टं दृश्येतेत्याशयः । अन्योऽप्यर्थः प्रतीयते । हेभक्ताः ! यूय मञ्जलिं शिरसि संरचय्य, मां नमस्कुरुत चेत्तदानीं आन्तरंभावं भक्तिभावं स्पष्टं यथातथा आकलयता मया अभिलषितार्थसञ्चयः अभीष्टपुरुषार्थसन्दोहः दीयते । निष्कपटभक्तेभ्य स्सर्वमपि मोक्षादिक महं ददामीति भावः । अपि च–हेस्त्रियः ! युष्माभिः कृतं कात्यायनीव्रतानुष्ठानं मौग्ध्यविलसितमेव । यदि तु शिरस्यञ्जलिं बध्वा मामेव नमस्कुर्यात 'त्वा महं शरणं गतेति' मत्प्राप्त्यर्थं मामेव यदि शरणं भजेध्वम् तर्हि युष्माकं हार्दं भावं मदेकाश्रयत्वलक्षणं स्पष्ट माकलयता मया युष्मदभिलषितार्थसञ्चयः मत्सम्भोगरूपः दीयते एव । युष्माभिस्तु न तथा कृत मित्यहो युष्मदविवेकितेति प्रतीयते । एतेन यदर्थं युष्माभिः रहसि व्रत मनुष्ठितं तत्फलाश्रितस्य पत्यु र्मम सन्निधौ केयं युष्माकं त्रपा किन्त्ववश्यं त्याज्येति भगवदुपदेशो व्यज्यते ॥ १६

**ग ॥ एव मभिदधान मेन मतिसन्दधान मन्तरेण वचनकरण मपरिहार्यनिश्चयं मन्वानासु तरुणीषु तथा कुर्वाणासु ॥ १७**

एव मिति– एव मुक्तरीत्या, अभिदधानं वदन्तं, अतिसन्दधानं वञ्चयन्तं, एनं कृष्णं, वचनकारण मन्तरेण तद्वाक्यानुष्ठानंविना, तदुक्तार्थानुष्ठानं विनेत्यर्थः । वचनशब्दोऽत्र तदर्थे औपचारिकः अपरिहार्यनिश्चयं अपरिहार्यः परिहर्तु मशक्यः, निश्चयः दृढाभिनिवेशः यस्य तं तथोक्तं मन्वानासु जानन्तीषु, तरुणीषु युवतीषु, तथा कुर्वाणासु तदुक्तरीत्या विदधानासु सतीषु, शिरस्यञ्जलिं बध्वा भगवन्तं नमस्कुर्वन्तीष्वित्यर्थः ॥ १७

**श्लो ॥ आसा मासादितामोदो । वासांसि वितरन् हरिः**
**अश्रौषी न्निजसम्बन्ध । रूपव्रतफलार्पणम् ॥ १८**

आसा मिति– आसादितामोदः आसादितः गोपिकाभिः स्वोक्तार्थानुष्ठानद्वारा प्रापितः, आमोदः सन्तोषः, यस्य सः तथोक्तः । अत एव हरिः कृष्णः, आसां गोपिकानां, अत्र दानस्यापूर्वीनाथायकत्वा द्रजकस्य वस्त्रं ददातीतिवत् षष्ठी । वासांसि वस्त्राणि, वितरन् दिशन्, सन्, निजसम्बन्धरूपव्रतफलार्पणं निजसम्बन्धः स्वेन सह संयोगः, सएव रूप माकृति, र्यस्य तस्य कृष्णसंयोगात्मकस्येत्यर्थः । व्रतफलस्य गोपिकानुष्ठितकात्यायनीव्रतसम्बन्धिफलस्य, अर्पणं समर्पणं, अर्थाद् गोपिकाभ्य एव अश्रौषीत् प्रतिज्ञातवान् । युष्माकं मदुक्तार्थकारित्वा दने नाहं सन्तुष्टो भूत्वा मत्सम्बन्ध मुद्दिश्य युष्माभि रनुष्ठितस्य फलं मदधीन मित्यहमेव तद्दास्यामीति प्रतिज्ञाय श्रीकृष्णः गोपिकाजन मानन्दयामासेति भावः ॥ १८

श्लो ॥ अथ वासां स्युपादाय । व्रजं व्रजवधूजनः
विवेश केशवादेशा । दाशापाशासिताशयः ॥ १९

अथेति– अथ श्रीकृष्णप्रतिज्ञानन्तरं, वस्त्रदानानन्तरमिति वा । आशापाशासिताशयः आशा भगवत्संभोगकाङ्क्षा, सैव पाशः रज्जु ; तेन आसितः आ समन्ता द्बद्धः, आशयः हृदयं, यस्य सः तथोक्तः । व्रजवधूजनः व्रजे गोष्ठे, वर्तमानो वधूजनः स्त्रीसमूहः, अर्थाद् गोपाङ्गनासङ्घः तासामेव व्रजाधिकरणकत्वौचित्यात् । यद्वा व्रजशब्देन व्रजस्था गोपा लक्ष्यन्ते । तद्वधूजन इति वाच्यम् । वासांसि वस्त्राणि, उपादाय गृहीत्वा, केशवादेशात् श्रीकृष्णाज्ञातः, नात्र स्थातव्यं युष्माभिः रहसि गतं मां जनोऽन्यथा मनुते । तत्तूर्णं व्रजं व्रजतेत्येवं श्रीकृष्णेन आदिष्टा भूत्वेति भावः । व्रजं गोष्ठं, विवेश प्राप ॥ १९

श्लो ॥ अथ भृशं विवशा नशनाशया । सपदि न श्श्रितपालक ! पालय
इति निशम्य वच स्सहचारिणां । हरि रुवाच वचः प्रिय मीदृशम् ॥

अथेति– अथ गोपिकाव्रजप्रवेशानन्तरं, अशनाशया भोजनवाञ्छया, भृशं विवशान् परवशान्, अतिबुभुक्षितानिति यावत् । नः अस्मान्, हे श्रितपालक ! आश्रितरक्षक ! सपदि शीघ्रं, इदानीमिति वा । पालय रक्षय । श्रितपालकेति साभिप्रायविशेष्यनिर्देशा त्परिकराङ्कुरालङ्कारः । इति एवंरूपं सहचारिणा मनुचारिणां, वत्सपालाना मित्यर्थः । वचः वाक्यं, निशम्य श्रुत्वा, हरिः कृष्णः, ईदृशं वक्ष्यमाणविधं, प्रियं इष्टं, वचः वाक्यं, उवाच जगाद ॥ २०

श्लो ॥ यज्ञवाट इत स्सौम्या । नातिदूरप्रदेशतः
तत्र याचध्व मन्धांसि । यदि सौहित्य मिच्छथ ॥ २१

यज्ञेति – हेसौम्याः हेशिष्याः ! अनुचरा इति यावत् । तथाच वेदे प्रयोगः 'सौम्येमाः प्रजा' इति यद्वा बाला इत्यर्थः । गौणोऽयं प्रयोगः । बालाः खलु कामादिभि रकलुषितचित्तत्वेन अक्रूराः प्रसन्नाः भवन्ति । तस्मात्प्रसन्नवाचिना सौम्यशब्देन बालार्थबोध स्संभवतीति । इतः

अस्मा त्प्रदेशात्, नातिदूरप्रदेशतः अनतिदूरदेशे, नञर्थकोयं न शब्दः। ईषत् दूरप्रदेशे इत्यर्थः। यज्ञवाटः यागशाला, अस्ति। सौहित्यं तृप्तिं, इच्छथं यदि वाञ्छथ चेत्। तत्र यज्ञवाटे, अन्धांसि अन्नानि, 'भिस्सा स्त्री भक्त मन्धोन्न' मित्यमरः। याचध्वं प्रार्थयध्वं-तदधिपती निति शेषः। याचे द्विकर्मकत्वात्। यावता अन्नेन भुक्तेन सता युष्माकं तत्काल-म्भावो जायेत, ताव त्परिमितं मृष्ट मन्नं यज्ञवाटे लभ्यते। तस्मा त्तत्र गच्छ तेति भावः॥२१

**ग ॥ एवं हृषीकेशादेशा दाशावेशपरवशनिजाशयै र्गवीशै रासाद्य सवनसदन मभ्यर्थ्य च निजेप्सितार्थ मप्यविनीतमुनिजनप्रत्याख्याततया प्रत्यागतै रावेदितवृत्ता-न्तेन भगवता तदीयप्रमदाजनोद्देशेन पुनरपि प्रहितै रभ्यर्थित स्तदीयरमणीगणो मुहुर्मुहु र्निजरमणनिवारितोऽपि भोज्य ममृतप्रायं प्रायच्छत ॥ २२**

एव मिति– आशावेशपरवशनिजाशयैः आशायाः अन्नवाञ्छायाः, आवेशेन अभि-व्याप्त्या, परवशः परतन्त्रः, निजः स्वीयः, आशयोऽन्तःकरणं, एषां तैः एतेन आशायाः ग्रहतुल्यत्वं व्यज्यते। गोपानां च ग्रहग्रस्तवत्पारवश्य मिति। तस्मा दुपमालङ्कारस्य ध्वनिः। अतएवएवं पूर्वोक्तरूपात् हृषीकेशादेशात् श्रीकृष्णनिदेशा द्धेतोः, सवनसदनं यज्ञवाटं, मासाद्य प्राप्य, निजेप्सितार्थं स्वाभिलषित मन्नरूप मर्थं, समभ्यर्थ्य च सम्यक्प्रार्थयित्वा च, अवि-नीतेन दुष्टेन, मुनिजनेन ऋषिबृन्देन, प्रत्याख्याततया निराकृतत्वेन हेतुना, केऽमी जाल्मा गोपबालाः ब्राह्मणस्थितियोग्यं वेदप्रतिध्वनितं, यज्ञवाटं प्रविष्टा इति सरोषं मुनिभि र्निष्का-सितै रिति भावः। प्रत्यागतैः पुनरागतैः, गवीशैः गोपैः, आवेदितः ज्ञापितः, वृत्तान्तः मुनिजनप्रत्याख्यानरूपवार्ता यस्मै तेन तथोक्तेन भगवता कृष्णेन, तदीयप्रमदाजनोद्देशेन ऋषि-सम्बन्धि स्त्रीजन मुद्दिश्येत्यर्थः। यजमानी र्याचध्व मित्यादिश्येत्यर्थः। यजमानै र्निराकृतेभ्यो भिक्षुभ्यः तदङ्गनाः प्रायशो वितर न्त्योदनकवळं दयार्द्रहृदयत्वा दिति स्त्रीणां बालेषु परकीये-ष्वपि प्रायशः प्रीति रस्तीति वा। साक्षात्परमपुरुषस्य लीलामानुषस्य कृष्णस्यानुचरा एते परमभागवता एव; न तु गोपमात्रा इति स्त्रिय स्स्वतत्त्वं जानन्तीति वा मत्वा, श्रीकृष्णः पुनरपि गोपान् यजमानी रुद्दिश्य प्रेषयामासेति बोध्यम्। पुनरपि भूयोऽपि, प्रहितैः प्रेषितैः, गवीशै रिति पदं पुनरत्रापि सम्बध्यते। अभ्यर्थितः प्रार्थितः, तदीयरमणीगणः मुनिसम्बन्धि-स्त्रीनिवहः, मुहुर्मुहुः पुनः पुनः, निजरमणैः स्वपतिभिः, निवारितोऽपि निरुद्धोऽपिसन्, अमृतप्रायं सुधातुल्यं, घृतप्रचुर मिति वा।, अमृतं वै घृतमिति श्रुतेः भोज्य मन्नं, प्रायच्छत ददौ, गोपेभ्य इति शेषः॥ २२

**ग ॥ आश्चर्य मेतत् ॥**

आश्चर्य मिति– एतद्वक्ष्यमाण माश्चर्य मद्भुत ॥

अव ॥ तयेव दर्शयति प्रतीपेति ॥

श्लो ॥ प्रतीपदर्शिनो जाताः । पुमांस स्तदवज्ञया
न तु प्रतीपदर्शिन्य । स्त्रिय स्तत्तत्त्ववेदनात् ॥ २३

प्रतीपेति– पुमांसः पुरुषाः, तदवज्ञया श्रीकृष्णावमानेन, श्रीकृष्णप्रेषितानुचरावमानमपि श्रीकृष्णावमानरूपमेवे त्यभिप्रेत्येद मुक्तम् । प्रतीपदर्शिनः प्रतिकूलबुद्धयः, जाताः अभूवन् । वक्रदर्शिनो वामा बभूवु रिति च प्रतीयते । स्त्रियस्तु यजमान्यस्तु, तत्तत्त्ववेदना द्धेतोः श्रीकृष्ण-याथार्थ्यज्ञाना द्धेतोः, प्रतीपदर्शिन्यः प्रतिकूलबुद्धयः, न जाताः नाभूवन् । स्त्रियो नाभूवन्निति च गम्यते । 'प्रतीपदर्शिनी वामा वनिते' त्यमरः । इत्येत दाश्चर्य मिति पूर्वेणान्वयः । स्त्रीणां सह-जस्य प्रतीपदर्शित्वस्य स्त्रीष्वभाव एक माश्चर्यं; पुरुषेषु सद्भावो द्वितीयं चे त्यत्र विरोधद्वयं प्रतीयते । तस्य प्रतिकूल ज्ञानित्वरूपार्थान्तरवर्णनेन परिहारा द्विरोधाभासः । प्रतीपदृष्टिः स्त्री रपहाय पुरुषानाश्रितेति पर्यायालङ्कारश्च । 'पर्यायो यदि पर्याये णैकस्यानेकसंश्रय' इति लक्षणात् । पुमांसः प्रतीपदर्शिनो जाता इति वाक्यार्थस्य तदवज्ञयेति पदार्थहेतुकत्वा देकं काव्य-लिङ्गम् । स्त्रियः प्रतीपदर्शिन्योनजाता इति वाक्यार्थस्य तत्तत्त्ववेदनादिति पदार्थहेतुकत्वात् द्वितीयं काव्यलिङ्गम् । व्यङ्ग्यार्थस्तु पुमांसः जीवाः तदवज्ञया आत्मज्ञानाभावेन प्रतीपदर्शिनोजाताः स्त्रीत्वं प्राप्ता इत्यर्थः । प्रसिद्ध मिदं पुरञ्जनोपाख्याने । स्त्रियस्तु तत्तत्त्ववेदना द्धेतोः प्रतीपदर्शिन्यो न जाताः न पुनः स्त्रीत्वं प्रपेदिरे; किन्तु मुक्ता एव । प्रसिद्ध मिदं देवहूत्य्पाख्याने इति ॥ २३

ग ॥ दत्वा च त दन्नं भगवन्त मेव मश्लाघन्त ॥ २४

दत्वाचेति– त त्प्रसिद्धं, यज्ञशिष्ट ममृतमय मन्नं दत्वा- गोपेभ्यो वितीर्य, भगवन्तं कृष्ण, मेवं वक्ष्यमाणरीत्या, अश्लाघन्त श्लाघयामासुः । मुनिपत्न्य इति शेषः ॥ २४

श्लो ॥ प्रसाद स्साध्य स्ते विधि मनतियातैः क्रतुशतै
र्यदि स्वेनैवास्मान् कलयसि कृतार्थान् करुणया
ततः किं भग्यं नः किमिव तपसां वा फल महो
न मत्वा तत्त्वं ते कतिचन विमुह्यन्ति कुधियः ॥ २५

प्रसाद इति– विधिं शास्त्रं, मनतियातैः अनतिक्रान्तैः, यथाशास्त्र मनुष्ठितै रित्यर्थः । क्रतुशतैः बहुभिः क्रतुभिः, ते तव, प्रसादः अनुग्रहः, साध्यः साधितुं योग्यः, फलाभिसन्धित्याग-पूर्वकं केवलं त्वदनुग्रहैकफलान् यज्ञशतान् कृत्वा महान्तः त्वत्प्रसादं साधयन्तीति भावः । स्वेनैव स्वत एव, करुणया निरुपाधिकया दयया, अस्मान् कृतार्थान् सफलान्, कलयसि यदि करोषिचेत् , यज्ञाद्यनुष्ठानं विनाप्यस्मा ननुगृह्णासि चे दित्यर्थः । प्रहर्षणालङ्कारः । उत्कण्ठितार्थ

संसिद्धिं विना यत्नं प्रहर्षण ' मिति लक्षणात् । ततः तस्मात् त्वत्प्रसादा दित्यर्थः । परमिति शेषः । भाग्यं भागधेयं, नः अस्माकं, किमस्ति तदे वास्माकं मह द्भाग्य मित्यर्थः । तथा ततःपरं नः तपसां वा फलं किमस्ति ? तदे वास्माकं तपः फल मित्यर्थः । अहो इति विस्मयः । ते तव, तत्त्वं परमात्मत्वरूपं याथार्थ्यं, न मत्वा अज्ञात्वा, कतिचन केचित्, कुधियः कुत्सितबुद्धयः, कंसादयः विमुह्यन्ति मोहं प्राप्नुवन्ति; नन्दसुतोऽयं गोप इति मन्यन्ते इति भावः ॥ २५

**ग ॥ एव मभिदधान मवगतभगवत्प्रभाव मबलाजन मनुगृह्य तदर्पित मखिल-मपि भोज्यजात मास्वाद्य च नितान्त मभिननन्द नन्दनन्दनः ॥ २६**

एव मिति– एव मुक्तरीत्या, अभिदधान मुक्तवन्तं, अवगतभगवत्प्रभावं, ज्ञातश्रीकृष्णानुभावं, अबलाजनं मुनिपत्नीसङ्घ, मनुगृह्य तस्मिन् प्रसन्नो भूत्वेत्यर्थः । प्रसादमे वाह–तदर्पितं तेन समर्पितं, अखिलं बहुविधमपि, भोज्यजातं अन्नसमूह, मास्वाद्य भुक्त्वेति, ' धानामुष्टिमुचे कुचेलमुनये दत्ते स्म वित्तेशता ' मितिवत् । मुनिपत्नीसमर्पितान्नभोजनं तदनुग्रह एव । तेन तासां महैश्वर्यसम्भवा दिति भावः । एतेन मुनिपत्न्यः स्वयमे वान्न मानीय श्रीकृष्णाय समर्पयामासुरिति फलितम् । नन्दनन्दनः कृष्णः, नितान्त मत्यन्त मभिननन्द च सन्तुतोष । तदन्नगतस्वादजन्योऽय मानन्दः ॥ २६

**श्लो ॥ अथ जातु पुरन्दरादरा । दर माराधनतत्परान् हरिः**
**कलयन् बलवैरिवैरिता । मवद न्नन्दपुरस्सरा न्नरान् ॥ २७**

अथेति– अथ जातु ततः कदाचित्, हरिः कृष्णः, पुरन्दरादरात् पुरन्दरे इन्द्रे आदरात् हेतोः प्रीतिवशा दित्यर्थः । अरं शीघ्रं, आराधनतत्परान् पूजनासक्तान्, आर्था दिन्द्रस्यैव, नन्द-पुरस्सरान् नन्दप्रमुखान्, नरान् गोपान्, प्रति बलवैरिवैरितां इन्द्रशत्रुतां, कलयन् प्रकटयन् सन्, अवदत् जगाद । देवकार्यार्थ मवतीर्णस्य दानवारेः कृष्णस्य, स्वतः इन्द्रशत्रुत्वासम्भवात्प्रकटयन्नित्युक्तम् । गोवर्धनोद्धरणादि स्वलीलाप्रदर्शनार्थ मिद मिन्द्रपूजानिवारण मिति बोध्यम् । बल बलस्य बलभद्रस्य, वैरिणश्शत्रो, रिन्द्रस्य वैरितामिति प्रतीयते । बलभद्रशत्रु रिन्द्र, स्स्वस्यापि शत्रुरेवेति कृत्वा तत्पूजानिवारणं कर्तु मित्थ मवददिति भावः ॥ २७

**ग ॥ अये कृत मनेन सम्भृतसम्भारेण सङ्क्रन्दनसपर्यासंरम्भेण ॥ २८**

अयेइति– अये इति नन्दादीनां सम्बुद्धिः, सम्भृतसंभारेण सम्भृत स्सम्पादितः, सम्भारः पूजावस्तुसमूहः, यस्य तेन तथोक्तेन । अनेन कर्तु मध्यवसितेनेत्यर्थः । सङ्क्रन्दनस्य इन्द्रस्य, सपर्यायाः पूजाया, स्संरम्भः आडम्बरः, तेन, कृतम् अलम् । ' युगपर्याप्तयोः कृत ' मित्यर्थः ॥ २८

श्लो ॥ अत्युच्चं सकलागमप्रणयिनं विश्रामभूमिं गवां
नित्याशेषफलास्पदं सुमनसां संसेव्य मामोदतः
स्या देनं समुपास्य नून मचलं श्रेयो वनावासिनां
मोहो वः सुरराजपूजनधिया कस्मा दकस्मा दयम् ॥ २९

अत्युच्च मिति– अत्युच्च मत्युन्नतं, सकलागमप्रणयिनं सकलै स्सर्वैः, अगमैः वृक्षैः, प्रणयिनं व्याप्त मित्यर्थः। पलाशिद्रुद्रुमागमा इत्यमरः। गवां धेनूनां, विश्रामभूमिं विश्रान्तिप्रदेशं, 'अमन्तलक्षण-मित्त्वसत्त्वान्मितां ह्रस्व इति ह्रस्वे कृते विश्रम इत्येव भवेदिति कृत्वा विश्राम इत्यपशब्द इति काशिकाकारः। वस्तुतस्तु मितां ह्रस्व इति सूत्रे वा चित्तविरागे स्यतो वेत्यनुवर्त्य विभाषाश्रयणाद् वृत्तिकारमतानुरोधेन विश्राम इति सुशब्द एव। नित्याशेषफलास्पदं नित्यं सर्वदा, अशेषफलानां सर्वविधफलाना, मास्पदं स्थानभूतम्, सुमनसां पुष्पाणां, सम्बन्धिनः आमोदतः परिमळाद्धेतोः, संसेव्यं सम्यक् भजनीयं, नानाकुसुमामोदै र्जनाना माकर्षण मित्यर्थः। एनं परिदृश्यमान मचलं गोवर्धनपर्वतं, समुपास्य संसेव्य, वनावासिनां वने कानने, आवासः निवासः, वनावासः स एषा मस्तीति वनावासिनः। 'अत इनि ठनौ' तेषां वने चराणा मस्माकं, श्रेयः शुभं, स्यात् नूनं निश्चयः, कस्मा द्धेतोः सुरराजपूजनधिया देवेन्द्राराधनबुध्या, अकस्मा दवितर्कितं यथातथा, वः युष्माकं, मयं मोहः व्यामोहः, आसी दिति शेषः। एवंविध मचलं विहाय सुरराजपूजनन्तु वः मोहविलसितमेवेति भावः। व्यङ्ग्यार्थस्तु अत्युच्चं सर्वोत्कृष्टम्। सकलागमप्रणयिनं सकलेष्वागमेषु वेदेषु, प्रणयः स्नेहः, स्वीयत्वाभिमान इति यावत्; यस्य तं, यद्वा प्रणयन्ति प्रतिपादयन्तीति प्रणयिनः सकलागमाः प्रणयिनः यस्य तं सर्ववेदवेद्य मित्यर्थः। 'वेदैश्च सर्वै रहमेव वेद्य' इति गीतावचना' दिति भावः। गवां वाचां, विश्रामभूमिं 'यतो वाचो निवर्तन्ते' इति श्रुतेः। नित्यं च तदशेषफलं, नित्याशेषफलं, मोक्ष मित्यर्थः। तस्य आस्पदं स्थानं, सम्पादक मित्यर्थः। सुमनसां विदुषां, आमोदतः हर्षा त्संसेव्यं भजनीयं, न तु निर्बन्धेन, परमप्रेमास्पदत्वादिति भावः। अचलं पूर्णत्वा च्चलनरहितं, एनं परमात्मानं मा मित्यर्थः। समुपास्य वनावासिनां वैराग्यात् गृहं परित्यज्य वन माश्रिताना मित्यर्थः। नः अस्माकं, जीवाना मित्यर्थः। वस्तुतो भगवदभिन्नत्वा द्भगवता न इति प्रयुक्तं। श्रेयो मोक्षं, स्यात्, नूनं। सुरराजपूजनधिया कस्मा दकस्मा दयं वो मोहः क्षुद्रदेवतो-पासनं मूढानामेव। 'अन्तवत्तु फलं तेषां तद्भव त्यल्पमेधसा' मिति गीतावचना दिति भावः॥ २९

श्लो ॥ एवं तदानीं कृतपक्षपातः। पुपोष तोषं हरिणा गिरीन्द्रः
चिरा न्मघोना कृतपक्षपात। श्चकार वैरस्य मसुल चित्रम् ॥ ३०

एवमिति– एव मुक्तरीत्या, तदानीं तत्काले, हरिणा कृष्णेन, कृतपक्षपातः कृतः पक्षपातः स्नेहः यस्मिन् सः तथोक्तः; गिरिरेव पूजनीयो न त्विन्द्र इति कृतस्नेह इत्यर्थः। गिरीन्द्रः तोषं

त्मानन्दं, पुपोष वर्धयामास । गिरेर्न केवलं स्वकीयपूजालाभश्रवणजन्यानन्दं किन्तु स्वशत्रुपूजानिवारणजन्यानन्दोऽपीत्याह- चिरादिति । चिरा च्चिरकालात्, पूर्वकाल मित्यर्थः । मघोना इन्द्रेण, कृतपक्षपातः कृतः पक्षपातः पत्रच्छेदः यस्य सः तथोक्तः; अत एव गिरीन्द्रः अमुत्रइन्द्रे विषये, वैरस्यं विरसत्वं, द्वेषमिति यावत्– चकार कृतवान् । निष्कारणमसत्पक्षच्छेदं कृतवतो दुष्टस्य मघोनः अयं कृष्णकृतः पूजानिरासः युक्त एवासीदिति दीर्घवैरं स्मृत्वा ननन्देति भावः । चित्र मद्भुतम् । गिरे र्बहुकालस्य वैरनिर्यातनम् भगवदनुग्रहा दासीदिति विस्मय इति भावः । व्यङ्ग्यार्थस्तु एवं हरिणा तदानीं कृतपक्षच्छेदोऽपि गिरि स्तोषं पुपोष । मघोना चिरा त्कृतपक्षच्छेदोऽपि तत्र वैरस्यं चकारे तीदं चित्रं नूतनापराधलाभेन सन्तोष इति यत् पूर्वकालकृतापराधे इन्द्रे वैरस्य मिति यत् इदं द्वयमपि चित्रमिति भावः । लोके हि नूतनशत्रौ प्रबलवैरस्यं, प्राचीने तु औदासीन्यमिति स्थिते अत्र तद्वैपरीत्य माश्चर्यावह मिति फलितार्थः । अन्योऽप्यर्थः प्रतीयते । कृष्णेन कृतपक्षच्छेदोऽपि गिरि स्तुतोष । मघोना चिरा दारभ्य कृतस्नेहोऽपि गिरि स्तस्मिन् वैरस्यं चकारेति द्वय मिदं चित्र मिति भावः । अपि च हरिणा इन्द्रेण, तदानीं कृतपक्षपातोऽपि गिरि श्चिरा न्मघोना कृतपक्षपातोऽभव दित्येको विरोधः । तोषं पुपोष, तथापि तत्र वैरस्यं चकारेत्यन्यो विरोधः इतीदं विरोधद्वयं चित्रमिति च प्रतीयते ॥ ३०

ततः ॥ भगवदुपदेशानन्तर मित्यर्थः ॥

श्लो ॥ हितां भगवतो वाणीं । प्रमाणं च विचिन्त्य ते
विधिवत्पूजयां चक्रु । र्विमोही जगतीधरम् ॥ ३१

हिता मिति– ते नन्दादयः, भगवतः कृष्णस्य, सम्बन्धिनीं वाणीं वाक्यं, हितां प्रियां, प्रमाणं च प्रमाणभूतां च, विचिन्त्य आलोच्य, फलप्रदानद्वारा स्वेषां तृणप्रदानद्वारा गवां च प्रियङ्करस्य बहूपकारकस्य गोवर्धनस्य प्रत्युपकारभूता पूजा तत्सन्तोषावहत्वेन स्वेषा मधिकफलदात्रीति श्रीकृष्णवाक्यं यथार्थम्मत्वेति भावः । विमोहा दज्ञानात्, भगवन्मायाबला दिति वा। जगतीधरं पर्वतं, विधिवत् यथाशास्त्रं, पूजयाञ्चक्रुः समपूजयन् । यद्वा विगतो मोहो विमोहः मोहाभावः, तस्मात् क्षुद्रदेवतोपासनात्मकस्य प्रत्यक्षपर्वतपूजात्यागपूर्वक परोक्षेन्द्राराधनरूपस्य वा मोहस्य निवृत्तत्वा दिति भावः ॥ ३१

श्लो ॥ गोगणं हुतभुजं प्रदक्षिण । ज्वालजाल मवनीसुरा नपि
तर्पयन् व्रजनिवासिनां व्रजो । भूभृते बलि मथ न्यवेदयत् ॥ ३२

गोगण मिति– व्रजनिवासिनां गोपानां, व्रज स्समूहः, गोगणं गोसमूहं, तर्पयन् तृणादिदानेनेति भावः । तथा प्रदक्षिणज्वालजालं प्रदक्षिणः सव्यः ज्वालजालं शिखासमूहः, यस्य तं हुतभुज मग्निं, तर्पयन् । आज्येनेति भावः । तथा अवनीसुरानपि ब्राह्मणांश्च,

तर्पयन् प्रीणयन्, दक्षिणादिभिरितिभावः । अथ ततः, भूभृते गोवर्धनपर्वताय, बलिं पूजां, उपहारं वा, न्यवेदयत् निवेदयामास । समर्पयामासेत्यर्थः ॥ ३२

श्लो ॥ अथ चेतनय न्ननुप्रवेशा । दचलेन्द्रं बल मग्रही न्मुरारिः
चरितं परिपीय त द्गभीरं । न तदा के पुन रद्भुतं वितेनुः ॥ ३३

अथेति– मुरारिः कृष्णः, अनुप्रवेशात् स्वस्य पर्वतान्तःप्रवेशा द्धेतोः, अचलेन्द्रं गोवर्धनं, चेतनयन् चेतनीकुर्वन्, प्राणवन्तं कुर्वन्नित्यर्थः । बलिं गोपैः स्समर्पितं पूजोपहारादिकं, अग्रहीत् स्वीचकार । तत् गभीरं दुर्विज्ञेयं, चरितं चरित्रं, निपीय श्रुत्वा, दृष्ट्वेति वा । तदा तदानीं, के पुनः केवा जनाः, अद्भुत माश्चर्यं, न वितेनुः न विस्तारयामासुः । सर्वेप्याश्चर्यं प्रपेदिरे इत्यर्थः । अचेतनस्य वाक्पाण्यादिरहितस्य पर्वतस्य चेतनीभूय बलिग्रहण मिति यत् त न्महद द्भुत मिति भावः ॥ ३३

श्लो ॥ बलरिपु र्मघवा नहितो हरे । रिति न हेतु रहिद्रुहि नादरे
बलिभसावचलच्छलत स्स्वयं । परिजिघृक्षु रिदं व्यधित ध्रुवम् ॥ ३४

बलरिपु रिति– अहिद्रुहि अहिं वृत्रासुरं, द्रुह्यति हिनस्तीति अहिद्रुट् तस्मिन् इन्द्रे विषये, सर्पे वृत्रासुरेऽप्यहिरिति रभसः । हरेः कृष्णस्य, नादरे न आदरः नादरः, नञर्थोऽयं न शब्दः-तेन सह सुप्सुपेति समासः । तस्मिन् नादरे द्वेषे, बलरिपुः बलस्य बलासुरस्य बलभद्रस्येति च गम्यते, रिपु श्शत्रुः, मघवा इन्द्रः, हरेः कृष्णस्य, न हितः नशब्देन सह समासः अहितः विरोधीति यावत् । इत्ययं हेतुः कारणं न न भवति मदग्रजस्य बलस्य यस्मा दयं रिपु स्ततो ममापि द्वेष्य इति हेतुना इन्द्रे श्रीकृष्णो द्वेषं न कृतवानिति भावः । तर्हि इन्द्रद्वेषे को हेतु रत आह– बलिमिति । असौ कृष्णः अचलच्छलतः पर्वतव्याजात्, पर्वत-पूजामिषेणेत्यर्थः । बलि मुपहारं, स्वयं परिजिघृक्षुः गृहीतु मिच्छुस्सन्, गिरिपूजाव्याजेन स्वोदरपूरणं कर्तु मित्यर्थः । इद मिन्द्रपूजानिवारणं व्यधित अकरोत् । ध्रुवं निश्चयः । अत्र बलभद्ररिपुत्वस्य श्लेषलब्धत्वेन अहेतुत्वे सिद्धेऽपि हेतुत्वप्रतिषेध श्चमत्कारावह इति प्रतिषेधा लङ्कारः । 'प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्तन' मिति लक्षणात् ॥ ३४

ग ॥ अथ निजविमतमुररिपुचरितहरिहयसमीरितसंवर्तसमयसमुज्जृम्भणो-चितधाराळधाराधरनिरन्तरसमुद्गीर्यमाणसलिलासारचुळुकिताशेषनिवेशप्रदेशतया समुदीर्णकर्णपरुषविषमदीनभाङ्कारेण सुरभिनिकरेण सम मतिकर्षितेषु गवीशेषु शरण मुपयातेषु ॥ ३५

अथेति–अथ अचलपूजानन्तरं, निजविमतस्य स्वशत्रोः, मुररिपोः कृष्णस्य, सम्बन्धिना चरि-तेन स्वपूजानिवारणरूपेण व्यापारेण, यद्वा निजविमतं स्वविरुद्धं यन्मुररिपुचरितं तेनेति वा परिकुपितः

अत्यन्तकुपितः, यः हरिहयः इन्द्रः, तेन कर्त्रा समीरितैः प्रेरितैः, संवर्तसमयसमुज्जृम्भणे उचितैः योग्यैः, प्रळयकालसमुल्लासनार्है रित्यर्थः । यद्वा— संवर्तसमयसमुज्जृम्भणस्य उचितै रनुकूलैः, प्रळय-कालकर्तृक विजृम्भणस्य सहचरै रित्यर्थः । उभयथापि प्रळयकाले इव समुज्जृम्भमाणै रित्यर्थः । धाराळै रविच्छिन्नैः, धाराधरै र्मेघैः, निरन्तरं अविच्छेदं, यथा तथा समुद्गीर्यमाणेन सम्यगुद्वम्य मानेन, विसृज्यमानेनेत्यर्थः । 'निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयं । अतिसुन्दर मन्यत्र ग्राम्यकक्ष्यां विगाहते' इति वचनात्, नात्राश्लीलत्वप्रसक्तिः । सलिलासारेण उदकधारासम्पातेन, चुळुकिताः कबळिताः, नाशिता इति यावत् । अशेषा स्सर्वे निवेशप्रदेशाः निवासस्थलानि, येषां तेषां भाव स्तत्ता तया तथोक्तम् । अति कदर्थितेषु अत्यन्तपीडितेषु गवीशेषु गोपेषु, समुदीर्णः सम्यगुक्तः, उच्चैःकृत इति यावत् । कर्णपरुषः श्रवणकठोरः, विषमः प्रतिकूलः, दीनः कृपणः, एवंविधो भाङ्कारः । 'भा' मिति ध्वनिः । येन तेन तथोक्तेन सुरभिनिकरेण गोबृन्देन समं सह, शरणं रक्षक, मुपयातेषु प्राप्तेषु सत्सु, एवंविधापदुद्धारक श्श्रीकृष्ण एव न त्वन्य इति सर्वे गोपा गोभि स्सह श्रीकृष्णं शरणागता बभूवुरिति भावः । यद्वा त्वदुक्तरीत्या इन्द्रापराधं कृतवता मस्माक मीदृशी दुरवस्था सञ्जातेति त्वमेवेमा मापद मपहर्तुं क्षमसे इति वदन्त स्सर्वे गोपा श्श्रीकृष्णं शरणङ्गता इति भावः ॥ ३५

श्लो ॥ अपयशः खलु गोत्रभि दित्यलं । भुवि बभूव हरेरिति चिन्तया
अपनयन्निव तद्यतनं विना । व्यथितगोत्रसमुद्धरणं हरिः ॥ ३६

अपयश इति— हरे रिन्द्रस्य, कृष्णस्येति च- गोत्रभित् पर्वतच्छेत्ता, वंशनाशकश्च- इत्येव मपयशः दुष्कीर्तिः, अल मतिशयेन, भुवि लोके, बभूव खलु अभवत्किल । अहो त्रिलोकनाथोऽपि हरि र्गोत्रभि द्बभूव खलु इति लोकापवादो महानासी दिति भावः । इति चिन्तया एवं विचिन्त्ये-त्यर्थः । तदपयशः अपयन्निव निवारयन्नि वेत्युत्प्रेक्षा । हरिः कृष्णः, यतनं विना प्रयत्नं विना, लीलयेति यावत् । गोत्रसमुद्धरणं पर्वतोत्क्षेपणं, वंशोद्धारं च- व्यधित अकरोत् । हरि र्महात्मा गोत्रोद्धारक इति महती कीर्ति र्जायते चेत् तया पूर्वोक्त मपयशो नश्येदिति मत्वा हरि र्गोत्रो-द्धारं चकारेति भावः । अत्र गोत्रच्छेदनप्रयुक्त मपयशः देवेन्द्रविषयम् । गोत्रोद्धारप्रयुक्तयशस्तु श्रीकृष्णविषयमिति कृत्वा अन्यविषययशसा अन्यविषयापवादस्य अनिवार्यत्वेऽपि तन्निवारणं सम्भा-वितमिति अतिशयोक्तिगर्भोत्प्रेक्षालङ्कारः । अयं च हरिगोत्रपदद्वयश्लेषोत्थापित इति विवेकः । अन्यथा चेदं व्याख्यायते । तथा हि:— हरेः कृष्णस्य मम भुवि गोत्रभि द्वंशच्छेत्ता इत्यपयशः अलं बभूव खलु । आशंसायां भूतवच्चेति भविष्यदर्थे भूतव लिट्प्रत्ययः भविष्यतीत्यर्थः । श्रीकृष्णः इन्द्राराधनं निवारयित्वा स्वजनेन अद्रिं पूजयित्वा इन्द्रकोपद्वारा स्ववंशं नाशयामासेत्यपकीर्ति र्महती मम स्यादिति भावः । इति चिन्तया व्यसनेन आक्रान्तो भूत्वेति शेषः । तदुत्पत्स्यमान मपयशः अपनयन् निवारयितु मित्यर्थः । यतनं विना प्रयत्नं विनैव, हरिः कृष्णः, गोत्र-

समुद्धरणं पर्वतोक्षेपणं, व्यधित । इवेति वाक्यालङ्कारे । पर्वते उक्षिप्तेतु तदधः स्थित्याऽस्मद्वंशो जीवेदिति वंशोद्धारक एवाहं स्यां नतु वंशच्छेत्तेति मत्वा श्रीकृष्णः गोवर्धनोद्धारं चकारेति भावः । अत्र पूर्वार्धेन गोत्रभि दित्यपयशो यथा हरे रिन्द्रस्य बभूव तद्वन्ममापी त्युपमालङ्कारो ध्वन्यते । उत्तरार्थेन तु तादृशगोत्रच्छेदनजन्य मपयशः परिमार्ष्टुं इन्द्रो गोत्रोद्धारं चकारेति व्यज्यते ॥ ३६

श्लो ॥ गोगणै स्सम मार्तार्तै र्यशोदातनयाज्ञया
जीमूततल माभीरा । जवा दवजगाहिरे ॥ ३७

गोगणै रिति– आभीराः गोपाः, आर्तार्तैः अत्यन्तपीडितैः, गोगणैः सुरभिबृन्दैः, स्समं सह, यशोदातनयाज्ञया श्रीकृष्णनिदेशेन, जवा च्छीघ्रं, जीमूततलं पर्वताधःप्रदेशं, मवजगाहिरे प्रविविशुः । अत्र वृष्टिभीत्या जीमूततलं मेघस्याधःप्रदेश मवजगाहिरे इति मौढ्यं गम्यते । 'जीमूतौ मेघपर्वता' वित्यमरः । नचेदं व्यङ्ग्यं कविनाऽविवक्षितमिति वाच्यं । तथात्वे गोवर्धनतलं गोपा इत्येव श्लोकः कविना पठ्येत, नतु पुन रर्थद्वयस्फोरकं जीमूतपद मित्यलम् ॥ ३७

श्लो ॥ कलुषेऽपि जवै र्लोके । निर्मर्यादप्रवृत्तिभिः
न तदा हरिमाहात्म्या । त्पङ्कस्पर्शः पशोरपि ॥ ३८

कलुषेऽपीति– निर्मर्यादप्रवृत्तिभिः निर्मर्यादा उद्वेला प्रवृत्तिः प्रसारो येषां तैः अपरिमितै रित्यर्थः । जलै रुदकैः, हेतुभिः लोके भुवने, कलुषे पङ्किले, सत्यपि तदा हरिमाहात्म्यात् हरेः कृष्णस्य, माहात्म्यात् प्रभावात्, गोवर्धनोद्धरणरूपात् पशोरपि जात्येकवचनं, गवामपी- त्यर्थः; अपिना किमुत गोपाना मिति गम्यते । पङ्कस्पर्शः कर्दमसम्बन्धः, न नासीत् । पर्वताधःप्रदेशे वृष्ट्यभावा दिति भावः । नच इत स्ततः पतितवर्षधाराप्रवाहः पर्वताधोदेशेऽपि प्रसरत्येवेति कुतः पङ्काभाव इति वाच्यम् । पर्वतप्रान्तदृषद्भिः सेतुभूतादिभि स्सर्वत्र वर्षप्रवाहस्य निवारितत्वात् । यद्वा पर्वतकटिप्रदेशे गोगोपगणं स्थापयित्वा तदुपरि छत्रव त्पर्वतशिखरं कृष्णो दधारेति बोध्यम् । अथवा भगवदाज्ञावशा त्सागरसन्निवृत्तिवत् वर्षोदकमपि निवृत्त मेवाभूत् नतु पुनः पर्वताधोदेशे प्रससारेति ज्ञेयम् । व्यङ्ग्यार्थस्तु निर्मर्यादप्रवृत्तिभिः उल्लङ्घित विधिनिषेधैः, मर्यादा विधिशास्त्रजन्या स्थितिः, निर्गता मर्यादा यस्या स्सा निर्मर्यादा, प्रवृत्ति र्व्यापारो येषां तै रिति समासः । जलैः लडयो रभेदात् जडैः दुष्टै रित्यर्थः । लोके कलुषे आविले, सत्यपि पापभूयिष्ठे सत्यपीत्यर्थः । कलुषशब्दो यद्यपि पापगुणवाची तथापि कलुष मस्यास्तीति व्युत्पत्त्या कलुषवद्द्रव्यवाची च । तदा हरिमाहात्म्यात् भगवत्प्रभावात्, पशोरपि अविवेकिनोऽपि, स्वाश्रितस्येति शेषः । पङ्कस्पर्शः पापसम्बन्धः, न नासीत् - इति अपिच

वर्षासु ज़लैः कलुषेऽपि लोके, तदा शरदि हरे सूर्यस्य माहात्म्या, त्वशोरपि पङ्कस्पर्शो नासी-
दिति च ध्वन्यते ॥ ३८

श्लो ॥ परिभूति रभू ज़लै र्न तेषा । मतिसन्धैरपि माथवाश्रितानाम्
गतिरोधितु सत्पथच्युतै स्तै । धरणी पङ्क मुपार्जितं प्रभूतम् ॥ ३९

परिभूतिरिति— माथवाश्रितानां कृष्ण माश्रितानां, तेषां गवीशानां, अतिसन्धैः निस्सीमै रपि 'सन्धा सन्धानसीमयो' रित्यमरशेषः । जलैः परिभूतिः तिरस्कारः, पीडेति यावत् । नाभूत् न बभूव, तु किन्तु, सत्पथच्युतैः सतां नक्षत्राणां, पन्थाः सत्पथ, माकाश इत्यर्थः । 'ऋक्पूरब्धूः पथामिति समासान्तोऽप्रत्ययः' । तस्मात् च्युतैः भ्रष्टैः, मेघा हि आकाशे स्थित्वा जलं वमन्तीति प्रत्यक्षम् । तै र्जलैः आकाशगतमेवव्रृष्टै रुदकै रित्यर्थः । धरणौ भुवि, गतिरोधि सञ्चार प्रतिबन्धकं, प्रभूत मधिकं, पङ्कं कर्दमः 'पङ्कोऽस्त्री शादकर्दमा' वित्यमरः । उपार्जितं सम्पादितं कृतमिति यावत् । तादृशज़लवशा द्भुवि महान् पङ्कः समजनीति भावः । व्यङ्ग्यार्थस्तु माथवाश्रितानां भगवद्भक्तानां, तेषां अतिसन्धै र्निर्मर्यादैः 'सन्धा प्रतिज्ञा मर्यादा' इत्यमरः । जलै र्जडैः परिभूति स्तिरस्कारो, नाभूत् । नहि भगव-द्भक्तानां कदाचिदपि कैश्चिदपि पराभव स्स्यादिति भावः । सत्पथच्युतैः सन्मार्गभ्रष्टैः, तैःज़डैस्तु धरणौ भूलोके, गतिरोधि स्वर्गादिप्राप्तिविरोधि, प्रभूतं पङ्कं पाप, मुपार्जितं सम्पादितम् । दुष्टा हि महात्मसु अपचारं विधाय पापमेव सम्पादयन्ति ; नतु तदपचारेण महात्मनां कापि क्षतिः; भगवत स्तत्पक्षपातित्वादिति फलितार्थः ॥ ३९

श्लो ॥ स्वकं प्रकाशं वृषभावमिन्द्र । स्सर्वेश्वर स्यावमते र्वितेने
गवां निरुन्धे स्म संततेस्तु । स्वैरप्रवृत्तिं विपरीत मेतत् ॥ ४०

स्वक मिति— इन्द्रः सर्वेश्वरस्य कृष्णस्य, अवमते रवमाना, द्धेतोः श्रीकृष्ण मवमत्ये-त्यर्थः । स्वकं स्वकीयं, वृषभावं वृषत्वं. 'वासवो वृत्रहा वृषे' त्यमरः । वृषभत्वं च प्रकाशं प्रकटं, वितेने चकार । सर्वेश्वरप्रातिकूल्यं कुर्वाणो वृषभव न्मूढ एवेति भावः । अत्र इन्द्रेण स्वस्मिन् सिद्धस्यैव वृषभावस्य सर्वेश्वरावमतिद्वारा पुनः प्रकटीकृतत्वा द्विध्यलङ्कारः । 'सिद्धस्यैव विधानं य त्ता माहु र्विद्ध्यलंकृति' मिति लक्षणात् । अयं च वृषशब्दगतश्लेषोत्थापित इति बोध्यम् । सः प्रकटितवृषभावः इन्द्रस्तु, गवां सन्ततेः गोसमूहस्य, स्वैरप्रवृत्तिं यथेष्टसञ्चारं, निरुन्धे स्म निवारितवान् , वृष्ट्येतिभावः । अन्यत्र गवां सन्ततेः प्रजायाः, स्वैरप्रवृत्तिं निरन्तरोत्पादनं निरुन्धे स्मेति गम्यते । एत द्विपरीतं विरुद्धं । वृषभस्य गोसन्ततिवर्धकत्वे सहजे सति तन्निरोधनं चित्र-मिति भावः । विरोधाभासालङ्कारः । व्याख्यान्तर मस्ति । तथाहि इन्द्रः प्रकाशं प्रकृष्टं, स्वकं वृषभावं, धर्मस्वरूपत्वं, सर्वेश्वरस्यावमतेः तद्वारेत्यर्थः । वितेने विरुद्धलक्षणया नाशयामासेत्यर्थः ।

स इदं गवां सन्तते स्सङ्गस्य, स्वैरप्रवृत्तिं निरुन्धे स इत्येतत् द्वयमपि विपरीतं विरुद्धम् । देवावमाननं गोनिरोध श्चैतत् द्वय मधर्मस्वरूपाणां राक्षसाना मेव कृत्यं; नतु धर्मस्वरूपाणां देवानामिति स्थिते, देवेन्द्रोप्येव मकृत्यं कृतवा निति मह दाश्चर्यमिति भावः ॥ ४०

श्लो ॥ हंसस्य तस्योदयतोऽखिलेषु । लोकेषु शोभातिशयाश्रयेषु
आन्ध्यं प्रपद्य प्रतिकूलचारी । तमोनुगः कौशिक एव नान्यः ॥ ४१

हंसस्येति– तस्य हंसस्य परमात्मनः कृष्णस्य, उदयतः आविर्भावात्, अखिलेषु सर्वेषु, लोकेषु जनेषु, शोभातिशयाश्रयेषु शोभातिशयस्य कान्त्यतिशयस्य, आश्रयाः । आधाराः, तेषु- अतिशोभाशालिषु सत्सु इत्यर्थः । कौशिक एव इन्द्रः एक एव, तमोनुगः तमः तमोगुण मनुगच्छति प्राप्नोति, तथोक्तः तमोगुणपरवश इत्यर्थः । अतएव आन्ध्यं मोहं, प्रपद्य प्राप्य, प्रतिकूलचारी प्रतिकूलं कृष्णस्याननुकूलं यथा तथा चरति सञ्चरतीति प्रतिकूलचारी, विरुद्धाचरण इति यावत् । भवतीति शेषः । अन्यः इन्द्रव्यतिरिक्तो. जनः न-तथा प्रतिकूलचारी न भवतीत्यर्थः । व्यङ्ग्यार्थस्तु- तस्य प्रसिद्धस्य हंसस्य सूर्यस्य, उदयतः उदया द्धेतोः, अखिलेषु लोकेषु भुवनेषु, शोभातिशयाश्रयेषु सत्सु दीप्तेषु सत्स्वित्यर्थः । कौशिकः उलूक एव 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषुकौशिकः' इत्यमरः । तमोनुगः अन्धकारं प्राप्त स्सन्, अतएव आन्ध्यं चक्षुरिन्द्रिय स्याप्रसारं, प्रपद्य चक्षुरिन्द्रियव्यापारशून्यो भूत्वेत्यर्थः । प्रतिकूलचारी स्वानभिमतसञ्चारः, चक्षुःप्रसारणेसति अभिमतस्थले प्रवर्तते अनभिमतात्तु निवर्तते । तदभावे अभिमतानभिमतविवेको न स्यादिति भावः । अन्यः न तथा न । कौशिकानामेव दिवान्धत्वादिति भावः । एतेन महेन्द्रस्य उलूकसाम्यं वस्तु व्यज्यते ॥ ४१

ग ॥ तदनु यदुनन्दनापदाननिशमनसमसमयविगलितदुरवष्टम्भसम्भारेण जम्भरिपुणा निवारिते वारिवाहनिवहे विहाय विहायसस्थल मपसरति निरपाय मावासवसुमतीसविध मधिशयानेषु गोपालबालेषु ॥ ४२

तदन्विति– तदनु गोवर्धनोद्धारानन्तर मित्यर्थः । यदुनन्दनस्य श्रीकृष्णस्य सम्बन्धिनः अपदानस्य गोवर्धनोद्धरणरूपाद्भुतकर्मणः, विशमनं श्रवणं, तस्य समसमये समकाले एव, यदा यदुनन्दनापदानं श्रुतं तदैवेत्यर्थः । विगलितः अपगतः, दुरवष्टम्भसम्भारः दुष्टगर्वातिशयः, यस्य तेन तथोक्तेन, जम्भरिपुणा जम्भासुरशत्रुणा इन्द्रेण, निवारिते नियमिते, वारिवाहनिवहे मेघसमूहे, विहायसस्थल माकाशप्रदेशं, विहाय त्यक्त्वा अपसरति निष्क्रान्ते सति, अपयाते सतीत्यर्थः । गोपालबालेषु गोपबालेषु, निरपायं अपायरहितं, यथा तथा आवासवसुमतीसविधं निवासभूमिसमीपं, मधिशयानेषु अधिष्ठित्य शयितेषु सत्सु, अधिशीङ्स्थासामिति आधारस्य कर्मत्वम् । मेघैः निवासगृहाणां निर्मूलं नाशितत्वेन तद्भूसमीपे एव गोपाला श्शयिता अभव न्निति भावः ॥ ४२

श्लो ॥ अनुनेतुं यथास्थान । संस्थापितगिरिं हरिम्

पुरन्दर स्समायासी । दासी च्चावनताननः ॥ ४३

अनुनेतु मिति– पुरन्दरः इन्द्रः, यथास्थानसंस्थापितगिरिं स्वस्थाननिहितगोवर्धनं, हरिं कृष्ण, मनुनेतुं प्रसादयितुं, समायासी दाजगाम । अवनताननः नम्रमुखः, लज्जयेति भावः । आसीच्च बभूव- चात्पूर्वोक्तः पुरन्दर एवात्रापि कर्ता ॥ ४३

ग ॥ आनम्य च मुहुर्मुहु रनन्तर मस्तौषीत् ॥ ४४

आनम्येति– मुहु र्मुहुः असकृत् , आनम्य प्रणम्य, अर्थात् हरिमित्येव अनन्तरं ततः अस्तौषीच्च स्तुतवान् ॥ ४४

तथा हिः–स्तुतिमेव प्रतिपादयति कवि रित्यर्थः ॥

श्लो ॥ परेभ्य स्त्वं मुक्तिं कथमिव मुनीना मविरत

स्मृतिश्रेणीरश्मिप्रकरपरिणद्धो वितरसि

निमग्न स्तद्भक्तिप्रचुरजलधौ तारयसि ता

न्कथं वा तत्वं ते क इव विवरीतुं प्रभवति ॥ ४५

परेभ्य इति– मुनीनां योगिनां, सम्बन्धिनी या अविरतस्मृतिश्रेणी सन्ततध्यानधारा, सैव रश्मिप्रकरः रज्जुनिवहः, तेन परिणद्धः बद्धः, णह बन्धने इति धातुः । त्वं परेभ्यः इतरेभ्यः, भक्तेभ्य इत्यर्थः । मुक्तिं मोक्षं, कथमिव कथंवा वितरसि ददासि ? स्वयं मुक्तः परा न्मोचयतु नाम; त्वं तु स्वयं बद्धः; परेषा म्मोचने तव का कथेति विरोधः । अविरतस्मृतिमालेण मुनिभ्यो मुक्तिं वितरसि; तव नित्यमुक्तत्वा द्दिति तत्परिहारः । विरोधाभासालङ्कारः । तद्भक्ति प्रचुरजलधौ तेषा म्मुनीनां भक्तिरेव प्रचुरजलधिः महासमुद्रः, तस्मिन् , निमग्नः स्नातः, त्वं तान् भक्तान् , कथं वा केन प्रकारेण, तारयसि जलधिपारं गमयसीत्यर्थः । स्वयं तीर्णः परा स्तारये द्दिति न्यायात् । स्वयं मग्नस्य तव परतारणकथा दूरेति भावः । अत्रापि अस्य विरोधस्य निष्कपट भक्तान् त्वं संसारपारं गमयसीति परिहारः । विरोधाभासालङ्कारः । ते तत्त्वं याथार्थ्यं, विवरीतुं निर्णेतुं, क इव कोवा, प्रभवति शक्नोति ? न कोपीत्यर्थः । दुरवगाहत्वा दित्येको भावः । अत्यन्तविरुद्ध-विषयत्वा दित्यन्यो भावः । एतेन तव याथार्थ्यस्य दुरवगाहत्वादेव त्वां गोपमात्रं मत्वा मया तथापकृत मिति स्वापकारहेतुः स्फोरितः ॥ ४५

श्लो ॥ अमत्वा त्वा माशापरवशहृदः केऽपि विदधु

स्स्फुरन्नानारूपा स्त्वयि भिपति संसारनटनम्

चिराद्प्यप्राप्ताः किमपि फल मौदार्य मथ ते

विदित्वा याचन्ते कृत मिति वचः केवल महो !

अमत्वेति– केऽपि जीवाः, जीवतत्त्वस्यापि दुरवगाहत्वात् केऽपी त्युक्तम् । त्वा ममत्वा अज्ञात्वा, सच्चिदानन्दस्वरूपं स्वात्माभिन्नं परमात्मानं त्वा मविदित्वेत्यर्थः । अज्ञानमूलकत्वा त्संसारस्येति भावः । आशापरवशहृदः इच्छापहृतमनसः, कामाभिभूता इत्यर्थः । निष्कामस्य संसारप्रवृत्त्यभावात् इति भावः । स्फुरन्नानारूपाः स्फुरन्ति आविर्भूतानि, नानारूपाणि देवतिर्यगादिभेदेन बहुविधशरीराणि, येषा न्ते तथोक्ताः सन्तः; त्वयि मिषति पश्यति सति, सर्वसाक्षित्वा त्तत्रेति भावः । संसारनटनं संसारः दारापुत्रपोषणादिरूपः व्यवहारः, सएव नटनं नाट्यं, मिथ्यात्वा दिति भावः । विदधु श्चक्रुः । चिरादपि बहुकालादपि, किमपि यत्किञ्चिदपि. फलं सुखं, अप्राप्ताः अगताः, अप्राप्येत्यर्थः । संसारे नास्ति खलु कदाचिदपि कियदपि सुखं-सर्वस्य सुखस्य दुःखमिश्रत्वादिति भावः । अथ नित्यानित्यवस्तुविवेकानन्तरं, ते तव औदार्य मुत्कृष्टतां, पुरुषोत्तमत्व मिति यावत् । विदित्वा ज्ञात्वा, कृतं इतः परं तव संसारेणालं इत्येवं रूपं वचनं केवलं ताव कंवाक्यमात्रं, नहि त्वदनुग्रहं विना अस्माकं संसारनिवृत्तिरिति भावः । याचन्ते प्रार्थयन्ते । अहो आश्चर्यम् । जीवभ्रामणरूपं त्वन्मायाबलं तन्निवर्तनात्मक स्त्वदनुग्रहश्च अत्यद्भुतमिति भावः । व्यङ्ग्यार्थस्तु- केऽपि नटाः त्वा ममत्वा त्वं लुब्ध इत्यजानाना इत्यर्थः । 'अविदितपरशोस्ते दोर्बलं कार्मुकेसि' त्रित्यादिव त्सामान्याज्ञानवादो विशेषाज्ञाने पर्यवस्यतीति ध्येयम् । आशापरवशहृदः मुहुर्मुहु र्नाट्यदर्शनोत्सुकोऽयं प्रभु रभीष्टं दास्यती त्याशाशतादिष्टा इत्यर्थः । अत एव स्फुरन्ति सुन्दराणि नानारूपाणि वेषाः येषान्ते तथोक्ता स्सन्तः त्वयि मिषति सति त्वदवलोकनार्थमेवेत्यर्थः । संसारनटनं शाकुन्तलादिव त्संसाराभिधस्य यत्किञ्चि न्नाटकस्य नटनं यद्वा संसारस्यैवाभिनयं विदधुः चिरादपि आप्रभातमपि किमपि फलं वस्तुवाहनादिक मप्राप्ता स्सन्तः, अथ ते औदार्यं विपरीतलक्षणया लुब्धत्वं विदित्वा कृतमिति वचः केवलं नतु धनादिक मित्यर्थः । याचन्ते तावतापि श्रमाभावरूपफलसत्त्वा दिति भावः ॥ ४६

श्लो ॥ सती चे ल्लोकानां न भवति हि बाधाप्ति रसती
न चात्यन्तं सत्यामिव भवति यत्प्रत्यय इति
अशक्ता निर्वक्तुं प्रकृति मत एतां तव बुधा
भजन्त्यौदासीन्या दहह परमानन्दलहारीम् ॥ ४७

सतीति– अत्र तव प्रकृतिं निर्वक्तुमिति वक्ष्यमाणार्थकसम्बन्धा त्प्रकृतिरिति विशेष्यपद मध्याह्रियते । तव प्रकृति र्मायाशक्ति रिति यावत् । सती सत्या चेत् त्रिकालाबाध्या भवति यदीत्यर्थः । लोकानां मायाजन्यानां भुवनानां, बाधाप्तिः बाधस्य प्राप्तिः बाधत्व मित्यर्थः, न भवति । कारणस्य सत्यत्वे कार्यं सत्यं स्यात् । प्रकृते जगत्कारणभूताया मायाया मिथ्यात्वा त्त्कार्यभूतं जगदपि मिथ्यैवेति भावः । ननु 'यतो वा इमानि भूतानि जायन्ते'

इति श्रुत्या सत्यस्य ब्रह्मण एव जगत्कारणत्वप्रसिद्धेः कथ मिद मुक्त मिति चे दुच्यते । मायाशबलिते ब्रह्मणि अविद्यायुक्ते रज्जौ सर्पव त्प्रपञ्चः प्रतीयते इति विवर्तवादस्य सिद्धान्तितत्वेन केवलस्य ब्रह्मणः न जगद्धेतुत्वं; किन्तु मायाविन एवेति कृत्वा मायैवात्र जगत्कारण मित्युक्तमिति बोध्यम् । तथा अत्यन्त मसती अविद्यमाना वा न भवति । शशशृङ्गादिव त्स्वरूपेण त्रैकालिकनिषेधप्रतियोगिनी वा न भवतीत्यर्थः । कुत इत्यत आह । यद्यस्मात् हेतोः सत्यामिव सत्प्रकृताविव ब्रह्मणीवेत्यर्थः । ' प्रकृतिः पञ्चभूतेषु स्वभावे सचिवादिषु प्रधाने कारणे गुह्ये ' इत्यभिधानात् । जगदुपादानकारणभूतं ब्रह्म प्रतिपादयत्येव प्रकृतिशब्दः । तथाच सूत्रं ' जनिकर्तुः प्रकृति ' रिति । तत्रैवोदाहृतं च 'ब्रह्मणः प्रजाः प्रजायन्ते ' इति । प्रत्ययः प्रतीतिः भवति । अह मज्ञो मा मन्यं च न जानामीति मायाशब्दवाच्य मज्ञानं ब्रह्मवत्परोक्ष मनुभूयते इत्यर्थः । इत्यतो हेतोः एतां तव प्रकृतिं निर्वक्तुं सदसच्छब्दाभ्यां नितरां वक्तुं सतीति असतीति वा निष्कृष्य वक्तु मित्यर्थः । अशक्ताः असमर्थाः, बुधाः विद्वांसः, औदासीन्यात् मायाविलासोपेक्षणेन परमानन्दलहरीं परमसुखप्रवाहं, आत्मस्वरूप मिति यावत् । भजन्ति सेवन्ते, ध्यायन्तीति यावत् । माया तत्कार्य मिदं जगच्च न सत् ; बाध्यमानत्वात् ; नाप्यसत् प्रतीयमानत्वात् । प्रतीयते बाध्यते चेति हेतो र्मिथ्यैव इति निश्चित्य; ऐन्द्रजालिकनिर्मितगन्धर्वनगरादाविव अत्र प्रपञ्चे उदासीनो भूत्वा केवल मात्मस्वरूपं भजन् यावद्देहपातं जीवन्मुक्तो विद्वान् वर्तते इति भावः । व्यङ्ग्यार्थस्तु- तव प्रकृति स्स्वभावः, सती साध्वी, चेत् लोकानां जनानां, बाधायाः व्यथायाः, आप्तिः प्राप्तिः, र्बाधाप्ति र्न भवति । नहि सज्जनो जना न्बाधते इति भावः । अत्यन्त मसती दुष्टा वा न भवति । य द्यस्मात्, सत्यां प्रकृताविव, सत्स्वभावे इव प्रत्ययः विश्वासः, भवति । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । विनीत वेषवचनमाधुर्याद्यभिनयेन सज्जन इव त्वयि विश्वासो भवतीत्यर्थः । अतो हेतोः तव प्रकृतिं निर्वक्तु मशक्ताः सज्जनो दुर्जनो वेति विवेक्तु मसमर्था इत्यर्थः । बुधाः औदासीन्या दुपेक्षणात् स्नेहद्वेषयो रुभयोरपि प्रहाणेनेत्यर्थः । परमानन्दलहरीं भजन्ति प्राप्नुवन्ति । अहहेत्याश्चर्ये अव्ययम् ॥ ४७

**श्लो ॥ मन श्शोकप्लुष्टं भजतु परमां निर्वृति मिति**
**क्षिपंत्येतस्मि स्ते चरण ममृतस्यन्दि मुनयः**
**क एवं जानीते हृदय मिद मापत्सहचरं**
**विनश्ये त्स्वादेत द्विरहकृत कैवल्यमिति च ॥** ४८

मन इति– शोकप्लुष्टं शोकैः दुःखैः, प्लुष्टं दग्धं, ' प्लुष दाहे ' मनः हृदयं, परमां निरतिशयां, निर्वृतिं सुखं, शीतलतां च भजतु प्राप्नोतु इति मत्वेति शेषः । एव मालोच्येत्यर्थः ।

मुनयः मननशीलाः योगिनः, एतस्मिन् मनसि अमृतस्यन्दि मोक्षप्रदं जलस्रावकं च, ते तव, चरणं पादकमलं, क्षिपन्ति स्थापयन्ति । आपत्सहचरं विपद्युक्तं, सांसारिकक्लेशपराभूत मित्यर्थः । इदं हृदयं विनश्येत् नष्टं स्यात्, निरन्तरध्यानेन मनसो लयो भवतीति भावः । एतद्विरहकृत-कैवल्यं एतस्य मनसो, विरहेण नाशेन, कृतं जातं, कैवल्यं मोक्ष श्च, स्या द्भवेत् । मनोलयस्यैव मोक्षत्वादिति भावः । इत्येवं को जानीते को वेद न कोऽपि 'नान्यः पन्था विद्यतेऽयनायेति' ज्ञानमार्गा दन्यो न मोक्षहेतुरित्येव सर्वे जानन्ति । भगवत्पादारविन्दध्याना दक्लेशेनैव मोक्षो भवे दित्ययं सुलभोऽप्रमादश्च भक्तिमार्गः कैरपि न ज्ञायते इति भावः । यद्वा एवं को ब्रह्म जानीते तस्य साक्षा त्त्वत्पुत्रत्वा त्त्वद्भक्तिरसमाहात्म्यज्ञानं त्वदनुग्रहे णास्ति नत्वन्येषा मिति भावः । उत्तरार्धे त्विदं व्यङ्ग्यं– आपत्सहचरं आपत्स्व प्यनपायशीलं, मित्र मित्यर्थः । इदं हृदयं विनश्येत् तादृश मत्र विपत्ति र्दुस्सहेति भावः । एतद्विरहेण मित्रनाशेन कृतं कैवल्य मेकत्व मनाथत्वमिति यावत् । तच्च स्यादित्येवं को जानीते न कश्चिद्भाविन मर्थं जनीते इति भावः ॥ ४८

श्लो ॥ परप्रेमाधार स्त्वमसि सकलानां प्रकृतित
स्तव प्रेम्णः पात्रं भवति चिरसेवाभिरसिकः
सदम्भोऽन्य प्रेमानिरुपधिकृपानीरधि रसि
त्वमित्येवं जागर्त्यहह भुविकीर्ति स्तदपि ते ॥ ४९

परेति– त्वं सकलानां सर्वेषां, जनानां प्रकृतितः स्वभावतः, उपाधिं विनेत्यर्थः । पर-प्रेमाधारः परप्रेमास्पदं, असि भवसि, सर्वस्यापि स्वस्यात्मनः परप्रेमास्पदत्वात्; तस्य च त्वदभिन्न-त्वादिति भावः । गौणात्मानः पुत्रादयो यद्यपि परप्रेमाधारा स्तथापि तत्र परप्रेम्णो न निरुपाधि-कत्वं पुत्रत्वाद्युपाधिकृतत्वा त्तस्येति तद्व्यावृत्त्यर्थं प्रकृतित इत्युक्तम् । तव त्वत्सम्बन्धिनः प्रेम्णः स्नेहस्य, पात्रं भाजनन्तु चिरसेवाभि र्बहुकालसेवाभिरपि, को भवति? न कश्चि दित्यर्थः । 'प्रियोहि ज्ञानिनोऽत्यर्थ महं स च मम प्रिय' इति ज्ञानी हि भगवतः प्रियः । 'वासुदेव स्सर्व-मिति स महात्मा सुदुर्लभ' इति ज्ञानिनो दुर्लभत्वं च गीतासु प्रतिपादितम् । एतेन पामरा स्सर्वेऽपि त्वयि निरुपाधिकं प्रेम कुर्वन्ति । त्वन्तु न तेषा म्मध्ये कस्मिन्नपीति भगवतः कृतघ्नत्वं ध्वन्यते । अमुमेव ध्वनितार्थं म श्रित्य विरोध मुत्थापयति सदम्भ इति– तदपि तथापि, अन्य-प्रेमा इतरस्नेहः, सदम्भः सोपाधिकः, प्राकृताना मस्माकं अन्योन्यप्रेम हि परस्परकृत्यप्रवृत्त्या ह्युपाधिकृत इति भावः । त्वं तु निरुपधिकृपानीरधि रसि । निर्व्याजदयासमुद्रः असि भवसि, नहि भगवान् भक्तसकाशात् कञ्चनार्थ माकाङ्क्ष्य तेषु कृपां करोति । तस्य अवाप्तसमस्तकामत्वा-दिति भावः । इति तव भुवि लोके, कीर्तिः प्रथा जागर्ति प्रवर्तते । अचेतनायां कीर्त्यां चेतन-त्वारोपा जागर्ति प्रयोगः । जागृ निद्राक्षये इति धातुः । तेन च कीर्त्याः निरन्तरविजृम्भणं

प्रतीयते । अहहेति- वस्तुत स्सर्वे निरुपाधिकृपाश्रयाः त्वन्तु सव्याजकृपाश्रय इति दुर्यशसि भवितव्ये वैपरीत्य माश्चर्य मित्यर्थः । विरोधाभासालङ्कारः ॥ ४९

अव– इति पञ्चभिः स्तुत्वा अथ स्वापराधक्षमप्रार्थनापूर्वकं स्तुति मुपसंहरति स्पृशन्त इति–

श्लो ॥ स्पृशन्तो भक्ताना मनिश मपराधानलकणा
भवन्तं निर्वाणाः कति कति न कारुण्यजलधिम्
कटाक्षै स्तद्व न्मामपि सुरगवीसन्ततपयः
परीवाहप्रायै स्स्नपय चिरमागः कलुषितम् ॥ ५०

स्पृशन्त इति–भक्ताना माश्रितानां, सम्बन्धिनः अनिश मविच्छिन्नाः, कति कतिडति चेत्यनेन षट्संज्ञायां षड्भ्यो लुगिति लुक् । वीप्सायां द्विर्भावः । कियत्सङ्ख्याका इत्यर्थः । अपराधानलकणाः अपचाररूपाग्निकणाः, कारुण्यजलधिं दयासमुद्रं, भवन्तं त्वां, स्पृशन्तः प्राप्ता स्सन्तः, न निर्वाणाः न शान्ताः, सर्वेऽपि शान्ता एवेत्यर्थः । घटादिस्थनीरं प्राप्यैव अग्नि श्शाम्यतीति कृत्वा समुद्रं प्राप्य अग्निकणानां शान्ति रविवादैव । तद्व द्भवन्तं प्राप्य अपराधा अपीति भावः । मद्धीनमायाकबळितज्ञाना एते मय्यपराधं कुर्वन्तु नाम; नायं मया गणनीय इति त्वं तेषु कृपामेव करोषीति मुख्यार्थः । तद्वत् तथा आगः कलुषितं, आगांसि अपराधाः, तैः सञ्जातकलुषं त्वदपराधकरणा त्पापिन मित्यर्थः । मामपि सुरगवीसन्ततपयःपरीवाहप्रायैः सुराणां गौ स्सुरगवी, कामधेनुः समासान्त ष्टच् । टित्वात् ङीप् । तस्या स्सन्ततपयःपरीवाहाः निरन्तरक्षीरप्रवाहाः, तैः प्रायास्तुल्याः, तै स्तथोक्तैः । भगवतः पुण्डरीकाक्षत्वा त्सर्वकामप्रदत्वा च्च भगवत्कटाक्षाः, श्वेतत्वा दिष्टप्रदानाच्च, सुरधेनुपयःपूरैरुपमिता इति बोध्यम् । कटाक्षै रपाङ्गैः, श्चिरं स्नपय सेचय । चिर मित्यनेन इन्द्रस्यात्यन्तसन्तापो व्यज्यते ॥ ५०

श्लो ॥ सुरधेनुपयःपूरै । रभिषिच्य ततो हरिम्
दिवं दिवस्पतिः प्राया त्परिपूर्ण मनोरथः ॥ ५१

सुरधेन्विति– दिवस्पतिः इन्द्रः, 'तत्पुरुषे कृति बहुल'मि त्यलुक् । कस्कादे राकृतिगणत्वा त्सत्वम् । ततः स्तुत्यनन्तरं, हरिं कृष्णं, सुरधेनुपयःपूरैः कामधेनुक्षीरप्रवाहैः, रभिषिच्य स्नपयित्वा, परिपूर्णमनोरथः परिपूर्णाः, अवाप्ताः मनोरथा स्सर्वे हृद्गताः कामाः यस्य सः तथोक्त स्सन्, दिवं स्वर्गं, प्रायात् ययौ ॥ ५१

ग ॥ अथ कदाचि दाचरितहरिवासरव्रतमुपजातानन्दं नन्द मवगाहनानर्ह मनेहस मविचार्य परिविभावरि शमनभगिनीपानीय मवगाहमान मतिमात्रकुपितः प्रचेतो दूत स्स्वाधीशनिवेश मवेशयत् ॥ ५२

अथेति—— अथ ततः, कदाचित् कस्मिश्चित्समये, आचरितं अनुष्ठितं, हरिवासरव्रतं एकादशीव्रतं, येन तं; अत एव उपजातानन्दं प्रभूतसुखं, सुखपारवश्या देव अवगाहनानर्हं प्रवेशायोग्यं अनेहसं काल मविचार्य अनालोच्य, अयं समयो न यमुनाप्रवेशार्ह इत्यविज्ञा येत्यर्थः। परिविभावरि निशीथे, विभक्त्यर्थे अव्ययीभावः। शमनभगिनीपानीयं शमनस्य यमस्य, भगिनी सोदरी, यमुनेत्यर्थः। तस्याः पानीयं जल, मवगाहमानं प्रविशन्तं, नन्दं गोपं, अतिमात्रकुपितः अत्यन्तो मर्षितः, प्रचेतोदूतः वरुणदूतः, स्वाधीशनिवेशं स्वाधीशस्य स्वपते, र्वरुणस्य निवेशं सदन, मवेशयत् प्रवेशयामास। ण्यन्तत्वात् द्विकर्मकत्वम्॥ ५२

ग॥ स्थाने हि तत्॥

तत् नन्दनयनं स्थाने हि युक्तमेव। योग्यतामेव दर्शयति॥

श्लो॥ असमय मविचिन्त्य तत्र नन्दे। गतवति सूर्यसुता मशान्तनिद्रे
निजगृहगत मक्रमं विदित्वा। कथमिव सोढु मपांपति स्समर्थः॥५४

असमय मिति— अशान्तनिद्रे असमाप्तनिद्रावस्थे, नन्दे निद्राशेषसम्भवे मोह स्स्यादिति भावः। असमयं अकाल, मनुचिन्त्य अविचार्य, नायं स्नानार्हकाल इत्यविदित्वेत्यर्थः। तत्र तदा, निशीथे इत्यर्थः। सूर्यसुतां यमुनां, गतवति प्रविष्टेसति, अपांपति र्वरुणः, निजगृहगतं स्वनिवासभूतोदकसंक्रान्त, मक्रमं दुराचारं, विदित्वा ज्ञात्वा, सोढुं मर्षितुं, कथमिव कथं वा, समर्थः शक्तः? न कथमपीत्यर्थः। उदके सम्भवतो दुराचारस्य वरुणः खलु शिक्षकः; अपां पतित्वादिति भावः। यदि सामान्यजन स्तर्हि सहेतैव। वरुणस्य राजत्वा त्सहन मनुपपन्नम्। तत्र च राजापि यदि लोकदुराचारं नावगच्छे त्तर्हि सहेतैव; विदित्वा सहन न्तु सुतरा मनुपपन्नम्। 'दण्ड्यां श्चैवा प्यदण्डय न्न यशो मह दप्नोती' त्युक्तत्वा दिति परमार्थः। व्यङ्ग्यार्थस्तु— अशान्तनिद्रे अनिवृत्तमोहे नन्दे अतएव असमयं दुराचार मविचिन्त्य पारदार्य मनाचार इत्यविगणय्येत्यर्थः। सूर्यसुतां गतवति सति, तया सह मिथुनीभूय वर्तमाने सतीत्यर्थः। निजगृहगतं, स्वपत्नीगतं 'गृहाः पत्न्यां गृहे स्मृतौ' इति विश्वः। अक्रमं दोषं विदित्वा अपाम्पतिः एतेन वरुणस्य यमुनादयः पत्न्य इति व्यक्तम्। सोढुं कथमिव समर्थः न कथमपीत्यर्थः। समासोक्तिरलङ्कारः। 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चे'दिति लक्षणात्। उदाहृतं च 'चुम्बतीव रजनीमुखं शशी' इति। ५३

श्लो॥ अथो विदितवृत्तान्त। स्त्वरितं मुरशासनः
अगम न्मनसा रोष। गुरुणा वरुणालयम्॥ ५५

अथो इति— अथो नन्दहरणानन्तरं, विदितवृत्तान्तः विदितः चारेभ्यः अनुचरेभ्यो वा, सकाशात् ज्ञातः वृत्तान्तः नन्दं वरुणदूतो वरुणलोक मवेशय दिति वार्ता येन सः; मुरशासनः

कृष्णः, मुरशासन इत्यनेन मुरव द्रुरुणमपि शासितुं क्षमते कृष्ण इति व्यज्यते। रोषगुरुणा रोषेण कोपेन, गुरुणा दुर्भरेण, अतिकोपेनेत्यर्थः। मनसा अन्तःकरणेन, उपलक्षितस्सन् त्वरितं द्रुतं, वरुणालयं वरुणसदन, मगमत् प्राप, यया वित्यर्थः। अत्र मनसा अगम दित्यनेन मन स्सङ्कल्पसमनन्तरक्षणमेव अगमदिति मनोवेगो गम्यते॥ ५५

श्लो॥ परिपूज्य जलाधीशोऽ। प्यप्रमत्त स्तदा हरिम्
आनन्द मभज त्तूर्ण। मा नन्दं सन्त्यजन्नपि॥ ५६

परिपूज्येति– तदा श्रीकृष्णागमसमये, अप्रमत्तः अवहित स्सन्, एतेन ब्रह्मेन्द्रादिव द्रुरुणस्य प्रमादराहित्यं व्यक्तम्। जलाधीशो वरुणोऽपि अपिना भूमण्डला दधिकानां तदा वरुण-भूताना मपां राजाऽयं वरुण स्सर्वेभ्योऽपि चक्रवर्तिभ्यः देवेभ्यश्च उत्कृष्ट इति व्यज्यते। हरिं कृष्णं, परिपूज्य अर्चयित्वा, तूर्णं द्रुतं, विलम्बे सति हरिकोपभयादिति भावः। नन्दं सन्त्यजन् विसृजन्, आनन्दं सुख, मभज दपि प्राप च। आ इत्याश्चर्ये। नन्दपरित्यागादेव अस्य सुख-प्राप्तिः; अन्यथा दुःखमेव स्या दिति भावः। व्यङ्ग्यार्थस्तु- लडयो रभेदात् जडाधीशो मूढाग्रणी रपि, अप्रमत्तास्सन् हरिं परिपूज्य आनन्दं सन्त्यजन्नपि आनन्द मभज दिति। अत्र जडाधीशस्य अप्रमत्तत्व मित्येको विरोधः। आनन्दं त्यजन्नपि भजती त्यन्यः। तेन विरोधाभासालङ्कारध्वनिः। न चात्र विरोधाभासालङ्कार एव नत्वलङ्कार्य इति वाच्यम्। विशेष्यस्यापि श्लेषसद्भावात्॥ ५५

श्लो॥ पुण्यवा न्वरुणलोकयात्रया। नन्दमाप्य पुरुषोत्तमः कृती
तत्कृते रवसितौ पुनः क्षितिं। प्राप मायिकमनुष्यवेषभृत्॥ ५६

पुण्येति– पुण्यवान् सुकृतवान्, सुकृतपरिपाक इत्यर्थः। प्रशंसायां मतुप्। कृती कुशलः, निपुण इत्यर्थः। मायिकमनुष्यवेषभृत् कपटमानुषरूपधारी, पुरुषोत्तमः परमेश्वरः, कृष्ण इत्यर्थः। वरुणलोकयात्रया वरुणलोकगमनेन, नन्दं जनकं, आप्य प्राप्य, स्ववशीकृत्ये त्यर्थः। तत्कृतेः नन्दानयनकर्मणः, अवसितौ सत्यां अवसाने सति, तत्कर्मणि समाप्ते सतीत्यर्थः। पुनः भूयः, क्षितिं भुवं, प्राप भेजे। व्यङ्ग्यार्थस्तु- पुण्यवा नत एव कृती धन्यः, पुरुषोत्तमः, कश्चि त्पुरुषश्रेष्ठः, वरुणलोकयात्रया आनन्द माप्य वरुणलोकं गत्वा, तत्र भूयांसम् आनन्द मनुभूयेत्यर्थः। तत्कृतेः तादृशवरुणलोकसुखानुभवहेतोः प्रारब्धकर्मणः अवसितौ सत्यां मायिकमनुष्यवेषभृत् मिथ्या-भूतमनुष्यरूपधारी सन्, सर्वस्यापि जगतो मायिकत्वा न्नात्र विस्मयितव्यं पुनः क्षितिं भूलोकं प्राप। 'क्षीणे पुण्ये मर्त्यलोकं विशन्ती'ति श्रवणा दिति भावः॥ ५६

ग॥ अथ भगवा नरविन्दलोचनः कस्यामपि तामस्या मभ्युपगतार्थ समर्थ-नाय काननपरिसरं रिरंसु रशिश्रियत्॥ ५७

अथेति— अथ नन्दमोचनानन्तरं, भगवान् षड्गुणनिधि, ररविन्दलोचनः कमलाक्षः; कृष्णः कस्यामपि कस्याञ्चित्, तामस्यां अन्धकारवत्यां, रात्रौ 'तमिस्रातामसी रात्रि' रित्यमरः। तत्प्रारम्भे इत्यर्थः। समनन्तर मित्यनेन अन्धकारोदयस्य वर्णयिष्यमाणत्वात् सूर्यास्तमयानन्तर मिति यावत्। अभ्युपगतार्थसमर्थनाय अभ्युपगतस्य गोपिकावस्त्रापहारसमये प्रतिज्ञातस्य अर्थस्य स्वसम्भोगरूपस्य समर्थनाय निर्वहणाय, रिरंसुः गोपिकाभिस्सह रन्तु मिच्छुः, काननपरिसरं वनप्रान्तदेश, मशिश्रियत् आश्रयामास। णिश्रीति लुङि चङ्॥ ५७

**ग॥ समनन्तर माशावशाधीशकुशलानुयोगायेव दिगन्तलङ्घनजङ्घालाभि रन्धकारधाराभि रापादिताद्वैते जगति॥** ५८

समनन्तर मिति— समनन्तरं भगवतः काननप्रवेशानन्तरं, जगति लोके, आशावशाधीशानां वशाः करिण्यः 'वशा वन्ध्यागवी योषा दुहिता करणी च सा' इति रत्नमाला। तासा मधीशाः पतयः, वशाधीशाः; आशानां दिशां वशाधीशाः आशावशाधीशाः; ऐरावणादयो दिग्गजा इत्यर्थः। तेषां कुशलस्य क्षेमस्य, अनुयोगाय प्रश्नार्थ मिवेत्युत्प्रेक्षा। 'प्रश्नोऽनुयोगः पृच्छा'चे' त्यमरः। दिगन्तेषु तेषां सत्त्वा दित्थ मुत्प्रेक्षितम्। दिगन्तलङ्घने दिगन्ताक्रमणे, जङ्घालाभिः वेगवतीभिः, वेगा द्दिगन्त माक्रमन्तीभि रित्यर्थः। अन्धकारधाराभिः तमस्समूहैः, आपादिताद्वैते सम्पादिताभेदे, सति अन्धकारव्याप्तत्वेन घटपटादिपदार्थ विवेकाभावा त्सर्वं जग देकाकारेण भासते इति भावः॥ ५८

**ग॥ किन्नु खलु पूर्वपर्वतशिखरकुरुविन्दकन्दळद्युतिकदम्ब मिदं, किमुत सकलविलासिनीजनमोहनसाधनीभूतमनोभवमणिबिम्ब मिद, मथवा पुरन्दरहरिदङ्गनानयनाञ्जनस्फटिककरण्ड मिदं, किमुत बम्भरभरितरजनीभामिनी विलासकोकनद मिदं, अथवा चकोरनिकरबुभुक्षापरिकल्पितमाषवटक मिद माहोस्वि दविरतप्रहार शिथिलीकृतान्तरपुरन्दरमन्दिरपरिसरवर्तिघटिकायन्त्रफलक मिद; मेत्र मालोकसंशय-शलाकाशकलितशरीरे पुरुहूतहरिदारम्भपरीरम्भसंरम्भभाजि भगवति पीयूषरोचिषि॥**

किन्निवति— इदं परिदृश्यमानं वस्तु, पूर्वपर्वतशिखरे उदयाद्रिशृङ्गे, यः कुरुविन्दः पद्मरागमणिः, तस्य सम्बन्धि कन्दळद्युतिकदम्बं, उदञ्चत्कान्तिसमूहः किन्नु किमु? खलु प्रसिद्धौ किमुत यद्वा, इदं सकलविलासिनीजनस्य सर्वविधनारीसङ्घस्य, मोहनसाधनीभूतं मोहनकर्मणि परिकरायितं, मनोभवस्य मन्मथस्य, सम्बन्धिनः मणेः रत्नस्य, बिम्बं मण्डलं, मणिमन्त्रौषधादीनि हि वशीक्रियासाधनानीति भावः। अथवा इदं पुरन्दरहरिदङ्गनायाः पूर्वदिग्रमण्याः, नयनाञ्जनस्य नेत्राञ्जनद्रव्यस्य, स्फटिककरण्डं स्फटिकमयं भाजनं, अत्र अञ्जनस्य कळङ्कसादृश्यं करण्डस्य तु चन्द्रसादृश्य मिति विवेकः। किमुत यद्वा— इदं बम्भरभरितं भृङ्गव्याप्तं, रजनीभा-

मिन्याः रात्रिकामिन्या, स्सम्बन्धि विलासकोकनदं लीलारक्तोत्पलं; अथवा इदं चकोरनिकरेण चकोराख्यपक्षिसङ्घेन, बुभुक्षया भोजनेच्छया, परिकल्पितं रचितं, माषवटकं माषपिष्टकृतभक्ष्य-विशेषः (आन्ध्रे. गारे) तद्धि मध्ये छिद्रवत्त्वेन सकळङ्कचन्द्रमण्डलव द्वर्तते । यद्वा यथा लोके माषपिष्टेन वटकं कुर्वन्ति तद्व चकोरा अपि अमृतमयं चन्द्रनामानं वटकं चक्रुः कि मित्यु-त्प्रेक्षा । अत्र बुभुक्षापरिशोषणेति च पठान्तरम् । तन्मते - चकोरनिकरस्य बुभुक्षापरिशोषणं क्षुन्निवर्तक मित्यर्थः । तदर्थं ब्रह्मणा निर्मितमिति भावः । आहोस्वित् यद्वा- इदं अविरतप्रहा-रेण निरन्तरताड़नेन, शिथिलीकृतान्तरं भिन्नमध्यभागं, कळङ्कसादृश्यार्थ मिदम्- पुरन्दरपरिसर-वर्ति इन्द्रप्राङ्गणस्थं, घटिका यन्त्रफलकं फलकवत् स्थितं घटिकायन्त्रम् । (आन्ध्रे, गण्टलु कोट्टेडि लोहपु पलक) इति सन्देहालङ्कारः । यद्य प्येकैक मिमे षड़पि उत्प्रेक्षालङ्कारा एव । तथापि एकस्यैव वस्तुनः षोढा सन्दिह्यमानत्वा द्विशिष्ट स्सन्देहालङ्कार एक एव । तथा चोदाहृतं साहित्यरत्नाकरे- 'सचेतना काञ्चनपुत्रिका वा शरीरिणी मन्मथचातुरी वा, सौदामिनी स्थैर्यवती कि मेषा का वा न जाने रघु वीरपार्श्वे' इति । इदं कवि स्स्वयमेव प्रकटीकरोति । एव मालोककसंशयेति- एव मुक्तरीत्या, आलोककानां द्रष्टॄणां, संशया स्सन्देहा, एव शलाकाः आयुधविशेषाः, ताभि श्शकलितं विदीर्णं, शरीरं यस्य तस्मिन् । एव मादिसंशयविषयीभूते इति यावत् । भगवति पीयूषरोचिषि अमृतांशौ, पुरुहूतहरिदारम्भः प्राचीमुखं तस्य परीरम्भसंरम्भः आलिङ्गनाडम्बरं तं भजतीति भाक् तस्मिन् तथाभूते सति, यथा विदीर्णतनु रशक्तेः किञ्चि दालिङ्गति तद्वत् संशयशलाकाशकलिततनु श्चन्द्रोऽपि प्राचीमुख मालिङ्गतीति भावः ॥ ५९

**श्लो ॥ मुदा वन्दारुमन्दार । स्सुषमै स्सुषिरारवैः**
**आचकर्ष मन श्शौरि । राभीरतरळभ्रुवाम् ॥** ६०

मुदेति- वन्दारुमन्दारः आश्रितपारिजातः, शौरिः कृष्णः, मुदा सन्तोषेण, सन्तो-षातिशयादेव मधुरतरगानाविर्भाव इति भावः । सुषमै श्चारुभिः 'सुषमं चारु शोभन' मित्यमरः । सुषिरारवैः वेणुनादैः, आभीरतरळभ्रूवां गोपस्त्रीणां, मनः जात्येकवचनं मानसानि, आचकर्ष अपजहार ॥ ६०

**श्लो ॥ श्रुत्वा तां सुदृश स्तदा भगवतो गीतिं विसृ ज्यालया**
**न्नाथा न्मित्रसगर्भ्यतातजननी र्वित्ता न्यपत्यानपि**
**अन्वेष्टुं विनिवारिता अपि मुहु श्शौरिं वनं प्राविश**
**न्नाभू दात्मसुखैकलोलमनसां चित्रं विषादाय तत् ॥** ६१

श्रुत्वेति- तदा श्रीकृष्णवेणुगानप्रवृत्तिसमये, सुदृशः स्त्रियः, तां प्रसिद्धां, भगवतः कृष्णस्य, गीतिं वेणुगानं, श्रुत्वा निशम्य, आलयान् गृहान्, नाथान् पतीन्, मित्रसगर्भ्य-

तातजननीः मित्रं सुहृत् , सगर्भ्यं स्सोदरः, तातः पिता, जननी माता, एतेषा मितरेतरद्वन्द्वः। एताश्च वित्तानि धनानि, अपत्या न्यपि पुत्रान् पुत्रिकाश्च, 'अपत्यं तोक न्तयो स्समे' इत्यमरः। विसृज्य त्यक्त्वा, मुहुः पुनःपुनः, विनिवारिता अपि श्वश्रूश्वशुरादिभि र्निरुध्यमाना अपि, शौरिं कृष्ण, मन्वेष्टुं गवेषयितुं, वनं काननं, प्राविशन् विविशुः। श्वश्रूश्वशुरादीन् तिरस्कृत्य हठा द्वनं ययु रिति भावः। आत्मसुखैकलोलमनसां स्वसुखैकायत्तचित्तानां तासां तत् पूर्वोक्त मालयादिविसर्जनं विषादाय दुःखाय, नाभूत् न जातं। चित्र महो भगवद्वेणु-गानमाहात्म्य मित्याश्चर्यम्। शत्रुराजादिनिर्बन्धेन यदि गृहादित्याग स्स्यात् तर्हि स दुःखा-वह एव। अत्र तु स्वेच्छयेति न दुःख न्तासा मासीदिति भावः। व्यङ्ग्यार्थस्तु— सुदृशः विद्वांसः, भगवतो गीतिं गीतां, तदुपदिष्टतत्त्वकथा मित्यर्थः। श्रुत्वा आलयादीन् विसृज्य वैराग्यादिति भावः। विनिवारिता अपि सन्न्यासासहिष्णुभि र्जायापुत्रादिभि रिति भावः। शौरि मन्वेष्टुं ध्यातुं, वनं प्राविशन् 'वनं गतो य द्धरि माश्रये ते' त्युक्तत्वात्। गृहेषु तु सांसारिकक्लेशै र्मनसो विक्षेप स्स्या दिति भावः। आत्मसुखं स्वस्वरूपप्राप्तिजन्यसुखं तत्र एक-लोलं मुख्यासक्तं मनो येषा न्तेषां तत्पत्नीपुत्रादिवर्जनं विषादाय नाभूत् ॥ ६१

अथ ॥ यदुक्तं विसृज्येति तदेव त्रिभि श्श्लोकै स्संक्षेपेण वर्णयति सारसाक्षेत्यादिभिः ॥

**श्लो ॥ सारसाक्षमधुराधरामृता। स्वादनादरकृतेतरारुचेः**
**मन्दिरा दपससार सारदृक् । क्षीरदोहन मपास्य काचन ॥ ६२**

सारसाक्षेति— काचन काचित्, सारदृक् श्रेष्ठलोचना, सुदृ गित्यर्थः। सारं श्रेष्ठं, सारासार-विवेचनचतुर मित्यर्थः। दृक् बुद्धि र्यस्या स्स्येति गम्यते। सारसाक्षस्य कमलाक्षस्य, कृष्णस्य सम्बन्धि मधुरं स्वादु, य दधरामृतं अधरोष्ठसुधा, तस्य आस्वादने पाने, आदरेण प्रीत्या, हेतुना कृता जाता या इतरा रुचिः इतरेषु पदार्थेषु अरुचिः रुच्यभावः, तस्या इति पञ्चमी। सारसाक्षमधुराधरामृतास्वादनादरकृतेतरारुचेः अमृतपानादृतस्य जनस्य नहीतरत् रुचिकरं वस्त्व स्तीति भावः। क्षीरदोहनं दुग्धभाण्ड, मपहाय त्यक्त्वा, मन्दिरात् गृहा, दपससार अपजगाम। वने मम मधुरतर ममृतं सुलभं; कि मनेन क्षीरेणेति क्षीरे अरुच्या क्षीरभाण्डं त्यक्त्वा काचि द्वनं यया विति भावः। उत्प्रेक्षालङ्कारः। इवशब्दाप्रयोगात् गम्या। अनया च क्षीरापेक्षया भगवदधरामृतस्य स्वादुत्वातिशयो व्यक्तः॥ ६२

**श्लो ॥ किं धनै र्मम बहिश्चरासुभिः। प्राण मान्तर मुपेक्ष्य माधवम्**
**इत्यपास्य वसुसञ्च संविदा। कापि केशव मपासर त्तराम् ॥ ६३**

किं धनै रिति— कापी काचित् गोपी, आन्तरं अन्तर्वर्तमानं, प्राणं प्राणवायुं, तत्तुल्य मित्यर्थः। रूपकालङ्कारः। माधवं कृष्ण, मुपेक्ष्य प्राणप्रिये कृष्णे औदासीन्यं कृत्वेत्यर्थः।

बहिश्चरासुभिः बहिः देहाद्बहि श्चरन्तीति बहिश्चराः ते च ते असवश्च तैः, 'अर्थाः बहिश्चराः प्राणा' इति न्यायात् । अर्थेषु बहिश्चरप्राणत्व मारोपितम् धनैः अर्थैः, प्राणेष्विव धनेष्वपि प्रीतिसद्भावात् , नेमे अर्थाः किन्तु बहिश्चराः प्राणा एवेति सापह्नव मिदं रूपकं । तत्रापि प्राणानां बहिश्चरत्वव्यपदेशः कल्पित इति उत्प्रेक्षा सङ्कीर्णम् । मम किं स्या दिति शेषः; न किमपीत्यर्थः । परिकरालङ्कारः । बहिर्गतप्राणापेक्षया अन्तर्गतस्य प्राणस्य अन्तरङ्गत्वेन प्रेमास्पदत्वातिशयस्वीकार स्यौचित्यात् तद्विरुद्धाचरणं मौग्ध्यविलसितमेवेति गोप्याशयः । इत्येवंरूपया संविदा ज्ञानेन, वसुसद्म कोशगृह, मपास्य त्यक्त्वा, केशवं कृष्ण, मपासरत्तरां ययौ ॥ ६३

श्लो ॥ सौख्य मस्तु हरियोगजं कुत । स्तोकसौख्य मभिलष्यते यदि
इत्यपत्य मवपत्य सत्यपि । प्रस्थिता सपदि कापि भामिनी ॥ ६४

सौख्य मिति— सत्यपि पतिव्रतापि, कापि भामिनी काचन कामिनी, तोकसौख्यं अपत्यसुखं, अभिलष्यते यदि आकांक्ष्यते चेत् , मयेतिशेषः । हरियोगजं श्रीकृष्णसंयोगजन्यं, सौख्यं आनन्दः, कुतः कथ, मस्तु भवतु ? नस्यादेवेति भावः । यदर्थ म्मया कात्यायनीव्रत मनुष्ठितं तस्य फलकाल इदानी मागतः । अधुना यदि तुच्छपुत्रसुखरतया मया किञ्चि द्विलम्बः क्रियते तर्हि तत्फलं नष्टं स्या दिति पुत्रसुखमेव त्याज्य मित्यस्या गोप्या आशयः । इत्येवं मत्वा अपत्यं पुत्रं पुत्रिकां वा, अवमत्य तिरस्कृत्य, रुदन्तं क्षुधित मपि. पुत्रमनादरेण परित्यज्येत्यर्थः । सपदि तदैव, प्रस्थिता वनंप्रति प्रयाता आसी दिति शेषः । अत्र पूर्वार्धे स्तोकसौख्यं क्षुद्रविषयसुख मभिलष्यते यदि हरियोगजं भगवत्सायुज्यजातं सौख्यं कुतोऽस्तु इति व्यङ्ग्यार्थः ॥ ६४

ग ॥ एव मवधीरितगुरुगिर मगणिताभरणविन्यास मासादितकुतूहलमहंप्रथमिकया समासेदिवांस माभीरतरुणीगण मभिनन्द्य नन्दनन्दन स्सादर मिद मवादीत् ॥

एव मिति— एव मुक्तप्रकारेण, अवधीरितगुरुगिरं अवधीरिता स्तिरस्कृताः, गुरूणां श्वशुरादीनां, गिरो वाक्यानि, येन तं; अगणितः अविज्ञातः, आभरणविन्यासविपर्यासः भूषणधारणवैपरीत्यं, येन तं; कण्ठाभरणानि कट्यां, कट्याभरणानि कण्ठे' चेत्येवं वैपरीत्येन भूषणानि धृतवन्तं; सम्भ्रमा दिति भावः । आसदितकुतूहलं प्रप्तोत्साहं, अहंप्रथमिकया अहंप्रथम महंप्रथममिति यस्यां ब्रुवन्ते सा क्रिया अहंप्रथमिका अहंपूर्विकेत्यर्थः । सा च क्रियात्र गतिक्रियैव । अहंपूर्विकया गत्या समासेदिवांसं प्रासवन्तं, आभीरतरुणीगणं गोपाङ्गनानिवहं, अभिनन्द्य साधुकृतं युष्माभि रिति श्लाघयित्वा, नन्दनन्दनः कृष्णः, सादरं प्रेम यथातथा, इदं वक्ष्यमाणं वचन, मवादीत् उवाच ॥ ६५

श्लो ॥ अये बालाः! कस्मा द्य मधिनिशीधं वनभुवि
प्रयाणप्रारम्भ स्स्फुटझणझणन्नूपुररवः
प्रियं वः कार्यं वा किमुत त दिद मावेदयत यत्
क्षमं पत्यु र्दास्या त्क्षणमपि वधूनां न विरतिः ॥ ६६

अये इति– अये बालाः! हेमुग्धाः, न तु प्रौढा इति भावः। कस्माद्धेतोः अधिनिशीधं निशीथे, न तु दिने इति भावः। वनभुवि काननप्रदेशे, न तु ग्रामे इति भावः। स्फुटझणझणन्नूपुररवः स्फुटः प्रकटः, झणझणइति नूपुराणां हंसकानां, पादाभरणाना मित्यर्थः। रवः ध्वनिः, यस्मिन् स तथोक्तः; न तु गूढ इति भावः। एतेन त्वरिताभिधानं व्यज्यते। अयं प्रयाणप्रारम्भः प्रयाणाभिमुख्यं, युष्माभि रङ्गीकृत इति शेषः। चोराद्युपद्रवम प्यविगणय्य त्वरिताभिधानेना द्युष्माकं किमपि प्राणसङ्कट मापतित मित्यहं मन्ये। तस्मा त्तत्सङ्कटं वदध्व मिति श्रीकृष्णाश्रयः। वः युष्माकं, यत् प्रिय मिष्टं, कार्यं कर्तव्य म्मयेति शेषः। यद्वा मया कार्यं व स्सम्बन्धि य त्प्रिय मस्ती त्यन्वयः। त त्किमु किं वा तत्प्रिय मित्यर्थः। इद मेत न्मत्पृष्टं आवेदयत मह्यं बोधयत। अथवा– वः प्रियं कार्यं कृत्यं, किमु किमस्ति? तदिदं प्रियं कर्य मावेदयत ब्रूत। ननु त्वद्गानश्रवणार्थ मागता नस्मान् प्रति कि मेवं भाषसे इत्यत आह य दिति– य द्यस्मात् वधूनां पतिव्रतानां स्त्रीणां, क्षणमपि क्षणकालमपि, अत्यन्तसंयोगे द्वितीया। पत्यु र्भर्तुः, दास्यात् सेवायाः, विरतिः उपरमः, न क्षमं न युक्तम्। दुस्त्यजां पतिसेवां सन्त्यज्य यस्मा द्यूय मेव मागता स्तस्मान्मयेद्धं पृष्ट मिति भावः॥ ६६

ग ॥ एव मभिहितवति भगवति ॥

एव मिति– एव मुक्तरीत्या, भगवति कृष्णे, अभिहितवति उक्तवति सति ॥

श्लो ॥ परातिसन्धानधुरन्धरं तदा। तदाशयं व्रीडभरा न्नतानताः
विचारयन्ति स्म परम्परं परां। परामृश न्नुत्तरपूरणे गिराम् ॥ ६७

परेति– व्रीडभरात् लज्जातिशया, न्नता नम्राः, ताः स्त्रियः, तदा तदानीं, परातिसन्धानधुरन्धरं परवञ्चनचतुरं, तदाशयं श्रीकृष्णहृदयं, न विचारयन्ति स्म न विदुः। उत्तर पूरणे उत्तरप्रदाने विषये, गिरां वाचां, परम्परां परं धारामेव, परामृशन् अयं वञ्चयती त्यज्ञात्वा किमस्योत्तर मिति ऋजुबुद्ध्या विचारितवत्य इत्यर्थः॥ ६७

ग ॥ अथ ता स्तदीयां माय मनुमाय स्वकाशयं प्रकाशयन्त्यो मत्तकाशिन्य स्तदनुकूलं कौटिल्य मेव मवादिषुः ॥ ६८

अत इति– अनन्तरं तदीयां कृष्णसम्बन्धिनीं, मायां कपट, मनुमाय स्मितकटाक्षविक्षेपादिभिः ऊहित्वा, ज्ञात्वेत्यर्थः । स्वकाशयं सम्भोगवाञ्छारूपं स्वहृदयं, प्रकाशयन्त्यः प्रकटयन्त्यः, मत्तकाशिन्यः स्त्रियः, तदनुकूलं तस्य कुटिलस्य कृष्णस्य, अनुकूल मनुगुणं, यथातथा सकौटिल्यं सवक्रं, एवं वक्ष्यमाणं वचन, मवादिषुः ऊचुः ॥ ६८

श्लो ॥ रामा नभीष्टकृत माश्रयतो विराग
मभ्यर्ण मीश तव मुग्धदृशां श्रितानाम्
निर्वाण मुद्भटभवप्रतिकूलकर्म
भाजां कथं नु न भवे दरतिस्पृशा न्नः ॥ ६९

रामेति– हे ईश! परमेश्वर, रामानभीष्टकृतं अभीष्टं करोती त्यभीष्टकृत् स न भवती त्यनभीष्टकृत्– रामाणाम् स्त्रीणा मनभीष्टकृत् अनिष्टकृत्, तं तथाभूतं, विरागं वैराग्य, माश्रयतः भजतः, स्वाधीनमायत्वात् स्त्रीषु मायामये ष्वननुरक्त स्येत्यर्थः । तव अभ्यर्णं समीपं, श्रितानां प्राप्तानां, त्वां शरणागताना मित्यर्थः । उद्भटभवप्रतिकूलकर्मभाजां उद्भटंदुस्सहं, भवप्रतिकूलं संसारविरोधि, कर्म पुत्रगृहादिपरित्यागरूपं कार्यं, भजन्तीति भाजः, तासां तथोक्तानां; पुत्रादि सौख्यं त्यक्तवतीना मित्यर्थः । अतएव अरतिस्पृशां अरतिं विरागं, स्पृशन्तीति अरतिस्पृशः, तासां विरक्ताना मित्यर्थः । मुग्धदृशां मन्दबुद्धीना, मात्मानात्मविवेकशून्याना मित्यर्थः । नः अस्माकम, निर्वाणं मोक्षः, कथं नभवेत् भवे देव । भवा नतिविरक्ततया तिरस्कृतस्त्रीसुखः सर्वज्ञश्च; वयञ्च विरक्ता इत्यत्र प्रमाणं पुत्रादी न्परित्यज्यात्रागमन मेव । तथा च त्वां शरणङ्गताना मस्माकं मन्दबुद्धीनां त्वदनुग्रहेण मोक्ष स्स्यादेवेति भावः । एतेन पतिव्रताभि रप्यस्माभि र्मुमुक्षया पतिसेवा त्यक्त्वा । त्वं सर्वेश्वर उपसृतश्च– इतीदं द्वयं न दोषावह मिति ऋजुबुद्ध्या श्रीकृष्णप्रश्नस्य दत्त मुत्तरं । व्यङ्ग्यार्थस्तु– रामस्य अनभीष्टो रावणः, तेन कृतं धृतं, विरागं सन्न्यास, माश्रयतः रावणसन्न्यासन्यायेन विरक्ताभासस्येत्यर्थः । तव अभ्यर्णं श्रितानां उद्भटस्य भवप्रतिकूलस्य शिवरिपोः, मन्मथस्य कर्म बाणप्रक्षेपणरूपो व्यापारः, तद्भाजां मदनशरीरविशीर्णाना मित्यर्थः । अरतिस्पृशां चिरा दप्यलब्धसुरतानां, मुग्धदृशां वामाक्षीणां, नः अस्माकं, हे ईश! समर्थ, निर्वाणसुखं कथं न भवेत्? विरक्त इव कि मस्मान् वञ्चयसि? यथेच्छं यमस्वेति भावः । अन्यथा चेदं पद्यं व्याख्यायते– रामाणां पशूना, मप्यनभीष्टं पीडां, अर्थात् श्रोत्रसम्बन्धिनीं, कृणाति हिनस्ति हरतीत्यर्थः । रामानभीष्टकृत् तं–'रामः पशौ जामदग्न्यौ' इति रत्नमाला । 'शिशु र्वेत्ति पशु र्वेत्ति वेत्ति गानरसं फणी' इति वचना दिति भावः । विराग विविधं रागं गीतविशेष माश्रयत स्तव अभ्यर्णं श्रितानां गानश्रवणार्थं न तु सम्भोगार्थमिति भावः । मुग्धदृशां युक्तायुक्तविवेकशून्याना मित्यर्थः । हसि परपुरुष रक इंगतासु कामिनीषु जने ऽयथा मनुते इति अजानाना मित्यर्थः । अत एव उद्भटभवप्रतिकूलकर्मभाजां दुस्सहपुत्रधनादित्यागरूपसंसार-

विरोधि कर्म कृतवतीनां । ननु कुत एवं कृतं साहसिक मत आहुः । अरति स्पृशामिति– गानरसलोलुपतया सर्वत्रारतिं प्राप्तवतीना मित्यर्थः । नः अस्माकं, निर्वाणं गानरसानुभवा दानन्दः, कथं न भवेत् भवेदेव । यदि गृहेष्वेव अस्माकं स्थिति स्स्यात् तर्हि त्वद्गानरसानुभवसुखं न स्या दित्येतदर्थं वय मागताः । न पुन स्त्वत्सम्भोगार्थं येन त्वयैव मुच्यते इति परमार्थः ॥ ६९

अव– ननु समाप्तं गानं तूर्णं गृहान् व्रजत ! अपख्याति स्स्या दस्माक मत आहुः ॥

श्लो ॥ अखिलेशधिया हि भीरव । श्शरणं त्वां समनोभवाधयः
अभजाम वयं परिग्रहे । विरसो यासि कथ न्नपौरुषम् ॥ ७०

अखिलेति– भीरवः स्त्रियः भयशीलत्वाभिप्रायगर्भमिदं स्त्रीत्वा द्भयशीलत्वाच्च न वयं पुन र्गृहान् गन्तुं शक्नुम इति भावः । अत एव समनोभवाधयः मनसि भवतीति मनोभवः आधिः व्यथा तेन सहिता स्समनोभवाधयः । 'पुंस्याधि र्मानसी व्यथा' इति आधिशब्देनैव विवक्षितार्थप्रतीतौ मनश्शब्दस्य पुन रुपादाना दाधे राधिक्यं गम्यते । कथं वा अस्माभिः पुनः गृहं प्राप्येतेति भृशं निर्विण्णा इत्यर्थः । वयं अखिलेशधिया अखिलेशः सर्वरक्षकः त्वमिति बुद्ध्या त्वां शरणं रक्षितारं अभजाम प्राप्तवत्यः । बकादिमहासुरविध्वंसकस्य तवाश्रयणेन चोरसर्पादिभयापगतिपूर्वकं पुन र्गृहप्राप्ति र्भवेदिति मत्वा त्वां शरणागता इति भावः । परिग्रहे स्वीकारे, रक्षणे इति यावत् । विरसः अनिच्छुस्सन्, अपौरुषं अबलत्वं, कथं नु यासि ? कथं वा भजसि । शरणागतानां तत्रापि स्त्रीणां तत्राप्यनाथाना मस्माकं परित्राणं तव युक्त मिति भावः । यद्वा– ननु विरक्तानां युष्माकं कुतो मच्छरणागतिः ? सर्वेश्वरं शरणं भजध्व मत आहुः– भीरवः संसारा दितिशेषः । भयशीलाः समनोभवाधयः सांसारिकमनोव्याधिप रतप्ता इत्यर्थः । वयं अखिलेशधिया त्वमेव सर्वेश्वर इति बुद्ध्या, त्वां शरण मभजाम । परिग्रहे विरसस्सन् कथ मपौरुषं यासि? सर्वेश्वरत्वा त्त्वमे वास्माकं शरण मिति भावः । व्यङ्ग्यार्थस्तु- समनोभवाधयः मनोभवेन मन्मथेन, कृता आधि र्मनोभवाधिः, तेन सहिताः अत्यन्तत्वद्विरहानलपरिदग्धा इति भावः । भीरवः स्त्रियो, वयं अखिलेशधिया अखिलानां स्त्रीणा मीशः पति, रखिलेशः स इति धिया सर्वात्मकत्त्वा त्त्वमेवास्माकं पति रिति बुध्येत्यर्थः । भगवत स्सर्वात्मकत्वा त्पत्यौ भगवद्बुद्धिस्तु सहजा; भगवति पतित्व बुद्धिस्तु प्रौढोक्ति रिति ज्ञेयम् । त्वां शरण मभजाम । परिग्रहे पत्न्यां प्रत्येकाभिप्राया देकत्वव्यपदेशः । त्वत्पत्नी ष्वस्मास्वित्यर्थः । तव अखिलस्त्रीपतित्वा द्वयं त्वत्पत्न्य एवेति भावः । 'पत्नीपरिजना दानमूलशापाः परिग्रहा ' इत्यमरः । विरसः विरक्तस्सन्, कथ मपौरुषं क्लीबत्वं, यासि 'पुम्भावे तत्क्रियायां च पौरुष ' मित्यमरः ॥ ७०

ग ॥ एव मभिदधान माभीरतरुणीगण मनिवार्यधैर्य मवधार्य मुररिपु रीरमत् ॥ ७१

एव मिति– एव मुक्तविधया, अभिदधानं भाषमाणं, आभीरतरुणीगणं गोपाङ्गनासङ्घं, अनिवार्यधैर्यं अनिवार्यं निवारयितु मशक्यं, धैर्यं धीरत्वं, यस्य तं तथोक्त, मवधार्य निश्चित्य, मुररिपुः कृष्णः, अरीरमत् रमयामास । रमते र्ण्यन्ता च्चङि सन्वद्भावः । मुररिपु राभीरतरुणीगण मरीरम दित्यन्वयः ॥ ७१

अथ ॥ रमणप्रकारमेव वर्णयति । तत्रादौ श्लोकत्रयेन, कामिनीकर्तृकं श्रीकृष्णरमणं वर्णयति रमणीत्यादिना–

श्लो ॥ रमणी सरोजरमणीयलोचना
मधुराधरा श्रमधुराधरापि का
रुचिरा चिरांशुरुचिराशयं तदा
तरळीचकार मुरळीविनोदिनः ॥ ७२

रमणीति–सरोजरमणीयलोचना कमलवन्मनोज्ञनेत्रा, मधुराधरा मधुरः स्वादुः, अधरः यस्या स्सा, श्रमधुराधरा श्रमस्य सुरतायासस्य धूः श्रमधुरा, ऋक्पूरब्धू रिति समासान्तोऽप्रत्ययः अजन्तलक्षणष्टाप् । धरतीति धरः पचाद्यच् । स्त्रियां टाप् । श्रमधुराया धरा तथोक्ता, रुचिरा मनोज्ञा, अचिरांशुरुचिः अचिरांशो र्विद्युतः रुचि रिव रुचिः कान्तिः यस्या स्सा- निदर्शनालङ्कारः । एवं विधा कापि रमणी काचन स्त्री, मुरळीविनोदिनः वेणुनादरसिकस्य, कृष्णस्य आशयं हृदयं, तदा रतिसमये, तरळीचकार कम्पयामास । यद्वा । नेदं सुरतदशावर्णन मुत्तरत्र करिष्यमाणत्वादिति श्रमः वनसञ्चारजन्य आयासः, तदा आगमनसमये, इति च व्याख्येयम् । छेकानुप्रासः ॥

श्लो ॥ तरुणी विलोलतरुणीह कानने
मलयानिलेन कलया विधो स्समा
अपरा समागमपरा मनोरमा
रमयाम्बभूव रमया समा हरिम् ॥ ७३

तरुणीति– विधो श्चन्द्रस्य, कलया, लेखया, समा तुल्या, रमया लक्ष्म्या, समातुल्या च इत्युपमाद्वयं– अत एव मनोरमा मनोज्ञा, समागमपरा संयोगासक्ता, अपरा अन्या, तरुणी युवती, मलयानिलेन मलयपर्वता दागच्छता वायुना, हेतुना विलोलतरुणि विलोला श्चञ्चला स्तरवः यस्मि स्तस्मिन् तथोक्ते, इह अस्मिन्, कानने हरिं कृष्णं, रमयाम्बभूव रमयामास । अत्र मलयानिलरूपोद्दीपनविभावेन चन्द्रकळादिसदृशनायिकारूपालम्बनविभावेन च सहित श्शृङ्गाररस श्चर्वणास्पदं भवति ॥ ७३

श्लो ॥ दरस्मेरै र्लज्जासुभगसुभगैः प्रेमलहरी
ललत्कल्लोलाभै रशमशरनाराचसदृशैः
तदा काचि न्मन्दस्मितमधुपरीरम्भमधुरैः
कृशाङ्गी सानङ्गै र्मुररिपु मपाङ्गैः समकिरत् ॥ ७४

दरस्मेरै रिति– तदा काचि त्कृशाङ्गी काचन तन्वी, दरस्मेरैः ईषत्स्मेरैः, 'स्फुरद्भ्रूपक्षतारं य त्तत्स्मेरमिति कथ्यते' इति भावप्रकाशः। लज्जासुभगसुभगैः लज्जया व्रीडया, सुभगसुभगैः अत्यन्तसुभगैः, स्वानुकूल्यप्रकाशकै रिति यावत्। तदुक्तं 'सव्रीडलोकनेनैव स्वानुकूल्यनिवेदन' मिति। प्रेमलहरीललत्कल्लोलाभैः प्रेमलहर्यां स्नेहप्रवाहे, ललतां क्रीडतां, कल्लोलानां तरङ्गाणामिव आभा कान्ति र्येषां तैः, तत्तुल्यै रित्यर्थः। प्रियदृष्टिप्रतिघातेन औत्सुक्येन च यथाक्रममासारप्रसाराभ्या मङ्गीकृततरङ्गभङ्गिकै रिति भावः। अत एवैते सोत्सुका स्तरङ्गिताश्च, तदुक्तं– 'सोत्सुकं यद्यदालोक्य भूयो भूयो विलोकनम्। कल्लोल इव यत्कान्तिविभेद स्तत्तरङ्गित' मिति। असमशरनाराचसदृशैः मन्मथबाणसदृशैः, एतेन अतितीव्रत्वं व्यक्तं। मन्दस्मितमधुपरीरम्भमधुरैः मन्दस्मितं मन्दहसितं, तदेव मधु मद्यं, तस्य परीरम्भेण सम्पर्केण, मधुरैः स्वादुभिः, अत एवैते सम्भोगौत्सुक्यसूचका स्तापहराश्च। तदुक्तं– 'कटाक्षै र्हासगर्भैस्तु सम्भोगौत्सुक्यभावना शीतलीक्रियते भावो येन त न्मधुरं स्मित' मिति-सानङ्गैः ससमन्मथैः, विरक्तस्यापि क्षोभकरै रित्यर्थः 'यद्दर्शने विरक्तोऽपि क्षुभ्यते त त्समन्मथ' मित्युक्तत्वात्। ईदृशैः अपाङ्गैः कटाक्षैः, मुररिपुं कृष्णं, समकिरत् विचिक्षेप। कॄ विक्षेपे इति धातो स्सम्पूर्वका लङ्। एतादृशापाङ्गान् श्रीकृष्णे ववर्षेत्यर्थः ॥ ७४

ततः– एवं गोपीकटाक्षक्षतिवशात् श्रीकृष्णमनःक्षोभानन्तर मित्यर्थः।

श्लो ॥ हरि स्स्मरपरीतापविधुरा मधुराधराः
न्यषिञ्च च्चञ्चलापाङ्गी रेवं नर्मवचोऽमृतैः ॥ ७५

हरि रिति– हरिः कृष्णः, स्मरपरीतापविधुराः मन्मथसन्तापविवशाः, मधुराधराः स्वाद्वधरोष्ठाः, चञ्चलापाङ्गीः चपलकटाक्षाः, स्त्रियः कर्म- एवं वक्ष्यमाणरीत्या नर्मवचोमृतैः विलासवाक्सुधाधाराभिः, न्यषिञ्चत् अभिषिषेच। स्वाङ्गा दिति ङीषः न क्रोडादिबह्वच इत्यनेन निषेधात्। चञ्चलापाङ्गी त्यत्र ङीष् प्रामादिक एवेति प्रामाणिकाः। चञ्चलाभाङ्गी रिति पठिते तु न कोऽपि दोषः- अङ्गगात्रकण्ठेभ्य इति वार्तिकात् ङीष सिद्धेः। चञ्चला विद्युत्, तस्या इवाभा यस्य तत् चञ्चलाभ, मङ्गं शरीरं, यस्या स्सा तथोक्ता विद्युन्निभेत्यर्थः ॥

अव ॥ अथ नवभि स्तन्नर्मवचांसि वर्णयति उत्तेजनेत्यादिभिः।

श्लो ॥ उत्तेजनाघर्षणजा न रत्नहेम्नो रिवाभा तव सौकुमार्यात्
प्रिये विनिर्माय तनुं विधिस्ते ततो नु लावण्यरसै रसिञ्चत् ॥ ७६

उत्तेजनेति– सौकुमार्यात् सुकुमारत्वा द्धेतोः, तव ते, आभा कान्तिः, रत्नहेम्नोः मणिसुवर्णयो, रामेव उत्तेजनाघर्षणजा उत्तेजना शाणोल्लेखनं, घर्षणं लोहविशेषेण घट्टनं, ताभ्यां जायते इति तज्जा, न न भवति। उत्तेजनया रत्नस्य घर्षणेन सुवर्णस्य च यथा आभा प्रोल्लसति तद्व न्न तव; कुतः? रत्नहेम्नोः कठिनत्वात्; तव सौकुमार्याच्चेति भावः। अत्र सोपाधिककान्तिमद्रत्नहेमापेक्षया निरुपाधिककान्तिशालिनी कान्ता अतिरिच्यते इति व्यतिरेकालङ्कारः। उत्तेजनया रत्नस्य कान्ति र्घर्षणेन सुवर्णस्येति यथासङ्ख्य मन्वया द्यथासङ्ख्यालङ्कारः। सौकुयार्यहेतुना कान्ताव्यतिरेकस्य स्थापितत्वा त्पदार्थहेतुकं काव्यलिङ्गं च–त्रयाणां सङ्करः। हे प्रिये प्रेयसि, विधिः ब्रह्मा, ते तव, तनुं देहं, विनिर्माय कृत्वा, ततः निर्माणानन्तरं लावण्यरसैः 'भूयिष्ठ तेज एवाङ्गि र्वहुळाभि र्मृदूकृतं चक्षुरानन्दजनकं लावण्य मिति कथ्यते' इत्युक्तलक्षणः। मृदुलच्छायाविशेषो लावण्य मित्युच्यते। तदेव रसाः जलानि, तैः असिञ्चन्नु आर्द्रीचकार किम्? उत्प्रेक्षा। लावण्यरूपद्रवद्रव्यसम्बन्धा त्त्वदङ्गस्येदं मार्दवं नान्यथेति भावः॥ ७६

श्लो ॥ त्वदूरुशोभाभिभवेन रम्भास्तम्भा निजं दम्भ मयि त्यजन्तः
मोचाभिधानं दधु रर्थयुक्तं कथं जडस्योरुसमानता स्यात् ॥ ७७

त्वदूर्विति– अयि प्रेयसि! त्वदूरुशोभाभिभवेन तव ऊर्वो श्शोभा त्वदूरुशोभा, तस्या स्सकाशा दभिभवः तिरस्कारः तेन यद्वा– त्वदूरुशोभाया इति कर्तरि षष्ठ्या समासः। त्वदूरुशोभाकर्तृकाभिभवेनेत्यर्थः। हेतुना रम्भास्तम्भाः कदळीप्रकाण्डाः, निजं स्वकं, दम्भं गर्वं, त्यजन्तस्सन्तः मुञ्चन्त स्सन्तः, अर्थयुक्त मन्वर्थं, मोचाभिधानं मोचा इति नाम, दधुः धृतवन्तः। त्वचं मुञ्चतीति मोचेति व्युत्पन्नस्य नाम्नः दम्भं मुञ्चतीति मोचति योगतोऽन्यार्थत्वप्रकल्पना न्निरुक्त्यलङ्कारः। 'निरुक्ति र्योगतो नाम्ना मन्यार्थत्वप्रकल्पन' मिति लक्षणात्। जडस्य अत्यन्तशीतलस्य ऊरुसमानता कथं स्यात्, त्वदूरुसाम्यं कथं भवेत्? 'एकान्तशैत्या कपळीविशेषा' इति कुमारसम्भवे। जडस्य अज्ञस्य, उरुसमानता उरवो महान्तः, तै स्साम्यं कथं स्या दिति ध्वनिः। अत्र रम्भास्तम्भाना मूरुशोभाभिभवं प्रति यज्जडत्वं हेतु र्ध्वनितं तस्य तुरीयपादेन कविना स्वत एव प्रपञ्चितत्वात् गुणीभूतव्यङ्ग्यम्। तेन वाक्यार्थहेतुकं पदार्थहेतुकं वा काव्यलिङ्ग मलङ्कारः॥ ७७

श्लो ॥ आविर्भवे द्यत्र लतासु पुष्पं। तत्रैव दृष्टः फलसम्भवोऽपि
उदेति चित्रं तरुणीलतायां। पुष्पं क्वचि, त्क्वापि शलाटुयुग्मम् ॥ ७८

आविरिति— लतासु वल्लीषु, यत्र स्थले पुष्पं प्रसून, माविर्भवेत् उत्पद्येत, तत्रैव तस्मिन् प्रदेशे एव, फलसम्भवोऽपि फलोत्पत्ति श्च, दृष्टः अवलोकितः; अस्माभि रिति शेषः। फल-पुष्पयो स्सामानाधिकरण्यं प्रत्यक्षमिति भावः। हे तरुणीलते! लतेव तरुणी तरुणीलता तत्सम्बुद्धिः, ते तव, क्वचित् स्थले गुह्ये इत्यर्थः। पुष्पं रजः, प्रसूनं च; उदेति जायते, क्वापि ततोऽन्यस्मिन् कचित् स्थले वक्षसीत्यर्थः। शलाटुयुग्मं निगीर्णलक्षणातिशयोक्त्या स्तनद्वयं अपक्वफलयुग्मं च 'आमे फले शलाटु स्स्या' दित्यमरः। उदेतीति पूर्वेणान्वयः। चित्रं अद्भुतं। फलपुष्पयो र्वैयधिकरण्य माश्चर्य मित्यर्थः। असङ्गत्यलङ्कारः— 'विरुद्धं भिन्नदेशत्वं कार्य हेत्वो रसङ्गति' रिति लक्षणात्। फलोत्पत्तिं प्रति पुष्पस्य कारणत्वं प्रत्यक्षं हि। तरुणीलते इत्युपमालङ्कार श्चास्योज्जीवकः। तरुणीरूपा लतेति रूपकालङ्कारोऽपि सुवचएव। शलाटुयुग्म मित्यत्रातिशयोक्ति स्सोपि असङ्गत्युत्थापक एव। एवं पुष्प मित्यत्र श्लेषोपीति। उपमाश्लेषातिशयोक्तिभिः रूपकश्लेषातिशयोक्तिभि र्वा उज्जीवितोऽसङ्गत्यलङ्कार इति ज्ञेयम्॥

**श्लो॥ बध्नासि चेतो हरतः परस्य। कुचा वितीमौ किमु कञ्चुकेन**
**तथापि नैत त्त्यजतः कठोर। श्शीलं निजं निग्रहत स्त्यजे त्कः? ७९**

बध्नासीति— इमौ मदीयौ, कुचौ स्तनौ, परस्य परमात्मनः अन्यस्येति च, चेतः चित्तं, धनस्थानीय मिति भावः। हरतः अपहरतः, हरते र्लटि तसिरूप मिदं। इति हेतोः इतिमत्वेति वा, इमौ कुचाविति, पुनरपि सम्बध्येते कर्मभूतौ। कञ्चुकेन कुचबन्धनवस्त्रविशे-षेण, बध्नासि किमु रुणत्सि किं, पीडयसि किमित्यर्थः। चोरस्य बन्धनताडनादिक मवश्यं कर्तव्य मिति भावः। हेतूत्प्रेक्षालङ्कारः। तथापि बन्धनेऽपि, इमौ कुचा वित्यत्रापि सम्बध्येते कर्तृभूतौ। एतत्परचित्तधनचौर्यं न त्यजतः न मुञ्चतः, 'सर्वं मभ्यर्हितं वस्तु प्रच्छादन मपेक्षते' इति न्यायेन कञ्चुकधारणे सति पूर्वापेक्षया प्यतिमनोहरत्वा दिति भावः। युक्तं चैत दित्याह— कठोरः कठिनः, कः पुमान् निजं स्वकीयं, शीलं स्वभावं, निग्रहतः निर्बन्धा द्धेतोः, त्यजेत् मुञ्चेत्? न कोपीत्यर्थः। नहि येन केनाप्युपायेन स्वभावोऽन्यथा कर्तुं शक्यते इति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। 'उक्ति रर्थान्तरन्यास स्स्या त्सामान्यविशेषयो' रिति लक्षणात्॥ ७९

**श्लो॥ पुरामुना कञ्चुककेन मुग्धे। किन्नाम भद्रं विहितं न जाने**
**भज त्यसौ य त्तपसास्य लभ्य। मनारतं त्वत्कुचकुम्भसङ्गम्॥ ८०**

पुरेति— हेमुग्धे सुन्दरि! अमुना परिदृश्यमानेन, कञ्चुककेन कञ्चुक एव कञ्चु-ककः स्वार्थे कप्रत्ययः। तेन, पुरा पूर्वजन्मनि, किन्नाम किंवा, भद्रं कुशलं, विहितं सम्पा-दितं अस्तीति शेषः। किमप्यनिर्वाच्य मत्यधिकं भद्रं प्राग्भवीयं कञ्चुकस्य विद्यते इति भावः।

न जाने अहं तत्र वेद्मी त्यर्थः । ननु भवदविदितस्य प्राग्भवीयकञ्चुकभद्रस्य सत्त्वे किं प्रमाण मत आह । भजतीति– यद्यस्माद्धेतोः, असौ कञ्चुकः तपसा कृच्छ्रचान्द्रायणादिलक्षणेन, चित्तैकाग्र्यलक्षणेन वा अपि, अलभ्यं लब्धु मशक्यं, त्वत्कुचकुम्भसङ्गं कुम्भाविव कुचौ कुचकुम्भौ, तव कुचकुम्भौ त्वत्कुचकुम्भौ, तयो स्सङ्गं सम्बन्धं, अनारत मविच्छिन्नं यथातथा, भजति प्राप्नोति । अत्र उत्तरवाक्यार्थेन पूर्ववाक्यार्थस्य समर्थना त्काव्यलिङ्गम् । सर्वज्ञेन कृष्णेना प्यविदितं भद्र मस्तीति अचेतनस्य कञ्चुकस्य प्राग्भवीयं भद्रमिति च कथना दसम्बन्धे सम्बन्धरूपातिशयोक्तिद्वयम् । एतैः सर्वलोकसुकृतपरिपाकस्य कृष्णस्यापि प्रायश एव गोपीकुचसम्बन्धः न त्वविरत मित्यहो अस्य कञ्चुकस्य भाग्यातिशय इति फलितम् ॥ ८०

**श्लो ॥ विधि र्विधित्सु र्विधुना तवास्य । सारङ्गसारांशमपीह तेने**
**मुखे मृगस्याक्षियुगं मदस्तु । फाले तवास्ते तत एव बाले ॥ ८१**

विधि रिति– विधि र्ब्रह्मा, विधुना चन्द्रेण, उपादानभूतेन, तव ते, आस्यं मुखं, विधित्सुः चिकीर्षुस्सन्, कुर्वन् स न्नित्यर्थः । इह मुखे, सारङ्गसारांशमपि सारङ्गस्य मृगस्य, चन्द्रान्तःकळङ्करूपेण प्रतीयमानस्ये त्यर्थः । सारांशं स्थिरांशमपि, तेने चकार, चिक्षेपेत्यर्थः । ततएव तस्मादेव, हेबाले ! मुग्धे, तव मुखे वदने, मृगस्याक्षियुगं नेत्रद्वन्द्वं, आस्ते वर्तते । स्त्रीणां मृगाक्षित्वा दिति भावः । तथा तव फाले तु ललाटे तु, मृगस्य मदः कस्तूरी, आस्ते विद्यते, तिलकस्वरूपेणेति भावः । सारङ्गस्य सर्वांशेष्वपि नेत्ररूपो मदरूप श्चांश उत्कृष्ट इति सर्वजन विदितम् । तस्मात् सर्वं चन्द्रं गोपीमुखरूपेण परिणमय्य तत्कळङ्कभूतमृगस्य असारांशं त्यक्त्वा सारांशमात्रं विधि स्तन्मुखे चिक्षेप इति भावः । गम्योत्प्रेक्षालङ्कारः । किञ्च सहजयो रक्ष्णो र्विधिकृतत्वसम्बन्धे सत्यपि आगन्तुकस्य मदस्य गोपीनिहितस्य विधिकृतत्वासम्बन्धा त्तत्सम्बन्धोक्ते रतिशयोक्तिः । मुखचिकीर्षासमये सारङ्गसारांशनिधानाधिकरणस्यैवाभावा त्कुर्वन् स न्निति मया यथा कथञ्चि त्समाधापितं– विधाय वेधा विधुना तवास्य– मिति पठितव्ये त्वको ऽपि दोषः । अत्र मुखं चन्द्रवत् , अक्षिणी तन्मृगनेत्रवत् , कस्तूरीतिलकं तन्मृगमदबिन्दुवच्च, भातीति उपमा व्यज्यते ॥ ८१

**श्लो ॥ तवाननादर्शतलेऽधरोऽसौ । तुण्डीफलस्य प्रतिबिम्ब एव**
**मुग्धे फलेऽस्मिन् कथ मन्यथा तु । घटेत बिम्बव्यवहार एषः ॥ ८२**

तवेति– हेमुग्धे! सुन्दरि ! तव ते, आननादर्शतले मुखरूपदर्पणान्तः, दर्पणतुल्यमुखान्त रित्युपमा वा, असौ दृश्यमानः, अधरः अधरोष्ठः, तुण्डीफलस्य बिम्बफलस्य, 'बिम्बी रक्तफला तुण्डी' इति वैद्यके– प्रतिबिम्बः प्रतिफलः, भवतीति शेषः । एवेत्यवधारणे । अवधारणध्वनितार्थ माह । फले इत्यादिना– अन्यथा तु अधरस्य तुण्डीफलप्रतिबिम्बत्वानङ्गीकारे तु, अस्मिन्

फले बिम्बीफले, एषः सर्वलोकसिद्धः बिम्बव्यवहारः बिम्बमिति व्यवहारः, एतस्य बिम्बपदाभिधेयत्व मित्यर्थः। कथं केन प्रकारेण, घटेत युज्येत, युक्तस्स्यात्? न कथमपीत्यर्थः। प्रतिबिम्बाभावे बिम्ब मिति व्यवहारो नघटते इति भावः। 'अत्र अपरोक्षलतादिस्थबिम्बीफलस्य मुखादर्शप्रतिफलनासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः। अधरे अधरत्व मपह्नुत्य बिम्बीफलप्रतिबिम्बत्वारोपणा दपह्नवालङ्कारः। अयं च आननादर्शेति रूपकोज्जीवितः। बिम्ब्याः फलं बिम्बं इति व्युत्पन्नस्य बिम्बशब्दस्य बिम्बतीति बिम्ब मिति योगतोऽन्यार्थत्वप्रकल्पना निरुक्तिः। बिम्बीफलस्य बिम्बफलत्वरूपेणैव बिम्बव्यवहारयोग्यतायां सिद्धायां तदयोग्यत्व कथनात् अतिशयोक्तिः॥

श्लो॥ समग्रमङ्गं तव चञ्चलाक्षि! हरिद्रचूर्णेन विधाय वेधाः
सुधां न्यधा न्नून मिहाधरोष्ठे। य दत्र रागातिशयोपलम्भः॥ ८३

समग्र मिति— हे चञ्चलाक्षि चपलनेत्रि! वेधाः विधाता, तव समग्रं सर्वम्, प्यङ्गं देहं, हरिद्रचूर्णेन 'निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी' इत्यमरः। हरिद्रायाः पीतायाः (आन्ध्रे पसुपु) अयं हरिद्रः तस्येद मित्यण्। स चासौ चूर्णः रजः, तेन उपादानभूतेन विधाय कृत्वा, इह अस्मिन्, अधरोष्ठे अधरे, सुधां ताम्बूलोपयुक्तशिलाचूर्ण ममृतं च, न्यधात् निहितवान्। नून मित्युत्प्रेक्षा। सुधाशब्दगतश्लेषसङ्कीर्णोऽयम्। य द्यस्मात्, अत्र अधरे, रागातिशयोपलम्भः रागातिशयस्य आरुण्याधिक्यस्य, प्रेमातिरेकस्य च, उपलम्भः प्राप्तिः दर्शन मिति यावत् भवतीति शेषः। हरिद्राचूर्ण स्सुधानिधाने, सरक्तवर्णो भवतीति प्रसिद्धम्। अत्र पादत्रयप्रतिपादितस्य अर्थस्य तुरीयपादेन समर्थना त्काव्यलिङ्गं— तच्च श्लेषसङ्कीर्णम्। न च श्लेषोज्जीवितमिति वाच्यं। रागसुधाशब्दगतश्लेषं विनापि तत्सिद्धेः। सर्वं मङ्गं हारिद्रव त्पीतं; अधरस्तु सुधानिधानारुणहारिद्रव द्रक्त इति उपमा व्यज्यते॥ ८३

श्लो॥ सुदूरदर्शिन्यपि लोचने ते। भव त्यवार्य श्रुतिलङ्घनेच्छे
तमस्समूहप्रणयित्व मस्तु। न वालभारे मलिने कथं नु॥ ८४

सुदूरेति— सुदूरदर्शिनि अतिदीर्घदर्शिनि, आस्तिकतया विमृश्यकारिणि इति च अपि ते तव, लोचने नयने, सप्तम्येकवचन मिदम्। अवार्यश्रुतिलङ्घनेच्छे अवार्यायाः अनतिक्रमणीयायाः श्रुतेः श्रवणस्य, लङ्घने अतिक्रमणे, इच्छा वाञ्छा, यस्य तस्मिन् तथोक्ते- अन्यत्र— अवार्यायाः श्रुते र्वेदस्य, लङ्घने इच्छा यस्य तस्मिन् तथोक्ते इति च भवति सति, मलिने नीले, अशुचौ च वालभारे चिकुरप्रकरे, वबयो रभेदा न्मूर्खसङ्घे च, तमस्समूहप्रणयित्वं गाढान्धकारसादृश्यं, अज्ञानपारवश्यं च, नास्तु किं? न भवतु किं? स्यादेवेत्यर्थः। नेत्रे कर्णान्तविश्रान्ते, केशपाशस्तु अन्धकारसदृश इति तात्पर्यार्थः। विमृश्यकारिणोऽपि वेदलङ्घनेच्छया नास्तिकत्वे सति किमुत मूर्खस्य इति श्लेषाभिप्रायः। अत्र दूरदर्शिनो नेत्रस्यैव श्रुत्यतिक्रमणेच्छायां सत्यां किमुत मलिनस्य

वालभारस्येति वर्णना दर्थापत्तिः । अयं च दूरदर्श्यादिशब्दगतश्लेषोत्थापित इति विवेकः । न चायं श्लेषो नैव– किन्तु ध्वनिरेवेति वाच्यम् । लोचनशब्दे श्लेषाभावात् । विशेष्यश्लेषे सति हि ध्वनिसमुन्मेषः– अपीति विरोधप्रतिपादनेन तस्य ध्वने र्गुणीभूतत्वाच्च नहि लोचनयो र्दीर्घदर्शित्वं श्रवणलङ्घनेच्छाप्रतिबन्धीति तस्मात् श्लेष एवायम् । लोचने श्रुतिलङ्घनेच्छाऽसम्भावने दूरदर्शित्वं बालभारे तमस्समूहप्रणयित्वसम्भावने मलिनत्वञ्च हेतु रिति पदार्थहेतुकं काव्यलिङ्गद्वयम् ॥ ८४

श्लो ॥ सिक्त्वा चाटुरसै रेवं । कुरङ्गनयना स्ततः
आनङ्गीं प्रक्रिया मङ्गी । कारयामास माधवः ८५

सिक्त्वेति– माधवः लक्ष्मीपतिः, कृष्णः, सकलजगन्मोहिनीं लक्ष्मीमपि यो धवस्सन् मोहयामास, तस्य गोपीमोहनं किय दित्यभिप्रायगर्भ मिदम्– अतः परिकराङ्कुरालङ्कारः । धवति कम्पयति मोहयतीति धवः मायाः धवः माधवः इति व्युत्पत्तेः । तथा च कविरहस्ये– ‘धूनोति चम्पकवनानि धुनो त्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् । वायु र्विधूनयति धावयतीह रेणून् यत्कानने धवति चन्दनमञ्जरांश्च’ इति । कुरङ्गनयनाः मृगाक्षीः, एवं पूर्वोक्तरूपैः, चाटुरसैः, प्रियवागमृतैः ‘प्रियवा क्चाटु रस्त्रिया’ मिति रत्नकोशे । सिक्त्वा अभिषिच्य, तत स्सेकानन्तरम्, अनङ्गी मनङ्गसम्बन्धिनीं, प्रक्रियां रीतिं, सुरत मिति यावत् । अङ्गीकारयामास अङ्गीकृतवती श्चकार । स्त्रियो हि अत्युद्रिक्त स्वाभिलाषं पुरुषमनोमोहनपर्यन्तं प्रकाश्य तत स्तं वशीकृत्य स्वयं निरभिलाषा इव नटित्वा पुरुषै र्मुहुर्मुहुः प्रार्थ्यमाना मोदन्ते– इदमेव हि त्रपाया लक्षणम् । एवं प्रकृते श्रीकृष्णसम्भोगार्थ मागता अपि गोपिकाः श्रीकृष्णः कृच्छ्रेण रमयामासेति बोध्यम् ॥ ८५

अव ॥ अङ्गीकारयामासेति यदुक्तं तत् वर्णयिष्यन् तत्र तावत् ग्रन्थमध्ये मङ्गळं विदधाति ।

श्लो ॥ बाले ! विद्रुमपाटलौ तव पदौ संवाहया म्यद्य किं ?
किं वा चन्दनचर्चनं विरचया म्यङ्गे यथा निर्वृति ?
धम्मिल्लं किमु भूषयामि कुसुमै ? रित्यादरा च्छ्रीपते
राभीरीनवयोगचाटुवचनश्रेणी शिवायास्तु नः ॥ ८६

बालेति– हे बाले सुन्दरि ! अद्य अधुना, विद्रुमपाटलौ विद्रुमः प्रवाळः स इव पाटलौ रक्तौ, तव पदौ चरणौ, संवाहयामि किं? मर्दयामि किम् ? वनसञ्चारेण किल तव पादा वतीवारुणौ श्रान्तौ च । अत स्तच्छ्रमापनोदनार्थं त्वत्पादयो स्संवाहनं करोमीति भावः । अङ्गे शरीरे, यथानिर्वृति यथासुखं, चन्दन चर्चनं श्रीखण्डद्रवलेपनं, विरचयामि किं वा करोमि किम् ? चन्दनेन

त्वदङ्गं लेपयामि । तेन तव अतीव सुखं स्या दिति भावः । कुसुमै र्मल्लिकादि पुष्पैः, धम्मिल्लं केशपाशं, भूषयामि किं अलङ्करोमि किमु ? मदभिधावनशिथिलं तव धम्मिल्लं समीकृत्य पुष्पै र्भूषयामि । तेन तव सुखं स्या दिति भावः । उक्तेषूपचारेषु तव किं मिष्ट? त द्वदेति प्रश्नः । एतेन भगवतो मुग्धानुनयचातुर्यं व्यक्तम् । इत्येवंरूपा आदरा त्प्रेम्णः प्रवृत्तेति शेषः । श्रीपतेः कृष्णस्य सम्बन्धिनी आभीरीनवयोगचाटुवचनश्रेणी आभीरीणां गोपीनां, नवयोगे नूतनसङ्गमे, चाटुवचनानां प्रियवाचां, श्रेणीपरम्परा, नः अस्माकं, शिवाय क्षेमाय, अस्तु भवतु ॥ ८६

अव ॥ अथ सप्तविंशतिश्लोकै र्गोपीकृष्णसम्भोगं वर्णयति— त्यक्त्वेत्यादिभिः ॥

**श्लो ॥ त्यक्त्वा बहिः केलिविरोधिताया । लज्जां लताकुञ्ज मवापदेका**
**पुन स्तदापातभयादिवाशु । कान्ता कवाटं घटयाम्बभूव ॥ ८७**

त्यक्त्वेति— एका काचि त्कान्ता गोपी, केळीविरोधितायाः क्रीडाविरोधित्वा द्धेतोः, त्वतलो र्गुणवचनस्येति पुंवद्भावः । केळीविरोधि इति सामान्ये नपुंसकं वा । लज्जां व्रीडां, बहिः हृदयाद्बहिः, गृहाद्बहि रिति च, त्यक्त्वा विसृज्य, लता कुञ्जं लतागृहं, कुञ्जशब्देनैव लतागृहार्थप्रतीतौ लताशब्द स्तत्प्राशस्त्यं द्योतयति— करिकलभकर्णावतंसादिव दिति बोध्यम् । अवापत् आप । सुरतगृहे तृतीयस्थित्ययोगात् लज्जारूपां सखीं बहिरेव विसृज्य स्वय मेका श्रीकृष्णाधिष्ठितं कुञ्ज मवापेति मुख्यार्थः । समासोक्तिरलङ्कारः । लज्जाया स्सम्भोगप्रतिकूलत्वेन निर्लज्जा तन्वी गृहं प्रापेति प्रस्तुतवाक्यार्थेन अप्रस्तुतसम्भोगविरोधिसखीत्यागस्य प्रतीयमानत्वात्— 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्यचे' दिति लक्षणात् । नासौ ध्वनिः— लज्जेति विशेष्यपदश्लेषासम्भवात् । पुनः भूयः, तदापातभयादिव तस्याः लज्जरूपकामिन्याः, आपातः प्रवेशः । तस्मात् भयात् भीते रित्युत्प्रेक्षा । पञ्चमी भयेनेति । समासः आशुर्द्रुतं, कवाटं मररं, लताविकारमेवेति बोध्यम् । घटयाम्बभूव पिहितवती । अत्र हृदया दपसारितलज्जायाः सम्भावितस्य पुनःप्रवेशस्य कवाटपिधानेन निरोधासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः । एत दुज्जीविता सा चो त्प्रेक्षा ॥ ८७

**श्लो ॥ मन्दाक्षभावा दवगम्य काम । समीकसाहाय्यविधा वशक्तिम्**
**व्रीडा न्यवर्तिष्ट तदा परस्या । नितान्त मश्रान्तसमाश्रयेऽपि ॥ ८८**

मन्दाक्षेति— तदा तदानीं, अपरस्याः अन्यस्याः, गोप्याः सम्बन्धिनी व्रीडा मन्दाक्षभावात् 'मन्दाक्षं ह्री स्त्रपे' त्यमरः । मन्दाक्षशब्दवाच्यत्वा दित्यर्थः । मन्दानि विषयग्रहणासमर्थानि अक्षाणि इन्द्रियाणि यस्य सः मन्दाक्षः, वृद्ध इत्यर्थः । तस्य भावादिति च वृद्धत्वा दित्यर्थः । कामसमीकसाहाय्यविधौ कामसमीकं मन्मथयुद्धं, तत्र साहाय्यविधौ साहाय्यकरणे, अशक्तिः असामर्थ्य मात्मन इति शेषः । अवगम्य ज्ञात्वा इति गम्योत्प्रेक्षा । नितान्तमत्यन्त,

मश्रान्तसमाश्रयेऽपि अनवरताश्रयणे सत्यपि, न्यवर्तिष्ट निवृत्ताऽभूत् । यथा नित्यसेवकोऽपि शिथिलेन्द्रियो वृद्धप्रभो युद्धसमये साहाय्याचरणे अशक्त स्सन् तदा तं त्यजति तद्वत्कामिनी मनवरत माश्रित्य वर्तमानापि लज्जानाम्नी दूती कामिन्याः मन्मथयुद्धे साहाय्याचरणे अयोग्यत्वात् तदा तां तत्याजेति भावः । अत्रापि समासोक्तिरेव । इयं च मन्दाक्षभावा दिति श्लेषवशादुत्थापितेति बोध्यम् ॥ ८८

**श्लो ॥ य देष शय्यानयनच्छलेन । करग्रहं लोलदृशां व्यतानीत्**
**बभूव कामानलसाक्षिक स्स । पाणिग्रह स्त त्कथमेष जारः ? ८९**

यदिति– एषः कृष्णः, शय्यानयनच्छलेन पर्यङ्कप्रापणमिषेण, लोलदृशां मृगाक्षीणां, करग्रहं पाणिग्रहणं, व्यतानीत् चकारेति यत् , एतेन, कामिनीनां मुग्धात्वं व्यज्यते । प्रौढानां पर्यङ्कपाणासम्भवात । न च मुग्धा एवैता इति वाच्यम् । मुग्धानां श्रीकृष्णसम्भोग मुद्दिश्य वनान्तागमनासम्भवात् । सः विशेष्यलिङ्गत्वा त्पुंस्त्वम् । करग्रह इत्यर्थः । कामानलसाक्षिकः कामएवानलः कामानलः, साक्षी साक्षात् द्रष्टरि–सञ्ज्ञायामिति निपातितोऽयम् । साक्षात् द्रष्टा यस्य सतथोक्तः पाणिग्रहः विवाहः बभूव अभूत् । यथा अग्निसाक्षिकं पाणिग्रहणं लौकिकाः कुर्वन्ति तद्व त्कृष्णोऽपि कामाग्निसाक्षिकं पाणिग्रहणं चकारैवेति भावः । त त्तस्मात् एषः कृष्णः, कथं जारः गूढपुरुषः, भवतीति शेषः । नायं जारः किन्तु पाणिगृहीतापतिरेवेति भावः । अत्र शय्यानयनार्थके लौकिके करग्रहे छलशब्देन शय्यानयनार्थकत्व मपह्नुत्य शास्त्रीय पाणिग्रहणत्वारोपा त्सापह्नवाभेदरूपकालङ्कारः । अस्य च कामानलेति रूपक मङ्गभूतम् ॥८९

**श्लो ॥ सल्लापलोलापि न सल्ललाप । ददर्श नालोकनलालसापि**
**न्यवारय त्पाणियुगेन कापि । नीवीविमोक्षं सुरतोत्सुकापि ॥ ९०**

सल्लापेति– सल्लापलोलापि भाषणासक्तापि, अर्था त्कृष्णेन सहेति वेद्यं । कापिकाचन स्त्री, नसल्ललाप न बभाषे । आलोकनलालसापि, दर्शनासक्तापि अर्था त्कृष्णस्यैव नददर्श नापश्यत् । सुरतोत्सुकापि रत्युत्कण्ठितापि, पाणियुगेन करयुगळेन, नीवीविमोक्षं वस्त्रग्रन्थि विमोचनं, अर्थात् कृष्णेन क्रियमाणं चिकीर्षित मिति वा न्यवारयत् अरुणत् लज्जयेति भावः ॥

**श्लो ॥ समागमा दस्य रमाधिनेतुः । कियन्त मन्तःकरणं सुदत्याः**
**अविन्द तानन्द मिति प्रतीम । स्तनूरुहौघेऽपि बहि स्सहर्षे ॥ ९१**

समागमा दिति– अस्य रमाधिनेतुः लक्ष्मीपतेः, कृष्णस्य, समागमा त्संयोगा द्धेतोः, सुदत्याः सुदृशः, बहिः तनूरुहौघेऽपि रोमबृन्देऽपि, सहर्षे पुलकिते, सानन्दे इति च सति, अन्तःकरणं हृदयं कियन्तं अपरिमित मानन्दं सुखं, अविन्दत अभजत्– इति एवं प्रतीमः

विश्वसिम:, जानीम इत्यर्थ: । सम्भावयाम इति वा। बहिस्थस्य अचेतनस्य तनूरुहौघस्यापि सहर्षत्वे अन्त:करणस्य सचेतनस्य हर्षातिशय एतावानिति इयत्तया परिच्छेत्तु मशक्य इति भाव: । यद्वा रोमरन्ध्रद्वारा अन्त:करणगत आनन्दरस: रोमसङ्घं व्याप्नोतीति अन्त:करणस्य उद्वेलानन्दरसाश्रयत्वं सम्भाव्यते इति भाव: । अर्थापत्ति रलङ्कार: । हर्षशब्दगतश्लेषोज्जीवित: । यद्वा एतस्या हृदय मतिशयानन्दसम्प्लवं बहिर्गतरोमेष्वपि रोमरन्ध्रद्वारा हर्षप्रसारदर्शना दित्यनुमानालङ्कार: । स च श्लेषोज्जीवित इति बोध्यम् । अत्र रमाधिनेतु रिति पदस्वारस्यात् त्रिजगन्मोहिनी लक्ष्मी रपि यत्समागमेन नदन्न; तत्कृष्णसमागमा त्प्राकृतानां गोपिकानां हर्षातिशयोऽभवदिति किं वाच्यमिति प्रतीयते ॥ ९१

**श्लो ॥ रदच्छदं प्राक्सविधं सुदत्या । स्समागताया य दसा वचुम्बत्**
**बभूव तद्भाविनि शम्बरारि । मृधे विधेयं किल वीरपाणम् ॥ ९२**

रदच्छद मिति-- असौ कृष्ण:, प्राक्प्रथमं, सविधं समीपं, समागताया: प्राप्ताया, स्सुदत्या स्सम्बन्धि रदच्छद मधर, मचुम्बदिति यत्-- चुबि वक्त्रसंयोगे इति धातो र्लङ् । तदधरपानं, भाविनि भविष्यति, शम्बरारिमृधे मन्मथयुद्धे, सुरते इतियावत् । विधेयं कर्तव्यं, वीरपाणं वीराणां पानं, 'वीरपाणंलयत्पानं वृत्ते भाविनि वा रणे' इत्यमर: । युद्धात्प्राक् पश्चा च्च वीरैर्यन्मद्यपानं क्रियते तद्वीरपाण मित्युच्यते इति तदर्थ:; बभूव किल अभवत् खलु-- अत्र सुदत्यधरपाने वीरपाणत्वारोपणा द्रूपकालङ्कार: । वीरा: वीरपाणं कृत्वा यथा युद्धाय सन्नह्यन्ति तथा कृष्णोऽप्यधरपानं कृत्वा मदनसङ्गराय सन्नद्धोऽभव दिति मुख्यार्थ: ॥ ९२

**श्लो ॥ मुग्धे! कथं कञ्चुलिकां दधासि । वक्षोजलक्ष्मीं तव या पिधत्ते**
**इत्थं प्रियां कामपि मोहयित्वा । तद्वेणिका माचकल न्मुरारि: ॥ ९३**

मुग्धे इति-- हेमुग्धे मूढे सुन्दरि ! इति च, कञ्चुळिकां कञ्चुकं, कथं कुतो, दधासि बिभर्षि ? न ताव च्छोभार्थ मित्याह-- वक्षोजेति- या कञ्चुळिका तव ते, वक्षोजलक्ष्मीं कुच-शोभां, पिधत्ते आच्छादयति, 'वष्टि भागुरि रल्लोप मवाप्यो रुपसर्गयो' रित्यल्लोप: । 'अपिधान तिरोधान पिधानाच्छादनानि' चेत्यमर श्च । अत्र वक्षोजशोभार्थं धृतस्य तल्लक्ष्मीपिधान-वर्णनात् विषमालङ्कार: । तेन च एवंविधकञ्चुकधारिण्या स्सुदत्या: मूढत्वं व्यक्तम् । अत्र स्वत स्सुन्दर्या स्तव कञ्चुकधारणं न केवलं व्यर्थं; प्रत्युत वक्षोजलक्ष्मीपिधानरूपानर्थावह मिति विषमालङ्कार श्च प्रतीयते । इत्थ मेवं, मुरारि: कृष्ण:, कामपि काञ्चि, प्रियां प्रेयसीं, मोह-यित्वा वञ्चयित्वा, तद्वेणिकां तस्या: कञ्चुकग्रन्थिं, आचकल द्विघटयामास । आङ् पूर्वकात् कलयते र्लुङि चङ् । अत्र हितोपदेशव्याजेन स्वेष्टसाधना त्पर्यायोक्तं । 'पर्यायोक्तं तदप्याहु र्य द्व्याजेनेष्टसाधन' मिति लक्षणात् ॥ ९३

श्लो ॥ कोकीततिं नीरजकुट्मलालिं । जिगाय वक्षोजयुगं पुरैव
मुग्धेऽधुना कञ्चुकधारणासौ । मुधेति तद्ग्रन्धि मसा वमुश्चत् ॥ ९४

कोकीततिमिति– हे मुग्धे ! वक्षोजयुगं तव स्तनयुग्मं. कर्तृ– पुरैव पूर्वमेव, कोकीततिं चक्रवाकीसमूहं, नीरजकुट्मलालिं कमलकोशसङ्घं च, जिगाय अजयत् । न्यूनीचकारेति यावत् । अधुना अद्य, असौ एषा, कञ्चुकधारणा कञ्चुलिकावहनं, कवचधारणं च, मुधा व्यर्था, इति एवं, वञ्चयित्वेति शेषः । असौ कृष्णः, तद्ग्रन्थि कञ्चुकबन्धं, अमुञ्चत् शिथिलीचकार । वीराः खलु शत्रुविजयाय कञ्चुकं धृत्वा जयसिद्ध्यनन्तरं कञ्चुकं त्यजन्ति । एवं त्वद्वक्षोजयुगमपि स्वशत्रुभूतकोकीनीरजकुट्मलसङ्घं कञ्चुक मधृत्वैवजिगायेति कृत्वा अधुना जेतव्यस्य अन्यस्य शत्रो रभावा त्कुचयुगस्य कञ्चुकधारणं व्यर्थ मिति भावः । अत्र कञ्चुकधारणं विनैव वक्षोजयुगं कोकीतत्यादिकं जिगायेति कथना त्प्रहर्षणालङ्कारः । ' उत्कण्ठितार्थसंसिद्धि र्विना यत्नं प्रहर्षण ' मिति लक्षणात् । अयं च कञ्चुकशब्दगतश्लेषोज्जीवितः । पर्यायोक्तन्तु स्पष्टमेव । स्वत स्सिद्धशोभयैव कोकीतत्याद्याधिक्ये कुचयुगस्य लब्धे सति कञ्चुकेनो त्पादनीया शोभा निरर्थकेति गम्यते ॥ ९४

श्लो ॥ अपि प्रसन्नं हृदयं तवेमौ । कुचाङ्कुरा वावृणतः कठोरौ
इतीव रोषा त्सिचयं विनीय । न्यपीडय त्ताव दयं मुरारिः ॥ ९५

अपीति– प्रसन्नं मृदुळं, शान्तं च- अपि तव हृदयं वक्षः, मनश्च-- कठोरौ कठिनौ, दुष्टौ च--इमौ कुचाङ्कुरौ स्तनरूपप्ररोहौ, आवृणतः रुन्धः, पीडयतः इति च-- इति रोषा त्कोपादिव, न तु वस्तुतो रोष इति भावः । सिचयं कञ्चुकग्रन्थिं, विनीय विमुच्य, अयं मुरारिः कृष्णः, ताव दादौ, न्यपीडयत् मर्दयामास । यद्वा-- तौ कुचौ अदयं निर्दयं, यथा तथा मुरारि र्न्यपीडय दित्यन्वयः । सज्जनरक्षार्थं दुर्जनशिक्षार्थं च अवतीर्णस्य मम अतिश्रान्तत्वद्धृदयपीडककुचयो रुपेक्षा नोचिता; किन्त्ववश्य मनयो र्मर्दनं कार्य मित्येको भावः । स्वतएव त्व मबला, तत्राप्यतिमृदुलं तव वक्षः इत्यहो । अत्र जातयोः कुचरूपप्रस्तरयोः सर्वमपि वक्षः हेलया ग्रसतो स्सतोः त्वं क भविष्यसि ? इति तां भीषयित्वा गोवर्धनमिव तत्कुचद्वय मुद्धरन्निव मर्दयामासे त्यन्यो भावः । अत्र प्रेमकृतकुचमर्दनस्य रोषकृतत्वोत्प्रेक्षणा दुत्प्रेक्षालङ्कारः । अयं च हृदयादिशब्दगतश्लेषसङ्कीर्णः । पर्यायोक्तं तु स्पष्टमेव ॥ ९५

श्लो ॥ उरोजकुम्भौ युगपत्कराभ्यां । धरन् हरि स्तद्धृदयेशयाय
मनोभवाय प्रभवे रराज । फलोपहारं वितरन्निवासौ ॥ ९६

उरोजेति– असौ हरिः कृष्णः, युगप देकदा, समकाल मित्यर्थः । कराभ्यां हस्ताभ्या, मुरोजकुम्भौ कुचकलशौ, धरन् बिभ्रन् सन्, हस्तद्वयेन कुचद्वयं गृहीत्वेत्यर्थः ।

तद्धृदयेशयाय तस्या गोप्या, हृदये मनसि, शेते इति तथोक्तः तस्मै– 'शयवासवासिष्व-कालादित्यलुक्' मन्मथस्य मनोभवत्वा दिय मुक्तिः । प्रभवे राज्ञे, मनोभवाय मन्मथाय, फलोपहारं फलबलिं, वितरन् दिशन्निव, रराज ललास । यथा हंसतूलिकातल्पशायिने सार्व-भौमाय तत्पाल्याः फलरूपां बलि मुपहरन्ति तद्वदिति भावः । उत्प्रेक्षालङ्कारः ॥ ९६

श्लो ॥ स्पृशामि ते सुन्दरि! वार मेकं । पयोधरौ नास्मि तु याचिताऽन्यत्
एवं नटित्वा विनयं स मायी । प्रसह्य जग्राह कुचौ मृगाक्ष्याः ॥ ९७

स्पृशामीति– हे सुन्दरि बाले! ते तव, पयोधरौ स्तनौ, एकं वारं सकृत , न तु बहुवार मिति भावः । स्पृशामि गृह्णामि; स्पर्शमात्रमेव नतु मर्दन मिति भावः । अन्यत् इतर, त्किमपि अधरचुम्बनादिक मित्यर्थः । न याचितास्मि न प्रार्थयामि । याचे स्तृनि तृचि वा रूपं याचितेति, एवं विनयं दैन्यं, नटित्वा अभिनीय, सः मायी मायावी, कपट इत्यर्थः । कृष्णः मृगाक्ष्याः मृगस्येव अक्षिणी यस्या स्तस्याः, स्त्रियः, कुचौ स्तनौ, प्रसह्य बलात् जग्राह गृहीतवान् । अत्र एकैकश्लोक एकैकगोपीविषय इति ज्ञेयम् । अन्यथा पूर्वोत्तरसन्दर्भासङ्गतेः । मायीत्यत्र परिकरा-लङ्कारः । मृगाक्ष्या इत्यलोपमा । पर्यायोक्तन्तु स्पष्टमेव ॥ ९७

श्लो ॥ मुरारिणा कापि हृतोत्तरीया । रया दुरोजौ पिदधे कराभ्याम्
लब्धावकाश स्स तदा चुचुम्ब । विपाणिरोधं तरसाऽधरोष्ठम् ॥ ९८

मुरारिणेति– कापि काचि द्गोपी, मुरारिणा कृष्णेन, हृतोत्तरीया हृत मपसारितं, उत्त-रीयं कुचचेलं यस्या स्सा तथोक्ता सती, रया द्वेगा, त्कराभ्यां हस्ताभ्या, मुरोजौ कुचौ पिदधे आच्छादयामास । कुचग्रहणभया दिति भावः । सः कृष्णः, तदा तदानीं, लब्धावकाश स्सन् प्राप्तावकाश स्सन् , विपाणिरोधं विगतहस्तावरणं, अधरोष्ठं अधरबिम्बं, तरसा द्रुतं, विळम्बे सति पुनः पिधत्ते इति भयात् इति भावः । चुचुम्ब अपिबत् । श्रीकृष्णः अधरं पिपासु स्सन् तत्र हस्तावरणं दृष्ट्वा एतदावरणनिवारणोपायः कोवेति विचिन्त्य, उत्तरीयापहारे कृते तु कुचग्रहणभया दधरावरणं त्यजेदिति मत्वा, कस्याश्चि दुत्तरीय माचकर्ष । सा चैत त्कृष्णाशय मज्ञात्वा कुचग्र-हणार्थ मुत्तरीय मपजहारेति मत्वा कुचौ कराभ्यां पिदधे । स तु उपायः फलित इति निरावरण मधरं पपाविति भावः । अत्र पर्यायोक्तं स्पष्टमेव । पूर्वत्र उक्तिव्याजेन इष्टसाधनं; इदानीन्तु उत्तरीयापहरणरूपक्रियाव्याजेनेति विवेकः ॥ ९८

श्लो ॥ पयोधराग्राकलितानि तन्व्या । विडम्बयन्ति स्म नखव्रणानि
उदग्रपूर्वाचलशृङ्गशोण । मणिप्रभालिप्तशशाङ्कखण्डम् ॥ ९९

पयोधरेति– तन्व्याः गोप्याः, पयोधराग्राकलितानि पयोधरस्य कुचस्य, अग्रे अग्रभागे, आकलितानि लग्नानि श्रीकृष्णेन कृतानीत्यर्थः । नखव्रणानि नखचिह्नानि, उदग्रे उन्नते, पूर्वाचल-

श्रृङ्गे उदयाद्रिशिखरे, य श्शोणमणिः पद्मरागः, तस्य प्रभया कान्त्या, लिप्तं व्याप्तं, शशाङ्कखण्डं चन्द्रशकलं, विडम्बयन्तिस्म अनुचक्रुः । तद्व द्बभु रित्यर्थः । कृष्णपक्षदशम्यादितिथिगत श्चन्द्र उदयाद्रिस्थ श्शोणवर्णः नखत्रणाकारेण दृश्यते इति कृत्वा प्रोक्तोऽय मुपमालङ्कारः । तत्र च शोणमणिप्रभालिप्तत्वोक्ति रतिशयोक्तिः । तया च यदि चन्द्रशकलः प्रा गद्रिश्रृङ्गशोणमणिप्रभालिप्त स्स्या त्तर्हि नखत्रणाना मुपमा स्यादिति सम्भावितोपमा व्यज्यते । पूर्वाचलश्रृङ्गशोणमणिप्रभालिप्ते त्यनेन चन्द्रस्यापि तच्छृङ्गगतत्वं फलति । तेन च पयोधराग्राकलितत्वपूर्वाचलश्रृङ्गगतत्वयो स्सामान्यधर्मयोः बिम्बप्रतिबिम्बभावो बोध्यते इति– बिम्बप्रतिबिम्बभावेनेय मुपमा– तया च पूर्वाचलश्रृङ्गव त्कुचस्य औन्नत्यं काठिन्यञ्च व्यज्यते । कुचयो र्नखक्षतेषु सत्सु तद्व्रणेषु रक्तप्रसारप्रकाशेन शोणत्वप्रतिभानात् नखत्रणानि रक्तचन्द्रशकलव द्भान्तीति निष्कृष्टार्थः ॥ ९९

श्लो ॥ बभार शौरिः कुचपीडनादौ । प्रियासु य न्निर्दयतां त दासाम्
अजज्वलन्नैव मनो मनोभू । रचीकर त्तेन विमोहयन् यत् ॥ १००

बभारेति– शौरिः कृष्णः, प्रियासु प्रेयसीषु, कुचपीडनादौ स्तनमर्दनादौ विषये, आदिपदेन अधरक्षतकचाकर्षणादिकं ग्राह्यम् । निर्दयतां दयाराहित्यं, बभार दधारेति यत् तदीयनिषेधवचनशुष्करुदितादिक मुलङ्घ्य दृढं कुचमर्दनादिकं चकारेति य दित्यर्थः । तन्मर्दनादिकं आसां प्रेयसीनां, मनः हृदयं, नाजज्वलत् न व्यथयति स्म । एवेति निर्धारणे । अत्र हेतु माह । य द्यस्मात्, मनोभूः मन्मथः, विमोहयन् मोहं प्रापयन् सन्, स्त्रीणां कृष्णस्य च, अन्योन्यस्मि न्नन्योन्यस्य, प्रेमातिशयं जनयन्नित्यर्थः । तेन कृष्णेन, अचीकरत् कारयामास । रोषा त्कृतश्चे दिदं मर्दनादिकं तासां व्यथाहेतु र्भवतु; प्रेमकृतस्य अस्य कथं व्यथाकरत्वम्? किञ्च मर्दनादिना कर्तु र्यथा सुखं तद्व त्कर्मणो गोपीनां च सुखं भवत्येव । उभयोरपि मोहितत्वेन तत्र सुखबुद्ध्युदया दिति भावः । अत्र यथा प्रियमपि चूतादिफलं दन्तैः पीडयित्वा तद्रस मनुभवति तद्वत् प्रिया अपि अधरादिषु दन्तादिभिः पीडयित्वा तत्सुख मनुभवतीत्युपमा ध्वन्यते । बाधकमपि कुचमर्दनादिकं न व्यथाहेतु रभवदिति वाक्यार्थस्य मन्मथकारितत्वरूपहेतुना समर्थनात् वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ १००

श्लो ॥ हृदि स्थिताव प्यनिशं प्रियाया । श्च्युतावबेद्यान्तरचुम्बितायाः
कुचौ निनीषु र्हृदयं पुनर्वा । शिश्लेष वक्ष स्युपपीड मेषः ॥ १०१

हृदीति– एषः कृष्णः, अवेद्यान्तरचुम्बितायाः वेद्यं ज्ञेयं, विषय इतियावत् । अन्य द्वेद्यं वेद्यान्तरं, तेन चुम्बिता स्पृष्टा न भवती त्यवेद्यान्तरचुम्बिता, तस्याः– विषयान्तरस्मृतिरहिताया इति यावत् । अपूर्ववस्तुदर्शनलाभादिना हृदयं विगलितवेद्यान्तरं स दानन्दमयं भवतीति भावः । प्रियायाः प्रेयस्याः, हृदि वक्षसि, मनसि च– अनिशं सदा, स्थितावपि च्युतौ

हृदया च्छ्रष्टौ, कुचौ स्तनौ, कर्म पुनः भूयः, हृदयं निनीषुः प्रापयितु मिच्छु रिव वक्ष स्युपपीडं वक्षसि उपपीड्य 'सप्तम्यां चोपपीडेति णमुल्। तत्पुरुषे कृती त्यलुक्' । शिश्लेष आलिलिङ्ग । अत्र हृदिस्थितावपि हृदश्च्युता विति विरोधः; तस्य वक्षसि स्थितौ मनस श्च्युताविति परिहारः । निनीषुर्वेत्युत्प्रेक्षा । अयं भावः— अमृतपरिपूरितहेमघटद्वयं पेटिकायामिव अन्येभ्यो भिया मनस्येव काचन संस्थाप्य जुगोप । तस्यां श्रीकृष्णदर्शनलाभादिना परमानन्दपरवशायां सत्यां जिहीर्षया मन्मथे नेमौ बहि रुन्नीतौ कुचनाम्ना भासतः । तदा मदनार्दिता ह्रियमाणा-अमृतकुम्भादिनेयं कमिनी श्रीकृष्णं शरणं जगाम— स तु मदनं निवार्य इमौ कुचौ पुन स्तद्धृदये प्रवेशयितुमिव गाढं त मालिलिङ्गेति— यद्वा एषः अनिशं हृदि स्वमनसि स्थितावपि अतिस्पृहणीयतया सदा स्मर्यमाणावपीत्यर्थः । अवेद्यान्तरचुम्बिताया: वेद्यान्तर न्न चुम्बती त्यवेद्यान्तरचुम्बितः; तस्य भाव स्तत्ता; तस्याहेतोः हृदयस्य अपूर्ववस्तुदर्शनलाभादिना विगलितवेद्यान्तरत्वेन आनन्दमयत्वा दिति भावः । च्युतौ श्रीकृष्णसम्बन्धिन स्तादृशहृदया द्गलिता वित्यर्थः । हृदयं यदानन्दमयं भवति तदा कुचयोरपि वेद्यकोटिप्रविष्टत्वेन हृदया न्निर्गमो भवतीति भावः । प्रियायाः कुचौ पुनः हृदयं स्वमनः निनीषुर्वा प्रवेशयितु मिच्छन्निवेत्यर्थः । वक्षसि उपपीड्य वक्षस्युपपीडं शिश्लेष । वक्षोऽन्तर्गतत्वा द्धृदयस्य वक्षो निर्भिद्य हृदयं प्रविशता मिमा विति मत्वा दृढ मालिलिङ्गेति भावः । एनेन स्तनयोः काठिन्यं व्यज्यते । उत्प्रेक्षालङ्कारः ॥ १०१

**श्लो ॥ नीवीस्पृशं कापि ततो मुरारिं । बबन्ध मौळीकुसुमस्रजाशु**
**स मायिना मग्रसरोऽपि काम । मनाटय द्बन्धधुता वशक्तिम् ॥ १०२**

नीवीति— कापि काचि द्गोपी, ततः कुचसंश्लेषानन्तरं, नीवीस्पृशं नीवीं वस्त्रग्रन्थिं, स्पृशति मोचनार्थं गृह्णातीति नीवीस्पृट् । व्रश्चेति षत्वं । तं तथोक्तं, मुरारिं कृष्णं, आशु द्रुतं, विळम्बे सति नीवीस्रंसनभया दिति भावः । मौळीकुसुमस्रजा शिरोगतप्रसूनमालया, रज्ज्वन्तराभावात् कुसुमस्र ग्बाधका भवति वा नवेति ज्ञानाभावाच्चेति भावः । बबन्ध बन्धनं चकार । मायिनां मायाविना, मग्रसरः प्रमुखः, सोऽपि कृष्णश्च, काम मत्यन्तं, बन्धधुतौ बन्धमोचने, आशक्तिं असामर्थ्यं, मनाटयत् अभिनयति स्म । नतु वस्तुतोऽशक्त इति भावः । अत्र प्रेयसीमौळीकुसुमस्रक्संयोगेन श्रीकृष्णस्य, श्रीकृष्णाशक्त्यभिनयेन प्रेयस्याश्च परमानन्द आसी दित्यन्योन्यालङ्कारो व्यज्यते । 'अन्योन्यं नाम यत्रस्या दुपकारः परस्पर' मिति लक्षणात् ॥ १०२

**श्लो ॥ यन्नी विमोक्षं विनिवारयन्त्या । मृगीदृशः किङ्किणिका निनेदुः**
**स्मरार्चनारम्भणसूचक स्स । बभूव घण्टानिनदप्रपञ्चः ॥ १०३**

यदिति– नीवीमोक्षं वस्त्रग्रन्थिमोचनं, श्रीकृष्णकृत मित्यर्थः । विनिवारयन्त्याः निरुन्धत्याः, मृगीदृशः मृगाक्ष्या, स्सबन्धिन्यः किङ्किणिकाः क्षुद्रघण्टिकाः, मेखलावयवभूता इत्यर्थः । (आन्ध्रे गज्जलु) निनेदुः दध्वनु, रिति यत्– निपूर्वका न्नदते र्लिटि– अत एत्वा-भ्यासलोपौ । स इति विशेष्यानुगुणं पद मध्याह्रियते । यद्वा-सूचक स्स बभूवेति पठनीयम् । न च छन्दोभङ्गम् । पादान्ते लघो रपि गुरुत्वात् । सः किङ्किणिकानादः, स्मरार्चनारम्भण-सूचकः, मन्मथदेवतापूजाप्रारम्भसूचकःघण्टानिनदप्रपञ्चो घण्टाध्वनिविस्तारः, बभूव अभूत् । देवतार्चनारम्भे यथा घण्टां नादन्ति तद्व न्मन्मथदेवतार्चनारम्भे श्रीकृष्णोऽपि काञ्चीकिङ्किणिकाः नादयतीति भावः । सन्निति पाठे–सः स्मरार्चनारम्भणसूचक स्सन्, अतएव घण्टानिनदप्रपञ्चो बभूवेति व्याख्येयम् । सूचक स्स बभूवेति पाठ एव श्रेयान् । अत्र किङ्किणिकानादे घण्टानाद त्वारोपणा दभेदरूपकालङ्कारः । 'विषय्यभेदताद्रूप्यरञ्जनं विषयस्ययत् रूपकं त' दिति लक्षणात् ॥ १०३

**श्लो ॥ तदा दुकूलापहृतिप्रसङ्गे । बभूव यूनोः कलह स्तयो र्यः**
**मध्यस्थया मेखलया तरुण्या । स्तद्वारणाया इव पर्यराणि ॥ १०४**

तदेति– तदा तत्काले, दुकूलापहृतिप्रसङ्गे वस्त्रापनयनप्रसक्तौ, विषये तयोः पूर्वो-क्तयोः, यूनोः युवा च युवती च युवानौ; पुमां स्त्रियेत्येकशेषः । तयोः गोपीकृष्णयोः, यः कलहः वस्त्राकर्षणतन्निवारणरूपो विवादः, बभूव तद्वारणायै कलहवारणार्थमिव, 'एचोऽयवा-याव' इत्यायादेशे 'लोप श्शाकल्यस्ये' ति य लोपः । मध्यस्थया अवलग्नवर्तिन्या मध्यं न्यायं तत्र तिष्ठतीति मध्यस्था तयेति च । 'न्याय्येपि मध्य' मित्यमरः । तरुण्याः कामिन्या, स्सम्बन्धिन्या मेखलया काञ्च्या, तरुण्याः मध्यस्थया मेखलयेति वा अन्वयः । पर्यराणि रणेति दण्डकपठितोऽयं धातु श्शब्दे वर्तते । परिपूर्वका द्रणते र्भावे लुङि चिण् । चिणो लुगिति तस्य लुक् । अतिशयेन रणित मित्यर्थः । यथा हि- सन्धि मिच्छन्ति साधव- इति न्यायात् । मध्यस्थसाधु र्जनः कलहायमानयो र्द्वयोः पक्षयोः कलहं निवारयितुं पक्षद्वयमपि तर्जनादिभि र्भीषयति तद्वदिति भावः । उत्प्रेक्षालङ्कारः । स च मध्यस्थयेति श्लेषो ज्जीवितः । श्रीकृष्णेन वस्त्रे अपह्रियमाणे गोप्या पुन स्तस्मि न्नाकृष्णयमाणे च सति वस्त्रोपरिस्थाः काञ्चीकिङ्किणिकाः भृशं दध्वनु रिति मुख्यार्थः ॥ १०४

**श्लो ॥ मुग्धे ! नवेत्सि प्रिय मप्रियं वा । स्वस्येति निर्भर्त्सनतत्परै र्वा**
**क्षौमापहारं विनिवारयन्त्या । स्तारं तरुण्या वलयै रशिञ्जि ॥ १०५**

मुग्धे इति– हेमुग्धे मूढे ! स्वस्य आत्मनः, 'स्वोज्ञातावात्मनी' त्यमरः । प्रियं इष्टं, अप्रिय मनिष्टं, च नवेत्सि नजानासि, ममेदं प्रिय, मिद मप्रिय मिति ज्ञानं तव नास्त्येव;

मूढत्वा दित्यर्थः। नीवीमोक्षस्य सुरताङ्गत्वेन प्रियत्त्वा त्तस्मिन्नपि अप्रियत्वबुद्धि स्तव मौग्ध्य-विलसितमेवेति भावः। इत्येवं निर्भर्त्सनतत्परै र्वा निर्भर्त्सयद्भि रिवेत्यर्थः। भर्त्स तर्जने इति धातुः। 'भर्त्सनं त्वपकारगी' रित्यमरः। परेषां भीत्युत्पादकं वाक्यं भर्त्सन मित्युच्यते। इति तदर्थः। भीषयद्भिरिवेति फलितार्थः। क्षामापहारं वस्त्रापहरणं, विनिवारयन्त्याः निरुन्धत्याः, तरुण्याः स्त्रियः, वलयैः तार मत्यन्त, मशिञ्जि अराणि। भावे लुङ्। 'भूषणानां तु शिञ्जित' मित्यमरः। उत्प्रेक्षालङ्कारः। किं च तरुणीवलयशिञ्जायां निर्भर्त्सनवाक्यारोपणस्य गम्यमानत्वा द्रूपकालङ्कारो व्यङ्ग्यः। यथा प्रियसख्यो नायिकां हितकृत्ये प्रतिकूलां निर्भर्त्सयन्ति तद्वदिति वलयानां सखीसाम्यं ध्वन्यते। मुग्धे इति साभिप्रायसम्बोधना त्परिकराङ्कुरालङ्कारः। १०५

**श्लो॥ एकेन वेणी मपरेण शौरिः। करेण गृह्णन् चुबुकं प्रियायाः**
**नाभू त्कुचग्राहि करद्वयीति। चतुर्भुजत्वं विवरीतु मैच्छत्॥ १०६**

एकेनेति— शौरिः कृष्णः, एकेन करेण हस्तेन, प्रियायाः प्रेयस्याः, वेणीं केशबन्धनं, अपरेण अन्येन, करेण प्रियाया इत्यत्रापि सम्बध्यते। चुबुकं ओष्ठा दधःप्रदेशं (आन्ध्रे-गड्डमु) गृह्णन् बिभ्र त्सन्, कुचग्राहिणी च सा करद्वयी च ग्राहि— करद्वयी स्तनधरहस्तयुगळं—स्त्रियाः पुंवदिति पुंवद्भावः। नाभूत् नासी, दिति मत्वा चतुर्भुजत्वं चत्वारो भुजाः बाहवो यस्य तस्य भाव स्तत्त्वं, तत् भुजचतुष्टयशालित्व मित्यर्थः। कृष्णस्य वस्तुत श्चतुर्भुजत्वा दिति भावः। विवरीतुं प्रकटयितुं स्वीकर्तुमिति यावत्, ऐच्छत् इयेष। चतुर्भुजो भगवान् कृष्णः कंसभीतपितृप्रार्थनया द्विभुजो बभूवेति प्रथमे विलासे एव प्रोक्तम्। भागवते प्रसिद्धं च। त दधुना चतुर्भुजत्वं पुनस्स्वी-कर्तु मभिललाषेति भावः। एतेन कृष्णस्य अतिकामुकत्वं व्यज्यते॥ १०६

**श्लो॥ नीवीं विनीय द्रुत मूरुमूले। लोलेक्षणे गोपवधूकिशोरे**
**निजाक्षियुग्मं न्यमिमील देका। परा मुरारेः प्यधिताक्षियुग्मम्॥**

नीवीमिति— गोपवधूकिशोरे गोपवधूः यशोदा तस्याः किशोर स्सुतः, तस्मिन् श्रीकृष्णे, द्रुतं शीघ्रं, नीवीं वस्त्रग्रन्थिं, विनीय शिथिलयित्वा, वस्त्र मपनीयेत्यर्थः। ऊरुमूले गोप्याः गुह्यदेशे, लोलेक्षणे लोले चपले ईक्षणे नेत्रे यस्य तस्मिन् तथोक्ते सति, अत्यासक्त्या ऊरुमूलं पश्यति सतीत्यर्थः। एका काचित्, निजाक्षियुग्मं स्वनेत्रद्वन्द्वं, न्यमिमीलत् मीलयामास। निपूर्वक मील सङ्कोचे इति धातो र्ण्यन्त्या ल्लुङि चङ्। लज्जयेति भावः। परा अन्या, मुरारेः कृष्ण-स्याक्षियुग्मं नेत्रद्वन्द्वं, प्यधित कराभ्यां पिहितवती। अत्र स्वगुह्यद्रष्टारं कृष्णं द्रष्टुं एका त्रपिता कृष्णाय स्वगुह्यं दर्शयितु मेव अन्या त्रपितेति पूर्वाङ्गनापेक्षया द्वितीयाङ्गनया उत्कर्षकथना त्सारालङ्कारः। 'उत्तरोत्तर मुत्कर्ष स्सार इत्यभिधीयते' इति लक्षणात्। पूर्वाङ्गनापेक्षया उत्तराङ्गनायाः प्रागल्भ्यं व्यज्यते॥ १०७

श्लो ॥ अतारि मन्दाक्षविमोहमाया । व्यलङ्घि सान्द्रोऽपि मनोभवाधिः
अलम्भि कोऽपि प्रमदो वधूनां । नीवीविमोक्षो न कथन्नु मोक्षः ॥

अतारीति— मन्दाक्षं त्रपा, तेन यो विमोहः मोहातिशयः, स एव माया अज्ञानं मन्दाक्षविमोहमाया, अतारि तीर्णा— वधूभि रिति शेषः । नीवीमेक्षे सति यथेच्छसम्भोगेन लज्जात्यागः । तेन च मोहनिवृत्ति र्वधूना ममव दिति भावः । सान्द्रोऽपिप्ररूढोऽपि, मनोभवाधिः मनोभवा न्मन्मथात् , यः आधिः मानसव्यथा, स एव मनोभवाधिः, मानसिककामाद्यमिभवकृतपीडेति श्लिष्टरूपकम् । व्यलङ्घि वधूभि रतिक्रान्तः । कोऽप्यनिर्वाच्यः प्रमदः आनन्दः, अलम्भि प्राप्तः; वधूभि रित्येव । नीवीविमोक्षः वस्त्रग्रन्थिमोचनं, मोक्षः मुक्तिः, कथ न्नु न कथं वा नभवति? नीवीविमोक्ष एव मोक्ष इत्यर्थः । अत्र प्रथमं मायानिवृत्तिः; तत स्तन्मूलककामाद्याधिनिवृत्तिः; तत आनन्दावाप्ति रित्येषां मोक्षसामग्रीत्वेन प्रसिद्धानां क्रमेण निवेशना द्रत्नावळीनामकालङ्कारः । 'क्रमिका प्रकृतार्थानां न्यासं रत्नाबळीं विदु' रिति लक्षणात् । नीवीविमोक्षे मोक्षत्वं निरूप्य मन्दाक्षतरणादिषु मायातिक्रमणादिनिरूपणा त्सावयवरूपकालङ्कार इति वा ॥ १०८

श्लो ॥ अभावि य स्त्वापि तयापि रत्यै । ह्रिया विमुख्या परिवृत्य तन्व्या
विलोकयन् मुग्धनितम्बबिम्बं । तदप्यभीष्टं सममन्य तासौ ॥ १०९

अभावीति— रत्यै सुरतार्थं, स्वापि तया श्रीकृष्णेन पर्यङ्के शायितयापीत्यर्थः । समबन्धनार्थ मिति भावः । तन्व्या स्त्रिया, ह्रिया लज्जया, हेतुभूतया— परिवृत्य परिवर्तनं कृत्वा, विमुख्या पराङ्मुख्या, अभावि भवते र्भावे लुङ्भूतम् । अधःपृष्टं शायिता बाला परिवृत्य अधोवक्षस्कं यथातथा तल्प मधिशिश्ये इति भावः । इति यत्— तदपि पराङ्मुखीभवनमपि असौ कृष्णः, मुग्धनितम्बबिम्बं सुन्दरनितम्बमण्डलं, 'पश्चान्नितम्बः स्त्रीकट्या' इत्यमरः । विलोकयन् पश्यन् , सन् अभीष्टं प्रियं, सममन्यत मेने । सम्पूर्वका न्मन्यते र्लङ् । एतादृशतन्वी स्थितेः मार्जारबन्धनकरणोपयोगित्वादिति गूढाशयः । अत्र अनिष्टेऽपि वैमुख्ये नितम्बसौन्दर्यदर्शनरूपगुणसद्भावा दभीष्टबुद्धि र्भगवत आसीदिति प्रकटो भावः । वैमुख्य मप्यभीष्ट मभवदिति वाक्यार्थस्य नितम्बबिम्बविलोकनरूपपदार्थहेतुकत्वा त्काव्यलिङ्गम्— रतिनिवारणार्थं परिवृत्तया तन्व्या रतिनिवारणालाभे सत्यपि प्रत्युत अत्युत्कटरतिरेव लब्धेति विषमालङ्कारः प्रतीयते । इयं तन्वी वैमुख्यं भजतु । यत्र मम एतन्नितम्बसौन्दर्यदर्शनंस्यादिति वैमुख्यरूपदोषस्य गुणत्वे नाभ्यर्थनात् अनुज्ञालङ्कारोऽपि गम्यते । 'दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शना' दिति लक्षणात् । नचाय मलङ्कारोऽत्र वाच्य एव न तु ध्वनित इति वाच्यम् । 'विपद स्सन्तु न श्शश्व द्यासु सङ्कीर्त्यते हरि' रितिव दभ्यर्थनायाः वाच्यार्थे अदर्शनात्— न च सममन्यतेत्यस्य प्रार्थयामासे-

त्यर्थ इति वाच्यम् । नितम्बदर्शनप्राक्कालिकायाः प्रार्थनायाः विलोकयन् मुग्धनितम्बबिम्बं सममन्यतेति नितम्बदर्शनसमकालत्व व्यपदेशस्य विरुद्धत्वा दित्यलम् ॥ १०९

श्लो ॥ पलाययत्नै रुदितै विशुष्कै । र्निर्भर्त्सनाभि स्स्मितगर्भिताभिः
मुग्धै रपाङ्गै र्मृदुपाणिरोधै । रनन्दय त्कापि ततो मुरारिम् ॥ ११०

पलायेति– ततः एतत्स्त्रीसम्भोगानन्तरं, कापि अन्या काचित् स्त्री, पलाययत्नैः पलायप्रयत्नैः, लताकुञ्जा द्बहि र्निष्क्रमणप्रयत्नै रित्यर्थः । विशुष्कैः विशेषेण शुष्कैः नीरसैः, अश्रुरहितै रित्यर्थः । मिथ्यात्वा दिति भावः । रुदितैः रोदनैः, रतिकष्टाभिनयोऽय मिति भावः । स्मितगर्भिताभिः स्मितं मन्दहासः, गर्भितं अन्तर्गतं, यासु ताभिः सस्मिताभि रित्यर्थः । सत्यत्वे तु कोप एव स्या न्न तु स्मित मिति भावः । निर्भर्त्सनाभिः भीतिप्रापकवाग्भिः, गानश्रवणार्थ मागतां मा मेवं करोषि पश्य त्वां मद्गुरुभि र्दण्डयामी त्येवमादिभि रिति भावः । अपाङ्गैः कटाक्षैः, मृदुपाणिरोधैः मृदुभि रदृढैः, पाणिरोधैः करग्रहणैः, मां मापीडयेति श्रीकृष्णकरौ अदृढं रुणद्धि– न तु दृढं– तत्कृतपीडायाः स्वस्य अभीष्टत्वा दिति भावः । एतैः करणैः, मुरारिं कृष्णं, मनन्दयत् आनन्दयामास । शृङ्गाररसास्पदत्वा देतेषा मिति भावः । स्वभावोक्ति रलङ्कारः ॥ ११०

श्लो ॥ रतानुकूलः पर मङ्गनानां । बभूव बन्धो विविध स्तदानीम्
न जारनाथाश्रयणेऽपि बन्धः । परो मुरारिप्रणयप्रभावात् ॥ १११

रतेति– तदानीं तदा, अङ्गनानां गोपिकानां, परं केवलं, रतानुकूलः सुरतोपयोगी, विविधो बहुविधः, बन्धः कामशास्त्रोक्त श्चतुरशीतिबन्धो धेनुकादिः, बभूव अभूत् । श्रीकृष्णस्य वात्स्यायनतन्त्रनिष्णातत्वात् चतुरशीतिबन्धै स्ताः रमयामासेति भावः । परं केवल मिति यदुक्तं तदेव विवृणोति । नेति– जारनाथाश्रयणेऽपि जार श्चासौ नाथः पतिः जारनाथः उपपतिरित्यर्थः । यद्वा जारनाथो जाराग्रणीः, श्रेष्ठो गूढपुरुष इत्यर्थः । तस्य आश्रयणे आश्रये, सम्पर्के इति यावत्– सत्यपि मुरारिप्रणयप्रभावात् श्रीकृष्णस्नेहसामर्थ्यात् , परः अन्यः, बन्धः कर्मपारवश्यं न न बभूव– अङ्गनाना मि त्यत्रापि सम्बध्यते । जारसम्भोगेन हि स्त्रीणां नरकप्राप्तिरूपो बन्धो भवतीति प्रसिद्धम् । गोपिकानां तु जारसम्पर्के सत्यपि नाभू त्सम्बन्धः परमात्मनः कृष्णस्यैवात्र जारत्वादिति तात्पर्यार्थः । अत्र जारसम्भोगात् गोपीषु प्राप्तयो रुभयो र्बन्धयो र्मध्ये एकस्यैव नियमना त्परिसङ्ख्या भेदः । जारनाथाश्रयणेऽपि बन्धो नासीदिति विशेषोक्ति रलङ्कारः । मुरारिप्रणयप्रभावा दिति हेतुना तत्समर्थना त्काव्यलिङ्गं च– न च काव्यलिङ्गेऽस्मिन् विच्छित्तिविशेषो नास्तीति वाच्यम् । बन्धहेतो र्जारस्य मुरारे रेव बन्धनिवृत्तिहेतुत्वे नोपन्यासस्य विच्छित्तिसम्पादकत्वात् । अत एव व्याघातालङ्कारोऽपि– ‘ स्या द्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चे ’ दिति लक्षणात् ॥ १११

श्लो ॥ रतान्तरे निश्चलतां प्रयाता । सुखातिरेका द्दरमीलिताक्षी
विलासिनी काचन पञ्चबाणं । विचिन्तयन्ती मनसेव रेजे ॥ ११२

रतान्तरेइति– रतान्तरे सुरतमध्ये, निश्चलतां चलनराहित्यं, प्रयाताप्राप्ता, जडीभूता इत्यर्थः । सात्त्विकभावोदया दिति भावः । सुखातिरेका दानन्दातिशया द्धेतोः, दरमीलिताक्षी ईषन्निमीलितलोचना, काचन काचित्, विलासिनी ललना, मनसा हृदा, पञ्चबाणं मन्मथं, विचिन्तयन्ती ध्यायन्तीव, रेजे चकासे । यथा नासाग्रव्यस्तनयनः निश्चलां समाधि मधिष्ठाय मुनिः ब्रह्म ध्यायति तद्व दिति भावः । उत्प्रेक्षालङ्कारः । रतिसुखप्रदत्वेन स्वाभीष्टदेवतात्वा न्मन्मथस्य तच्चिन्तनं कर्तव्यमेव स्त्रीणा मिति बोधयितुं पञ्चबाणं विचिन्तयन्ती त्युक्तम् ॥ ११२

श्लो ॥ यदाऽविनाभूततया बभासे । युवद्वयी केळिरसे निमग्ना
चिराय तत्सङ्घटनासु खिन्न । स्तदैव विश्रान्ति मगा दनङ्गः ॥ ११३

यदेति– यदा यस्मिन् समये, युवद्वयी यूनोः द्वयी, गोपीकृष्णयुगळ मित्यर्थः । केळि-रसे क्रीड़ारसे, निमग्ना सती नितरां मग्नासती– अत एव अविनाभूततया अवियुक्तत्वेन, नित्यसंयुक्तत्वेनेत्यर्थः । एकत्वेनेति यावत्– बभासे रेजे । अर्धनारीश्वरवत् स्त्रीपुरुषा वुभौ अन्योन्यपरिश्लिष्टौ एकव्यक्तिव यदा रेजतु रित्यर्थः । यद्वा-- युवद्वयी अविनाभूततया संयोगेन हेतुना, केळिरसे निमग्नासती यदा बभासे इत्यन्वयः । तदैव तदानीमेव, चिराय चिरात्प्रभृति तत्सङ्घटनासु युवद्वयीसङ्घटनविषये, खिन्नः परिश्रान्तः, अनङ्गः विश्रान्तिं विश्रम मगा दभजत । तूष्णीं भूतोऽभव दिति यावत् । स्वचिकीर्षितसिद्धे रिति भावः ॥ ११३

ग ॥ एव मनङ्गदीक्षिताना माभीरचलाचललोचनाना मतिशयितपतिवाल्लभ्य-सम्भवदवष्टम्भसम्भारविघटनाय यशोदादारक स्समनन्तर मन्तरधात् ॥ ११४

एव मिति-- एव मुक्तप्रकारेण, अनङ्गदीक्षादीक्षितानां अनङ्गदीक्षायां मन्मथव्रते, दीक्षितानां सञ्जातदीक्षाणां-- यथा भगवद्देवताके आहवे पुमांसो दीक्षिता भवन्ति तद्व न्मन्मथदेवताके सुरतव्रते कामिनो दीक्षिता इति भावः । आभीरचलाचललोचनानां चलाचले चञ्चले लोचने यासां ताः चलाचललोचनाः स्त्रियः आभीराणां गोपानां, चलाचललोचनाः तासां गोपस्त्रीणा मित्यर्थः । अतिशयितं अधिकं, य त्पतिवाल्लभ्यं भर्तृप्रियत्वं, तेन हेतुना सम्भवतः उत्पन्नस्य, अवष्टम्भसम्भारस्य गर्वातिशयस्य, विघटनाय निवारणार्थं, वल्लभो मय्यनुरक्तो मय्यनुरक्त इत्येवं; अहमेव वल्लभस्य प्रिये त्येवं वा- सर्वासामपि गर्वातिशयो जात इति तन्निरासार्थ मिति भावः । एतेन यावत्यो गोपिका स्तावन्तः कृष्णाः भूत्वा योगमायया एक एव भगवान् सर्वा अपि गोपिका रमयामासेति व्यक्तम् । समनन्तरं सुरतानन्तरं, यशोदा-दारक श्श्रीकृष्णः, अन्तरधात् अन्तर्हितोऽभूत्, अदृश्योऽभव दित्यर्थः ॥ ११५

श्लो ॥ क्षणा दन्तर्भूतै रनुभवपदं प्राप्य सुदृशो
हरे र्लीलाजालै रपहसितविद्युद्विलसितैः
किम प्याध्यं स्वैरव्यवहृतिविरोधि प्रविविशु
र्न तादृक्प्रा गेत द्विरहसमयेऽपि स्थित मभूत् ॥ ११५

क्षणा दिति– सुदृशः स्त्रियः, तिमिराद्यनुपहतदृष्टय श्च– अनुभवपदं प्रत्यक्षत्वं, प्राप्य गत्वा, प्रत्यक्षीभूयेत्यर्थः । क्षणा त्क्षणकालादेव, अन्तर्भूतैः तिरोहितैः, अत एव अपहसित-विद्युद्विलसितैः तिरस्कृततटिद्विलासै, रित्युपमा । विद्युद्विलासवत् क्षणिकै रित्यर्थः । हरेः कृष्णस्य, लीलाजालै स्सुरतसमयधृतविलाससमूहैः, हेतुभूतैः– स्वैरव्यवहृतिविरोधि अभिसरण विरोधि; यथेष्टसञ्चारविरोधि च–किम प्यनिर्वाच्य, मतिशय मित्यर्थः । आन्ध्यम् इतिकर्तव्यता मौढ्य, नेत्रवैयर्थ्यं च– प्रविविशुः प्राप्तवत्यः, तादृक् तादृश मान्ध्यं, प्रा क्पूर्वं; तदेव विशद-यति– एतद्विरहसमयेऽपीति- श्रीकृष्णवियोगकालेऽपि, विद्युत्सिम्बन्धाभावेऽपीति च, स्थितं विद्यमानं, नाभूत् न बभूव । संयोगपूर्वकालिकविरहा दुत्तरकालिकविरहो दुस्सह इति प्रसिद्धम् । गाढान्धकारे गच्छतः पुरुषस्य विद्युद्दर्शना त्पूर्वं यादृश मान्ध्यं ततोऽप्यधिकं विद्युद्दर्शनोत्तरक्षणजन्य मिति च प्रसिद्धम् । अत्र पूर्वार्थगतोपमालङ्कारप्रतिभोत्थापितः उत्तरार्थे श्लेषालङ्कारः ॥ ११५

श्लो ॥ मुरारिविरहा द्वामा । विमोहा गहनं गताः
मुहु र्गहन मासेदु । स्तदन्वेषणकारणात् ॥ ११६

मुरारीति– वामाः स्त्रियः, मुरारिविरहा द्धेतोः श्रीकृष्णवियोगा द्धेतोः विमोहगहनं विशेषो मोहः विमोहः सएव गहनं काननं, तथोक्तं गताः प्राप्ताः, स्सत्यः मुहुः पुनरपि, तदन्वेषणकारणात् श्रीकृष्णगवेषणहेतोः, त मन्वेष्टु मित्यर्थः । गहनं काननं, आसेदुः विविशुः । आङ् पूर्वका त्सदे र्लिट् । अत्र गहनं गता अपि पुन र्गहन मासेदु रिति विरोधस्य मोहरूपं गहन मिति रूपकेण परिहारात् रूपकोज्जीवितो विरोधाभासालङ्कारः ॥

अव– अथ तदन्वेषणमेव प्रपञ्चयति अयीत्यादिभि श्चतुर्भिः ॥

श्लो ॥ अयि मन्मथमन्मथ स्त्वया । रमितो माधवि ! माधव स्स्फुटम्
स्फुरति त्वयि माधवीपदं । हरिसम्बन्धविबोधकं यतः ॥ ११६

अयीति– अयि माधवि वासन्ति ! 'अतिमुक्तः पुण्ड्रक स्स्या द्वासन्ती माधवीलते' त्यमरः (आन्ध्रे पुव्वुलगुरुविन्द) माधवस्य स्त्री माधवी– 'पुंयोगा दाख्याया मिति ङीप्– तत्सम्बुद्धि रिति च । मन्मथमन्मथः मन्मथस्यापि मन्मथः, मत् बुद्धिः, तां मथ्नातीति मन्मथः

इति व्युत्पत्त्या मनःक्षोभक इत्यर्थः। यथा मन्मथोऽस्माकं मनःक्षोभकः तथा मन्मथस्यापि कृष्णो मनःक्षोभक इतिभावः। ततोऽप्यधिकसुन्दर इति यावत्। माधवः कृष्णः, त्वया रमितः क्रीडितः, त्वया सह माधवो रेमे इत्यर्थः। स्फुटं ध्रुवं- तत्र हेतु माह- यतः यस्मा त्कारणात्, त्वयि हरिसम्बन्धविबोधकं श्रीकृष्णसम्बन्धप्रतिपादकं, माधवीपदं माधवी इति नाम, स्फुरति वर्तते। प्रतिपाद्यप्रतिपादकभावसम्बन्धेन तिष्ठतीत्यर्थः। माधवस्य स्त्री माधवी इति व्युत्पत्त्या माधवसम्बन्धवत्यां माधवीशब्दो वर्तते- माधवस्येति षष्ठ्या स्सम्बन्धित्व मर्थ इत्यभ्युपगमात्- तस्मात् तव माधवसम्बन्धित्वादेव माधवीशब्दवाच्यत्व मिति कृत्वा माधवस्य स्त्रिया त्वया माधवो रमित इति निश्चय इति भावः। यद्वा- माधवस्येयं माधवी- तस्येद मित्यणि ङीप्- अनया व्युत्पत्त्या च माधवीशब्दो माधवसम्बन्धवद्वस्तुप्रतिपादकत्वेन माधव-सम्बन्धबोधकं भवत्येवेति बोध्यम्। अत्र मधौ वसन्ते पुष्प्यतीति माधवी इति व्युत्पन्नस्य माधवी-शब्दस्य योगतोऽन्यार्थत्वप्रकल्पना निरुक्ति रलङ्कारः। माधवी इति स्त्रीलिङ्गत्वात् स्त्रीवन्मृदुळ-तनुशरीरवत्त्वाच्च लतायां स्त्रीबुद्ध्येद मुक्त मिति ज्ञेयम्॥ ११७

श्लो ॥ सत्वरं कथय केन तथाऽसौ। चूतपादप! हरि श्चरित स्यात्?
पल्लवस्य गति रस्य विबुद्धा। पल्लवप्रणयिना भवता स्यात्॥ ११८

सत्वर मिति- हे चूतपादप रसालतरो! असौ हरिः कृष्णः, केन पथा मार्गेण, चरितः गत, स्स्यात् भवेत्? सत्वरं द्रुतं, विळम्बेसति हरि रतिक्रान्तो भवेदिति भावः। कथय वद। ननु कथ महं वेद्मीत्यत आहुः- पल्लवस्येति- अस्य पल्लवस्य, विटस्य कृष्णस्ये-त्यर्थः। गति र्गमनं, पल्लवप्रणयिना किसलयसहितेन, विटस्निग्धेनेति च- भवता त्वया, विबुद्धा ज्ञाता, स्या द्भवेत्। भुजङ्गएव जनीतेभुजङ्गचरणक्रम मिति न्यायात्- इति भावः। (भुजङ्गो विटः) अत्र समर्थनीयस्य विशेषभूतस्य पूर्ववाक्यार्थस्य उत्तरवाक्यार्थेन सामान्येन समर्थनादर्थान्तर न्यासालङ्कारः। सच पल्लवशब्दगतश्लेषोज्जीवितः। चूतशब्दस्य पुंलिङ्गत्वेन तरोःपुरुषजातित्वेन च चूतवृक्षे स्त्रीणां पुरुष बुद्धि रिति ज्ञेयम्॥ ११८

श्लो ॥ अधोक्षजाध्यक्ष मशोक! किं ते। बभूव निर्वाणनिदानभूतम्?
अशोकभावः कथ मन्यथा तु तवैव दृष्ट स्सकलागमेषु॥ ११९

अधोक्षजेति- हे अशोक वञ्जुळवृक्ष! ते तव, निर्वाणनिदानभूतं सुखकारणं, मोक्ष-कारणभूतं च; अधोक्षजाध्यक्षं श्रीकृष्णसाक्षात्कारः, बभूव किम् आसीत् किम्? इति हेतूत्प्रेक्षालङ्कारः। अन्यथा अधोक्षजसाक्षात्काराभावे तु, अखिलागमेषु अखिला स्सर्वे, अगमाः वृक्षाः, तेषु मध्ये तवैव अशोकभावः- अशोकत्वं, अशोकवृक्षत्वम्; कथं कुतो, दृष्टः सिद्ध इत्यर्थः। अन्यत्र सकलागमेषु सर्ववेदेष्वपि, तवैव अशोकभावः शोकराहित्यं, कथं

दृष्टः साक्षात्कृतः ? वेदे स्वतःप्रमाणभूते त्वैवाशोकत्वं कथं प्रतिपादित मित्यर्थः । अत्र पूर्वार्थे सम्भावितः अशोकस्य अधोक्षजाध्यक्षप्राप्तिरूपो वाक्यार्थः उत्तरवाक्यार्थेन समर्थित इति काव्यलिङ्ग मलङ्कारः । स च श्लेषोज्जीवितः । अशोक इत्यत्र अन्यार्थत्वप्रकल्पना त्विरुक्तिः ॥

**श्लो ॥ दुत्तूर ! शौरिः प्रणयं विधाय । सकृत्तत स्त्वा मतिसन्दधे नु ?**
**वियोगकान्ताजननिर्विशेष । मुन्मत्तभावं विवृणोषि येन ॥ १२०**

दुत्तूरेति– हे दुत्तूर काञ्चनाह्वय ! शौरिः कृष्णः, सकृत् एकवारं, प्रणयं स्नेहं, विधाय कृत्वा, त्वया सहेति शेषः । ततः तत्क्षणमेव, त्वा मतिसन्दधे नु वञ्चयामास किं ? अस्मानिवेति भावः । येन हेतुना वियोगकान्ताजननिर्विशेषं वियोगो विरहः, तद्युक्तः कान्ताजनः स्त्रीसमूह इति मध्यमपदलोपी समासः– तस्मात् निर्विशेषं निर्भेदं यथातथा–पञ्चमीविभक्ते इति पञ्चम्यां पञ्चमीभयेनेत्यत्र मञ्चमीति योगविभागा त्समासः– तत्तुल्य मित्यर्थः । उन्मत्तभावं उन्मत्तत्वं, उन्मादयुक्तत्वं च; विवृणोषि प्रकटयसि । 'उन्मत्तः कितवो धूर्तो दुत्तूरः काञ्चनाह्वयः ' ' उन्मत्त उन्मादव 'तीति चामरः । यत स्त्वं वय मिवो न्मत्तः तत स्त्वमपि सकृत्प्रणयो हरि रवञ्चय दित्युत्पश्याम इति मुख्यार्थः । अत्र श्लोकस्य पूर्वार्थेन दुत्तूरे सम्भावितस्य हरिवञ्चितत्वरूपवाक्यार्थस्य उत्तरवाक्यार्थेन समर्थना त्काव्यलिङ्गम् । इदं च श्लेषालङ्कारोज्जीवितम् ॥ १२०

**श्लो ॥ एव मुन्मत्तता मेत्य । प्रलपन्त्यो मृगीदृशः**
**यशोदादारकाद्वैत । मापु स्तद्भावनाबलात् १२१**

एव मिति– मृगीदृशः स्त्रियः, उन्मत्ततां उन्मादवत्त्व, मेत्य प्राप्य, एवं पूर्वोक्तरीत्या, प्रलपन्त्यः विलपन्त्यस्सत्यः तद्भावनाबलात श्रीकृष्णनिरन्तरध्यानप्रभावात्, यशोदादारकाद्वैतं कृष्णाभेद, मापुः भेजिरे । भ्रमरकीटन्यायादिति भावः । भक्तिरसस्य पराकाष्ठेयम् ॥ १२१

अव– अथ यशोदादारकाद्वैत मापु रिति यदुक्तं तदेव वर्णयति त्रिभिः, वधूरित्यादिभिः ।

**श्लो ॥ वधू रधा त्काचि दळीकपूतना । स्तनौ विनोदेन जनार्दनायिता**
**प्रयातु तत्र प्रळयं पुरोदिता । तथा द्वितीयापि पुन स्तदद्भुतम् ॥१२२**

वधूरिति– जनार्दनायिता जनार्दनवदाचरिता, कृष्णायमानेत्यर्थः । काचि द्वधूः स्त्री, विनोदेन विलासेन, अळीकपूतनास्तनौ कपटपूतनाकुचौ, पूतनायितायाः कस्याश्चि त्कृद्रोपस्त्रीकुचा वित्यर्थः । अधात् पपौ– धेट् पाने इति धातो र्लुङ् । तत्र उभयो र्मध्ये पुरा

प्रथममुदिता, उक्ता अळीकपूतनेत्यर्थः। प्रळयं नाशं, तन्नामकसात्त्विकभावं च– प्रयातु प्राप्नोतु। जनार्दनकृतस्तनपाना त्पूतनेव जनार्दनायितगोपीकृतस्तनपाना दळीकपूतनापि नश्यती तीदं युक्तमेवेति भावः। पुनः किन्तु, तथा पूर्वोक्ताळीकपूतनावत् द्वितीयापि जनार्दनायिता गोपिका च, प्रळयं प्रययाविति लकारविपरिणामेनान्वयः। तत् द्वितीयाया अपि प्रळयप्राप्तिः अद्भुतं चित्रं– पूतनास्तनपानेन जनार्दनस्यैव अळीकपूतनास्तनपानेन कृष्णायितताया अपि प्रळयाभावस्य भवितव्यत्वेन तद्विरुद्धप्रळयसम्भव आश्चर्यावह इति भावः। विरोधाभासालङ्कारः॥ १२२

**श्लो ॥ कयापि तन्व्या मधुसूदनायितं। कयाचि दालम्बि भुजङ्गभावना**
**विजेतु मीशापि भुजङ्ग मादिमा। प्रतारिता प्रत्युत तेन लीलया॥**

कयापीति– कयापि कयाचि, तन्व्या गोपिकया, मधुसूदनायितं कृष्णवदाचरितं, भावे क्तः। कयाचि त्तन्व्या भुजङ्गभावना काळीयध्यानं, आलम्बि स्वीकृतम्। ध्यानेन हि ध्याता ध्येयात्मको भवति। तथा प्रकृते भुजङ्गं भावयन्ती काचिद्भुजङ्गात्मकता मापेत्यर्थः। भुजङ्गव दाचरित मिति यावत्। आदिमा पुरोदिता मधुसूदनायिता गोपी, भुजङ्गं तद्वदाचरितां गोपीं, विजेतुं जेतुं, ईशापि समर्थापि कृष्णायितत्वादिति भावः। प्रत्युत वैपरीत्येन तेन भुजङ्गेन, भुजङ्गायितगोप्येत्यर्थः। लीलया विलासेन, प्रतारिता वञ्चिता। यथा कृष्णो विलासेन भुजङ्गं जिगाय तद्व त्कृष्णायिता विलासेन भुजङ्गा दपजयं प्राप। कृष्णस्य लीलारसप्रधानत्वा दिति भावः। अत्र भुजङ्गेन विटेन कृष्णेन प्रतारिता वञ्चितेति ध्वनिः। मधुसूदनायित मित्यलोपमालङ्कारः॥ १२३

**श्लो ॥ जनार्दनाद्वैत मवाप्य काप्यहो। दवानलापान मनाटयत्तमाम्**
**ततः परीतापधुरा मवाप सा। मृषाविषादो विरहानला दिति ॥१२४**

जनार्दनेति– कापि काचित्, जनार्दनाद्वैतं श्रीकृष्णाभेदं मवाप्य प्राप्य, दवानलापानं दवानलस्य दवाग्नेः रा समन्ता, त्पानं मनाटयत्तमां अतिशयेन अभिनयति स्म। ततः दवानलापाना द्धेतोः सा गोपी परीतापधुरं सन्तापातिशयं 'ऋक्पूरब्धूःपथा' मिति समासान्तोऽप्रत्ययः। अवाप अभजत्। विरहानला द्वियोगरूपा दग्ने र्हेतोः, विषाद स्सन्तापः, आसी दिति शेषः। इत्येवं रूपः प्रवाद इति शेषः। मृषा मिथ्या–अत्र परितापे विरहानलहेतुकत्वं मृषापदेन अपह्नुत्य दवानलपानहेतुकत्वोत्प्रेक्षणात् सावह्नवा गम्योत्प्रेक्षा॥ १२५

**श्लो ॥ अदृश्योऽयं शौरिः पदकमलमुद्राश्रयणत**
**स्सुखं साक्षात्कार्यो भवति ननु योगैः कि मपरैः**

विचिन्त्यैवं तत्र व्यवसितमतीनां न सुदृशां
प्रकाशोऽभू दस्याः क्वचन रजसा क्वापि तमसा ॥ १२५

अदृश्यइति– अदृश्यः दूरीभूतत्वात् द्रष्टु मशक्यः, अयं शौरिः कृष्णः, पदकमलमुद्रा-श्रयणतः– पदकमलस्य कमलतुल्यचरणस्य, मुद्रा चिंह्न, तस्य आश्रयणतः आश्रया द्धेतोः, अन्वेषणाद्धेतो रिति यावत् । सुखं अक्लेशं, साक्षात्कार्यः साक्षात्कर्तु शक्यः, भवति ननु भवति खलु– पदमुद्रानुसारेण हि चोरादयो गृह्यन्ते इति भावः । अपरै र्योगै रुपायैः, किं ? एव मित्थं, विचिन्त्य आलोच्य, तत्र पदमुद्रान्वेषणे, व्यवसितमतीनां निश्चितचित्तानां, प्रवृत्तानामिति यावत्– सुदृशां स्त्रीणां, अस्याः कृष्णपदकमलमुद्रायाः प्रकाशः स्फुरणं, क्वचन क्वचित्, कुञ्जादा वित्यर्थः । तमसा अन्धकारेण, हेतुना क्वापि क्वचित्, मार्गदेशे इत्यर्थः । रजसा परागेण च, नाभूत् न बभूव । आच्छादनादिति भावः । व्यङ्ग्यार्थस्तु– अदृश्यः अस्माक मज्ञानावृतत्वा द्दुर्दर्शः अयं शौरिः परमेश्वरः पदकमलं श्रीकृष्णचरणारविन्दमेव मुद्रा वस्तु तस्या आश्रयणतः ध्याना द्धेतोः सुखं साक्षात्कार्यो भवति । भगवच्चरणारविन्दध्यानात्मकभक्तिमार्गेण भगवान् सुलभ इति भावः , अपरै रन्यै, र्योगै र्लम्बिकादिभिः, किं न किमपि । एवं विचिन्त्य तत्र भक्तिमार्गे व्यवसितमतीनां सुदृशां विदुषां अस्याः पदकमलमुद्रायाः प्रकाशः मनसि परिस्फूर्तिः क्वचन क्वचित्समये, तमसा तमोगुणेन, क्वापि समये रजसा रजोगुणेन च, नाभूत् । रजस्तमोगुणाविर्भाव-समये चित्तैकाग्र्याभावा दिति भावः ॥ १२५

ग ॥ एव मनिकटविकटाटवीपर्यटनपाटवपाटलचरणयुगळा वल्लवलोललोचनाः क्वचन नितान्तनिमग्ना मरविन्दलोचनचरणकमलमुद्रामवलोक्य कामपि कामिनी मनुरागभरेण बभार भुजशिरसा यशोदाकिशोर इति निर्धार्य धार्यमाणधैर्यविपर्यया बभूवुः ॥ १२६

एव मिति– अनिकटविकटाटव्यां दूरीभूते विशाले वने पर्यटनपाटवेन परिभ्रमणाभ्यासेन हेतुना पाटलं रक्तं चरणयुगळं पादद्वयं यासा न्ताः अटव्यां सुदूरं परिभ्रमणेनारुणितचरणा इत्यर्थः । वल्लवलोललोचनाः गोपस्त्रियः क्वचिद्देशे नितान्तनिमग्ना मत्यन्ताधःप्रविष्टा मित्यर्थः । भावातिरेका-दिति भावः । अरविन्दलोचन चरणकमलमुद्रा श्रीकृष्णपादारविन्दचिह्नं अवलोक्य दृष्ट्वा यशोदा-किशोरः कृष्णः कामपि काञ्चित महाभागामित्यर्थः । कामिनीं तरुणीं अनुरागभरेण प्रेमातिशयेन भुजशिरसा स्कन्धेन बभार उवाह । इति एवं निर्धार्य निश्चित्य, धार्यमाणधैर्यविपर्यायाः धार्यमाणः प्राप्तः धैर्यविपर्ययः अधैर्यं याभि स्ताः अधीरा इत्यर्थः । कामपि धृत्वा क्वापि देशान्तरं ययौ कृष्णः नभवति खल्वस्य पुनरागमनमिति तासा माशयः । बभूवुः अभवन् ॥ १२६

श्लो ॥ पङ्के घने रज़सि वा प्रचुरे कथं त
दभ्युन्नतं त्रिजगतोऽपि गुरोः पदं स्यात्
कामाभिभूतमनसा मिद माविरस्तु
तत्त्वावधारणकथां कथ मन्तरेण ॥ १२७

पङ्के इति– ते ज़गतोऽपि त्रिभुवनादपि गुरो र्दुर्भरस्य, लोकत्रयापेक्षया ष्यति स्थूलस्ये-त्यर्थः। विश्वं भरत्वादिति भावः। कृष्णस्य तत्प्रसिद्धं पदं चरणं, तच्चिह्न मित्यर्थः। घने सान्द्रे, पङ्के कर्दमे, प्रचुरे अतिशये, रजसि परागे, च कर्दमवति रजोवति च प्रदेशे इति भावः। अभ्युन्नतं उत्तानं उपरिस्थ मित्यर्थः। कथं स्यात् न कथमपीत्यर्थः। सान्द्रकर्दम-धूल्यो विद्यमाना यस्य कस्यापि पदमुद्रा अतिनिम्ना भवति; अतिस्थूलस्य तु किमुतेति भावः। ननु कुत इदं स्त्रीभि र्नज्ञात मत आह कामेति– कामाभिभूतमनसां कामार्तानां सुदृशां तत्त्वावधारणकथामन्तरेण वस्तुतत्त्वविचारं विना, इदं तत्त्वं कथं केन प्रकारेण आवि रस्तु जायेत न कथमपीत्यर्थः। व्यङ्ग्यार्थस्तु- घने अधिके, पङ्के पापे, सति प्रचुरे रजसि रजोगुणे च सति, ते जगतोऽपि गुरोः ते जगत्पतेः कृष्णस्य सम्बन्धि अभ्युन्नत मत्युत्कृष्टं पदं चरणं कथं केन प्रकारेण दृष्टमिति शेषः– स्या द्भवेत् जनेनेति शेषः। पापिनो राजसाश्च जनाः भगवत्पादारविन्दं साक्षा त्कर्तुं नाधिकुर्वन्तीति भावः। तत्र हेतु माह कामेति– कामेत्युपलक्षणं। कामक्रोधादिभि र्महामोहभटै रभिभूतं विक्षिप्तं मनो येषां तेषां जनानां, तत्वावधारणकथा मन्तरेण वेदान्तविचारं विना, इदं भगवत्पादारविन्दं कथ मावि रस्तु आविष्कृतं स्यात्– एत त्साक्षात्कारो न भवति तादृशाना मिति भावः। यद्वा– भगवानिति कश्चन नास्ति; अनुपलभ्यमानत्वात्। शशशृङ्गव दिति तर्कावष्टम्भेन विवदमानानां बौद्धादीनां प्रतिक्षेपणार्थोऽयंश्लोकः। तथाहि– बौद्धादीनां हृदि घने पङ्के पापहेतौ तमसि तथा प्रचुरे रज़सि रजोगुणे च सति अर्थात् तमोगुण कार्येषु तन्द्र्यादिषु, रजोगुणकार्येषु दुरहङ्कारादिषु च सत्सु इत्यर्थः। ते जगतोऽपि गुरोः कारणस्य ब्रह्मणः अभ्युन्नतमपि पदं स्वरूपं कथं स्यात्– कथं प्रतीयेत्यर्थः। तेषां भगवत्स्वरूपज्ञानं नैव भवेदिति भावः। तत्र हेतु माह कामेति– कामाभिभूतमनसां जनानां तत्त्वा वधारणकथा मन्तरेण, इदं भगवत्तत्त्वं, कथ माविरस्तु स्फुरतु, न कथ मपीत्यर्थः। वेदान्ततत्त्वविचारेण मनसि प्रसन्ने सति तदानी मुपलभ्येत– कामाभिभूतानां युष्माकन्तु कथ न्तदुपलब्धिः। न हि युष्मदुपलब्ध्य-भाव मात्रेण ब्रह्मणोऽसत्त्वं कल्पयितुं शक्येत– तथात्वे असमदृष्टानां मेर्वादीनां पर्वतानामपि असत्त्वं स्यात् इति भावः॥ १२७

ततश्च– एवं गोपीना मधैर्यप्रा प्त्यनन्तर मित्यर्थः॥

अव– अथ कामपि कमिनीं बभार भुजशिरसा यशोदाकिशोर इति यदुक्तं तत्र स्कन्धेन गोपीवहने हेतु मुत्प्रेक्षन्ते– समुत्पात्येति–

**श्लो ॥ समुत्पात्य प्रेमामृतजलधिपूरे प्रियतमां**
**प्रियः क्षेप्तुं वाञ्छन्निव स कतमामेव मवहत्**
**भवत्वेत त्तप्त्वा कमपि तपसां सञ्चय मिदं**
**निजै र्लीलाजालै रितरदुरवापं किमतनोत् ॥ १२८**

समुत्पात्येति– सः प्रियः कृष्णः, कतमां कामपि, प्रियतमां प्रेयसीं, समुत्पात्य उद्धृत्य, प्रेमामृतजलधिपूरे प्रेमैवामृतं सुधा तस्य जलधि स्समुद्रः तस्य पूरे जलौघे, क्षेप्तुं पातयितुं, वाञ्छन् इच्छन्निवेत्युत्प्रेक्षा। एव मिद्ध, मवह द्बभार। केन चिदुत्पात्य जले पातितं वस्तु यथा गाढं निमज्जति तद्वत्कृष्णेनाङ्क मारोपिता तन्वी प्रेमजलधौ गाढं निमज्जतीति भावः– रूपकानुप्राणितो-त्प्रेक्षालङ्कारः। एतत् कस्याश्चि त्प्रियतमायाः श्रीकृष्णेन स्कन्ध मारोप्य लालितत्वं, भवतु; अस्माकमपि तस्या स्तथात्व मिष्टमेव– श्रीकृष्णस्य दक्षिणनायकत्वेन एतावता नास्माकं हानि रिति भावः। इयं प्रियतमा, कमप्यनिर्वाच्य, मत्यधिक मित्यर्थः– तपसां सञ्चयं समूहं, तप्त्वा कृत्वा, निजैः स्वीयैः, लीलाजालैः स्मितभ्रूविक्षेपादिविलाससमूहैः, तमिति शेषः। कृष्णं इतरदुरवापं अन्यदुर्लभं, अतनोत् चकार किम्। सा च केनचि त्तपोबलेन तस्य दक्षिणनायकत्वमपि विघटितवती स्वस्मिन्नेवानुरक्तं चकार– कथ मन्यथा प्रिय स्तामुत्सृज्य नागच्छेदिति भावः। अत्राप्युत्प्रेक्षा-लङ्कारः। अत्र कमपि तपसां सञ्चयं तद्रूपं कृष्णं, इयं तन्वी, निजै र्लीलाजालैः लीलाप्रधानैः जालैः, मत्स्यबन्धनरज्जुभिः 'आनायः पुंसि जालं स्या' दित्यमरः। तप्त्वा बद्ध्वा मत्स्यवदिति भावः। इतरदुरवापं स्वाधीनत्वेन अन्यत्र गन्तु मशक्तत्वा दितरदुर्लभ, अतनो त्किमिति ध्वनिः॥ १२८

अव ॥ अथ अलमल मित्यादिभि रष्टभि र्गोपीनां विलापं वर्णयति।

**श्लो ॥ अलमल मपयामि मुञ्च भीतां गुरुजनतः कितवेति भाषिणीं माम्**
**चिर मुचितवचोभि रन्वनैषी न्मधुमधुरै स्सकथं कृपां जहाति ॥१२९**

अलमलमिति– हे कितवधूर्त! अलमलं सम्भ्रमात् द्विरुक्तिः– सम्भोगेन पर्याप्त मित्यर्थः। अपयामि अपगच्छामि, अहमित्यस्याक्षेपः। गुरुजनतः श्वश्रूश्वशुरादे र्गुरुजनात्, भीतां मामिति शेषः। मुञ्च त्यज, त्व मित्यस्याक्षेपः– इत्येवं भाषिणीं वदन्तीं मां, स इत्यनेन य इत्याक्षिप्यते। यः मधुमधुरैः मधु मद्यं, मकरन्दोवा, तद्वन्मधुरैः स्वादुभिः, उचितवचोभिः तत्कालानुगुणवाक्यैः चिरं बहुकाल मन्वनैषीत् अनुनयामास। सः कृष्णः, कृपां दयां, कथं जहाति त्यजति, तादृशस्य कुतोऽद्य मयि दया नासीदितिभावः॥ १२९

श्लो ॥ कदा वा लावण्यामृतरसपरीवाहनिलयं
पुरः प्रादुर्भूतं मधुरमधुरं वीक्ष्यदयितम्
हरे शौरे कान्त प्रियतम सरोजाक्ष शरणं
भवेति क्रोशन्ती निमिषमिव नेष्यामि दिवसान् ॥ १३०

कदावेति– लावण्यामृतरसपरीवाहनिलयं लावण्यं छायाविशेषः तदेव अमृतरसः सुधारसः तस्य परीवाहानां प्रवाहानां, निलय माश्रयं, समुद्रमिति यावत । मधुरमधुरं अतिरुचिरं– नित्य-वीप्सयो रिति नात्र द्विर्भावः-सुब्सुगसम्भवात्-प्रकारे गुणवचनस्येत्यपि न; सादृश्यस्य अद्योत्यत्वात् । नह्यत्र मधुरसदृश मित्यर्थो मूलकारेण विवक्षितः- तस्मात् मधुरादपि मधुर इति पञ्चमीसमासः पुरः अग्रे, प्रादुर्भूत माविर्गतं, दृश्यमानमिति यावत्- दयितं प्रियं, वीक्ष्य हेहरे हरत्याश्रिततापमिति हरिः- तत्सम्बुद्धिः । हे शौरे, शूर इतिकश्चन यदुवंश्यो राजा, तस्यापत्यं शौरिः तत्सम्बुद्धिः- अपत्यं पौत्रप्रभृतिगोत्र मिति सङ्केतिकत्वात् । उत्तमवंशप्रसूतत्वेन उत्तमगुणशालिन्निति सम्बुद्ध्यभिप्रायः । हे कान्त! कमनीय! हे प्रियतम प्राणेश! हे सरोजाक्ष कमलाक्ष त्वं शरणं रक्षिता भव इति क्रोशन्ती आह्वयमानासती- क्रुश आह्वाने इति धातुः- यद्यपि पुरोगतस्य आह्वान-मनुपपन्नं; तथापि पुरो दूरे दृश्यमानस्य आह्वानं घटते इति ज्ञेयं । यद्वा क्रोशन्ती शब्दायमाना-सती- धातूना मनेकार्थत्वात्- दिवसान् दिनानि निमिषमिव निमिषपरिमितकालमिव, कदा वा नेष्यामि गमयिष्यामि । अधुना विरहावस्थायां, निमिषं दिनानीव यथा नयामि; तथा संयोगे दिनानि निमिषमिव निमिषपरिमितकालमिव कदा वा नेष्यामि गमिष्यामि । अत्र शृङ्गाररसस्य कदावेति पदसूचितश्चिन्ताख्य स्सञ्चारीभावोऽङ्गमिति प्रेयोऽलङ्कारः । किञ्च शान्तरसस्य कदावेति पदसूचित श्चिन्ताख्यो व्यभिचारीभावोऽङ्गमित्यत्र प्रेयोऽलङ्कारोऽन्यो ध्वन्यते । ‘कदा वाराणस्या ममरतटिनीरोधसि वस’ न्नित्यादाविवेति बोध्यम् ॥ १३०

श्लो ॥ त्यक्त्वा धर्मकथां निजा दुपनतां केळीसुखं च प्रिया
न्मोहा दुच्चसुखानुभूतिचपला विस्रम्भमाप्ता स्त्वयि
नाथत्वं च न वीक्षसे यदि कृपातुङ्गै रपाङ्गै स्तदा
अप्राना मुभयत्र हन्त शरणं किं स्या द्गतिः का हि नः ॥ १३१

त्यक्त्वेति– हे नाथ पते! निजात् स्वजना, दुपनतां प्राप्तां, निजजनेनोपदिष्टा मित्यर्थः । धर्मकथां धर्मवार्तां, तथा परपुरुषं नगच्छे दयं स्त्रीणां कुलधर्म इत्येवंरूपस्वजनप्रबोध मवमत्येति भावः । प्रिया त्पाणिगृहीतु स्सकाशा, ज्जातं केळीसुखं क्रीडासुखं च, मोहात् त्यक्त्वा-निजा

दुपनतमिति पाठे- धर्मकथां निजात् स्वीयात् प्रिया दुपनतं प्राप्तं, केळीसुखञ्च, इत्येतत् द्वयं मोहा दज्ञानात्, त्यक्त्वा विसृज्ये त्यन्वयः। अयमेव पाठो गरीयान्। उच्चसुखानुभूतिचपलाः अधिकसुखानुभवासक्ताः, वयं त्वयि विस्रम्भं विश्वास, माप्ताः प्राप्ताः, अभवामेति शेषः। कामिन्यो हि भर्तु स्सकाशात्सुख मल्पमिति, उपपते स्सकाशा दधिकं सुखं स्यादिति च, मत्वा, भर्तार मवमत्य, उपपतिना संयुक्ता भवन्तीति लोकसिद्धार्थानुवादोऽयम्- त्वञ्च त्वमपि, चकारात् निजः प्रियो न पश्यत्येवेत्यर्थः। कृपातुङ्गैः दयोन्नतैः, अपाङ्गैः कटाक्षैः, न वीक्षसे यदि अस्मानिति शेषः - नपश्यसिचेत् उभयत्र धर्माधर्ममार्गयो रुभयोरपि भ्रष्टानां स्खलितानां, नः अस्माकं किं वस्तु शरणं रक्षकं, स्यात् न कोऽपि रक्षक इत्यर्थः। तथा नः का हि कावा, गतिः प्राप्यस्थानं स्या द्भवेत्। जन्मान्तरे यद्यपि नरकगतिरेव भवेत् - अधुनापि दुर्गतिरेव नतु सुगति स्स्या दिति भावः। व्यङ्ग्यार्थस्तु- धर्मकथां त्यक्त्वा 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजे'ति गीता वचनादिति भावः। मोहा द्धेतोः देहादि ष्वात्मत्वभ्रमाद्धेतोः। तादृशभ्रमहेत्वज्ञानादिति वा निजात्प्रिया दुपलक्षण मिदं पुत्रादीनाम्। उपनतं केळीसुखं सांसारिकसुख मित्यर्थः। त्यक्त्वा देहादिष्वनात्मत्वभ्रान्त्या इतः पूर्वं भर्तृपुत्रादिक्रीडाजन्यं संसारसुख मासीत्- इदानीं त्वद्गीतामाहात्म्यात् तादृशमोहानिवृत्ते र्न संसारसुख मिति भावः। एवं संसारसुखत्यागे हेतु माहः- उच्चसुखानुभूतिचपला इति- मोक्षसुखासक्ता इत्यर्थः। त्वयि परमेश्वरे 'अकाम स्सर्वकामो वा मोक्षकाम उदारधी' रित्युक्तत्वादिति भावः। विस्रम्भं भक्तिमित्यर्थः। आप्ता अभवाम। हे नाथ परमेश्वर! त्वं च त्वमपि, चात् यज्ञादिधर्माचरणे इन्द्रादयः कृपां कुर्युः। तादृशधर्मत्यागा त्त तेषा मप्यस्मासु दयेति भावः। कृपातुङ्गैरपाङ्गै र्न ईक्षसे यदि उभयत्र इहामुत्र फलयो रुभयो र्भ्रष्टानां नः किं शरणं स्यात्- भर्तृपुत्रादित्यागा दैहिकसुखनाशः सर्वधर्मत्यागा दामुष्मिकस्वर्गसुखनाशः इति भावः। नः का वा गति स्स्या दुर्गतिरेवेत्यर्थः। आपातब्रह्मज्ञानिनां वेदविहितकर्माननुष्ठातॄणां केवलभक्तिमार्गनिरतानां भगवानेव रक्षकः- तस्य कृपाऽभावेतु एवं विधानां दुर्गतिरेवेति भावः। अत्र यदि त्वं निर्दय स्स्या त्तर्ह्यस्माकं दुर्गतिरेवेति वर्णना त्सम्भावनालङ्कारः। 'सम्भावना यदीद्धं स्यादित्यूहोऽन्यस्य सिद्धये' इति लक्षणात्। तेन च यथा त्वयि निर्दयत्व मसम्भावितं तथास्मासु दुर्गतिकत्व मप्यसम्भावित मेवेति फलितम्॥ १३१

श्लो॥ प्राणेश मुग्धमधुरं वदनं सकृत्ते
सन्दर्शयाशु न ततोधिक मर्थये त्वाम्
अभ्युद्यतो निरपराधिवधूवधार्थ
मन्तर्दधातु कितव स्त्रपया शशाङ्कः॥ १३२

प्राणेशेति– हे प्राणेश प्राणनायक! एतेन शरीरमात्रस्यैव निजो भर्ता ईशो भवति-नतु प्राणाना मिति व्यज्यते । मुग्धमधुरं, मुग्धेभ्य स्सुन्दरेभ्य श्चन्द्रादिभ्योऽपि, मधुरं सुन्दरं, ते तव, वदनं सकृ देकवारं; न तु बहुवारमिति भावः । आशु द्रुतं, विळम्बे सति न वयं भविष्याम इतिभावः । सन्दर्शय सम्यग्दर्शय । एतावता तव न कोऽपि श्रम इति भावः । यदि त्वं चुम्बनादिकमपि वयं प्रार्थयामेति मत्वा मुखं दर्शयितुं सङ्कोचं यासि; न तथा वयं दुराशा इत्याहुः- ततः तस्मादधिकं, अन्यत्, त्वां नार्थये । प्रत्येकाभिप्राया देकवचनं। नप्रार्थयामहे इत्यर्थः । ननु केवलास्मन्मुखसन्दर्शनमात्रेण किं युष्माकं फलं स्या दत आहुः- अभ्युद्यत इति । निरपराधिवधूवधार्थं अपराधरहित स्त्रीनिबर्हणार्थं, स्त्रिय श्चात्र वियोगिन्य एवेति ज्ञेयं- संयोगिनीनां चन्द्रद्वेषासम्भवात् । अभ्युद्यतः उत्पन्नः, उद्युक्त इति वा, कितवो धूर्तः, घातुक इत्यर्थः । शशाङ्कः मृगलाञ्छन श्चन्द्रः, एतेन यथा व्याधः स्वपरिपुष्टं कञ्चन मृगं स्वपार्श्वगतं मृगेभ्यः प्रदर्शयित्वा, तेन तेषां मृगपक्षपात्येवायं, न तु मृगघातुक इति भ्रान्तिं जनयित्वा, सन्निहितान् मृगान् हन्ति तद्वदयं चन्द्रोऽपीति ध्वन्यते । त्रपया लज्जया, हेतुभूतया, अन्तर्दधातु तिरोहितो भवतु । त्वन्मुखस्य निरङ्कत्वात् , स्वस्य साङ्कत्वाच्च, त्रपित स्सन् क्वापि पलायता दित्यर्थः । परिकराङ्कुरालङ्कारः । चन्द्रादपि त्वन्मुखमधिक मित्यर्थत स्सिद्धत्वा त्प्रतीपालङ्कारो ध्वन्यते । अत्र पूर्वार्धे चिरा द्भगवन्तं मनसा ध्यायतः कस्यचिद्भगव त्साक्षात्कारो त्कण्ठितस्य प्रार्थनेयम् । हे प्राणेश प्राणनियामक! 'यः प्राणेषु तिष्ठन् प्राणाना-मन्तरोयमयती 'ति श्रुत्या भगवतः प्राणप्रेरणश्रवणात् । इदं चोपलक्षणंसर्वान्तर्यामित्वस्य- तथा च हेसर्वान्तर्यामिन्! इति यावत् । मुग्धमधुरं ते वदनं, सकृ त्सं दर्शय सर्वान्तरत्वाद्यथा त्वं स्तम्भादप्युद्भूत स्तद्वदधुना मत्पुरोऽवतीर्य, मह्यं प्रसन्नं तव वदनं दर्शये त्यर्थः । मह्यं प्रसादेन प्रत्यक्षोभवेति भावः । नचैवं प्रत्यक्षं त्वां कमपि वरं याचितु मह मुत्सहे । येन लुब्धस्येव तव भीति स्स्यादित्याह- ततोऽधिकं त्वां नार्थये । त्वत्साक्षात्कारादन्यस्य स्पृहणीयस्य वरस्यैवा भावादिति भावः- इति ध्वन्यते । उत्तरार्धे तु- समुद्रसुतत्वेन महाकुलीनोऽप्ययं चन्द्रः वियोगिनीदौर्भाग्यवशा त्तन्नाशाय प्रवृत्तस्सन् स्वभगिनीभर्तारं दीनजनरक्षकं भवन्तं दृष्ट्वा, त्रपितस्सन् , स्वावलम्बितमकार्यकरणं त्यजेत् । स्त्रीवधस्य गर्हितत्वादिति भावो ध्वन्यते ॥

**श्लो ॥ कन्दर्प लोपनविधावबलाजनस्य**
**निन्द्या पराक्रमविधा कतमेयमार्यैः**
**त्वां रूपशौर्यविभवा दभिभावयन्त**
**मुद्वीक्षसे यदि हरिं पुरुष स्तदास्याः ॥ १३३**

कन्दर्पेति-- हेकन्दर्प मन्मथ! कमिति मान्त मव्ययं कुत्सिते, कुत्सितोनिन्द्यो दर्पो यस्य सः कन्दर्प इति व्युत्पत्तिः- अत एव परिकराङ्कुरालङ्कारः । आर्यैः साधुभिः, निन्द्या

गर्ह्या, अबलाजनस्य स्त्रीजनस्य, लोपनविधौ मारणकर्मणि विषये, इयं, तवेतिशेषः पराक्रमविधा पौरुषरीतिः, कतमा का ? तुच्छेत्यर्थः । स्त्रीषु पराक्रम स्तुच्छ इति भावः । रूपशौर्यविभवात् रूपशौर्ययोः सौन्दर्यपराक्रमयोर्विभवा त्सामर्थ्यात् , समृद्धेरिति वा हेतोः, त्वां अभिभावयन्तं तिरस्कुर्वन्तं, हरिं कृष्ण, मुद्वीक्षसे यदि पश्यसि चेत् , किमुत तेन सह युद्धप्रसङ्ग इति भावः । तदा तदानीं, पुरुषः पुमान् , स्याः भवेः । पुरुषेष्वेव पराक्रमः कर्तव्यः- तत्रापि स्वतुल्येषु पराक्रमः उचितः; स्वाधिकेषु पराक्रमस्तु श्लाघ्य इति भावः । किं च तव कृतापराधश्चायं हरिः रूपशौर्यविभवेन त्वदभिभावकत्वादिति कृत्वा, स्वशक्तौ तस्मिन् , तव पराक्रम श्लाघीयान्- तस्मात् निरपराधाः स्त्रियो हित्वा सापराधं पुरुषं बाधितुं यदि तव शक्ति र्बाधस्व- इदमेव तव पौरुषं- यदि न शक्ति स्तर्हि; स्त्रीवत्तूष्णीं तिष्ठ, इति निष्कर्षः । अत्र यथा मन्मथबाणव्यथा अस्माकं भवति तथा कृष्णस्यापि- स्याच्चेत्- कृष्णोऽस्मान्विहाय नापगच्छेत्- यदि कथञ्चि द्गच्छे त्तर्हि तदैव पुनराग़च्छेत् । अतः कृष्णस्य मदनबाणव्यथा नास्तीति मत्वा, भोमन्मथ ! त्वं तं बाधस्व- कुतोऽस्मानिति गोपिकाः मन्मथ मुपालभन्ते स्मेति गूढाशयः । उत्तरार्थे सम्भावनालङ्कारः त्वां रूपशौर्यविभवा दभिभावयन्त मिति साभिप्राय-विशेषण निर्देशा त्परिकरालङ्कारः । पुरुषे मन्मथे पुरुषत्वे स्वतस्सिद्धे सति, हरिदर्शनात्पुरुषत्वस्य पुनर्विधानात् विध्यलङ्कारः । 'सिद्धस्यैवविधानं यत्तामाहु र्विध्यलङ्कृति' मिति लक्षणात् ॥१३३

श्लो ॥ कल्याणजालनिलयं करुणारसार्द्र
मानन्दकन्द मनवद्य मुखारविन्दम्
त्रैलोक्यमोहन मनून मनाप्तपुण्या
हा हन्त कान्त मिह तं क्व विलोकयामः ॥ १३४

कल्याणेति– कल्याणजालस्य मङ्गळसमूहस्य, निलय मावासं, कल्याणजाल निलयं, सकलकल्याणपरिपूर्ण मित्यर्थः । करुणारसार्द्रं दयारसेन शीतलं, आनन्दकन्दं आनन्दस्य सुखस्य, कन्दं मूलभूतं, स्वय मानन्दमय स्सन् ; परेषा मानन्दस्य हेतुभूत इति भावः । अनवद्य-मुखारविन्दं अनवद्यं निर्दुष्टं, न तु चन्द्रवत्साङ्कमिति भावः । अरविन्दं कमलमिव मुखं वदनं उपमित समासः- तेन उपमालङ्कारः । यस्य तं तथोक्तं- त्रैलोक्यमोहनं त्रिजगन्मोहजनकं अत एव अनूनं ऊन स्स्वल्पः नभवतीत्यनूनः उत्कृष्टः, तं प्रसिद्धं कान्तं, पतिं कृष्णं, यद्वा कान्तं कमनीयं, तं कृष्णं, अनाप्तपुण्याः अकृत सुकृताः, वयं इह वने क्व कुत्रवा ? विलोकयामः पश्यामः, न कुत्रापीत्यर्थः । यदि वयं कृतपुण्या स्तर्हि सः दृश्येत; अकृतपुण्याना मत एव अभाग्याना मस्माकं कथं तादृश पतिदर्शन मिति भावः । हा हन्तेति खेदातिशये । अत्र तादृशं भगवन्तं अनाप्तपुण्याः वय मिह कलियुगे कदा विलोकयामः- यदि वयं

सुकृतिन स्तर्हि; कृतादियुगलये अस्माकं स्थिति स्स्यात्- तदानीं भगवद्दर्शनं जायेत न त्वेवमिति ध्वन्यते ॥ १३४

श्लो ॥ रोषो भवे द्यदि निरस्य मदङ्गसङ्गि
चेलं कुचौ रचय निर्दयमर्दनार्हौ
दन्तै र्नखै रपि लुनीहि कपोतनादै
स्सन्त्रास्य पातय ततो विवशां सुखाब्धौ १३५

रोष इति- रोषः कोपः, भवेत् स्या द्यदि चेत्, तव मयीति शेषः। मदङ्गसङ्गि मदवयव सक्तं, चेलं कुचवासः, निरस्य अपनीय, कुचौ स्तनौ, निर्दयमर्दनार्हौ निर्दयं यथातथा मर्दनीयौ, रचय कुरु, निर्दयम्मर्दयेत्यर्थः। पित्रादीनां पुत्रादिषु यदि कोप स्तर्हि पुत्रादीन् ते यथेच्छं मर्दयित्वा तं कोपं यथा शमयन्ति; तद्वत्त्वमपीति भावः। यदि तावता रोषो नशाम्यति; तर्हि दन्तैः रदनैः, नखैः कररुहैश्च, लुनीहि छेदय, कुचाविति पदमलापि सम्बध्यते। यदि पुन रेतावतापि रोषो न शाम्यति; तर्हि कपोतनादैः कपोतः पारावतः- पारावतः कलरवः कपोत- इत्यमरः। तस्य नादै र्ध्वनिभि रिति निदर्शनालङ्कारः। कपोतध्वनितुल्यध्वनिभि रित्यर्थः। सन्त्रास्य भीषयित्वा, तत्र एवं करणानन्तरं, विवशां परवशां, मामिति शेषः। सुखाब्धौ सुख- समुद्रे, पातय क्षेपय। यथा प्रबलः अत्यन्तं कुपितः कश्चित् स्वरिपुं मर्दयित्वा नखदन्तादिभि श्छेदयित्वा, तर्जनभर्त्सनादिभि र्भीषयित्वा, तावतापि कोपाशान्तौ तं समुद्रे पातयित्वा शान्तो भवति- एवं त्वमपीति भावः। अत्र मर्दनादिषु दोषेष्वपि सुखरूपगुणदर्शनेन तदभ्यर्थनायाः कृतत्वा दनुज्ञालङ्कारः। यदि त्वं पुरुष स्तर्हि ते रोष स्स्यादेव- यदि रोषस्तर्हि मदुक्तं सर्व मवश्यं करिष्यसि- नोचेत्त्वं क्लीब एवेति गोपीकृतो गूढः कृष्णो पालम्भः प्रतीयते ॥ १३५

श्लो ॥ अकृत्यं मत्वेदं निरणय मनर्थं गुरुजना
द्गतं पातिव्रत्यं सुखमपि विगीतं न सुलभम्
इयं च प्रत्याशा न विरमति हहा तदनुगा
विधे र्वैधेयाग्रयव्यवसितमये किन्तु भवता ॥ १३६

अकृत्यमिति- इदं जारसम्भोगरूपं कृत्यं अकृत्यं दुष्कर्म, मत्वा ज्ञात्वा, इतः प्राक्कामा- न्धत्वा त्कृत्याकृत्यविवेकशून्या अस्मि। इदानीं तु इद मकृत्य मिति ज्ञातमिति भावः। गुरुजनात् श्वश्रूश्वशुरादिभ्य, स्सकाशा दनर्थं पीडां, निरणयं निश्चितवत्यस्मि-गुरवो हि अकृत्यकारिणः पुत्रादीन् पीडयन्तीति भावः। पातिव्रत्यं पतिव्रतात्वरूपः स्त्रीजनसाधारणो धर्मः, गतं नष्टं, परपुरुषसम्भोगेन तन्नाशादिति भावः। गुरुजनानर्थपातिव्रत्यनाशयो रुभयो रङ्गीकारेऽपि सुखमपि नाभू दित्याह- विगीतं विद्वद्भि र्गर्हितं, सुख मानन्दमपि सुलभं सुप्रापं, न नभवति- निन्दित मपीदं जारसम्भोगजं

सुख मस्माकं दुर्लभमेवाभूदिति भावः। नन्वधुनापि अस्मा दुष्कृत्या द्विरमस्वे त्यत आह- तदनुगा तं जारं कृष्ण मनुगच्छतीति तदनुगा जारानुसारिणी, इयं प्रत्याशा दुराशा च, न विरमति न निवर्तते। हाहेति खेदे। एवं स्वस्य दुर्बुद्ध्युदये विधिं हेतुं मत्वा निन्दति– विधे इति- अये भो वैधेयाग्र्य मूर्खाग्रेसर! विधे ब्रह्मन्! भवता त्वया, इदं एतत्, व्यवसितं निश्चितं, किम्? निश्चित्य मत्फाले लिखितं किमित्यर्थः। व्यङ्ग्यार्थस्तु- इदं संसरणं अकृत्यं तुच्छसुखावहत्वा दकर्तव्यं, मत्वा आलोच्य, संसारे निर्वेदं प्राप्येत्यर्थः। गुरुजनात् तदुपदेशा दित्यर्थः। अनर्थं दुःखबहुळत्वा दात्मपातहेतुत्वा च, अनर्थावहं निरणयं। संसरण मित्येव- एवं गुरूपदेशप्राप्त्यनन्तरं पातिव्रत्यं पतिसेवागतं त्यक्तं विगीतं तुच्छं, अत एव सुलभमपि सुखं सांसारिकं न सर्वमपि संसरण सुखं त्यक्तवत्यस्मीत्यर्थः। योगिनी अभवमिति फलितार्थः। इयं तदनुगा संसारानुगा प्रत्याशा तु न विरमति। हाहेति खेदे 'दम्भन्यासमिषेण वञ्चितजनं भोगैकचिन्तातुर' मिति श्रीधरीयवचनात्। संसारं त्यक्तवत्या योगिन्या अपि संसाररसनाङ्कुरो न नष्ट इति भावः। अये वैधेयाग्र्य! विधे! भवता इदं व्यवसितं किम्? संसारमोक्षाभ्या मुभाभ्यामपि वञ्चिता भूयाः इति मत्फाले भवता लिखितं किमित्यर्थः॥ १३६

**ग॥ एव मभिधाय समारब्धरोदनादिभिः अतिशयितविरहकृशानुभावाभि राभीरभामिनीभि श्श्यामाभि रपि पाण्डुराभि स्तरुणीभि रपि पुराणपुरुषाभिलाषिणीभि रार्द्रीकृतहृदयो यशोदानन्दन स्तदनु पुरतः प्रादुरभवत्॥ १३७**

एवमिति– एव मिद्ध, मभिधाय उक्त्वा, समारब्धरोदनादिभिः प्रारब्धरुदिताभिः, अतिशयितेन अधिकेन विरहकृशानुना, वियोगाग्निना, हेतुना, कृशः क्षीणः, अनुभावः सामर्थ्यं, यासा न्ताभिः, श्यामाभिरपि, नीलाभिरपि; यौवनमध्यस्थाभिरपीति च पाण्डुराभिः श्वेतवर्णाभिः, विरहादिति भावः। तरुणीभि रपि तारुण्यवतीभि रपि पुराणपुरुषाभिलाषिणीभिः जरठाभिलाषिणीभि, रिति पुरुषोत्तमकाङ्क्षिणीभि रिति च, विरोधाभासालङ्कारद्वयं। अभीरभामिनीभिः गोपकामिनीभिः, आर्द्रीकृतहृदयः शीतलीकृतमानसः, स्वमुद्दिश्य रुदन्तीषु तासु सञ्जातकरुण इति भावः। यशोदानन्दनः कृष्णः, तदनु तदैव, पुरतः तासा मग्रे, प्रादुरभवत् अविरभूत्॥

**ग॥ ताश्च तदनन्तर मकाण्डपतितसुधासारसरस मरविन्दलोचनावलोकनसुख मनुभूय, काचन चरणसंवाहनेन, काचन करावलम्बवितरणेन, काचन व्यजन वीजनेन, काचि दालोकशब्दसमुच्चारणेन, कापि ताम्बूलवीटिकाप्रदानेन, कापि स्वेदाम्बुजालकपरिमार्जनेन, काचि त्पांसुसन्दोहनिरसनेन काचि त्ताम्बूलकरङ्कवहनेन, कापि पल्लवतल्पकल्पनेन च, यथाभिलाष मेन माराध्य, परिपूर्ण मनोरथा बभूवुः॥ १३८**

ताश्चेति ॥ ताश्च गोप्यश्च, तदनन्तरं श्रीकृष्णसाक्षात्कारक्षणे, अकाण्डपतितेन हठात् च्युतेन, सुधासारेण अमृतधारासम्पातेन, सरसं समानरसं, तत्तुल्य मित्यर्थः। अरविन्दलोचनस्य कृष्णस्य, अवलोकनसुखं दर्शनजन्यानन्दं, अनुभूय प्राप्य, काचन काचित्, चरणसंवाहनेन पादमर्दनेन, काचन करावलम्बवितरणेन हस्तावलम्बदानेन, काचन व्यजनवीजनेन ताळवृन्तचालनेन, काचित् आलोकशब्द समुच्चारणेन, जय जयेति शब्दाना मुच्चैः पठनेन, कापि ताम्बूलवीटिकाप्रदानेन पूगफलकर्पूरादिसहितताम्बूलवल्लीदळवेष्टनविशेषः ताम्बूलवीटी त्युच्यते- सैव ताम्बूलवीटिकेति- स्वार्थे कप्प्रत्ययः। तस्याः प्रदानेन वितरणेन, कापि स्वेदाम्बुजालकपरिमार्जनेन घर्मबिन्दुमार्जनेन, काचित् पांसुसन्दोहनिरसनेन, धूळीसमूहापनयनेन, काचित् ताम्बूल करङ्कवहनेन ताम्बूलकरङ्कः ताम्बूलरसनिष्ठीवनपात्रं तस्य वहनेन धारणेन, कापि पल्लवतल्पकल्पनेन किसलयशय्याविरचनेन, च, यथाभिलाषं अभिलाष मनतिक्रम्य, यथेच्छ मित्यर्थः। एवं कृष्ण, माराध्य अर्चयित्वा, परिपूर्ण मनोरथाः सम्पूर्णकामाः, श्रीकृष्ण सेवाया एव तासा मभीष्टत्वा दिति भावः। बभूवुः अभवन् ॥ १३८

**ग ॥ स्थानेहि तत् ॥**

स्थाने इति– तत् श्रीकृष्णदर्शनेन गोपिकानां परिपूर्णमनोरथत्व, मानन्दावाप्ति र्वा, स्थाने हि युक्तम् ॥

अव– योग्यतामेव दर्शयति वनमालिनीति ॥

**श्लो ॥ वनमालिनि मायया परोक्षे सुदृशां शोककृशानु रुदयौ यः**
**स कथं शम मेतु वागभूमिं हरिसाक्षात्कृतितोष मन्तरेण ॥ १३९**

वनमालिनी ति– वनमालिनि श्रीकृष्णे, 'वनमाली बलिध्वंसी कंसाराति रधोक्षजः' इत्यमरः। वनमाला अस्यास्ती त्यत इनि प्रत्ययः। मायया कपटेन, परोक्षे अदृश्ये सति, सुदृशां स्त्रीणां, यः शोककृशानुः शोकाग्निः, उदयौ उत्पन्नः, सः शोककृशानुः, वागभूमिं वचसा मविषयं, अनिर्वाच्य मित्यर्थः। हरिसाक्षात्कृतितोषं श्रीकृष्णदर्शनजन्यानन्दं, अन्तरेण विना, कथं केन प्रकारेण, शमं नाशं, उपैतु प्राप्नोतु। विरहिणीना मुत्पन्न श्शोकः पुनः पतिसङ्गमेनैव निवर्त्यः; नत्वन्योपायेनेति भावः। व्यङ्ग्यार्थस्तु- मायया अज्ञानेन, वनमालिनि परोक्षे- सति, नन्वन्तर्यामिणो भगवतः पारोक्ष्यं प्रति स्वाज्ञानं हि हेतुरिति भावः। सुदृशां विबुधानां, यः शोककृशानुः सांसारिकतापाभिभवजन्यदुःखाग्नि, रुदयौ। सः वागभूमिं मनोमात्रसंवेद्यं, हरिसाक्षात्कृतितोषं गुरूपदेशादिना तत्पदार्थसाक्षात्कारजन्यानन्दं, विना कथं शम मेतु। अज्ञानमूल स्संसारः, तत्पदार्थसाक्षात्कारेणैव निवर्त्यः, न त्वन्योपायेनेति भावः। अज्ञानेन देहतादात्म्यात् ध्यानं प्राप्य, संसरतो जीवस्य ज्ञानेन, तत्त्वं पदार्थशोध-

नात्मकेन ब्रह्माभिन्नत्वे निश्चिते सति, संसारोपरति र्भवतीति रहस्यम् । अत्र शोककृशानु रिति रूपकालङ्कार: । तेन च हरिसाक्षात्कृतितोषस्य अमृतधारारूपणं व्यज्यते ॥ १३९

**श्लो ॥ अनुगृह्य ततो रासविहारै रमणी र्हरिः**
**विरहानलसञ्जातपरीताप मपाहरत् ॥** १४०

अनुगृह्येति– ततः गोपीपरिचर्यानन्तरं, हरिः कृष्णः, रासविहारैः रासक्रीडाभिः, रमणीः गोपीः, अनुगृह्य अनुकम्पिताः कृत्वा, अनुग्रहेण ताभि स्सह रासविहारं कृत्वेत्यर्थः । विरहानलसञ्जातपरीतापं वियोगाग्न्युत्पन्नसन्तापं, अपाहरत् निवारयामास । अर्धा द्वोपीना मित्येव ॥ १४०

**श्लो ॥ तदा सदन मासेदु र्मुदिताः प्रमदा अपि**
**अपि तस्यानुभावेन पतिवाल्लभ्य मभ्ययुः ॥** १४१

तदेति– तदा रासविहारेषु, मुदिता स्सन्तुष्टा स्सत्यः, प्रमदा अपि स्त्रिय श्च, सदनं गृह, मासेदुः प्रापुः । ननु स्वैरिणीना मेतासां पुनः कथं गृहप्रवेशो गुरुभि रभ्युपगतः– इत्यत्राह:- अपीति- तस्य कृष्णस्य अनुभावेन महात्मेनहेतुना, पतिवाल्लभ्यमपि पत्युः प्रेमास्पदत्वमपि अभ्ययुः प्रापुः- किमुत गृहप्राप्तिमिति भावः । भगवतः कृष्णस्य सर्वात्मत्वेन स्वात्माभिन्नत्वात् कृष्णेन सङ्गता स्ताः स्वात्मसङ्गता इव पतयो मेनिरे । श्रीकृष्णभुक्तशाकवशात् दुर्योधनादय इव भृशं ननन्दु श्चेति भावः । यथाह भागवते भगवान् व्यासः- 'यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः प्राणोपहारेण यथेन्द्रियाणां तथैव सर्वार्हण मुच्यते ज्या' इति । वस्तुतस्तु– श्रीकृष्णस्य पञ्चहायनबालत्वा त्तस्मिन् गोपानामपोहाया स्सम्भावनैव न सम्भवतीति, ज्ञेयम् ॥ १४१

**ततः ॥** एवं गोपीविरहानन्तरं ।

**श्लो ॥ राज न्नम्बर मुद्गतां कलयतां कन्यां यशोदात्मजां**
**कृष्णं देवकजात्मजं बल मसौ रोहिण्युपाजीजनत्**
**भीते रानकदुन्दुभि र्व्यरचय त्सर्वं तदेतत्पुरे**
**त्याचख्यौ कलहोत्सुकः क्षितिभृते कंसाय सर्वं मुनिः ॥** १४२

राजन्निति– हेराजन् भूप, अम्बर आकाशं प्रति उद्गतां उत्प्लुतां, कन्यां सुतां, यशोदात्मजां यशोदासुतां, कलयतां भवानिति शेषः । त्वं जानीहीत्यर्थः । तथा कृष्णः देवकजात्मजं देवकीसुतं, कलयता मित्यत्राप्यन्वेति । असौ रोहिणी, बलं बलरामं, उपजीजनत् केवलं जनयामास । नतु गर्भे मासनवकं धृतवती । देवकी तु गर्भे बभारेति भावः । आनकदुन्दुभि र्वसुदेवः, भीतेः त्वत्तो भयात्, तदेतत्सर्वं देवकीयशोदासुतयो र्विनिमयाद्याकारकं समस्तं कृत्यं

पुरा पूर्वं, उत्पत्तिकाले एवेत्यर्थः । व्यरचयत् कृतवान्- इत्येवं सर्वं समस्तं, गुह्यं कलहोत्सुकः कलहप्रियः, मुनि र्नारदऋषिः, क्षितिभृते राज्ञे कंसाय, आचख्ये उवाच । भूभारहरणार्थ मवतीर्णो भगवान् कृष्णः गोपीभिस्सह विहारपरतन्त्रः, भूभारभूतान् कंसादीनुपेक्षतेऽद्यापीति तदसहमान- तया नारदेनैवमुक्त मिति बोध्यम् ॥ १४२

**ग ॥ एत दाकर्ण्य कर्णपरुष मतिविषमरोषजाज्ज्वल्यमानमानसः कंस स्सपदि नारदनिवारणया शिथिलीकृतदेवकीवसुदेवव्यापादनाभिनिवेशो विधाय निगळमाल- सन्दानितौ केशिनामानं निशाचरमपि केशवनिशारणाय समादिश्य महामात्यनिकर माहूय नारदोदितमिदं त मावेद्य मुष्टिकचाणूराभिधानं मल्लयुगळं हलधरवासुदेव प्रति- मल्लतया परिकल्प्य कुवलयापीडनामानं वेतण्डचूडामणिं प्रतीहारप्रदेशं प्रापय्य रङ्गभुवि मञ्चप्रपञ्चनाय कञ्चुकिनः प्रचोद्य शरासनमखविलोकनापदेशेन सपरिवार माहर यशोदानन्दन मिति यथार्थनामान मक्रूरं प्राहिणोत् ॥ १४३**

एतदिति- कर्णपरुषं कर्णकठोरं, मेत न्नारदवचन माकर्ण्य श्रुत्वा, अतिविषमेन असह्येन, रोषेण कोपेन, हेतुना, जाज्वल्यमान मत्यन्तं प्रज्वलत् मानसं हृदयं यस्य सः । यथा अग्निना काष्ठं प्रज्वलति, तद्वत्कोपाग्निना अस्य हृदयं प्रज्वलतीति भावः । अत एवोपमालङ्कारध्वनिः । कंसः सपदि तदानीं, नारदनिवारणया नारदमुनिनिषेधेन, हेतुना, शिथिलीकृतः त्यक्तः, देवकी- वसुदेवयो र्व्यापादने नाशने, अभिनिवेशः आग्रहः, येन सः तथोक्तस्सन्, निगळमालसन्दानितौ शृङ्खलामालबद्धौ, विधाय कृत्वा, अर्थाद्देवकीवसुदेवा वित्येव- केशिनामानं केशीति नाम नामधेयं यस्य तं, निशाचरं राक्षसं, च, केशवनिशारणाय श्रीकृष्णमारणार्थं समादिश्य आज्ञापयित्वा- केशाद्वोऽन्यरतस्यामिति मतुबर्थे व प्रत्यये इनि, प्रत्यये च कृते केशवः, केशी इति रूपद्वयं सिद्ध्यति । तेन च प्रशस्तकेशवत्त्व रूपधर्मसाम्यादुभयोः केशवकेशिनोः परस्परविजिगीषा युक्तैवेत्यत्र ध्वन्यते । महामात्यनिकरं मन्त्रिश्रेष्ठसङ्घं, आहूय आकारयित्वा, नारदोदितं नारदप्रोक्त मुदन्तं कृष्णवृत्तान्त मावेद्य ज्ञापयित्वा, हलधरवासुदेवप्रतिमल्लतया रामकृष्णप्रतिभटत्वेन, मुष्टिकचाणूराभिधानं मुष्टिक चाणूराविति अभिधाने नामनी यस्य त, त्तथोक्तं, मल्लयो र्युगळं द्वयं मल्लयुगळं- मल्लो भटविशेषः परिकल्प्य रचयित्वा, आदिश्येत्यर्थः । कुवलयापीड इति नाम यस्य तं वेतण्डचूडामणिं गजवतंसं प्रतीहारप्रदेशं द्वारपालकस्थानं, द्वारदेशमिति यावत् । प्रापय्य प्रापयित्वा, द्वारपालकत्वेन द्वारदेशे स्थापयित्वेत्यर्थः । रङ्गभुवि रङ्गस्थले, मञ्चप्रपञ्चनाय मञ्चाना मासनानां, प्रपञ्चनं विस्तरी- करणं, तस्मै तदर्थ मित्यर्थः । कञ्चुकिनः वेत्रहस्तान्, प्रचोद्य प्रेरयित्वा, शरासनमखविलोकनाप- देशेन धनुर्यज्ञदर्शनव्याजेन, कंसो धनुर्यज्ञं कुरुते त्वं सपरिवारं तं द्रष्टुमायाही ति, तं वञ्चयित्वेत्यर्थः । सपरिवारं परिवारः परिजनः तेन सहितं यशोदानन्दनं कृष्णं, आहर आनय, इति एव माज्ञाप्येति शेषः । यथार्थनामानं न क्रूरोऽक्रूर स्सौम्य इति सार्थकाभिध- सौम्य मिति

यावत् । दृढतरविश्वासोदयार्थमिति भावः । अक्रूरं प्राहिणोत् प्रेषयामास । अक्रूरेतरप्रेषणे कंसव दयं क्रूरः किं वा? नः करिष्यतीति भीत्या कृष्णो नायादिति मत्वा, अक्रूरं प्राहिणोदिति भावः ॥

**ग ॥ अक्रूरोऽपि कंसनिदेशा दुपगतवन्त मन्तकभयानक मधिगत हयरूपं केशिनामानं निशाचर मखर्वगर्वसर्वङ्कषेण दृढतरमुष्टिप्रहारेण पशुमारं मारयित्वा सदन मासेदिवांसं मधुसूदन मुपसृत्य दण्डवत्प्रणिपत्य यशोदाशाबकेन रौहिणेयेन च परिरम्भकुशलानुयोगसहभोजनादिभिरतिवेल मुपलालित स्स्वसमागमनकारण मभिधाय तावेतौ शताङ्ग मरोप्य सोपहारै राभीरै र्नन्दादिभि रनुगम्यमानो मधुरानगर मचलत् ॥** १४४

अक्रूरोऽपीति– अक्रूरश्च, कंसनिदेशात् कंसाज्ञावशात्, उपगतवन्तमागतं, अन्तकभयानकं यमवद्भीषणं, अधिगतहयरूपं धृताश्वाकारं, केशिनामानं केश्यभिधं, निशाचरं राक्षसं, अखर्वगर्वसर्वङ्कषेण अखर्व मतिशयं गर्वं दम्भं सर्वमपि कषति हरतीति तथोक्तेन सर्वङ्कषः, अखर्वगर्वस्य सर्वङ्कष इति समासः । 'सर्वकूलाभ्रकरीषेषु कष' इति खचि– 'अरुर्द्विषदजन्तस्यमु' मिति मुम् । एवंविधेन दृढतरमुष्टिप्रहारेण अतिदृढमुष्टिताड़नेन, पशुमारं मारयित्वा पशुवत् हत्वेत्यर्थः । उपमानेकर्मणि चेति णमुल्– कषादिषु यथाविध्यनुप्रयोगः । सदनं गृहं, आसेदिवांसं प्रासवन्तं, मधुसूदनं कृष्णं, उपसृत्य प्राप्य, अभिमुखं गत्वेत्यर्थः । दण्डवत्प्रणिपत्य साष्टाङ्गदण्डप्रणामं विधायेत्यर्थः । श्रीकृष्णतत्त्वाज्ञानादिति भावः । यशोदाशाबकेन कृष्णेन, रौहिणेयेन रामेण, च, परिरम्भ आलिङ्गनं, कुशलानुयोगः कुशलप्रश्नः, सहभोजनं सभुक्तिः, एतानि आदीनि येषान्तैः,तथोक्तैः,अतिवेल मत्यन्त,मुपलालितः अनुनीतस्सन्, ततः स्वसमागमनकारणं निजागमनहेतुं, अभिधाय उक्त्वा, तावेतौ रामकृष्णौ, शताङ्गं रथमारोप्य अधिष्ठाप्य, सोपहारैः सबलिभिः, नन्दादिभिः नन्दप्रमुखैः, आभीरै र्गोपैः, अनुगम्यमान स्सन् अनुसृत स्सन्, मधुरानगरं मधुरापत्तनं, कंसराजधानी मित्यर्थः । प्रति अचलत् चचाल, गन्तु मुद्युक्तोऽभूदित्यर्थः ॥ १४४

**श्लो ॥ वार्ता मिमा मशनिपातनिभां निशम्य<br>यामाविश न्परवशा स्सुदृशो दशां ताम्<br>संसारसौख्यविरहेण कठोरचित्तं<br>वक्तुं क्षमेत कतम श्शुक मन्तरेण ॥** १४५

वार्ता मिति–सुदृशः स्त्रियः, अशनिपातनिभां वज्रायुधपतनसमानां, इमां, अक्रूरः कृष्णं मधुरां नयतीत्येतां, वर्तां वृत्तान्तं, निशम्य श्रुत्वा, परवशाः मूर्छितास्सत्यः, यां दशा मवस्था,

माविशन् भेजिरे, तां दशां वक्तुं वर्णितुं संसारसौख्यविरहेण संसारसुखाभावेन हेतुना, कठोरचित्तं कठिनहृदयं, शुकं व्यासपुत्र, मन्तरेण विना, कतमः कः कविः क्षमेत शक्नुयात् ? नकोऽपीत्यर्थः । अत्र शुकः एकः एव स्त्रीजनकष्टदशावर्णने क्षमः, नत्वन्य इति वाक्यार्थस्य, शुकस्य संसारसौख्यज्ञानाभावप्रयुक्तकठिनचित्तत्वरूपपदार्थेन समर्थना त्काव्यलिङ्ग मलङ्कारः ॥

श्लो ॥ ब्रह्मपुत्रव दापातरमणीयाभिधः कथम्
न पापपरिपाकोऽय मक्रूरः क्रूरचेष्टितः ॥ १४६

ब्रह्मपुत्रेति– ब्रह्मपुत्रव द्गरळवत्, 'गरळेऽपि ब्रह्मपुत्र' इति भास्करः । आपातरमणीयाभिधः अविचारसुन्दराभिधेयः, क्रूरचेष्टितः क्रूरव्यापारः, अय मक्रूरः पापपरिपाकः पापपरिणामः, कथं केनप्रकारेण, न नभवति? पापपरिपाक एवे त्यर्थः । यथा ब्रह्मपुत्रेति नाम्नः रमणीयत्वेऽपि तद्वाच्यं गरळं क्रूरं; एवमक्रूरेति नाम्न स्सुन्दरत्वेऽपि तद्वाच्योऽयं क्रूर एवेत्युपमालङ्कारः । अस्मदीयं प्राक्तनं पापमेव एतद्रूपेण परिणमयाम्बभूवेति, अक्रूरे पापपरिपाकत्वसम्भावनातः गम्योत्प्रेक्षालङ्कारः। असत्पापपरिपाक इवायं भातीति विवक्षितत्वात्। अत्रोत्तरार्थेन क्रूरचेष्टितोऽय मक्रूरो नभवति– किन्तु पापपरिपाक एवे त्यपह्नवो व्यज्यते ॥ १४६

श्लो ॥ दयोदारान् दारान् पुरविजयिनः प्रार्थितवती
मुरारि र्मे भूया न्मदनमदनोऽयं प्रिय इति
अनाथं नैवाहं दुरितभरिता जातु विरहो
न भूयादेतस्ये त्यहह! निहता हन्त! विधिना ॥ १४७

दयोदारा निति– मदनमदनः मन्मथमन्मथः, मदयतीति मदन इति व्युत्पत्त्या मदनस्यापि चित्तविभ्रमजनक इत्यर्थः । अयं मुरारिः कृष्णः, मे मम, प्रियः पति, भूयात् भवतु, इत्येवं दयोदारान् कृपया महतीं– उदारो दातृ महतो रित्यभिधानात्- अधिककृपा मित्यर्थः। पुरविजयिन श्शिवस्य, दारान् भार्यां, पार्वती मित्यर्थः। दाराः पुंसि च भूम्न्येवे त्यमरः। प्रार्थितवती- याचितवती, अह मभव मिति पदद्वयं शेषः । यद्वा उत्तरार्धा दहं पद मत्राप्यन्वेतव्यम् अभवमित्येक एव शेषः । दुरितभरिता पापपूर्णा, अहं जातु कदाचिदपि, एतस्य कृष्णस्य, विरहो वियोगो न भूया न्माभू, दित्येवं नानाधमेव नैवायाचिषम् । पुरविजयिनो दारानिति पद मत्राप्यन्वेतव्यम् । अहहेति, हन्तेति, च विषादातिशये– विधिना ब्रह्मणा निहता भ्रंशिता अभव मिति शेषः ॥ १४७

श्लो ॥ सम्भुक्तोऽपि मुहुर्मुहु र्नव इव प्रेमास्पदं साध्वस
स्पृष्टो दुर्लभता मनोहरतर स्सम्मोहन श्चेतसः

**वैकल्येऽपि रतोचितोपकरणग्रामस्य सौख्याकरः**
**शौरे! चौर्यरतोत्सव स्तव कथं? हा! विस्मरिष्यामि तम् ॥ १४८**

सम्भुक्त इति– हेशौरे ! कृष्ण ! मुहुर्मुहुः पुनःपुन, स्सम्भुक्तोऽपि अनुभूतोऽपि, तव चौर्यरतोत्सवः, चोरस्येदं चौर्यं तच्च तद्रतं सुरतं तदेवोत्सवः महः, नव वइ नूतनसुरतवत् प्रेमास्पदं प्रेम्णस्स्थानं, भवतीति शेषः । तथा साध्वसस्पृष्टोऽपि, भययुक्तोपि दुर्लभता मनोहरः, दौर्लभ्येन हेतुना मनोज्ञ स्सन्, चेतसः चित्तस्य, सम्मोहनः सम्यक् मोहजनकः, भवति ! तथा रतोचितोपकरणग्रामस्य रतोचित स्सुरतानुकूलः यः उपकरणग्रामः परिकरसङ्घः शय्यास्रक्चन्दनादिः, तस्य वैकल्येऽपि अभावेऽपि, सौख्याकरः सुखस्थानं, भवति तं तादृशं, कथं विस्मरिष्यामि विस्मृतं करिष्यामि, हेति खेदे ॥ १४८

**श्लो ॥ निमिषं त्वयि लीलया निलीनेऽनवलम्बा विपदम्बुधा वमज्जम्**
**मरणं शरणं ममाद्य शौरे नियतं त्वद्विरहानलासहायाः ॥ १४९**

निमिष मिति– हे शौरे ! त्वयि लीलया विलासेन, निमिषं निलीने अदृश्येसति, अनवलम्बा अनाधारा, अहमिति शेषः । विपदम्बुधौ आपत्सागरे, शोकसमुद्रे इत्यर्थः । अमज्जं मग्ना अभूवम्, त्वद्विरहानलासहायाः त्वद्वियोगरूपमग्नि ससहमानायाः, मम मे, अद्य, मरणं मृति, श्शरणं रक्षकं, भवतीति शेषः । नियतं निश्चयः– यद्वा मरणं नियत मेकान्तिकं शरणं भवतीत्यन्वयः । अवश्यं मम मरण प्राप्ति र्भविष्यतीति भावः । अत्र पूर्वार्थे त्वयि परमात्मनि, लीलया मायया, निमिषं निलीने आवृतेसति, किञ्चित्कालमात्मानन्द परिस्फूर्त्यभावेसतीत्यर्थः । अनवलम्बा, विपदम्बुधौ संसारसमुद्रे, अमज्जम् अहं दुःखीत्यादि संसारशोक मनुभवामीति भावः– इति ध्वनिः ॥ १४९

**ग ॥ एव मतिवेलं विलप्य विलुप्यमानविवेका वल्लवविलासिनीसंहतिः प्रस्थानलालसतया शताङ्गसङ्गतं सपरिवारं मुररिपु मतिचिर मरोदी च ॥ १५०**

एवमिति–विलुप्यमानविवेका विगतज्ञाना, वल्लवविलासिनीसंहतिः गोपसीमन्तिनीसन्ततिः, एवं पूर्वोक्तप्रकारेण, अतिवेल ममर्यादं, यथा तथा विलप्य विलापं कृत्वा, प्रस्थानलालसतया प्रयाणासक्तत्वेन, शताङ्गसङ्गतं रथारूढं, सपरिवारं परिजनसहितं, मुररिपुं कृष्ण मुद्दिश्य, अतिचिरं वहुकाल मरोदीत् अश्रूणि मुमोच। रुदिर् अश्रुविमोचने, इति धातुः ॥ १५०

**श्लो ॥ विरहानलसन्तापसम्भव स्तरळश्रुवाम्**
**समङ्गळविघाताय नाभू दश्रुसमुद्गमः ॥ १५१**

विरहेति— तरळभ्रुवां स्त्रीणां, सम्बन्धी विरहानलसन्तापसम्भवः विरहानलेन वियोगाग्निना हेतुना, य स्सन्तापः, विरहानला त्सन्ताप इति वा सन्तापस्सञ्ज्वरस्समा वित्यमरः। तस्मात्सम्भवतीति सम्भवः, उत्पन्नः सः पूर्वोक्तः, अश्रुसमुद्गमः बाष्पोद्गमः, मङ्गळविघाताय शुभनाशाय, अमङ्गळाये ति यावत्। तादर्थ्ये चतुर्थी। नाभूत् न बभूव। अनलसन्तापजन्याश्रूणां यात्रासमये मङ्गळविघातुकत्वं नास्ती ति भावः। अत्र अश्रुसमुद्गमो मङ्गळविघाताय नाभू दिति वाक्यार्थस्य विरहानलसन्तापसम्भवत्वरूपपदार्थेन समर्थना त्काव्यलिङ्गम्। इदं च विरहे अनलत्वरूपणेन लब्ध मिति रूपकोज्जीवितम्॥ १५१

श्लो॥ ततो निपुण माश्वास्य वधू र्मधुरया गिरा
निवर्त्य च रयात्प्राया द्यमुना ममना गयम्॥ १५२

तत इति— अयं कृष्णः, वधूः स्त्रियः, मधुरया मनोज्ञया, गिरा वाचा, निपुणं चतुरं, यथा तथा, आश्वास्य अनुनीय, निवर्त्य च निवृत्ताः कृत्वा, एतेन इतः प्राक् नारीणां कृष्णरथानुधावनं सूचितं। रया द्वेगात्, यमुनां नदीं, अमनाक् हर्षेण, प्रायात् प्राप॥ २५२

श्लो॥ बलादपि निवारिता विरहभीरवो भीरवो
विसृज्य सकलं ययु र्झडिति कृष्णवर्त्माश्रयम्
तथा पि न समीहितं प्रियसमागमं भेजिरे
न जारदयिताश्रया दिह किलापरं कारणम्॥ १५३

बलादपीति— विरहभीरवः वियोगभीताः, भीरवः स्त्रियः, बला त्प्रसह्य, निवारिताः अपि निरुद्धाः अपि, गुरुजनेनेति शेषः। सकलं सर्वं, धनधान्यादिकं, विसृज्य त्यक्त्वा झडिति द्रुतं, कृष्णवर्त्माश्रयं श्रीकृष्णमार्गाश्रयणं, अग्निप्रवेशं च, 'बर्हिश्शुष्मा कृष्णवर्त्मे' त्यमरः। ययुः प्रापुः, तथापि एवं कृष्णवर्त्माश्रयणे कृतेऽपि समीहित मिष्टं, प्रियसमागमं पतिसम्बन्धं न भेजिरे न प्रापुः। इह अस्मिन्विषये, कृष्णवर्त्माश्रयणेऽपि प्रियसमागमप्राप्तिविषये इत्यर्थः। जारदयिताश्रयात् उपपतिसमाश्रयणात्, अपर मन्य, त्कारणं हेतुः, नकिल नास्ति खलु। कदाचि च्चौर्येण परनारी भुञ्जानः प्रस्थानसमये ताः कथं नयेदिति भावः। अन्यत्र सहगमने स्त्रीणां प्रियसङ्गो यद्यपि नियतः। तथापि जारप्रियानुगमने स न स्यादिति भावः। अत्र शब्दशक्तिमूलध्वनिरेव॥ १५३

ग॥ तदनु नयनपथ मतीतवति भगवति॥ १५४

तदन्विति— तदनु ततः, भगवति कृष्णे, नयनपथं नेत्रमार्गम्, अतीतवति अतिक्रान्ते सति, अदृश्यतां गते सतीत्यर्थः॥ १५४

श्लो ॥ तदसाक्षात्कृतेः खेद मवाप्य सुदृशः परम्
चक्रु रस्तसमस्ताशाः निवृत्त्यभिमुखं मनः ॥ १५५

तदिति— सुदृशः स्त्रियः, तदसाक्षात्कृतेः श्रीकृष्णादर्शना द्धेतोः, पर मधिकं, खेदं दुःखं, मवाप्य प्राप्य, अस्तसमस्ताशाः त्यक्तसर्वाशाः, श्रीकृष्णप्राप्तिविषयदुराशां समूल मुत्सृज्येत्यर्थः । मनः अन्तःकरणं, निवृत्त्यभिमुखं आगमनोन्मुखं, चक्रुः कृतवत्यः । अत्र सुदृशो विबुधाः, तदसाक्षात्कृतेः परमात्मसाक्षात्काराभावा द्धेतोः, परं खेद मवाप्य, अस्तसमस्ताशाः निष्कामा स्सन्तः, मनः निवृत्त्यभिमुखं निवृत्तिमार्गनिरतं, शमप्रधान मित्यर्थः । चक्रुरिति ध्वनिः ॥ १५५

ग ॥ तदनु यदुनन्दनावध्यासितस्यन्दनौ प्रतिप्रतीर मावेश्य सिस्नासु रक्रूर श्शमनभगिनीपानीय मवगाह्य, करुणापूर मपि समुन्नतप्रवणं, मसुकरदर्शन मपि सुदर्शनकरं, निरन्तराब्जासक्तकर मप्यब्जपरिपन्थिकरयुगळं, मविरतानुषक्तगद मपि कमनीयविग्रहं, दिव्यगन्धानुलिप्तसकलाङ्ग मपि निर्लेपं, मनावृतमूर्ति मपि पीताम्बरावृतविग्रहं, माधव मपि पलाशविकासपरिपन्थिनं, विधु मपि विगतकळङ्कं, मशेषाधार मपि शेषाधारं, मीनरूपधर मपि सुधीवरदुरवापं, मुपगतकमठाकृति मपि भूभार मसहमानं, मविरतवसुमतीदयित मपि कादाचित्कभूदारभावं, मालम्बितनरसिंहरूप मपि परिपालितसदावळं, मत्युन्नत मपि परिगृहीतवामनभावं, अनन्तविक्रम मपि त्रिविक्रमं, निगृहितभक्तबलि मपि भक्तबलिपरिग्रहैकतानं, राजरुधिरविरचितपितृतर्पण मपि विहितराजवंशाभ्युदयं, मनुष्य धर्मानुवर्तिन मपि पौलस्त्यपरिपन्थिनं, ममोघशरप्रसर मपि स्वीकृतशरभङ्गं, मुपगतबलभाव मपि सुत्रामसहजमैत्रीपात्र मर्जुनगुणप्रणयिन मपि तमालनीलं,चक्रिण मपि विगतभोगाभिलाषं,बभ्रु मपि भुजगराजबद्धादरं, पुष्पवद्विलोचन मपि कमनीयनयनं,विष्वक्सेन मपि प्रकटिताद्वैतं,मस्वप्नरक्षक मपि निद्रानुरक्तं, भववल्लभ मपि भवसन्मूलनैकतानं, चतुर्दशभुवनशरण मपि त्रिविष्टपपरिपालकं,मखिलखेचराधिगम्य मपि बुधैकगम्यं, मुकुन्द मपि किन्नरेशरक्षणानपेक्षिणं, धार्मिकजनदयित मपि पुण्यजननिषूदनलम्पटं,मविरत परितृप्त मपि भक्तैकतत्परं,सकलागमशिखरलक्ष्य मपि न्यग्रोधदळैक शायिनं,शमप्रधान मपि शतमन्युसंश्रयं, द्विजराजपक्षपातिन मपि दोषाकरविपक्षं, मपरिमितरुगाश्रय मपि विगतशोकं,मपुनर्भवपद मपि सपुनर्भवपदं, पुराणपुरुष मपि निर्जरं,हंस मप्यमानसवृत्ति मज मपि पितामहोप-

**लालित, मनन्त मपि संवर्धितमरुद्गणं, जनार्दनमपि करुणातरङ्गितान्तरङ्ग, मतिदक्षिण मपि सकलोत्तरं, भगवन्तं दामोदर मद्राक्षी दस्तौषीच्च ।** १५६

तदन्विति– तदनु ततः, अक्रूरः, अध्यासितस्यन्दनौ अधिष्ठितरथौ, रथारूढा वित्यर्थः। यदुनन्दनौ रामकृष्णौ, प्रतिप्रतीरं तीरे, विभाक्त्यर्थेऽव्ययीभावः । 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रि ष्वि' त्यमरः । आवेश्य उपवेश्य, सिस्नासु स्नातुमिच्छु स्सन्, शमनभगिनीपानीयं यमुनाजलं, मवगाह्य प्रविश्य, दामोदरं विष्णुमद्राक्षी दपश्यत्, अस्तौषीच्च तुष्टाव चे त्यन्वयः । दामोदरमेव विशिनष्टि- करुणापूरमपि दयाप्रवाह मपि, अत्र दयाप्रवाहभरितान्तः करणे दामोदरे दयाप्रवाहाकारत्वमेव प्रतिपादित मित्यतिशयोक्तिः । दया तद्वतो र्भेदेऽप्यभेदेन निर्देशात् । समुन्नतप्रवणं समुन्नता स्साधवः तेषु प्रवणः आसक्तः तं, उन्नतप्रदेशोन्मुखमिति च । अतएव विरोधाभासालङ्कारः । एव मुत्तरत्रापि बोध्यम् । नीचप्रवणत्वा त्प्रवाहस्य करुणापूरस्य, प्रकृते उन्नतप्रवणत्ववचनं विरुद्धमिति- आपाततः प्रतीतस्य विरोधस्य भगवान् कृपया साधुरक्षक इत्यर्थान्तर वर्णनेन परिहरात् । 'आभासत्वे विरोधस्य विरोधाभास इष्यते' इति तल्लक्षणम् । अयं चालङ्कारोऽत्र कृपापूरशब्दगतातिशयोक्त्युज्जीवितः । असुकरदर्शन मपि असुकरं दुर्लभं दर्शनं साक्षात्कारः यस्य त मपि, सुदर्शनकरं चक्रहस्तम्, सुलभदर्शन कारणमिति च। निरन्तराब्जासक्तकरमपि निरन्तरं सर्वदा अब्जेन शङ्खेन आसक्तः युक्तः करः हस्तः यस्य त मपि, अब्जपरिपन्थिकरयुगळं क्रमलविरोधिहस्तद्वयं । परिपन्थ्यादयःश्शब्दा उपमात्वपर्यवसायिन इत्यालङ्कारिकाः । तेन कमलसमान मस्य हस्तद्वयमिति फलितम् । शङ्खविरोधिकरयुगळ मिति च, शङ्खासक्तस्य करयुगळस्य शङ्खविरोधित्वं विरुद्धमिति भावः । अविरतानुषक्तगद मपि अविरतं सदा अनुषक्ता सङ्गता गदा कौमोदकी यस्य तं, अविरतानुषक्तः गदः व्याधिः यस्य त मिति च, तथाभूतमपि, कमनीयविग्रहं सुन्दरशरीरं, न हि व्याध्युपहतस्य शरीरसौन्दर्यं क्वापि दृष्टमिति भावः । दिव्यगन्धानुलिप्तसकलाङ्गमपि दिव्येन कर्पूरादिवासितेन गन्धेन चन्दनेन अनुलिप्तं छन्नं सकलं सर्व मङ्गं शरीरं यस्य तं, तथापि निर्लेपं पापसम्बन्धरहितं, गन्धलेपनरहितमिति च । अनावृतमूर्तिमपि अनावृता मायया अच्छन्ना मूर्तिः स्वरूपं सच्चिदानन्दात्मकं यस्य तं, निरावरणशरीर मिति च । पीताम्बरावृतविग्रहं पीतवस्त्ररूषितशरीरं, माधवमपि लक्ष्मीपतिं, वसन्त मपीति च- पलाशविकासपरिपन्थिनं पलं मांस मश्नन्तीति पलाशाः क्रव्यादाः तेषां विकासस्य विजृम्भणस्य परिपन्थिनं नाशकं, दैत्यारि मित्यर्थः। किसलयविजृम्भणविरोधिन मिति च । विधुमपि विष्णुं, चन्द्र मपी ति च । विगतकळङ्कं निर्दोषं विगताङ्क मिति च । अशेषाधार मपि सर्वाश्रयमपि, शेषधाररहित मपी ति च, शेषाधारं शेषाश्रयं शेषशायिन मित्यर्थः । मीनरूपधर मपि मत्स्यावतारभाज मपि, मत्स्य मपीति च, सुधीवरदुरवापं सुधियो विद्वांसः तेषु वराः उत्कृष्टाः विद्वदुत्तमा इत्यर्थः । तेषामपि दुरवाप माप्तु

मशक्यम् । अवाङ्मानसगोचरत्वात्तस्येति भावः । शोभनाः धीवराः सुधीवराः निपुणमत्स्य-ग्राहिणः, तेषां दुरवाप मिति च । 'कैवर्ते दाश धीवरा' वित्यमरः । न हि मीनः मत्स्यग्राहिणां क्वापि दुर्लभः इति भावः । उपगतकमठाकृति मपि प्राप्तकच्छपस्वरूप मपि, कूर्मावतारधारिणमपी-त्यर्थः । कूर्म मपी ति च । भूभार मसहमानं धराभारामर्षण मित्यर्थः । नित्यजलाधिवासस्य कमठस्य भूभारासहनं विरुद्ध मित्यत्र भावः । अविरतवसुमतीदयितं अविच्छिन्नभूभर्तार मपि, कादाचित्कदापि भूदारभावं क्वादाचित्कं, काचित्कः भूदारभावः, भुवं दारयतीति भूदार स्सूकरः, तस्य भावः यस्य तं, कदाचिद्वराहावतारधारिण मित्यर्थः । कादाचित्कः भूदारभावः भूदयितत्वं यस्य तमिति च । यः अविरतं भूदयितः; तस्य कदाचिद्भूदयितत्वं विरुद्धमिति भावः आवलम्बितनरसिंहरूपमपि स्वीकृतनृसिंहावतारमपि, सिंह मपीति च, परिपालितमदावळं रक्षितगजेन्द्रं, सिंहस्य गजनाशकस्य गजपरिपालनं विरुद्ध मिति भावः । अत्युन्नतमपि सर्वोत्कृष्ट मपि अतिदीर्घमपी ति च, परिगृहीतवामनावतारम् स्वीकृतह्रस्वभावं च, अनन्तविक्रम मपि अमितपराक्रम मपि अमित-पादन्यास मिति च, त्रिविक्रमं त्रिषु स्वर्गमर्त्यपाताळेषु विक्रमः पादक्षेपो यस्य तं, त्रिविक्र-मावतारमित्यर्थः । त्रिपादन्यास मिति च, निगृहीतभक्तबलि मपि निगृहीतः शिक्षितः भक्तः आश्रितः बलिः बलिचक्रवर्ती येन तं भक्त मपि, बलिं निगृह्य, इन्द्राय स्वर्गं दत्तवन्त मिति भावः । निगृहीतः तिरस्कृतः, भक्तानां बलिः पूजा, येन त मिति च, भक्तकृतपूजां तिरस्कृतवन्त मित्यर्थः । भक्त बलिपरिग्रहैकतानं भक्तबलिपरिग्रहे भक्तपूजास्वीकारे, एकतानं प्रवण मित्यर्थः । राजरुधिर-विरचितपितृतर्पण मपि– परशुरामः किल एकविंशतिकृत्वो वसुमतीं निःक्षत्रियां विधाय, तद्राज-रक्तेन पितृतर्पणं चकारेति, प्रसिद्धं । राजरुधिरेण क्षत्रियरक्तेन, विरचितं कृतं, पितृतर्पणं येन त मिति समासः । विहितराजवंशाभ्युदयं कृतचन्द्रवंशोत्पत्तिं, चन्द्रवंशे उत्पन्नमित्यर्थः । कृतक्षत्त्रि-याभिवृद्धि मिति च । यद्यपि रामावतार स्सूर्यवंशे एव तथापीह कृष्णावतार एव विवक्षित इति बोध्यम् । यद्वा विहितः राजवंशस्य चन्द्रवंशस्य, अभ्युदयः प्रतिष्ठा, येन तं जनकसुतां परिणीय चन्द्रवंशस्य प्रतिष्ठां दत्तवन्त मित्यर्थः । मनुष्यधर्मानुवर्तिन मपि मनुष्याणां धर्म मनुवर्तते इति तथोक्तं, रामावतारधारिण मित्यर्थः । कुबेरानुसारिणमपीति च– 'मनुष्यधर्माधनद' इत्यमरः । पौलस्त्यपरिपन्थिनं रावणहन्तारं, कुबेरद्वेषिण मिति च, अमोघशरप्रसरमपि सफलबाणप्रसरण मपि, रामबाणाना ममोघत्वं प्रसिद्धम् । स्वीकृतशरभङ्गं स्वीकृतः स्वभक्तत्वा त्स्वीयत्वेन परिगृहीतः शरभङ्गो मुनि र्येन तं, गृहीतबाणभङ्ग मिति, च । यो य श्शरो गृहीत स्तस्य तस्य भङ्गो भवती ति व्यर्थबाण इत्यर्थः । उपगतबलभावमपि उपगतः प्राप्तः बलभावः बलरामत्वं येन तं, बलरामावतार-मित्यर्थः । उपगतः बलभावः बलाख्यराक्षसत्वं, येन त मिति च– बल इति इन्द्रस्य शत्रुः कश्चन राक्षसोऽस्ति; अत एव बलरिपुरिति इन्द्रपर्यायेष्वमरः । बलाभिधराक्षस मपी ति यावत् । सुत्रामसहजमैत्रीपात्रम् सुत्राम्णः इन्द्रस्य सहजमैत्री भ्रातृस्नेहः तस्य पात्रं भाजनभूतं, उपेन्द्र, त्वादिति भावः । अर्जुनगुणप्रणयिन मपि अर्जुनः धर्मराजानुजः, तस्य गुणेषु प्रणयी स्निग्धः तं-

तद्गुणानुरागिण मित्यर्थः । शुक्लगुणवन्तमिति च । तमालनीलं तापिञ्छपुष्पवत्कृष्णवर्णं । चक्रधरमपि सुदर्शनवन्तं, सर्पमपी ति च । विगतभोगाभिलाषं त्यक्तभोगेच्छं, मायातीतत्वादि ति भावः । 'जहात्येनां भुक्तभोगा मजोऽन्यः' इति श्रुतेः । त्यक्तसर्पदेहाभिलाषमिति च । बभ्रुमपि विष्णुं, नकुलमिति च । 'विपुले नकुले विष्णौ बभ्रु स्त्या' दित्यमरः । भुजग राजबद्धादरं आदिशेषे धृतस्नेहं, नकुलस्य सर्पच्छेदकस्य सर्पस्नेहो विरुद्ध इति भावः । पुष्पवद्विलोचनमपि पुष्पवन्तौ सूर्यचन्द्रौ विलोचने नेत्रे यस्य तम् । 'एक योक्त्या पुष्पवन्तौ दिवाकरनिशाकरा' वित्यमरः । पुष्पं नेत्रदोषः शुक्लपर्यायः त दनयो रस्तीति पुष्पवन्ति विलोचने यस्य तमिति च । कमनीयनयनं मनोज्ञलोचनं, विष्वक्सेनमपि विष्णुम्, 'विष्वक्सेनो जनार्दन' इत्यमरः । विशिष्टाद्वैतमतस्थापकं विष्वक्सेनाचार्यमिति च- प्रकटिताद्वैतं प्रकटीकृताभेदं 'सर्वं खल्विदं ब्रह्मेति' श्रुते रिति भावः । एतेन अद्वैतमतव्यवस्थापकव्यासावतारो वर्णितः । यद्वा बुद्धावतार एवानेन वर्णितः 'दशबलोऽद्वयवादी विनायक' इति । अद्वयवादित्वाद्बुद्धस्य अस्वप्न रक्षकमपि देवानां त्रातारं, निर्निद्रमिति च । निद्रानुरक्तं, योगनिद्रासक्तं । भववल्लभमपि भवस्य शिवस्य वल्लभः प्रियः तं; शिवसख मित्यर्थः । अत्र शैवाः भवो वल्लभो यस्य तं, मोहिन्यवतारे विष्णो श्शिवपतिकत्वादिति वर्णयन्ति । संसारप्रिय मपी ति च भवसम्मूलनैकतानं संसारनिरसनप्रवणं, आश्रितान् संसारा न्मोचयन्त मित्यर्थः । चतुर्दशभुवनशरणमपि चतुर्दशलोकरक्षितारमपि, त्रिविष्टपपरिपालकं स्वर्गरक्षकं । 'सुरलोको द्यो दिवौ द्वे स्त्रियां क्लीबे त्रिविष्टप' मित्यमरः । लोकत्रयशरणमपीति च । चतुर्दशलोकशरणस्य त्रिलोकपरिपालकत्ववचनं पिष्टपेषणतुल्य मिति विरोधः । स्वर्ग मुपेन्द्र स्सन् निरतं परिपातीति तत्परिहार इति भावः । अखिलखेचरादिगम्य मपि अखिलै स्सर्वैः खेचरै स्सूर्यादिग्रहैः अधिगन्तुं प्राप्तुं, योग्यं तमिति विरोधः । सर्वदेवोपसृप्य मिति परिहारार्थः । बुधैकगम्यं बुधेन ग्रहेणैकेन गम्यमिति विरोधः, विद्वदेकसुलभ मिति परिहारः । मुकुन्द मपि विष्णु मपि निधिमपीति च- किन्नरेशरक्षणानपेक्षिणं किन्नरेशानां कुत्सितनृपतीनां रक्षण मनपेक्षते इति तथोक्तः; तमिति च- मुकुन्दादयो हि निधयो नव कुबेरेण निरतं रक्ष्यन्ते, इति भावः । धार्मिकजनदयितमपि धर्मनिरतजनप्रियमपि पुण्यजननिषूदनलम्पटं राक्षसविनाशनव्यग्रं, धार्मिकजनविनाशनासक्तमिति च । 'यातुधानः पुण्यजन' इत्यमरः । अन्यत्र तु पुण्ययुक्तो जनः पुण्यजन इति शाकपार्थिवादित्वा त्समासः । अविरतपरितृप्तमपि नित्यतृप्तमपि, भक्तैकतत्परं आश्रितासक्तं, अन्नासक्तमिति च । सकलागमशिखरलक्ष्यमपि सर्ववेदान्तवेद्य मपि, सर्ववृक्षाग्रस्थमपीति च । न्यग्रोधदलैकशायिनं वटपत्रे एकस्मिन्नेवशायिनं 'करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तं वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरा' मीति प्रमाणात् । शमप्रधान मपि शान्तिप्रधान मपि शतमन्युसंश्रयं इन्द्राधारं, अतिकोपाश्रय मिति च । 'शक्र श्शतमन्यु र्दिवस्पति' रित्यमरः । द्विजराजपक्षपातिन मपि द्विजराजः ब्राह्मणोत्तमः, नारदादिः, तत्र पक्षपातः स्नेहः यस्य तं, यद्वा- द्विजराजः गरुत्मान् तस्मिन् पक्षपातिन मिति वा, तस्य पक्षे पत्रे पतति वर्तते इति वा गरुडध्वज

मित्यर्थः । चन्द्रपक्षपातिन मपीति च । दोषाकरविपक्षं दोषाकराः दुष्टाः तेषां विपक्ष श्शत्रुः हन्ता तं, चन्द्रविरोधिन मिति च । अपरिमितरुगाश्रय मपि अमितकान्तिमन्त मपि, अमितरोगाधार मपी ति च । विगतशोकं विशोकं मायानभिभूतत्वादिति भावः । अपुनर्भवपद मपि अपुनर्भवं पुनरुत्पत्तिरहितं पदं स्थानं वैकुण्ठाख्यं यस्य तं अनखचरण मपी ति च । 'पुनर्भवःकररुह' इत्यमरः । स पुनर्भवपदं सनखचरणं, प्रशस्तनखभूषितपादारविन्द मित्यर्थः । पुराणपुरुष मपि पुरुषोत्तममपि जरठपुरुष मपीति च । निर्जरं देवं, जरारहितं च । 'अमरानिर्जरादेवा' इत्यमरः । 'जराया जरसन्यतरस्या' मिति जरसादेशस्य वैकल्पिकत्वम् । हंसं परमात्मानं पक्षिविशेष मिति । अपि च, अमानसवृत्तिं मनोवृत्तिरहितं, अविक्षिप्तत्वादिति भावः । मनोवृत्तिर्नाम सङ्कल्प विकल्पादिकमन्तःकरणजन्यं ज्ञानम् । मानसे मानससरसि वृत्तिः स्थितिः न विद्यते यस्य त मिति च । अज मपि विष्णुमपि ब्रह्माणमपीति । 'अज इशम्भौ विधौ विष्णौ' इत्यभिधानात् । पितामहोपलालितं ब्रह्मस्तुतं अनन्तमपि विष्णुमपि शेषमपी ति च- संवर्धितः पोषितः मरुद्गणो देवव्रजः येन तं, संवर्धितः मरुतां वायूनां गणो येन तमिति च । सर्पाणां वाताशनत्वात् । जनार्दन मपि विष्णु मपि जनपीडक मपीति च । करुणातरङ्गितान्तरङ्गं करुणातरङ्गितं सञ्जातदयाकल्लोल मन्तरङ्गं मनो यस्य तं तारकादित्वा दितच् । अतिदक्षिणमपि अत्यन्तदक्षिणनायकमपि, अत्यन्तं दक्षिण दिक्स्थमपीति च । सकलोत्तरं सर्वोत्तमं सकलादपि उत्तरदिक्स्थ मिति च- अत्र दक्षिणोत्तरशब्दौ लक्षणया ताथ्स्यवाचिनौ । भगवन्तं षड्गुणपरिपूर्णम् ॥ १५६

तथाहि ॥ स्तुतिमेव प्रतिपादयति । कविरित्यर्थः ॥

श्लो ॥ वदन् भक्तेभ्य स्त्वं पदमपि ददामीति सविधं
प्रपन्नाना मेषां किमु विपदभावं वितनुषे
निवृत्ता दृश्यन्ते लघु य दधिगम्येतरसुरान्
प्रपन्न स्त्वां पङ्गु र्भवति पुनरावृत्तिविधुरः ॥ १५७

वदन्निति- त्वं, भक्तेभ्यः, स्वं स्वीयं, पदं वैकुण्ठाख्यं, स्थानमपि, चरणमपीति च गम्यते । ददामि वितरामि- इति, वदन् ब्रुवन्, 'यवागूं पिब; शिखा ते वर्धिष्यते' इतिवत् मां भजस्व- तव मत्पदं दास्या मीति तेषां प्ररोचना मुत्पादय न्नित्यर्थः । सविधं समीपं, प्रपन्नानां प्राप्तानां, भगवत्पदप्राप्त्याशयेति भावः । एषां भक्तानां श्रितानां, विपदभावं विपदामापदा, मभावः आत्यन्तिकनिवृत्तिः, तं, विगते पदे यस्य तस्य भाव मिति च, चरणभङ्गमिति यावत् । वितनुषे करोषि किमु? तत्र हेतु माह- यद्यस्माद्धेतोः; जनाः इति शेषः । इतरसुरान् इन्द्रादित्वदन्यदेवता, नधिगम्य प्राप्य, तत्तल्लोकान् गत्वेत्यर्थः । लघु क्षिप्रं, निवृत्ताः पुनरागता स्सन्तः, आब्रह्मभुवना ल्लोकाः पुनरावृत्तिनोऽर्जु' नेति वचनात् । 'क्षीणे पुण्येमर्त्यलोकं

विश ' न्तीति वचनाच्चेति भावः। दृश्यन्ते उपलभ्यन्ते, अस्माभि रिति शेषः। चरणभङ्गाभावा दित्यन्यो भावो व्यज्यते। त्वां प्रपन्नः प्राप्त स्तु त्वल्लोकं गत स्त्वि त्यर्थः। पुनरावृत्तिविधुरः पुनरागमनरहितः। ' मा मुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ' इति वचनादिति भावः। अत एव पङ्गुःपरमात्मा, पङ्गुरित्युपलक्षणं — मूकत्वादीनाम्। ' अपाणिपादो जवनो गृहीता पश्यत्यचक्षु स्सशृणोत्यकर्ण ' इति श्रुतेः। पादविकल इति च प्रतीयते। भवति। दुःखध्वंसं गौतमो मोक्ष माहेति वचनात्। नैयायिकमतानुसारेण चरमदुःखध्वंसलक्षणो मोक्षः भवत्पद-प्राप्त्या सिद्ध्यति, नत्वन्यत्र। अत एव तेषां न पुन र्दुःखप्रसक्ति रित्येकोभावः। भक्तान् त्वल्लोकं नीत्वा, तत्र पादरहितान् त्वं यस्मादकरो स्ततएव नामीषां पुनरागमन, महो ! तव घातुकता मा स्तु नाम नवीनपददानं; प्राक्सिद्धचरण भञ्जनाभावे तु कथञ्चि त्पुनरागच्छेयु रित्यन्योभावः। नवीनपद प्राप्त्यर्थं यतमानानां प्राक्सिद्धपदभङ्गलाभ इति वर्णना द्विषमा लङ्कारो व्यङ्ग्यार्थे अस्ति ॥ १५७

श्लो ॥ पुमांसं स्वीकर्तुं कमपि भवरोगं प्रकृतिजं
बलात्कृत्वा कृत्वा विषम मथ वित्ता न्यपहरन्
ध्रुवस्ते मृत्यु र्नो यदि भजसि मा मेव शरणं
प्रकल्प्यैवं त्रासं व्रजसि परमार्ता द्रुहमतिम् ॥ १५८

पुमांस मिति— कमपि धन्य मित्यर्थः। मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धानां कश्चि न्मां वेत्ति तत्त्वतः ' इति वचनात्। पुमांसं पुरुषं, स्वीकर्तुं स्व मात्मा। ' स्वो ज्ञाता वात्मनि स्व ' मित्यमरः। स न भवती त्यस्वं अनात्मान मित्यर्थः। अस्वं स्वं कर्तुं स्वीकर्तुं अनात्मान मात्मानं कर्तुं स्वसायुज्यं दातु मित्यर्थः। अभूततद्भावे च्विः। यद्यपि पुरुषाः परमात्मा एवेति कृत्वा तेष्वनात्मत्व मसिद्धमिति। अत्र अभूततद्भावो दुर्लभः। तथापि अनात्मत्वस्य भ्रान्तिमूलस्य, सत्त्वा न्न दोषः, इति ज्ञेयम्। ' जायमानं हि पुरुषं यं पश्ये न्मधुसूदनः स वै तत्त्वार्थविज्ञाता स वै मोक्षार्थचिन्तकः ' इति वचनात्। भगवतस्सायुज्यदाने सङ्कल्पः प्रथमं भवती ति कृत्वा, स्वीकर्तु मित्युक्तम्। कस्मैचि न्महाभागाय सायुज्यं दातुं सङ्कल्प्येति भावः। प्रकृतिजं मायाजन्यं, भवरोगं भव स्संसार स्स एव रोगः रुजा, तं, बलात्प्रसह्य, विषमं दुस्सहं, कृत्वा कृत्वा अतिशयेन कृत्वे त्यर्थः। भार्यापुत्रादिनाशेन वैरस्य मुत्पाद्येति भावः। अथ ततः, वित्तानि धनानि, अपहरन् नाशयन्, ' यस्यानुग्रह मिच्छामि तस्य वित्तं हराम्यहं तस्य पुत्रांश्च पौत्रांश्चे ' ति विष्णुपुराण वचनात्। न केवल मेताव दित्याह— मामेव, शरणं रक्षितारं, यदि न भजसे, न सेवसे; ते तव, मृत्यु स्संसारः, ध्रुवः नियतः, अवर्जनीय इत्यर्थः। एव मिद्धं, त्रासं भयं; प्रकल्प्य जनयित्वा, ' मामेव ये प्रपद्यन्ते माया मेतां तरन्ति, इति वचनादिति भावः। परमार्तात् निस्सारसंसारा दतिनिर्विण्णा

द्भक्तात् सकाशात्, बहुमतिं पूजां, व्रजसि प्राप्नोषि । एतेन भगवतो निर्व्याजकरुणासमुद्रत्वं व्यक्तम् । व्यङ्ग्यार्थस्तु- कमपि पुमांसं धनिक मित्यर्थः । स्वीकर्तुं वशीकर्तुं, प्रकृतिजं स्वाभाविकं, भवरोगं भवाभिधं, रोगं, बलात् विषमं, कृत्वा कृत्वा, विरुद्धौषधप्रदानादिना वर्धयित्वे त्यर्थः । अथ वित्ता न्यपहरन् तैललेह्यादिकरणव्याजेने त्यर्थः । न केवल मेताव दित्याह – मामेव, ममैव त्वद्देहतत्त्वज्ञत्वा दितिभावः । शरणं न भजसि यदि । मदीय मौषधं न गृह्णासि चे दि त्यर्थः । ते मृत्यु र्मरणं, ध्रुवं । एवं त्रासं प्रकल्प्य, आर्ता व्याधिपीडितात्, बहुमतिं परं बहुमानमेव, व्रजसि; न तु रोगस्यात्यन्तिकनिवृत्तिं करोषि । सहजरोगस्य दुर्निवारत्वादिति भावः ॥ १५८

श्लो ॥ अविश्रान्तं सेवा न तु फल मपेक्ष्यं चिरचितं
फलं भोग्यं कृत्वा कृति मपि समर्प्यं तव फलम्
भवत्वेवं प्रान्ते फल ममृतभावा दनधिकं
न दृष्टेऽयं सेवा मधुमथन! मायां तव नुमः ॥ १५९

अविश्रान्त मिति– सेवा भजनं, अविश्रान्तं सन्ततं; कर्तव्येति शेषः । 'आसुप्ते-रामृतेः कालं नये द्वेदान्तचिन्तये' ति वचनात् । फलन्तु नापेक्ष्यं नकाङ्क्ष्यं, निष्कामस्यैव मोक्षाधिकारादिति भावः । चिरचितं चिरात्सञ्चितं, फलं प्रारब्धकर्मजन्यं, सुखदुःखादिक मित्यर्थः । भोग्यं भोक्तुं योग्यं, 'प्रारब्धं भोगतो नश्ये' दिति वचनात् । भोगेन प्रारब्धं कर्म क्षपयेदिति भावः । कृतिं सन्ध्यावन्दनादिकर्म, कृत्वा, फलं तव समर्प्यम् देयम् । कर्मण्ये-वाधिकार स्ते, मा फलेषु कदाचने ति वचना दितिभावः । एवं, भवतु, एतत्सर्वं मङ्गीकृत मित्यर्थः ! प्रान्ते उपान्ते फलम् अमृतभावा न्मोक्षा, दनधिकं अधिकं न भवति; तदधिक फलस्यैवाभावादिति भावः । यद्वा अनधिक मनतिरिक्तं, एवंविधपरमात्मसेवायाः मोक्षफलकत्वादिति भावः । इयं सेवा न दृष्टा नावलोकिता, 'स महात्मा सुदुर्लभ' इति वचनादिति भावः । हेमधुमथन! मधुरिपो ! तव, मायां प्रकृतिं, नुमः स्तुमः । अचिन्त्यशक्तित्वा त्त्वन्मायावैभवस्य मोक्षो दुर्घट इति भावः । व्यङ्ग्यार्थस्तु- सेवा चतुर्दशभुवनाधारस्य तव भजनम्, अविश्रान्तं कर्तव्या 'राजसेवा मनुष्याणा मसिधारावलेहन' मिति न्याया दतिविषमा राजसेवा; सापि सर्वदा चे त्किमुवक्तव्य मिति भावः । फलगौरवेण सर्वं सोढव्य मित्यत आह–फलन्तु नापेक्ष्यम् । अन्यस्य लुब्धप्रभो स्सकाशे वाचा परं न याचनीयं, मनसा फलापेक्षणे तु, न हानिः; तस्य किञ्चिदूज्ञत्वेन फलहृदयज्ञानाभावा त्तव तु सर्वज्ञत्वेन मनसा पि न काङ्क्ष्यमि त्यहो! महानानन्द इति भावः । तर्हि सेवकानां कथं जीविके त्यत आह– चिरचितं पितृपितामहादिभि श्चिरा त्सम्पादितं, फलं भाग्यं, कृतिं कर्म, कृत्वा यत्किञ्चि दवकाशे वाणिज्यादिव्यापारं कृत्वे त्यर्थः । फलं तज्जन्यं, तव समर्प्यम् । एवं भवतु सर्व मेत त्सोढुं शक्यते, इत्यर्थः । प्रान्ते फल, ममृत-

भावा न्मृतत्वाभावा, दनधिकं यत्किञ्चिद्यवागूपानादिना प्राणधारणमात्रा दधिकं फलं, नास्ती त्यर्थः । इयं सेवा न दृष्टा कापि न दृष्टचरी त्यर्थः । हेमधुमथन ! तव, मायां वञ्चनां, नुमः । यया मायया, सर्वान्, अदत्त्वैव, सेवयसि; तस्यै नमः इत्यर्थः ॥ १५९

श्लो ॥ श्रितानां यद्भाग्यं हरसि कलयेऽनुग्रहमिति
प्रतार्यास्तामेत द्विगतपुनरावृत्तिनि पदे
अचन्द्राग्न्यादित्ये क्वचन हृदयस्याप्यसुगमे
त्वदेकद्योत्ये यत्क्षिपसि तव युक्तं कथ मिदम् ॥ १६०

श्रितानामिति- प्रतार्य, संसारा द्युष्मां स्तारयित्वा, अनुग्रहं दयां कलये करोमि, इति वदन्निति शेषः । श्रितानां भक्तानां, भाग्यं वित्त, मुपलक्षणमिदं दारापुत्रादीनां । हरसि नाशयती ति यत्; तदेत दास्ताम् । धनाद्यपहरणेन मदादिचित्तरोषान् भ्रंशयित्वा, स्वाधीनहृदयीकरणरूपोऽय मपकार स्ताव त्तिष्ठत्वित्यर्थः । इतोऽप्यधिकापकारसद्भावादिति भावः । तमेव दर्शयति- अचन्द्राग्न्यादित्ये चन्द्रवह्निसूर्या यत्र न सन्ति तस्मिन्- ' न तद्भासयते सूर्यो न शशाङ्को न पावकः ' इति वचनात् । हृदयस्यापि मनसोऽपि असुगमे अविषये, ' अप्राप्य मनसा सहेति ' श्रुतेः । त्वदेकद्योत्ये त्वया एकेनैव द्योतयितुं शक्ये, त्वत्प्रकाशातिरिक्तप्रकाशशून्ये इत्यर्थः । ' तमेव भान्त मनुभाति सर्वं ' मिति श्रुतेः । विगतपुनरावृत्तिनि पुनरावृत्तिरहिते, क्वचन अनिर्वाच्ये, पदे स्थाने,मोक्षे इत्यर्थः । क्षिपसि पातयसी ति यत्; मोक्षं तेभ्यो ददासी ति य दित्यर्थः । इदं मोक्षदानं' तव कथं युक्तमितिकाकुः, तवैव युक्तं; नत्वन्यस्ये त्यर्थः । ' मोक्षमिच्छेज्जनार्दना ' दिति वचना दिति भावः । व्यङ्ग्यार्थस्तु- अनुग्रहं कलये, इति, प्रतार्य वञ्चयित्वा, श्रितानां भाग्यं वित्तं, हरसी ति यत्; तदेत दास्तां तिष्ठतु, भाग्यहरणमात्रेण न शोचनीय मुत्तरत्रानर्थ-सद्भावादिति भावः । तदेवाह- अचन्द्राग्न्यादित्ये चन्द्रादिरहिते, गाढान्धकारवती त्यर्थः । हृदयस्या पि असुगमे सुखेन गन्तु मशक्ये, किन्तु कष्टेनैवे त्यर्थः । कण्टकादिभि रतिदुर्गम मपि प्रदेश मतिसूक्ष्मत्वा न्मनः प्रविशति; नतु शरीर- मिदन्तु मनसापि दुर्गममिति भावः । त्वदेकद्योत्ये त्वयैकेनैव ज्ञेये । एतेन अनेन पथा, त्वं गच्छेति, त्वदुपदेश मन्तरेण केनापि पलायितु मयोग्ये इति सिद्धम् । अपुनरावृत्तिनि निर्गन्तु मशक्ये, क्वचन कापि, पदे कारागारादौ क्षिपसी ति यत् , आश्रितानि ति शेषः । इदं तव कथं युक्तं? ताव दाश्रितस्य वित्ताहरण मेवायुक्तं हरणानन्तरं वा क्वचि द्भिक्षाटनादिना जीवे ति विसर्जनं युक्तम् । उभयमपि विहाय, शून्यभया देवं करणन्तु सर्वथैवायुक्त मि, त्यहो ! तव नैर्घृण्यमिति भावः ॥ १६०

श्लो ॥ भावत्कं गुणजाल मस्फुटतनुः पूर्वं प्रकाश्य द्विजान्
लग्नान् भ्रान्तिभृतोऽपि तत्र तनुषे पश्चाद्गुणेभ्य श्च्युतान्

आतन्व न्कृतपक्षपातमगती नेता न्निजान्तर्गता
नाधत्से द्विजमुक्तिदानकरुणा दृष्टा श्रुता वा न ते ॥ १६१

भावत्क मीति— अस्फुटतनुः अविज्ञेयस्वरूपः, त्वं, पूर्वं प्रथमतः, भावत्कं त्वदीयं, 'भवत ष्ठक्छसाविति ठक्' । गुणजालं कल्याणगुणगणं, प्रकाश्य प्रकटीकृत्य, सगुणोपासनेच्छा मुत्पाद्येत्यर्थः । भ्रान्तिभृतोऽपि देहादिष्वात्मत्वमदीयत्वरूपभ्रान्तियुक्तान पि, अविद्यावृतत्वादि ति भावः । द्विजान् ब्राह्मणान्, तत्र सगुणोपासने, लग्ना नासक्तान्, तनुषे करोषि । निष्काम कर्मानुष्ठापनेन शुद्धान्तःकरणान् विधाय, ततः त्वद्ध्यानधारणाद्यासक्तान् करोषीति भावः । पश्चा त्तः; गुणेभ्यः सत्वादिभ्यः, विषयेभ्य, इति, वा, च्युतान् भ्रष्टान्, आतन्वन् कुर्वन्, द्विजा- नित्येव । सगुणोपासनात स्त्याजयित्वा, निर्गुणोपासने प्रवेशयन्नित्यर्थः । अगतीन् गत्यन्तरशून्यान् नैकशरणानित्यर्थः । एतान् निर्विकल्पसमाध्यारूढान्, कृतपक्षपातं सस्नेहं यथा तथा, निजान्त- र्गतान् स्वाभिन्ना, नाधत्से करोषि, स्वत्सायुज्यं ददासीत्यर्थः । ते त्वदीया, द्विजमुक्ति दारनकरुणा ब्राह्मणमोक्षप्रदाने दया, दृष्टा अवलोकिता श्रुता वा नभवति । कापी दृशी निर्व्याजपरमफलप्रद- करुणा न दृष्टचरी न श्रुतचरीचे ति भावः । मायामोहिततया इतिकर्तव्यतामूढानां प्रथमत स्सुकर- तया सगुणोपासनेच्छा मुत्पाद्य तदनु क्रमेण ज्ञान मुत्पाद्य मोक्षं ददत स्तव करुणा केनापि न वर्णनीयेति परमार्थः । व्यङ्ग्यार्थस्तु- अस्फुटतनुः प्रच्छादितशरीरः क्वचिन्निलीन स्स न्नित्यर्थः । त्वं भावत्कं गुणजालं तन्तुकृतं पक्षिग्रहणसाधनविशेषं, मृद्धट इति वत्प्रयोगः । पूर्वं, प्रकाश्य विस्तारयित्वा, भ्रान्तिभृतो भ्रमणशीलान्, द्विजान् पक्षिणः, तत्र जाले, लग्नान्, तनुषे, पश्चा ल्लग्नान्तरं, कृतपक्षपातं कृतः पक्षपातः पक्षच्छेदः यस्मिन् कर्मणि तद्यथा तथा, गुणेभ्य स्तन्तुभ्य श्च्युता नातन्वन् जालतः पृथक्कुर्वन्नित्यर्थः । अगतीन् छिन्नपक्षतया गमनरहितान् एतान् पक्षिणः । निजान्तर्गतान् स्वोदरप्रविष्टान्, आधत्से खादसीत्यर्थः । अतएव ते द्विजमुक्तिदानकरुणा पक्षि- मोचनदया दृष्टा श्रुता वा नभवति । विपरीतलक्षणया ईदृशं नैर्घृण्यं चित्र मित्यर्थः ॥ १६१

श्लो ॥ कारुण्याब्धि रिति प्रथा तव भुवि ख्याता च मे दीनता
दासोऽहं तव चेति जृम्भति मुहुर्दैन्यं यदद्यापि मे
दोषः किन्तु ममैव सोऽय मथवा त्रैलोक्यतातस्य ते
न्यायोऽनेह समञ्जस स्स्मर मुहु स्संरक्षणं श्रेयसे ॥ १६२

कारुण्येति— भुवि लोके, तव ते, करुण्याब्धि दयासमुद्र, इति, प्रथा प्रख्यातिः, कीर्तिरिति यावत् । ख्याता प्रसिद्धा । एवं, मे मम, दीनता च कृपणत्व मनाथत्व मिति यावत् । भुवि ख्याते त्यत्रापि पदद्वयं सम्बध्यते । तथा तवाहं दास स्सेवक इति, प्रथा च भुवि ख्याता । एवं स्थिते अद्यापि दीनकृपाळो स्तव आश्रयणे कृते सत्यपि, मे मम, मुहु रतिशयेन, दैन्यं

दीनता, जृम्भति वर्तते' इति यत् ; सोऽयं मम दैन्यविकासः, ममैव दोषः, किन्तु किं वा ? अथवा त्रैलोक्यतातस्य त्रिभुवनजनकस्य' ते तवैव, दोषो वा ? इहास्मिन्विषये' समञ्जसः योग्यः,' न्यायः विनिगमना' एकत्र पक्षपातिनी युक्ति रिति यावत् । न नास्ति । अयं दोष स्तवेति ममेति वा निर्धारितुं नास्ति प्रबलोहेतु रिति भावः । यस्य कस्यापि वा भवतु । कर्तव्य माह- स्मरेति । श्रेयसे शुभाय, मुहु रतिशयेन, संरक्षणं मामकरक्षां, स्मर कश्चिद्दीनो मत्सेवकः मत्सकाशा द्रक्षां याचते इति मां स्मरसि यदि; मम श्रेय स्स्यादितिभावः । यद्वा दीनजनावनबद्ध-दीक्षस्य तव या प्रख्याति स्सा मदनवने लुप्येत, तस्मात् मां संरक्ष्य तदसाधारणनिजप्रतिष्ठां पालय-एत न्मद्रक्षणं तवैव श्रेयः । अपकीर्तिनिरासकत्वादिति भावः ॥ १६२

**श्लो ॥ आकल्मषप्रशम माकलये विलम्ब**
**मिद्धं प्रतारयितु मस्ति यदि प्रयत्नः**
**पापं त्वदङ्घ्रिकमलाश्रयणावधीति**
**जानेन किन्तु निगमप्रकरप्रवादम् ॥ १६३**

आकल्मषेति– आकल्मषप्रशमं पापशान्तिपर्यन्तं, विलम्बं कालक्षेपं, माकलये करोमि, इद्ध मेवं, प्रतारयितुं मां वञ्चयितुं, प्रयत्नः यत्नः, अस्ति यदि भवति चेत् ; त्वं दीन एव, अहं दीनजनरक्षकएव– तथापि तावकपापशान्तिपर्यन्तं त्वद्रक्षा मायोपेक्ष्यते इति; यदि त्वं मां प्रतारयसीत्यर्थः । पापं कलुषं' त्वदङ्घ्रिकमलाश्रयणावधि तव अङ्घ्रिकमलयोः पादारविन्दयो राश्रयणं सेवा त्वदङ्घ्रिकमलाश्रयणं' अवधि रन्तो यस्य त त्तथोक्तं । इत्येवं रूपं निगमप्रकरप्रवादं वेदसङ्घघोषं' न जाने किन्तु जानाम्येव । अग्न्याश्रयणा तूलराशि रिव भगवत्पादारविन्दाश्रयणा त्पापराशि र्भस्मीभवतीति वेदान्तविचारणेन मया ज्ञातमेव- अतो नाहं त्वया वञ्चनीय इति भावः ॥ १६३

**ग ॥ समनन्तरमन्तर्हिते भगवति तूष्णीम्भूय सरय मुन्मज्य च शताङ्गसङ्गत मक्रूरं वासुदेवः किमपूर्व मालोकितवा नसीति सकपट मपृच्छत् ॥ १६४**

समनन्तरमिति– समनन्तर मक्रूरस्तुत्यनन्तरं, भगवति विष्णौ, अन्तर्हिते, सति, तूष्णींभूय निर्वचाःभूत्वा, सरयं ससम्भ्रमं यथा तथा, उन्मज्य- च जला दुद्धाय, शताङ्गसङ्गतं रथारूढ, मक्रूरं, अपूर्वं अदृष्टश्रुतचरं, किं ? वस्तु आलोकितवा नसि दृष्टवानसि? । इत्येवं, सकपटं समायं, यथा तथा, वासुदेवः कृष्णः, अपृच्छत् पप्रच्छ ॥ १६४

**ग ॥ सोऽपि सकलविस्मयभाजनं भवन्त मन्तरेण न किञ्चिदुत्तरयन्, प्रेरित रथतुरङ्गम स्सपदि मथुरानगरपरिसर मुपगम्य तत्र सपरिवारं केशवं निवेश्य प्रविश्य च स्वयं नगरं कंसाय तदागमनोदन्त मावेद्य निजसदन माससाद ॥ १६५**

सोऽपीति– सोऽप्यक्रूर श्च, सकलविस्मयभाजनं सर्वाद्भुतनिलयं, भवन्तं त्वा, मन्तरेण विना, किञ्चित् किमपि, न नापश्यं; त्वामेव दृष्टवानिति भावः। इति उत्तरयन् उत्तरं वदन्, तत्करोति तदाचष्टे इति उत्तरशब्दा दाचष्टे इत्यर्थे णिः, ण्यन्तात्तु लट श्शत्रादेशः। प्रेरितरथतुरङ्गमः चोदितस्यन्दनाश्वः, सपदि द्रुतं, मथुरानगरपरिसरं मथुरापुरप्रान्त, मुपगम्य प्राप्य, तत्र प्रान्ते, सपरिवारं सपरिजनं, केशवं कृष्णं, निवेश्य स्थापयित्वा, स्वयं, नगरं पत्तनं प्रविश्य गत्वा, च, कंसाय, तदागमनोदन्तं श्रीकृष्णागमनवृत्तान्त, मावेद्य ज्ञापयित्वा, निज-सदनं स्वगृह, माससाद प्राप ॥ १६५

**श्लो ॥ मधुरां मधुराकरा मवलोकयितुं ततः**
**चचाल कल्पिताकल्प स्सबलो बलिशासनः ॥** १६६

मधुरामिति– ततः अक्रूरगमनानन्तरं, कल्पिताकल्पः धृतभूषणः, सबलः बलराम-सहितः, बलिशासनः बलिनां शिक्षकः, कृष्णः, मधुराकारां सुन्दरस्वरूपां, मधुरानगरी, मवलोकयितुं द्रष्टुं, पुररामणीयकं दिदृक्षु रित्यर्थः। चचाल प्रतस्थे ॥ १६६

**ग ॥ अथ पुण्डरीकलोचनावलोकनकुतूहलसमाकुलपौरजनकलकलकबळितशब्दान्तरा ममरनगर मपि नैतदुपममिति निषेधद्भि रिव चलाचल चेलाञ्चलै र्निकेतनकेतनै रुपशोभमाना मवनीकामिनीताटङ्कायितकनकप्राकारा मभ्रंलिहशातकुम्भसौधा मविरतधारायन्त्रविगळितसलिलशीकरसंसिक्तविपणिसरणि माबद्धमौक्तिकतोरणां मृगमदघनसारसौरभविजृम्भितां प्रत्यादेशमिव सुरालयस्य वीप्सामिव पितामहलोकस्याम्रेडितमिव भोगवत्याः प्रतिबिम्बमिव कैलासस्य द्विर्भावमिव वैकुण्ठस्य सकलभोगानुकूलां मधुरां प्रविश्य नागरसुन्दरीनळिननयनै रभ्यर्च्यमानो लाजै रवकीर्यमाणो निरन्तरालोककशब्दै रभिनन्द्यमानो यशोदानन्दन स्स्वीकृतधौतांशुकनिकायं कमपि राजकीयं रजक मद्राक्षीत् ॥** १६७

अथेति– अथ ततः, पुण्डरीकलोचनस्य कृष्णस्य, अवलोकनकुतूहलेन दर्शनोत्कण्ठया, समाकुलानां सम्भ्रान्तानां, पौरजनानां नागरिकजनानां, कलकलैः तन्नामकध्वनिभिः, कबळितं ग्रस्तं, शब्दान्तर मन्य श्शब्दः, यस्यां ताम्, अन्यध्वनि मभिभूय कलकलध्वनि रभितो व्याप्त इत्यर्थः। अमरनगर मपि स्वर्गोऽपि, एत दुपमं एतत्तुल्यं, न न भवति। अत्र अमर-नगरतुल्य मिद मिति वक्तव्ये तथाऽनुक्त्वा एतत्तुल्य ममरनगरमिति प्रतीपविधया प्युनुक्त्वा अमरनगरे एतत्साम्य निषेधात् अत्युक्तिरलङ्कारः। 'अत्युक्ति रद्भुतातथ्यशौर्यौदार्यादिवर्णन' मिति लक्षणात्। अद्भुत मतथ्यं ह्यत्र वर्णितमिति ज्ञेयम्। वस्तुतस्तु प्रतीपालङ्कार भेद एवायं–

'वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च त दि' ति लक्षणात्। इत्येवं निषेधद्भिर्निवारयद्भि रिवे त्युत्प्रेक्षा। अमरनगरस्यै तत्साहृश्यं निषेधद्भिरिव स्थितै रिति भावः। चलाचलचेलाञ्चलैः, निकेतनकेतनैः गृहपताकाभि, रुपशोभमानां प्रकाशमानां, तथा अवनीकामिन्याः भूरमण्याः ताटङ्कायितः ताटङ्कः कर्णभूषणः तद्वदाचरितः, कनकप्राकारः सौवर्णसालः, यस्या स्ताम्; ताटङ्के यथा अभितः कनकवेष्टनं मध्ये छिद्रं च वर्तते; तद्वत्प्राकारोऽपि मध्ये सच्छिद्रः अभितः कनकमय इति उपमानोपमेयभावः। रूपकानुप्राणितेय मुपमा। अभ्रंलिहशातकुम्भ-सौधां अभ्रं खं लिहन्ति आस्वादयन्ती ति अभ्रंलिहाः, तावत्पर्यन्तमुन्नता इत्यर्थः! शातकुम्भ-सौधाः, सुवर्णप्रासादाः यस्यान्ताम्। अविरत मविच्छिन्नं यथा तथा, धारायन्त्रादुदकस्रावयन्त्रा द्विगळितैः स्खलितैः, सलिलशीकरैः जलबिन्दुभि, स्संसिक्ताः सम्यगार्द्रीकृताः, विपणिसरणयः आपणमार्गाः यस्या न्ताम्। आबद्धमौक्तिकतोरणां धृतमुक्ताफलतोरणाम्, मृगमदस्य कस्तूर्याः घनसारस्य कर्पूरस्य, च, अनयो स्सौरभेण आमोदेन, विजृम्भितां व्याप्ताम्, सुरालयस्य, स्वर्गस्य, प्रत्यादेशं प्रत्यादिश्यते प्रत्याख्यायते अनेनेति प्रत्यादेशः; तं प्रत्याख्यातारमिव स्थिता मित्युत्प्रेक्षा। सुरलोकं प्रत्याख्यातीव भातातीति भावः। यद्वा प्रति तुल्य मादिश्यते उच्यते इति प्रत्यादेशः सदृशवस्त्वि त्यर्थः, तम्। अथवा प्रत्यादेश मिव रूपान्तरमिवेत्यर्थः, पितामहलोकस्य सत्यलोकस्य, वीप्सा मिव द्विर्भावमिव, स्थिता मिति, कार्यकारणयो रभेदोप-चारा त्प्रयोगः। नित्यवीप्सयोरितिवीप्सायां हि द्विर्भावो विहितः। द्वितीयसत्यलोकमिवस्थिता मिति भावः। भोगवत्याः रसातलगतनागराजधान्याः, आम्रेडित मिव द्विरुक्तमिव, 'आम्रेडितं द्वि स्त्रिरुक्त' मित्यमरः। भोगवत्याः एव मधुरेति नामान्तरं, तेन मधुरा, भोगवती, शब्दाभ्या मुभाभ्यामपि, प्रत्येकं पत्तनद्वयार्थबोध स्सुलभ इति भावः। कैलासस्य शिवलोकस्य, प्रतिबिम्ब-मिव प्रतिफलनमिव,स्थिताम्। जलमयेऽत्रदेशे शिवलोकप्रतिबिम्ब एव मथुरानगराकारेण भातीति भावः। यथाह श्रीहर्षः— 'विललास जलाशयोदरे क्वचन द्यौरनुबिम्बिते व या परिघाकपट-स्फुटस्फुरत्प्रतिबिम्बानवलम्बिताम्बुनि' इति। वैकुण्ठस्य विष्णुलोकस्य, द्विर्भावमिव द्वित्व, मिव, यथा पदं द्विरुक्तं भवति; तथा वैकुण्ठलोकोऽपि द्विरुक्तोऽभवत्। तत्र एकः वैकुठण्शब्देन, अन्यः मथुराशब्देन, च, प्रतिपाद्येते, इति भावः। अत्र प्रत्यादेशादिभिः पञ्चभि रुत्प्रेक्षाभि स्तत्तत्सादृश्यं व्यज्यते, इत्यलङ्कारेण वस्तुध्वनिः। सकलभोगानुकूलां सर्वविधभोगानुगुणां, मधुरां, प्रविश्य गत्वा, नागरसुन्दरीणां पौराङ्गनानां, नयननळिनैः नेत्रकमलैः कटाक्षपद्ममालाभि रित्यर्थः। अभ्यर्च्यमानः पूज्यमानः, दृश्यमान इत्यर्थः। लाजैः भर्जितबीजैः, अवकीर्यमाणः विक्षिप्यमाणः, निरन्तरै रविच्छिन्नैः, आलोकनशब्दैः जय जये त्यादिशब्दैः अभिनन्द्यमानः श्लाघ्यमान श्च सन्, यशोदानन्दनः कृष्णः, स्वीकृत धौतांशुकनिकायं विधृतदुकूलजालं, कमपि कञ्चन, राजकीयं राज-समूहसम्बन्धिनं, राज्ञां समूहो राजकं, तस्येद मित्यर्थे वृद्धा च्छः। राजतत्पुत्रतद्दारादिवस्त्रक्षाळक मित्यर्थः। यद्वा राजैव राजकं- स्वार्थे कः। तस्य सम्बन्धिनं, रजकं निर्णेजकं, मद्राक्षी ददर्श॥

ग ॥ उपसृत्य च एव मयाचत ॥ १६८

उपसृत्येति– तं रजक, मुपसृत्य सन्निधाय, एवं वक्ष्यमाणरीत्या, अयाचत प्रार्थयामास ॥

श्लो ॥ दद्या यदीदं मृदु नो दुकूलजालं विशालं सुकृती तदा स्याः
यन्नेत्रदोषा नमृतावसेकै र्घ्नतो नृणां युक्त मिदं तवैव ॥ १६९

दद्या इति– नः अस्माकम्, अस्मभ्य मिति वा, विशालं विस्तीर्णं, मृदु मृदुलं, इदं दृश्यमानं, दुकूलजालं क्षौमसञ्चयं दद्या यदि दास्यसि चेत्; 'जातुयद्योर्लिङ्'इति दाञ् धातोः लिङ् तदा सुकृती कृतार्थः। स्याः भवेः, त्व मित्यस्याक्षेपः। कच्चरपटच्चराच्छादनेन भृशाभिन्नेभ्योऽसभ्यो मृदुविशालदुकूलजालं ददतस्तव सुकृत मगणितं स्यादित्येकोभावः। पत्रपुष्पादिदानेन य स्तोषितः आश्रितेभ्यः परमानन्दं ददाति; तस्य परमात्मनो मम यदि त्वं दुकूलदाता स्या स्तर्हि तव सुकृतं केन वर्णनीय मित्यन्यो भावः। ननु किमिति मां रजकं याचसीत्यत आह। यदिति- यद्यस्मात् नृणां, नेत्रदोषान् वस्त्रगतमालिन्यादिदोषान्, 'नेत्रं नाड्यां तरोर्मूले वस्त्रे' इति विश्वः। अमृतावसेकैः जलसेचनैः घ्नतः अपहरत, स्तवैव। इदं दुकूलदानं, युक्तं समीचीनम्, निर्मलानि दुकूलानि, तवैव सन्ति; अन्येषान्तु त्वयोपभुज्य दत्तानि मलिनान्ये वेति कृत्वा असभ्यं वस्त्राणि दातुं त्वमेव क्षम इति भावः। व्यङ्ग्यार्थस्तु- हेचन्द्र! इति शेषः- इदं विशाल मपरिमितं, मृदु शीतलं, दुकूलजालं विषयनिगरणेन अंशुसञ्चयं, नः दद्या यदि, उष्णकिरणकिरणसन्तप्तेष्वस्मासु पातयसि यदीत्यर्थः। तदा सुकृतीस्याः महत्सुकृतं त्वया सम्पादितं स्या दित्यर्थः। यद्यस्मात्, नृणां मनुष्याणां, नेत्रदोषान् भानुकिरणसम्पर्कजन्या, नक्षिदोषान्, अमृतावसेकैः किरणसुधाप्रसारणैः, घ्नतः तवैव इदं युक्तं, त्वत्किरणानामेव अमृतमयत्वेन सन्तापवारकत्वा दस्मच्चक्षुस्तापापहरणपूर्वकं सुकृतं सम्पादयितुं त्वमेव क्षमो; नत्वन्य इति भावः ॥ १६९

ग ॥ एवं सविनय मभ्यर्थयमान मेनं दुर्मनीष एषः सकपटं प्रत्यवादीत् ॥

एवतिनि– एवं पूर्वोक्तरीत्या सविनयं विनयसहितं यथा तथा, अभ्यर्थयमानं प्रार्थयन्त, मेनं कृष्णं, दुर्मनीषः दुर्बुद्धिः, एष रजकः, सकपटं सव्याजं, प्रत्यवादीत् प्रत्युवाच ॥ १७०

श्लो ॥ विना वसन मीदृशं मृदु पटच्चरं कच्चरं
वनेचर गवाम्पते पृथुक ते कथं रोचते
तथापि पृथिवीभुजा परिगृहीत मेत च्चिरं
भवत्यसदृशं बला दसुहरं च हाहा तव ॥ १७१

विनेति– हेवनेचर! काननचारिन्! वनमृगतुल्येति भावः। वानप्रस्थादिवद्विरक्त्या न तवायं वनसञ्चार इत्याह। गवाम्पते! इति गोपालक! गाः पालय न्नित्यं वने वससीति

भावः। तत्रापि न त्वं तरुण इत्याह। हेपृथुक! इति– हेशिशो! इत्यर्थः। ते एवंविधाय, ते तुभ्यं, 'रुच्यर्थानां प्रियमाण' इति सम्प्रदानत्वा च्चतुर्थी ईदृशं एतादृशं, मृदु मृदुलं, वसनं क्षौमं। विना कच्चरं मलदूषितं, पटच्चरं जीर्णवस्त्रं, कथं, रोचते प्रियं भवति? नकथ मपी त्यर्थः। विपरीतलक्षणया– कच्चरपटच्चरधारणार्हस्य तव ईदृशमृदुवस्त्रधारण मनर्ह मिति भावः। तथापि एव मपि, पृथिवीभुजा राज्ञा, चिरं बहुकालं, परिगृहीतं धृत, मेत द्वसनं, तव असदृशं अननुगुणं, बलात्प्रसह्य असुहरं प्राणापहारि, च, भवति। हाहेति विस्मये। गोपशिशोः राजवस्त्राभिलाषो विस्मयावह इति भावः। कच्चरपटच्चरधारणयोग्यस्य तव क्षौमधारणयोग्यताया एवाभावे; राजपरिधानधारणाशा, प्राणापायकारिण्येव। न पुन रुचिते ति रजकविवक्षितार्थः। एवं भगवति मात्सर्येण प्रयुक्तापि सरस्वती वस्तुतो भगवन्तं स्तौत्येव। तथा हि– हे वनेचर! वनवासिन्! 'वनं गतो यद्धरि माश्रयेते ति' भागवतात् सर्व-व्यापकोऽपि भगवान् वने सुलभस्फुरण इत्यभिप्राया दिदं सम्बोधनम्। वराहनृसिंहावतारयो र्वनगोचरत्वादिति वा। वने जले चरतीति मत्स्यावताराभिप्रायेण वा। यद्वा वनशब्दोऽत्र गौणवृत्त्या दुरवगाहं वेदान्तनिकुरुम्बम् बोधयति। तत्र चरति प्रकाशते इति वनेचरः, अथवा वने बृन्दावने चरतीति वनेचर इति यथार्थकथनमेवास्तु। बृन्दावनविहारस्य गुणावहत्त्वादिति। हेगवाम्पते गावो वाचः, वेदरूपाः, तासाम्पते! श्रुतिपरिवृढेत्यर्थः। सर्ववेदप्रतिपाद्येति यावत्। हेपृथुकः पृथु र्महान्, ततः स्वार्थे कः। तत्सम्बुद्धिः 'अणोरणीया न्महतो महीया' निति श्रुतेः। ते एवं विधाय, परमेश्वराय, तुभ्यं, मृदु, ईदृशं, वसनं विना कच्चरं पटच्चरं, कथं रोचते। परमेश्वरस्य लीलामानुषस्य मन्मथमन्मथस्य तव क्षौमधारण मेवोचितं; न तु पुनरीदृशकच्चरपटच्चर धारण मिति भावः। ननु तर्हि मम योग्यं दुकूलजालं; तद्दिशे त्यत आह। तथापि तव क्षौमधारणयोग्यत्वेऽपि, पृथिवीभुजा, चिरं, परिगृहीत मेत त्तव असदृशं, जीर्णत्वात् निर्माल्यभूतत्वा च्चेति भावः। अयोग्य मित्यविगणय्य, कथञ्चि दपेक्षणेऽपि बला दसुहरं च सुखेन हर्तुमशक्यं च, भवति। त्वच्छत्रुराजसम्बन्धित्वा देतस्येति भावः। हाहेति शोके। परमेश्वराय ते समर्प्यं नूतनदुकूलं नास्तीति शोचामीति भावः॥ १७१

**ग॥ एव मतिनिगूढं विप्रियजल्पाक मल्पायुष मेनं खरतरनखरशिखरेण सलील मपास्तमस्तकं विधाय, तदनुचरनिकरे प्रतिदिशं पलायमाने, तदीयकरतल-गळितदुकूलजालं याथाभिलषित माच्छाद्य, निजोपयुक्तशेश मनुचरेभ्यो वितीर्य, च, पुन रन्यतो गत्वा, वायक नामान मालङ्कारिकं सारूप्यप्रतिपादने नानुगृह्य, सुदाम-नामान मवगतभगवत्प्रभावं कमपि मालाकारं तत्समर्पितनानाविधसुगन्धिकुसुमदा-मसमुदाय मादानपूर्वकं प्रसाद्य, समालम्बित विलेपभाजनां कुब्जा मब्जानना मद्राक्षीत्॥** १७२

एवमिति– एव मुक्तरीत्या, अतिनिगूढं अत्यन्तगूढं यथा तथा, विप्रियजल्पाक मप्रियभाषिण, मल्पायुषं स्वल्पायुष्क, मेनं रजकं, खरतरनखरशिखरेण तीक्ष्णनखाग्रेण, करणेन, सलीलं सविलासं यथा तथा, अपास्तमस्तकं हृतशिरस्कं, विधाय कृत्वा, तदनुचरनिकरे रजकानुचरसमूहे, प्रतिदिशं सर्वदिक्षु, पलायमाने अपद्रुते सति, तदीयकरतलात् रजकहस्ततला, द्गळितं भ्रष्टं, दुकूलजालं क्षौमसन्ततिं, यथाभिलषितं यथेच्छ माच्छाद्य परिधाय, निजोपयुक्तशेषं निजेन स्वेन उपयुक्ता दाच्छादितात् शेष मन्यत्, अनुचरेभ्यः परिजनाय वितीर्य दत्वा, पुन स्ततः, अन्यतः अन्यत्र, गत्वा, वायकनामानं वायक इति नाम अभिधा यस्य तं, आलङ्कारिकं अलङ्कारे नियुक्तं, तत्र नियुक्त इति ठक्– ठस्येक इतीकादेशः। मृदुवस्त्राभरणाद्यलङ्कारैः राजान मलं कुर्वाण मित्यर्थः। सारूप्यप्रतिपादनेन सारूप्यदानेन, अनुगृह्य संरक्ष्य, वायकार्पितपटाभरणादिकं गृहीत्वा, तस्मै सारूप्यमुक्तिरूपं वरं दत्वेत्यर्थः। अवगतभगवत्प्रभावं ज्ञातकृष्णमाहात्म्यं, सुदामनामानं सुदामाभिधं, कमपि धन्यं, मालाकारं पुष्पमालानिर्मातारं, तत्समर्पितस्य सुदामदत्तस्य, नानाविध सुगन्धिकुसुमदामसमुदायस्य बहुविध परिमळ पुष्पमालासमूहस्य, समादानपूर्वकं ग्रहणपूर्वकं, प्रसाद्य अनुगृह्य, तदर्पितमालाः गृहीत्वा, तमनुगृह्य चे त्यर्थः। समालम्बितविलेपभाजनां धृतचन्दनरसपात्रां, अब्जाननां कमलवदनां, कुब्जां तन्नाम्नीं, स्त्रिय, मद्राक्षीत् ददर्श ॥ १७२

**ग ॥ सा च याचिता चक्रधरेण विरचिततदङ्गसङ्गा सानङ्गा प्रभूतकाश्मीरमृगमदघनसारसौरभेण गन्धसारेण तस्याङ्गराग मुपरचितवती ॥ १७३**

साचेति– सा च कुब्जा च, चक्रधरेण कृष्णेन, याचिता प्रार्थिता, किञ्चि चन्दनरसं मह्यं देही ति प्रार्थिते त्यर्थः। सती, अत एव विरचिततदङ्गसङ्गा कृतकृष्णदेहसंयोगा, चन्दनद्रवलेपनार्थं श्रीकृष्णशरीरं स्पृष्टवती त्यर्थः। अत एव सानङ्गा समन्मथा, त्रिभुवनमोहनस्य कृष्णस्य शरीरसङ्गे सति कुब्जायाः मन्मथोद्रेको न चित्र इति भावः। प्रभूतः अधिकः, काश्मीरः कुङ्कुमः, मृगमदः कस्तूरी, घनसारः कर्पूरः, एतेषां सौरभः परिमळः, यस्य तेन, यस्मिं स्तेने ति वा, गन्धसारेण चन्दनद्रवेण, तस्य कृष्णस्य, अङ्गरागं अनुलेपनं, उपरचितवती कृतवती, बभूवे ति शेषः। यथा प्रेयसी प्रियस्य तद्वदिति सानङ्गत्वविशेषणेन ध्वन्यते ॥ १७३

**ग ॥ भगवानपि समुदितदयारस स्सपदि कुटिला मेना मकुटिलां विधाय समयान्तरे तदङ्गसङ्ग मङ्गी चकार ॥ १७४**

भगवानिति– भगवान पि कृष्ण श्च, समुदितदयारसः उत्पन्नकृपारस स्सन्, अत एव सपदि तदैव, कुटिलां वक्रा मेनां कुब्जां, मकुटिलां ऋज्वीं, विधाय कृत्वा, समयान्तरे अन्यस्मिन् काले; तदानी मसमयादिति भावः। तदङ्गसङ्गं कुब्जादेहसंयोगं, तत्सम्भोगमिति यावत्, अङ्गीचकार अभ्युपजगाम ॥ १७४

**स्थाने हि तत् ॥**

यत् कुब्जाङ्गसङ्गमः कृष्णस्यासीदिति; तत् तदित्यर्थः । स्थाने हि युक्तम् ॥

**श्लो ॥ धृतवामनभावोऽयं कुब्जेय मनयो र्युतिः**
**अनुरूपगुणा केन ने यं समभिनन्द्यताम् ॥** १७५

धृतेति– अयं कृष्णः धृतवामनभावः धृतः स्वीकृतः वामनभावः वामनावतारत्वं ह्रस्वत्वमि ति च येन सः भवति । इयं स्त्री कुब्जा कुब्जाख्या ह्रस्वे ति च भवती ति शेषः । अनुरूपगुणा सदृशगुणा; उभयो र्ह्रस्वत्वा दिति भावः । इय मनयोः कुब्जाकृष्णयो र्युति र्योगः संयोग इत्यर्थः । केन पुरुषेण न समभिनन्द्यताम् न श्लाघ्यताम्? सर्वैरपि श्लाघ्यते एवे त्यर्थः । समालङ्कारः । 'समं स्याद्वर्णनं यत्र द्वयो रप्यनुरूपयो ' रिति लक्षणात् ॥ १७५

**श्लो ॥ अथ धनु स्सविधं मधुसूदन स्समधिगम्य रटत्स्वपि रक्षिषु**
**त्वरित मादित सज्य मथ व्यधा दपि शरं समधत्त बभञ्ज च ॥१७६**

अथेति– अथ एवं दुकूलभूषणादिधारणानन्तरं मधुसूदनः कृष्णः सविधं समीप मर्थात् चापसमीपं, समधिगम्य गत्वा, रक्षिषु पालकेषु रटत्स्वपि शब्दायमानेष्वपि, त्वरितं द्रुतं धनुः चाप मादित जग्राह । अथ ततः सज्यं समौर्वीकं व्यधात् चकार धनु रित्येव । शरमपि बाणं च समधत्त सन्दधे । धनु षीति शेषः । बभञ्ज च भग्नं चकार धनुरित्येवात्रान्वेति । अत्र बह्वीनां क्रियाणां यौगपद्या त्समुच्चयालङ्कारः । 'बहूनां युगप द्भाव भाजां गुम्भ स्समुच्चय ' इति लक्षणात् । तेन च भगवतो धनुर्विद्यालाघवं व्यज्यते ॥ १७६

**साम्प्रत मेतत् ॥**

एत द्धनुर्विदळनं साम्प्रतं युक्त मित्यर्थः ॥

अव– योग्यतामेव दर्शयति अपी ति ॥

**श्लो ॥ अपि पृथुवंशसमुद्धो गुरुगुणनम्रोऽपि न कथं स्यात्**
**भग्नमहत्तरकाष्ठो मार्गणसंरम्भ मसहमानोऽसौ ॥** १७७

अपीति– पृथुवंश समुद्धः महत्तरवेणुकृतोऽपि 'वंशो वेणौ कुले वर्ग' इति विश्वः । गुरुगुणनम्रोऽपि गुरुणा अतिशयेन गुणेन मौर्व्या, नम्रोऽपि सन्नतोऽपि, मार्गणसंरम्भं बाणाडम्बर मसहमानः अमर्षणः, असौ चापः, भग्नमहत्तरकाष्ठः भग्नं त्रुटितं महत्तरं पृथु काष्ठं दारु यस्य सः भग्नवेणु रित्यर्थः । मौर्वीमात्रशेष इति भावः । कथं स्यात् कथं न भवेत् ? अपितु भवेदेवेत्यर्थः । अत्र महानपि चापो भग्न स्स्या दिति वाक्यार्थस्य मार्गण संरम्भासहनरूपपदार्थ-

हेतुकत्वा त्काव्यलिङ्ग मलङ्कारः । व्यङ्ग्यार्थ स्तु पृथुवंशससुद्धोऽपि महाकुलीनोऽपि गुरुगुण-नम्रोऽपि श्रेष्ठगुणै र्नम्रोऽपि सुगुणवत्त्वेन विनीतोऽपी त्यर्थः । मार्गणसंरम्भं याचकाडम्बर मसह-मानोऽसौ पुमान्, भग्नमहत्तरकाष्ठः नष्टातिशयोत्कर्षः 'मार्गणे याचकार्थि नाविति, काष्ठोत्कर्षे स्थितौ दिशी ति' चामरः । कथं न स्यात्? महाकुलीनोऽपि गुणवा नपि, विनीतोऽपि दातृत्वा-भावे लुब्ध इत्यपहास्य स्स्यादित्यर्थः ॥ १७७

**ग ॥ अनन्तर मशनिपातप्राकालिकजीमूतगर्जितप्राग्भारप्रतिभटोद्भटधनुर्भङ्ग-घोषनिबिडिते जगदण्डकरण्डपिचण्डे गृह्यता मयं निगृह्यता मयमिति त्वरित माप ततः कार्मुकपरिपालकान् शरासनशकलेन शकलिता नाधाय तन्निशमनविवशाशयं भोजराजमपि तृणाय मन्यमानौ समासादितानन्दौ वसुदेवनन्दनौ पुटभेदनसम्पदं सम्पूर्णतया निर्वर्ण्य पुन स्स्वावास मावसताम् ॥ १७८**

अनन्तर मिति— अनन्तरं धनुर्भङ्गानन्तरम् जगदण्डकरण्डपिचण्डे जगन्मयोऽण्डः जग-दण्डः ब्रह्माण्ड इत्यर्थः । स एव करण्डो भाण्डं तस्य पिचण्डः उदरं तस्मिन् 'पिचण्ड कुक्षी जठरे' त्यमरः । अशनिपातप्राकालिकस्य वज्रपाता त्पूर्वसमयभवस्य जीमूतगर्जितप्राग्भारस्य मेघनिनदातिशयस्य प्रतिभटेन प्रतिमल्लेन तत्तुल्येने त्यर्थः । उद्भटधनुर्भङ्गघोषेण अतिशयचाप-विदळध्वनिना निबिडिते व्याप्ते सति, अयं चापभञ्जकः कृष्णः गृह्यतां स्वीक्रियतां अयं कृष्णः निगृह्यतां बध्यताम् इत्येवं वदत इति शेषः । त्वरितं द्रुतमाप । ततः अभिमुख मागच्छतः कार्मुकपरिपालकान् चापरक्षिणः शरासनशकलेन चापखण्डेन शकलितान् विदारिता नाधाय कृत्वा, तन्निशमनात् तस्याः चाप- तत्पालकभङ्गवार्तायाः निशमनं श्रवणं तस्मा द्धेतोः तेन हेतुनेति वा । विवशाशयं परवशहृदयं भोजराजमपि कंसमपि तृणाय मन्यमनौ 'मन्यकर्मण्यनादरे' इति चतुर्थी । समासादितानन्दौ प्राप्तमोदौ वसुदेवनन्दनौ रामकृष्णौ पुटभेदनसम्पदं पत्तन-सम्पत्तिं सम्पूर्णतया साकल्येन निर्वर्ण्य दृष्ट्वा, पुनः भूयः, स्वावासं स्वनिवासं, मधुरानगर प्रान्त-मित्यर्थः । आवसताम् अधिष्ठितवन्तौ बभूवतुः ॥ १७८

**ग ॥ कंसोऽपि तदाकर्ण्य कर्णपरुषं यावत्तमिस्र मनुज्झित जागरः प्रभाते मल्लाहवमहोत्सव मकल्पयत् ॥ १७९**

कंसोऽपीति— कंस श्च कर्णपरुषं श्रुतिकटु तत्कृष्णचरित्र माकर्ण्य, चारसकाशात् श्रुत्वा, यावत्तमिस्रं रात्रिपरिसमाप्तिपर्यन्तं अनुज्झितजागरः अत्यन्तजागरः चिन्तया अलब्धनिद्र इत्यर्थः । सन् प्रभाते प्रातः मल्लाहव महोत्सवं मल्लयुद्धरूपं महोत्सव मकल्पयत् कल्पयामास ॥ १७९

**श्लो ॥ तत स्सपदि दुन्दुभिध्वनि रभू दश्रुतोपम**

**स्त मम्बुधरडम्बरं कतिचि दूचु रन्ये पुनः**

प्रचण्डगरुडध्वजक्षपितधन्वघोषस्फुट
न्महाण्डजठरक्षरत्प्रचुरबाह्यनीरारवम् ॥ १८०

तत इति– ततः मल्लाहवकल्पनानन्तरं सपदि तत्क्षणमेव अभूतोपमः अनुपमः दुन्दुभिध्वनिः रणभेरीस्वनः अभूत् जज्ञे । रणप्रारम्भे प्रतिपक्षाह्वानाय रणभेरीं कुर्वन्ती ति प्रसिद्धिः । तं भेरीरवं कतिचि त्केचि ज्जनाः अम्बुधरडम्बरं मेघगर्जित मूचुः अब्रुवन् । अन्ये पुनः अन्ये तु प्रचण्डः उद्भटोऽयं गरुडध्वजः कृष्णः तेन क्षपितस्य भञ्जितस्य धन्वनः चापस्य घोषेण ध्वनिना हेतुना स्फुटतः विदीर्णात् महाण्डजठरात् ब्रह्माण्डोदरात् स्फुटतो महाण्डस्य जठरादिति वा रक्षरत स्स्रवतः प्रचुरस्य अतिशयस्य बाह्यस्य ब्रह्माण्डा द्बहि रावणभूतस्य नीरस्य जलस्य आरवः ध्वनिः तमिति समासः । तमूचु रिति– पूर्वपदाभ्या मन्वयः । श्रीकृष्णविध्वस्त-धनुर्घोषेण ब्रह्माण्डे विदळिते सति तदा वरुणोदकमधः पत त्सत् एवं शब्दायते इति तेषा माशयः । उल्लेखालङ्कारः । 'बहुभि र्बहुधोल्लेखा देकस्योल्लेख इष्यते' इति लक्षणात् ॥ १८०

श्लो ॥ आहूताविव सस्नेहं दुन्दुभिध्वनिनाऽमुना
ता वगातां सकुतुकौ चेलु र्नागरिका अपि १८१

आहूताविति– अमुना दुन्दुभिध्वनिना भेरीरवेण सस्नेहं यथा तथा सप्रेम यथा तथा आहूता वा कारिता विवे त्युत्प्रेक्षा । तौ रामकृष्णौ सकुतुकौ सोल्लासौ सन्तौ युद्ध-लाभादिति भावः । अगाताम् ययतुः रणरङ्ग मुद्दिश्येति शेषः । नागरिका अपि पुरजना श्च चेलुः प्रतस्थिरे तद्रणमहोत्सवदर्शनार्थ मिति भावः ॥ १८१

ग ॥ गत्वा च नगरं रङ्गद्वारि विनिवेशित मम्बष्ठाधिष्ठितं, कुवलयापीडनामानं मदावळ मवलोक्य पन्थान मलभमानः त माधोरण मेव मवोचत् ॥ १८२

गत्वेति– नगरं मधुरां गत्वा प्रविश्य च रङ्गद्वारि रणरङ्गद्वारे निवेशितं स्थापितं अम्बष्ठाधिष्ठितं वेश्यायां विप्रा दुदितोऽम्बष्ठ इत्युच्यते । यथा अमरः 'अम्बष्ठो वेश्या द्विजन्मनो' रिति अम्बष्ठेना धिष्ठित मारूढं कुवलया पीड इति नाम नामधेयं यस्य तं मदावळं मदगज मवलोक्य दृष्ट्वा पन्थानं मार्गं मलभमानः अनधिगच्छन् तं आधोरणं गजयन्तार मम्बष्ठ मेवं वक्ष्यमाणरीत्या अवोचत् जगाद कृष्ण इति कर्तुःशेषः ॥ १८२

श्लो ॥ नाङ्गीकरोषि मम चे द्वति मज्ञताया
हानि र्न मे शमनमन्दिरभागभाक्स्याः
स्या द्वारणे किमु तथा तव शक्ति रेषः
स्वात्मावबोधविधुरस्य वृथाश्रम स्ते ॥ १८३

P238



नेति– अज्ञातायाः मूढत्वा द्धेतोः अस्मद्बाहुबल मज्ञात्वे त्यर्थः। मम गतिं गमनं नाङ्गीकरोषि प्रतिबध्नासि चेत्; मे हानिः क्षतिः, न नास्ति। तमित्याक्षेपः। शमनमन्दिरभाग-भाक् यमनिकेतनप्रदेशं गतः, स्याः भवेः, मरिष्यसी त्यर्थः। तदा हननसमये तव वारणे गजे शक्ति स्सामर्थ्यं स्यात्किमु? गजो निवारये त्कि मि त्यर्थः। स्वात्मावबोधविधुरस्य स्वात्मन स्स्वस्य अवबोधो ज्ञानं अह मेतावद्बल इति स्वशक्तिज्ञान मित्यर्थः। तेन विधुरस्य रहितस्य स्वबल-परबलानभिज्ञ स्ये त्यर्थः। ते तव एष भ्रमः कृष्णं निवार्य गजो मां त्रायेते त्यसौ भ्रान्तिः वृथा व्यर्थः। स गज स्त्व मकिञ्चित्कर इति भावः। व्यङ्ग्यार्थस्तु- अज्ञतायाः अविद्यावृ-तत्वात् मम परमात्मनः गतिं ज्ञानं नाङ्गीकरोषि नस्वीकरोषि यदि मां न ध्यायसि चे दि त्यर्थः। मां न जानासि चेदिति वा। योगमार्गे ज्ञानमार्गे वा तवाभिनिवेशो नस्याच्चेत्इति भावः। मे हानि र्न। यथा स्वगृहस्थस्य निधे रज्ञाने गृहिण एव दारिद्र्यरूपहानि; नतु निधेः तद्वदिति भावः। तव तु हानि रस्ती त्याह- शमनमन्दिरभागभाक्स्याः इति- यमयातना मनुभविष्यसी त्यर्थः। तदा यातनासमये वारणे निवारणे तव शक्ति स्स्या त्किमु मां नयातयतेति यमभटा न्निवार-यितुं त्वं शक्नुयाः किमि त्यर्थः। स्वात्मावबोधविधुरस्य स्वस्वरूपज्ञानशून्यस्य ते तवायं भ्रमः देहदारादि ष्वात्मत्वात्मीयत्वरूपभ्रान्तिः वृथा अनर्थावह इत्यर्थः॥ १८३

**ग॥ एवं मरुन्तुदभाषणरोषणाधोरणप्रेरणपरिकुपितमनसि सम्मुख मभिपतति कीनाशपाशनिकाशेन शुन्ड़ादन्डेन धृतवति कुन्जरे सचमत्कार मुन्मोच्य चरणतले निलीय तत्रापि करं प्रसारितवति सलीलं लाङ्गूल मवलम्ब्य जञ्झासमीरसमीरितलघु तूललीलया शौरि रेनं दूरं प्रेरितवान्॥** १८४

एवमिति– एवं पूर्वोक्ता दरुन्तुदभाषणात् मर्मच्छेदकश्रीकृष्णवचना द्धेतोः रोषणस्य कुपितस्य अधोरणस्य गजयन्तुः प्रेरणेन चोदनेन हेतुना अङ्कुशनिखातनेने ति भावः। परिकुपित मतिरोषणं मनो हृदयं यस्य तस्मिन् कुञ्जरे कुवलयापीडे सम्मुख मभिमुख मभिपतति आग-च्छति सति कीनाशपाशनिकाशेन यमपाशसदृशेन शुण्डादण्डेन शुण्डा करो दण्ड इव शुण्डा-दण्ड इत्युपमित समासः-तेन धृतवति श्रीकृष्णं गृहीतवति च सति- अत्र पततिधृतवती त्यनयो श्शत्रन्तयो र्निर्देशेन आपतनधारणयो रुभयो र्वर्तमानसमकालिकत्वं बोध्यते। तच्च विरुद्धम् आपतनानन्तरकालिकत्वा द्धारणस्य; तस्मात् आपत्य धृतवती ति वक्तव्ये सति अयं विरुद्ध-निर्देशः गजस्य लाघवातिशयं द्योतयति- समुच्चयालङ्कारः। लक्षणन्तूक्तम्। सचमत्कारं सवैदग्ध्य मुन्मोच्य गजशुण्डादण्डा दात्मानं मोचयित्वे त्यर्थः। चरणतले गजपादान्तराळे निलीय लीनो भूत्वा तत्रापि पादान्तरेऽपि करं शुण्डां प्रसारितवति व्यापारयति सति, कुञ्जरे इति पदस्यात्रा प्यन्वयः। श्रीकृष्णग्रहणार्थ मिति भावः। सलीलं सविलासं यथातथा लाङ्गूलं पुच्छ मवलम्ब्य धृत्वा, अर्था त्कुञ्जरस्ये त्येव। जञ्झासमीरेण जञ्झावायुना समीरितस्य नुन्नस्य

लघुनः तूलस्य पिचो र्लीलया विलासेन झञ्झासमीरःतूलमिवे त्यर्थः– निदर्शनालङ्कारः। शौरिः कृष्णः एनं गजम् दूरं प्रेरितवान् चिक्षेप ॥ १८४

**ग ॥ पुन रेन मतिरोषा दभिपतन्त मभितः परिभ्रम न्नन्तरान्तर मेव निहत्य स्वय मताडितो नितान्तपरिश्रान्त माधाय करे गृहीत्वा भूमा वपातयत् ॥ १८५**

पुनरिति– पुन र्भूयः अतिरोषा दत्यन्तकोपात् अभिपतन्त मभिमुख मागच्छन्त मेनं गजं अभित स्सर्वतः परिभ्रमन् उच्चै र्भ्रमन् सन्, शौरि रिति पूर्वगद्या दत्रान्वयः। स्वय मताडित एव गजेन अनभिहत एव अन्तरान्तरे मध्येमध्ये निहत्य हत्वा नितान्तपरिश्रान्त मतिविवश माधाय कृत्वा करे शुण्डायां गृहीत्वा धृत्वा, भूमौ भुवि अपातयत् पातयामास॥ १८५

**ग ॥ उत्पाटितेन तदीयदन्तेनै व समूलघात मवधी च्च ॥ १८६**

उत्पाटितेने ति– उत्पाटितेन उन्मूलितेन तदीयदन्तेनै व गजदन्तेनै व स्पमूलघातमवधीत् निर्मूलं ध्वंसयामास मारयामासे त्यर्थः। 'समूलाकृतजीवेषु हनकृञ्ग्रह' इति णमुल्- 'कषादिषु यथाविध्यनुप्रयोग' इति हन्ते रनुप्रयोगः। तस्य 'हनो वध लिङि' 'लुङि च' इति वधादेश श्च। अत्र य एव दन्तो गजस्य शोभाहेतु रभू त्पुरा; स एवाधुना मरणहेतु रभवदिति विषमालङ्कारः प्रतीयते ॥ १८६

**श्लो ॥ हरि र्हन्तु किशोरोऽपि करिणं कि मिहाद्भुतम्**
**त्रातो मतङ्गजोऽनेन चित्रं पुन रिदं परम् ॥ १८७**

हरिरिति- किशोरोऽपि शिशुरपि अयं हरिः कृष्णः सिंहश्च 'यमानिलेन्द्रचन्द्रार्क विष्णुसिंहांशु वाजिषु शुकाहिकपिभेकेषु हरि र्ना कपिले त्रिषु' इत्यभिधानात्। करिणं गजं हन्तु संहरतु। इह अस्मिन् विषये अद्भुत माश्चर्यं किमस्ति? नकिमपि; कृष्णस्य परमेश्वरत्वा त्कुवलयापीडाभिधगजमात्रहननं नाद्भुत मित्येको भावः। आबाल्या त्सिंहानां गजहननं च नाद्भुत मित्यन्यो भवः। अथ अद्भुत मेव दर्शयति त्रात इति - अनेन हरिणा कृष्णेन सिंहेन च मतङ्गजः गजेन्द्रः मदगज श्च त्रातः रक्षितः इतीदं पुनः इदन्तु, पर मधिकं चित्र मद्भुतं भवती ति शेषः-सिंहस्य मदगजत्राणं विरुद्धमिति भावः - विरोधाभासालङ्कारः ॥ १८७

**श्लो ॥ आदाय दन्तिनो दन्तं कीर्तिं मूर्ता मिवात्मनः**
**रङ्गं हरि रगा दाशु बलोऽपि बलिनां वरः ॥ १८८**

अदायेति– हरिः कृष्णः आत्मनः स्वसम्बन्धिनीं मूर्तां मूर्तीभूतां सरूपा मित्यर्थः। कीर्तिं यश इवे त्युत्प्रेक्षा। स्थितं, दन्तिनो गजस्य दन्तं रदन मादाय गृहीत्वा, आशु द्रुतं रङ्गं आहव

प्रदेश मगात् ययौ तथा बलिनां बलवतां वरः अग्रेसरः बलोऽपि बलभद्र श्च आशु रङ्ग मगा दिति पदत्रयस्या त्रा प्यन्वयः ॥ १८८

ततः ॥ रङ्गप्रवेशानन्तर मित्यर्थः ।

अव– अथ द्वाभ्यां रामकृष्णौ वर्णयति - कामिन्य इत्यादिभ्याम् ॥

श्लो ॥ कामिन्यः कुसुमास्त्रविभ्रमझरीसर्वस्वसारास्पदं
संसाराहितशोकशीर्णहृदयाः कारुण्यवारा न्निधिम्
मल्लाः कल्पविरामकालविलसत्कालाग्निरुद्राकृतिम्
मुग्धं दुग्धगळं शिशुं च पितरौ गोपा स्सखायं स्वकम् ॥ १८९

श्लो ॥ तत्त्वं दुर्गम मागमागमशिखाशाखाप्रवाळं बुधाः
कंसः काल मकालजं स्वकमलालीलापलायावहम्
सारं किञ्चन पूर्णपात्र मपरे गोपै स्समर्प्यं विभो
श्शौरिं रङ्गगतं तदा बुबुधिरे रामं च कामोपमम् ॥ १९०

कामिन्यइति– तदा तदानीं रङ्गगतं रङ्गप्रतिष्ठं कामोपमं मन्मथतुल्यं शौरिं कृष्णं रामं बलरामं च कामिन्यः तरुण्यः कुसुमास्त्रविभ्रमझरीसर्वस्वसारास्पदं कुसुमास्त्रस्य मन्मथस्य या विभ्रमझरी विलासप्रवाहः सैव सर्वस्वं समस्तधनं तस्या स्सर्वस्वमिति वा- तस्य मन्मथधनभूतसर्व-विभ्रमझर्या इत्यर्थः । य स्सारः स्थिरांशः तस्य आस्पदं स्थानं मन्मथविभ्रमसमूहनिधिमिति यावत्। बुबुधिरे मेनिरे । सर्वापि मन्मथविभ्रमझरी अत्रैव विश्रान्तेति उत्प्रेक्षितवत्यः मन्मथवत्तासां चित्तक्षोभकत्वा दनयो रिति भावः । एतेन श्रृङ्गाररसनिधित्व मनयो र्व्यज्यते । तथा संसाराहितशोकशीर्णहृदयाः संसाराहितशोकेन सांसारिकदुःखेन । शीर्णम् विदीर्णं हृदयं मनो येषा न्ते निस्सार-संसारनिर्विण्णा इत्यर्थः । इदमादिसप्तवाक्येषु शौरिं रामं च बुबुधिरे इति पदत्रय स्यान्वयो वेद्यः- कारुण्यवारा न्निधिं दयासमुद्रं 'तत्पुरुषे कृतिबहुळ' मित्यलुक् । करुणासमुद्रोऽयं करुणया स्मान् संसारशोकसागरा दुत्तारयिष्यती ति ते मेनिरे इति भावः । एतेन करुणारसनिधित्वं व्यज्यते । तथा मल्लाः चाणूरादयो भटाः कल्पविरामकालविलसत्कालाग्निरुद्राकृतिं कल्पविरामकाले प्रळयकाले विलसन् विजृम्भमाणः यः कालाग्निरुद्रः प्रळयाग्नितुल्यो रुद्रः तस्येव आकृति राकारो यस्य तं-यद्वा विलसन् यः कालाग्निः तद्व द्रुद्रा भयङ्करा अकृति र्यस्य तं न केवल मसाकं; किन्तु सर्वस्यापि जगतो नाशहेतुः कालाग्निरुद्र एवायमिति ते मेनिरे इतिभावः । एतेन रौद्रादिपञ्चरसनिधित्वं व्यज्यते । तथा पितरौ देवकीवसुदेवौ मुग्धं सुन्दरं दुग्धगळं क्षीरकन्ठं शिशुं बालं स्तनन्धय मित्यर्थः । एतद्दर्शनेन देवक्या स्स्तन्यक्षरणात् वसुदेवस्य हृदयस्रवणाच्च एतौ स्तन्यं पाययितुं अङ्कमारोपितुं च तौ वाञ्छतःस्म इति भावः । एतेन वत्सलरसनिधित्वं व्यज्यते । गोपाः गोपालकाः स्वकं

स्वीयं, सखायं सुहृदं, सखेव तेषा माह्लादक श्चकाशे इति भावः। एतेन हास्यरसनिधित्वं व्यज्यते। परमेश्वरस्य गोपै स्सह क्रीडन मपहास्यं हि। तथा बुधाः विद्वांसः, आगमागमशिखाशाखाप्रवाळं आगमाः वेदा एव, अगमास्तरवः तेषां शिखाशाखासु अग्रशाखासु उपनिषत्स्वित्यर्थः। प्रवाळं पल्लवं उपनिषदेकगोचर मि त्यर्थः। अत एव दुर्गमं दुर्विज्ञेयं तत्त्वं वस्तु ब्रह्मेति यावत्। साक्षात्पर-ब्रह्मैवायं लीलया मानुषवेषभृ त्प्रतीयते इति तद्याथार्थ्यं बुधा ज्ञातवन्तइति भावः। अनेन शान्तरस निधित्वं व्यज्यते। तथा कंसः, स्वकमलालीलापलायावहं स्वस्य कमला सम्पत्, तस्याः लीलापलायः विलासपलायनं तस्य आवहं सम्पादकं, अकालजं आकालिकं कालं मृत्यु, मपमृत्यु मित्यर्थः। बुबुधे इति वचनपरिणामेन योज्यम्। अस्मत्सम्पद्विनाशकः अस्मद्विनाशक श्चाय मिति कंसः। एनं दृष्ट्वा, बिभेति स्मे ति भावः। अत एवानेन भयानकरसनिधित्वं व्यज्यते। अपरे सामान्यजनाः विभोः कंसस्य गोपै र्नंदादिभि, स्समर्प्यं अर्पितुं योग्यं, सारं श्रेष्ठं, किञ्चन किञ्चि दनिर्वाच्यं, पूर्णपालं अति श्लाघ्य मुपायनम्, बुबुधिरे, इत्यन्वयः-अपूर्वं मद्भुतं वस्तु हि राज्ञे समर्प्यते - ततः नन्दादयो गोपाः पूर्णपालत्वेन एतदर्भकयुगळं राज्ञे कंसाय अर्पयन्ति कि मिति मेनिरे इति भावः। अत एवानेन अद्भुतरसनिधित्वं व्यज्यते। उल्लेखालङ्कारः - लक्षणन्तूक्तम्॥ १८९ – १९०

श्लो॥ सप्रेम सल्लपितु मन्वयितुं निरोद्धु
मालिङ्गितुं रमयितुं परिचुम्बितुं च
का वा तदा युवतयो न त मायतन्त
पापा त्रपा व्यधित किं तु तदन्तरायम्॥ १९१

सप्रेमे ति– तदा का वा युवतयः का स्तरुण्यः, तं कृष्णं, सप्रेम सस्नेहं, सल्लपितुं भाषितुं श्रीकृष्णेन सह सप्रेमसल्लापं कर्तु मित्यर्थः। अन्वयितु मनुगन्तुं निरोद्धुम् युद्धा न्निवारयितुं सुकुमारशरीरक्षतिभया दिति भावः। आलिङ्गितु माश्लेषं कर्तुं, रमयितुं, क्रीडयितु परिचुम्बितुं परितः मुखकपोलादिषु सर्वत्र चुम्बितुं च, नायतन्त यत्नं न कृतवत्यः; सर्वा अप्ययतन्तैवे त्यर्थः। ननु तर्हि कुत स्तथा तदा न चक्रुः रत आह। किन्तु पापा दुष्टा, त्रपा लज्जा, तदन्त-रायं तत्कृतिविघ्नं, व्यधित चकार। लज्जया सल्लापादिकं नकृतवत्य इति भावः। कामिन्यः कुसुमास्त्रविभ्रमझरीसर्वस्वसारास्पद मिति संक्षेपतः उक्त एवार्थोऽत्र उत्साहा त्कविना विस्तृत मुक्त इति, नात्र पुनरुक्तिदोषलेशावकाशः। अत्र अयतन्ते त्यनेन मनसा सल्ललाप, अनुजगाम, रुरोधे, त्यादि प्रतीते स्सिद्धत्वा त्समुच्चयालङ्कारो व्यज्यते॥ १९१

ग॥ कंसस्य तु सम्भूतपित्तविकृते र्मधुररस इव मधुसूदनः कटुरजायत॥

कंसस्ये ति– सम्भूतपित्तविकृतेः उत्पन्नपित्तरोगविकारस्य पुरुषस्य, मधुररस इव मधुराख्यरसविशेषवत्, कंसस्य तु, मधुसूदनः कृष्णः, कटुः असह्यः, अजायत अभवत्। पित्त-रोगग्रस्तजिह्वस्य मधुरोऽपि रसः कटु भवती ति प्रसिद्धम्। उपमालङ्कारः ॥ १९२

**श्लो ॥ तादृङ्महः किमपि शान्तिरसैकसार**
**मानन्दसान्द्र मपि संस्मरतां जनानाम्**
**चेतो द्रवत्यभिमुखं परिपश्यतोऽस्य**
**हा हान्त दुस्सहतरं कथमेत दासीत् ॥** १९३

तादृ गिति– शान्तिरसैकसारं शमरसप्रधानं, आनन्दसान्द्रं प्रमोदमयं, किम प्यनिर्वाच्यं, तादृ गतिप्रसिद्धं, पूर्वोक्तविध मिति वा। महः तेजः अर्था त्कृष्णं संस्मरता मपि ध्यायता मपि जनानां, चेतः चित्तं, द्रवति आर्द्रं भवति, परमानन्दसमुद्रमग्नं भवती त्यर्थः। एत न्महः, अभिमुखं अग्रे, परिपश्यतोऽपि साकल्येन निरीक्षमाणस्यापि, अस्य कंसस्य, दुस्सहतरं अत्यसह्यं, कथं कथं वा? आसी दभवत्। हा हन्ते ति खेदातिशये। स्मरतामपि यच्चित्तद्रवजनकं तत्पश्यता मत्यानन्दकर मेव भवितव्य मिति, स्थिते; प्रत्युत अत्यसह्य मिद मासी दिति तत्र हेतु र्न ज्ञायते। अहो! कंसस्य मौढ्य मिति भावः ॥ १९३

**ग ॥ अथ नन्दसुनन्दादी नाभीरान् समर्पितोपहारा नपरानपि राजपुरुषा नतिलम्बितावलोकनकुतूहला नेकत्र मञ्चाञ्चले समुपवेश्य स्वय मपि भाविनी मूर्ध्वगति मासूचय न्निव कञ्चि दुच्चतरं मंच मधिशयानः कंस स्समवतस्थे ॥** १९४

अथे ति– अथ ततः कंसः समर्पितोपहरान् दत्तबलीन्, नन्दसुनन्दादीन् नन्दः सुनन्दो नन्दानुजः तौ आदी येषान्ते नन्दसुनन्दादयः। तान्, आभीरान् गोपान्, अतिलम्बितावलोकन-कुतूहलान् धृतदर्शनकुतुकान् श्रीकृष्णमल्लसङ्गरदर्शनकुतूहला दागतान् इत्यर्थः। अपरा नन्यान् राजपुरुषा नपि राज्ञः पुरुषाः राजपुरुषाः तान्, राजसम्बन्धिनोऽमात्यादीन्, जनानि त्यर्थः। एतांश्च, एकत्र एकस्मिन्, मञ्चाञ्चले मञ्चप्रदेशे, समुपवेश्य स्थापयित्वा, स्वयमपि स्वय ञ्च, भाविनीं भविष्यन्तीं, ऊर्ध्वगतिं ऊर्ध्वलोकगमनं,- न हि भगवता हतस्य अधोलोकप्राप्ति रिति भावः। आसूचय न्निव व्यञ्जय न्नि त्युत्प्रेक्षा। कञ्चि दुच्चतरम् अत्युन्नतं, मञ्च मासन, मधिशयान स्सन्, अधिष्ठित स्सन्- 'अधिशीङ्स्थासा' मित्याधारस्य कर्मत्वम्। समवतस्थे तस्थौ। मञ्चे निषसादे त्यर्थः। 'समवप्रविभ्यस्थ' इत्यात्मनेपदम्। युष्मासु * सकृष्णेषु अधस्थेषु सत्सु यथाद्य मम ऊर्ध्वमञ्चगति स्तथैव ऊर्ध्वलोकगतिरपि भविष्यतीति सूचयन्निव उच्चमञ्चमधि ष्ठावि त्युत्प्रेक्षातिशयः ॥ १९४

* सकृत् अधस्थे ( कृत्स्नेषु )

अव-अथ कवि स्तृतीयविलाससमप्तिं कथयनि यस्मि न्निति ॥

श्लो ॥ यस्मिन्शङ्करदारसौरभजरीजृम्भत्कटाक्षच्छटा
पाताः कल्पलतावितानसुमनोगुम्भःप्रियम्भावुकाः
तस्यासौ नवकाळिदासविदुषः काव्ये तृतीयोऽप्यसौ
चम्पूनामनि धीमतां कृतसमुल्लासो विलासोऽगमत् ॥ १९५

यस्मिन्निति- पूर्वार्धो व्याख्या तएव । तस्य नवकाळिदासविदुष श्चम्पूनामनि काव्ये धीमतां कृतसमुल्लास स्तृतीयोऽसौ विलासोऽगमदि त्यन्वयः ॥ १९५

इति श्रीहयवदनरदनरुचिसदनवदनफेनमधुरतररससमास्वादनित्यतृप्तस्य,
फणितरमापरिणयादिप्रबन्धस्य पुलिघल्ल रामसूरिकरुणासमासादितानवद्यशब्दविद्यस्य,
बेल्लङ्कोण्डोपनामक - मोहनरायतनूभवस्य रामस्य कृतिषु
चम्पूभागवतव्याख्यायां, मन्दरसमाख्यायां

**तृतीयो विलासः ।**

श्रीहयग्रीवार्पण मस्तु ।



ॐ

श्रीहयवदनपरब्रह्मणे नमः

# श्रीचम्पूभागवतम्

## चतुर्थो विलासः

अथ चम्पूभागवतव्याख्याने मन्दराख्याने चतुर्थोविलासः प्रारभ्यते ।

अव– तृतीये विलासे मल्लाहवमहोत्सवदर्शनार्थं ससभ्यः कंसः मञ्चमधिशयानस्समवतस्थे इत्युक्तम् । तमेव महोत्सवं चतुर्थविलासप्रारम्भे वर्णयितुमु पक्रमते ॥

**श्लो ॥ चाणूरो हरि मथ सादरो नियुद्धे**
**सम्मुह्यन्निदमवदद्धलावलेपात्**
**सव्यक्त सहजबलाश्रितेऽपि तस्मिन्**
**मन्वानो बलविरहं कथं न मूढः ? ॥** १

चाणूरइति– अथ ततः नियुद्धे बाहुयुद्धे सादरः सप्रीतिश्चाणूरः बलावलेपात् बलगर्वात् सम्मुह्यन् मोहं प्राप्नुवन्, मूढो भूत्वेत्यर्थः । हरिं कृष्णम्प्रति इदं वक्ष्यमाणमवदत् जगाद । मूढत्वमेव व्यतिरेकमुखेन द्रढयति । व्यक्तं प्रकटितं यथातथा सहजबलाश्रितेऽपि सहजो भ्राता यो बलः रामः, तेनाश्रिते युक्ते स्वाभाविकबलयुक्ते इति च- एवंविधेऽपि तस्मिन् श्रीकृष्णे बलविरहं रामवियोगं दुर्बलत्वं च, मन्वानः मन्यमानः, सः चाणूरः, मूढः अज्ञः, कथं न नभवति? किन्तु मूढ एवे त्यर्थः। स्वपरबलानभिज्ञतया स्वापेक्षया श्रीकृष्णं दुर्बलं यतो मन्यते तदयं मूढएवेत्येकोभावः । युद्धात्प्राक् स्वपरबलतारतम्यज्ञानोदयस्यासम्भावितत्वेन श्रीकृष्णे चाणूरस्य स्वापेक्षया दुर्बलत्वमनीषा अस्तुनाम- नैतावता चाणूरो मूढ इत्यध्यवसीयते । किन्तु सहजबलभद्रयुक्तं कृष्णं बलभद्ररहितं मनुते इतियत्; तस्मादयं ध्रुवं मूढ इत्यन्योभावः । अतएववाच्यार्थो व्यङ्ग्यार्थस्यातिशयत्वेन ध्वनिरसौ- नचैवमयमेव वाच्यार्थइति वाच्यम्;- चाणूरस्य श्रीकृष्णे बलभद्रवियोगज्ञानानुदयात् ॥ १

**श्लो ॥ बलिनाविति विश्रुतौ युवां कुतुकान्नूनमिहानतप्रभुः**
**परिदर्श्य नियुद्धकौशलं क्षममेतस्यहि चित्तरञ्जनम् ॥** २

बलिनाविति— प्रभुः राजा, कंसः बलिना विति बलं शरीरपाटवमनयोरस्तीतिबलिनौ- मत्वर्थे अत इनिः, प्रशस्तबलावित्यर्थः । अतिशयबलाविति वा- 'भूमनिन्दा प्रशंसासु नित्ययोगेऽतिशायने संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादय' इति वचनात् । इत्येवं विश्रुतौ विख्यातौ, युवां कर्मकुतुका त्कुतूहलात् इह अत्र रङ्गे आनयत् आनयामास अक्रूरेणेतिशेषः । नूनं ध्रुवम् । नियुद्धकौशलं बाहुयुद्धनैपुण्यं परिदर्श्य दर्शयित्वा एतस्य प्रभोः चित्तरञ्जनं हृदयोल्लासनं क्षमं युक्तं युवयोरिति शेषः । प्रभुसमीपे यथा नटादयस्स्वस्यविद्याकौशलं प्रदर्श्य प्रभुचित्तं रञ्जयन्ति तद्वद्युवामपि बाहुयुद्धकौशलं दर्शयित्वा एतच्चित्तं रञ्जयतेति भावः ॥ २

ग ॥ एव मभिदधान मेनमनात्मवेदिनं मधुसूदनस्सकपटं प्रत्यवादीत् ॥ ३

एवमिति—एवमुक्तरीत्या अभिदधानं ब्रुवन्तं तत्र हेतुमाह- अनात्मवेदिनमिति- आत्मज्ञानशून्यं स्वबलानभिज्ञ मित्यर्थः । बकादिराक्षसनिहन्तुः कृष्णस्य बलमेतावत्; ममतु बलमेतावदिति यद्ययं स्वबलस्य परबलस्यच इयत्तां वेद; तर्ह्येवं न वदे दिति भावः । अतएव परिकरालङ्कारः । भगवद्याथात्म्याज्ञानिन मिति च प्रतीयते । एवं चाणूरं सकपटं सव्याजं यथातथा मधुसूदनः कृष्णः प्रत्यवादीत् प्रत्युवाच ॥ ३

अव– प्रत्युत्तरमेव प्रतिपादयति ॥

श्लो ॥ महीपतेरस्य मयोपकण्ठं प्रकाश्यते प्राणइदंहि तं नः
तथापि बालानलरूपकृत्ये प्रवर्तना ते नशुभा विभाति ॥ ४

महीपतेरिति— अस्य महीपतेः कंसस्य उपकण्ठं समीपे मया प्राणः पराक्रमः 'शक्तिः पराक्रमः प्राण' इत्यमरः । प्रकाश्यते प्रकटीक्रियते इद मस्मत्पराक्रमप्रकाशनं नः अस्माकं हितं युक्तम् । प्रभुसन्निधौ स्वशक्तिप्रकाशनं भृत्यस्य युक्त मिति भावः । एवं चाणूरोक्त मर्थ मेवानुवाद्य अथ स्वविनय माविष्करोति तथापीति- तथापि प्रभुसन्निधौ अस्मत्प्राणप्रकाशनस्य युक्तत्वेऽपि ते त्वत्सम्बन्धिनी त्वया क्रियमाणेत्यर्थः । बालाननुरूपकृत्ये बालाननुगुणकर्मणि बालाना माहवभीरुत्वादिति भावः । प्रवर्तना चोदना अस्माक मिति शेषः । शुभा मङ्गळकारिणी नविभाति नप्रतिभाति त्वया अशक्यकृत्ये प्रवर्तिताना मस्माकं प्रायेण शुभं नभवति । यद्यहं युवा स्यां; तर्हि स्वशक्तिं प्रदर्श्य प्रभुसकाशा त्पारितोषिकं शुभं लभेयं- न तु तथा; किन्तु बाल इति न ममेद मधुना युक्तमिति भावः । वास्तवार्थस्तु अस्य महीपतेः प्राणः प्राणवायुः यद्यपि 'प्राणाः पुंसि च भूम्न्येवेति' बहुत्वनिर्देशो युक्तः; तथापि 'हृत्स्यानिलेऽनिले जीवे बले प्राणः प्रकीर्तित' इति रुद्रकोशा देकत्वनिर्देशोऽप्यविरुद्धः । उपकण्ठं कण्ठसमीपे सामीप्ये अव्ययीभावः । मयाप्रकाश्यते स्थाप्यते महीपतिं कण्ठगतप्राणं करोमीत्यर्थः । इदं महीपतिमारणं नः हितं युक्त मिष्टं च अस्मत्पितृपीडकत्वा त्सर्वलोकसन्तापकत्वा दस्य भूभारहरणार्थं मम अवतीर्णत्वाच्चेतिभावः । नकेवलं कंसमेव तथा करिष्यामि; किन्तु अनुचितकार्ये प्रवर्तयन्तं त्वामपीत्याह तथापीति— तथापि

एवंच बालानुरूपकृत्ये बालस्य बालिशस्य मूढस्य तव अननुरूपे अननुगुणे कृत्ये नियुद्धकर्मणि प्रवर्तना असच्चोदना ते तव न शुभा अशुभा नाशनकारिणीत्यर्थः । इति विभाति प्रतिभाति मूढस्त्वं क्व? अहंक्व मयासह नियुद्धं कुर्विति त्वं मां प्रेरयसीति यत्; इयं प्रेरणात्वन्मरणाय भवत्येवेति भावः। अत्रगूढोत्तरालङ्कार इति रत्नावळीकाराः । ध्वनिरेव नत्वलङ्कार इतितु सिद्धान्तः । 'किञ्चि दाकूतसहितं स्याद्गूढोत्तर मुत्तर' मिति अर्थान्तरप्रतिभावं विनैव यत्र केवलमभिप्रायः आविष्क्रियते तत्रैव तदलङ्कारस्य सावकाशत्वात्– उदाहृतं 'यत्रा च वेतसी पान्थ! तत्रेयं सुतरा सरिदि' ति अलं विस्तरेण ॥ ४

श्लो ॥ उदञ्चद्दैन्ययाप्येवं छादितोत्साहया गिरा
तस्याशय मजानानो बालिशोऽयं न माधवः ॥ ५

उदञ्चदिति– उदञ्चद्दैन्यया उदञ्चत्स्फुरत् दैन्यं दीनत्वं यस्यास्तया अपि तथापि छादितोत्सहया छादितः रूषितः उत्साहः औद्धत्यं यस्यास्तया उत्साहम् गर्भीकृत्य दैन्यं प्रकाशयन्त्येत्यर्थः । एवं पूर्वोक्तया गिरा श्रीकृष्णवाचा तस्य कृष्णस्य आशयं भाव मजानानः अविद्वान्; अतएव अयं चाणूरः बालिशः मूढः बालश्च भवतीति शेषः । माधवः कृष्णः बालिशः न नभवति चाणूरस्य व्यङ्ग्यार्थज्ञान म्मास्तु नाम; वाच्यार्थज्ञानमपि नासीत्; इदंहि तत्र इति नियुद्धोत्साहं स्वस्य प्रकाशयित्वा तथापीत्यादिना तमुत्साहं निगूह्य दैन्यमाविष्कृतं हि कृष्णेन इदं च दैन्याविष्करणं न युद्धपलायनाशया; किन्तु स्वविनयप्रदर्शनार्थ मिति श्रीकृष्णवाक्यवाच्यार्थपर्यालोचनया श्रीकृष्णो नियुद्धोत्साहवानेवेलि ज्ञातव्ये सति तथा अज्ञात्वा बालोऽहं मां मुञ्चेति पलायनाशया कृष्णो वदत्येवमिति चाणूरो ज्ञातवान् तस्मा दयमेव मूढो; नतु कृष्णऽइति भावः । अत्र कृष्णे वर्तमानस्य बालिशत्वस्य तत्र निषिध्य चाणूरे नियन्त्रणात्परिसङ्ख्यालङ्कारः । 'परिसङ्ख्या निषिध्यैकमन्यस्मिन्वस्तुयन्त्रण' मिति लक्षणात् ॥ ५

ततः ॥ चाणूरस्य बालिशत्वात्

श्लो ॥ निहत्य केशिनं शूरं बन्धुरं गन्धसिन्धुरम्
बालभावप्रकाशस्ते बालभावप्रकाशनम् ॥ ६

निहत्येति– शूरं वीरं केशिनं निशाचरं निहत्य मारयित्वा तथा बन्धुरम् उन्नतानतम् अत्यौन्नत्यात्किञ्चिन्नतमित्यर्थः । गन्धसिन्धुरं मदगजं कुवलयापीडमित्यर्थः । निहत्य ते तवायं बालभावप्रकाशः बालत्वप्रकटनं; तथापि बालानुरूपकृत्ये इति अर्भकत्वाविष्करण मित्यर्थः । बालभावप्रकाशनम् बालभावस्य मूर्खत्वस्य वञ्चकत्वस्येत्यर्थः । प्रकाशन माविष्कारः भवतीशेषः । केशिगजनाशनसमये यत्तव बाल्यं नासी त्तत्त्विदानी मागतं केयं वञ्चनेति भावः। यद्वा ते बालभावप्रकाशः बालानुरूपेति स्वस्य बालत्वप्रकटनं बालभावप्रकाशनं मूढत्वप्रख्यापकं भवति । केश्या-

दिनिहन्त्रा त्वया स्वस्मिन् यद्बालत्वमापादितं; तद्बालत्वं नार्भकत्वरूपं; अर्भकस्य शत्रुनाशनासम्भवात्- किन्तु मूढत्वरूपमेव। केशिपक्षपातिन श्चाणूरादयो महाशूरा स्सन्ति केशनाशिने तु तै स्सह विरोधस्यादित्यनालोच्य अज्ञत्वात्त्वया केशी निषूदितः तत्फलन्त्वधुना त्व मनुभविष्यसीति भावः। बालानतुरूपेति त्वदुक्तपदस्य बालस्य मूढस्य मम अननुरूपेति व्याख्याने तु त्वत्कृतस्य कृत्यस्य त्वदुक्तस्य वाक्यस्यच अन्योन्यसमन्वय स्स्यादिति गूढाशयः। अत्र बालभावप्रकाशो बालभावप्रकाशनं भवतीति वर्णनस्य पिष्टपेषणवद्व्यर्थत्वा द्विरोधाभासालङ्कारः। बाले श्रीकृष्णे बालत्व मपह्नुत्य मूर्खत्वमूढत्वयोरन्यतरस्यारोपाऽदपह्नवालङ्कारः प्रतीयते। अधिक्षेपात्मिकापीयं चाणूरवाणी वस्तुतो भगवन्तं स्तौत्येव। तथाहि- पूर्वार्थस्य यथोक्तएवार्थः। ते बालभावप्रकाशः अर्भकत्वप्रकाशः अबालभावप्रकाशनं अः विष्णुः सचासौ बालः तस्यभावः। भगवदवतारत्व मित्यर्थः। तस्य प्रकाशनं प्रख्यापकं भवति। केश्यादीन् महाशूरा न्विहत्य बालोऽहमिति यत्त्वमभिदधासि तदिदं स्वस्याप्राकृतबालत्वाभिप्रायेणैव। कथ मन्यथा प्रकृतो बालएवं विध-विचित्रचरित्र स्स्यात्; तस्मात्त्वमप्राकृतः परमेश्वरो बाल इतिभावः॥ ६

**ग॥ एव मीरयति चाणूरे भगवानपि बाढ मित्यभिधाय नियुद्धविद्यापारीण इव परिकलितकरतलास्फालनश्चपलमभिचचाल चाणूरं रौहिणेयोऽपि मुष्टिक-मभ्यधावत्॥ ७**

एंवमिति—एवं चाणूरे ईरयति वदति सति भगवानपि कृष्णश्च बाढं तथैवेत्यभिधाय उक्त्वा नियुद्धविद्यापारीण इव बाहुयुद्धकलापारङ्गत इव परिकलितकरतलास्फेलनस्सन् कृतहस्ततलताडन-स्सन् मल्लाः करतलाभ्यांभुजयो रास्फालनं कुर्वन्तीति प्रसिद्धम्। चपलं लोलं यथातथा चाणूरमभिचचाल अभिययौ तदाभिमुख्येन ययावित्यर्थः। रौहिणेयोऽपि रामश्च मुष्टिकं तन्नामानं मल्लमभ्यधावत् अभिदुद्राव॥ ७

**श्लो॥ क्वासौ शिरीषसुकुमारतनुः किशोरः**
**क्वायं महाभुजगभोगकराळरूपः**
**धर्मव्यतिक्रम मिमं परिपश्यतोऽस्य**
**श्रेयः कथं भवतु राजकुलाधमस्य॥ ८**

कासाविति— शिरीषसुकुमारतनुः शिरीषः कपीतनाख्यस्तरुः तस्य पुष्पं शिरीषम् 'पुष्पमालेषु बहुलम्' इति बहुलग्रहणा द्विकारप्रत्ययस्य लुक्। 'व्रिहीनं प्रसवे सर्व' मित्य-मरकोशा त्रित्यनपुंसकं। शिरीषमिव सुकुमारा मृद्वी तनुः शरीरम् यस्य स तथोक्तः। किशोरो बालः असौ कृष्णो रामश्च क्व महाभुजगभोगकराळरूपः महाभुजगः दीर्घसर्पः तस्यभोगः देहइव कराळं भयङ्करं रूप माकृतिर्यस्य सः तथोक्तः। अत्र महाभुजगघोरकराळरूप इति कश्चि-

त्पाठः महाभुजगस्येव घोरं भीषणं कराळ मुन्नतं रूपं यस्येति समासः। ‘कराळोदन्तुरे-तुङ्गे’ इत्यमरः। अयं चाणूरो मुष्टिकश्च क ? अत्यन्तमननुरूपा वित्यर्थः। अत एव विषमालङ्कारः। ‘विरूपघटनावा स्या’ दिति तल्लक्षणात्। इमं धर्मव्यतिक्रम मधर्मं परिपश्यतः निरीक्षतः अङ्गीकृतवत इत्यर्थः। राजकुलाधमस्य राजकुले राजसमूहे अधमः नीचः तस्य। यद्वा राजकुलं राजवंशः तत्र जातोऽधम इति शाकपार्थिवादित्वात्समासः। तस्य अस्य कंसस्य श्रेयश्शुभं कथं भवतु? अस्तु? न कथ मपि स्या दित्यर्थः। अस्मा दधर्मादय माशु नङ्क्ष्यतीति भावः॥ ८

ग ॥ **एवं चिन्तासन्तानदन्तुरितान्तरङ्गेषु नागरिकेषु ॥** ९

एवमिति– एव मुक्तरीत्या नागरिकेषु नगरस्थेषु जनेषु चिन्तासन्तानदन्तुरितान्तरङ्गेषु चिन्तासमूहेन व्याप्तमनस्सु सत्सु अतिचिन्ताक्रान्तेषु सत्स्वित्यर्थः॥ ९

श्लो ॥ **उद्भूतसिंहरव मुद्गतवीरवाद**
**मुद्यत्परिभ्रमण मूहितरन्ध्रमार्गम्**
**सोत्सर्पणं मिळ दपक्रमणं सपातं**
**सोत्पात मद्भुततरं मृथ माविरासीत् ॥** १०

उद्भूतेति– उद्भूतसिंहरव मुत्पन्नसिंहनादं उद्गतवीरवादं उत्थितवीरालापं उद्यत्परिभ्रमणं अविर्भव दभितो भ्रमणं ऊहितरन्ध्रमार्गं चिन्तित छिद्रदेशं सोत्सर्पणं उत्सर्पणं विपक्षाभिमुख्ये धावनं तेन सहितं सोत्सर्पणं मिळदपक्रमणं मिळल्लग्न मपक्रमण मपगमनं यस्मिं स्त त्तथोक्तम्। सपातं पतनसहितं सोत्पातं उत्पतनसहितं अद्भुततर मत्यद्भुतं मृथं युद्धम्- ‘मृथमास्कन्दनं सङ्ख्य’ मित्यमरः। आविरासीत् प्रववृते॥ १०

श्लो ॥ **स्वेदाम्बुजालकपरीत मुदीतकम्प**
**मालोललोचन मुरुश्वसनप्रचारम्**
**म्लानं विलोलदलकं मुखमस्य वीक्ष्य**
**पाषाणकर्कशहृदोऽपि तदा दयार्द्राः ॥** ११

स्वेदेति– तदा युद्धसमये स्वेदाम्बुजालकपरीतं घर्मबिन्दुव्याप्तं उदीतकम्पं उत्पन्नवेपथुं आलोललोचनं चञ्चलनेत्रं उरुश्वसनप्रचारं अतिनिश्वास सञ्चारं म्लानं ग्लानिं प्राप्तं विलोलदलकं चलच्चूर्णकुन्तलं एवंविधमस्य कृष्णस्य मुखं वदनं वीक्ष्य दृष्ट्वा पाषाणकर्कशहृदोऽपि पाषाणवद्दृषदिव कर्कशं कठिनं हृत् मनो येषा न्ते तथोक्ता अपि जनाः दयार्द्राः दयया करुणया आर्द्रा द्रवयुक्ताः आसन्नितिशेषः। बभूवुः। एवं इदं भगवन्तं पश्यतो जनस्य पाषाणकठिनमपि हृदयं द्रवतिस्मेत्यर्थः॥ ११

ततः ॥ एवं कञ्चित्कालं लीलया दौर्बल्याभिनयानन्तर मित्यर्थः ॥

श्लो ॥ किं? बाल इत्यवमतेः किमु? वीरनादै
मा गाः प्रमादमुदितं फलकाल एषः
इत्याकलय्य, मधुरां गिर मस्य शौरे
रानन्दबन्धुर मभू द्धृदयं जनानाम् ॥ १२

किमिति ॥ बालः अर्भकः, इत्यवमतेः अवमाना, त्किम्फलं? न किमपीत्यर्थः। बाल इति मां यत्त्वमवमन्यसे; तेन नकोऽप्यर्थ इति भावः। तथा वीरनादैः वीरालापैः, किमु? कोऽर्थः? न कश्चिदपीत्यर्थः। प्रमाद मनवधानतां, मा गाः मा याहि। मा गाः इति छेदः। 'नमाङ्योगे' इत्यडागमनिषेधः। 'गाति स्थेति' सिब्लुक्। एषः अयं, फलकालः फलसमयः, उदितः प्राप्तः। त्वत्कृतदुष्कृतस्याधुना फलकाल स्सम्प्राप्त इत्यर्थः। इत्येवंरूपा मस्य शौरेः कृष्णस्य, सम्बन्दिनीं, मधुरां मनोज्ञां, गिरं वाच, माकलय्य श्रुत्वा, जनानां लोकानां, हृदयं मनः, आनन्द-बन्धुरं सन्तोषभरितं, मभूत् अभवत्। शौरे रुत्साहवाक्यश्रवणात् शौरि रेव मल्लं जेष्यतीति जना ननन्दु रितिभावः ॥ १२

ग ॥ एव मभिधाय, सचमत्कार मुत्पत्य, तदीयकरतलयुगळ मालम्ब्य, भुजङ्ग मिव विहङ्गाधिपो दिवि समुत्पात्य, परिभ्रमय्य च, सुचिरमतिमात्रझर्झरसकलसन्धि बन्ध मुद्गीर्यमाणरुधिरधारं चाणूरं मधुरिपु रधिवसुन्धर मपातयत् ॥ १३

एवमिति ॥ एव मुक्तरीत्या, अभिधाय उक्त्वा, मुररिपुः कृष्णः, सचमत्कारं सलील, मुत्पत्य उलङ्घ्य, तदीयकरतलयुगळं मल्लस्य हस्ततलद्वय, मालम्ब्य गृहीत्वा, विहङ्गाधिपः गरुडः, भुजङ्गमिव सर्पमिव, दिवि खे, समुत्पात्य उद्धृत्य, सचिरं बहुकालं, परिभ्रमय्य च परितो भ्रामयित्वा, अतिमात्रझर्झराः अत्यन्तविदीर्णाः, सकला स्सर्वे, सन्धिबन्धाः अस्थिसन्धिबन्धनानि यस्य त; मतएव उद्गीर्यमाणा उद्वम्यमाना रुधिरधारा रक्तासारो येन तं, चाणूरं मल्लं, अधिवसुन्धरं भुवि, अपातयत् पातयामास ॥ १३

ग ॥ सङ्कर्षणोऽपि मुष्टामुष्टि सावष्टम्भं मुष्टि मतिनिष्ठुरमुष्टिप्रहारेण सश रीरबन्धमिव कंसमनोरथं, भूमा वपातयत् ॥ १४

सङ्कर्षणोऽपीति ॥ बलरामश्च मुष्टीमुष्टि सावष्टम्भं, 'मुष्टिभि र्मुष्टिभिश्च प्रहृत्येदं युद्धं प्रवृत्तमिति मुष्टीमुष्टि' तत्र सगर्वं; अतएव सशरीरबन्धं मूर्तिमन्तं, कंसमनोरथमिव कंसस्य काममिव स्थित मित्युत्प्रेक्षा, राम कृष्णे मारयित्वा, 'अह मपमृत्यु मपहरिष्यामी' ति, यः कंसस्य मनोरथोऽस्ति; तस्य मुष्टिकनाशनेन सह नष्टत्वा दित्थ मुत्प्रेक्षितं। मुष्टिकं मल्लमतिनिष्ठुर-

मुष्टिप्रहारेण अतिकठोरमुष्टिघातेन, भूमौ भुवि, अपातयत् चिक्षेप; नाशयामासेत्यर्थः। अत्र स्वतो मुष्टिकस्य, तत्रापि मुष्टीमुष्टि, सावष्टम्भस्य मल्लस्य मुष्टिप्रहारादेव, मृति रासीदिति- अनुरूपवर्णनात्मक स्समालङ्कारः प्रतीयते ॥ १४

श्लो ॥ चाणूरमुष्टिकाघातमखसम्पूर्तये ततः
पूर्णाहुति रभूत्कूट श्चल स्तोसल एव च ॥ १५

चाणूरेति ॥ ततः चाणूरमुष्टिकनाशनान्तरं, चाणूरमुष्टिकाघातमखसम्पूर्तये चाणूरमुष्टिकयो राघातः हननं सएव मखो यागः तस्य सम्पूर्तये समाप्त्यर्थम्, 'कूटः, चलः, तोसल' एव च, इत्येत न्मल्लत्रयं पूर्णाहुतिः अभूत्; रामकृष्णाभ्यांमारिता इत्यर्थः। अतएव पर्यायोक्तालङ्कारः। यद्वा कूटः पूर्णाहुति रभूत्, चलः पूर्णाहुति रभूत्, तोसलश्च पूर्णाहुति रभूदिति वाक्यत्रयम्, अग्नौ हूयमानं द्रव्य माहुतिः पूर्णश्चासौ आहुतिश्च पूर्णाहुतिः सम्पूर्णहवि रित्यर्थः। रूपकालङ्कारः ॥ १५

श्लो ॥ मल्लेषु पञ्चसु हतेषु सहावशिष्टै
धैर्यं च कंसनृपते रतनोत्पलायम्
भेरीध्वनि र्गुरुतरै र्जय जीव साधु
वत्सेति पौरवचनै स्सम मावि रासीत् ॥ १६

मल्लेष्विति ॥ पञ्चसु मल्लेषु, हतेषु मृतेषु सत्सु, अवशिष्टैः हतशेषैर्मल्लै स्सह समं, कंसनृपतेः कंसस्य राज्ञस्सम्बन्धि, धैर्यं धीरता, पलायं पलायन, मतनो चक्रे। सहोक्तिरलङ्कारः। मल्लाः पलायनं चक्रुः, कंसो विगतधैर्योऽभवदिति भावः। हेवत्स! बाल! जय सर्वोत्कर्षेण वर्धस्व। साधु अतिशयेन जीव। 'जीवप्राणधारणे' शतायु र्भवेत्यर्थः। इत्येवं रूपैः, गुरुतरैः महद्भिः, पौरवचनै स्समं नागरिकवाक्यै स्सह, भेरीध्वनिः दुन्दुभिध्वनिः, आविरासीत् प्रादुरभूत्। अत्रापि सहोक्त्यलङ्कारः। 'सहोक्तिस्सहभावश्चे द्भासते जनरञ्जन' इति लक्षणम् ॥ १६

श्लो ॥ दुर्दान्तौ नगरा न्निरस्य पृथुकौ नन्दं बधान द्रुतं
गोपाला न्विधना न्विधेहि जहि मे तातं सपत्नानुगम्
प्राणा नानकदुन्दुभे र्हर गुरो र्मायाविना मित्यथ
क्रोधात्तूर्यरवं निवार्य नृपति र्भृत्या न्निजा नादिशत् ॥ १७

दुर्दान्ताविति– अथ ततः, नृपतिः कंसः, क्रोधात् कोपात्, तूर्यरवं भेरीध्वनिं, निवार्य वारयित्वा, एतेन वयमिव राजापि बालपक्षपात्येवेति मत्वा, भृत्या स्सन्तोषेण भेरी-

एवं प्रवर्तयामासु रिति ध्वन्यते । दुर्दान्तौ दुरहङ्कारिणौ, पृथुकौ बालौ, रामकृष्णौ, एवमपि रामकृष्णयो र्बालत्वबुद्धिरेव कंसस्ये त्यहो ! तन्मौढ्यमिति ध्वन्यते । नगरा त्पत्तना त्सकाशा, त्निरस्य निष्कासयित्वा, द्रुत मरं, नन्दं तत्पितरं, बधान बन्धय, गोपालान् नन्दानुगान् गोपान्, विधना नपहृतधनात्, विधेहि कुरु, सपत्नानुगं सपत्नं रिपुं वसुदेव मनुगच्छतीति सपत्नानुगः तं; अत एव मे तातं, जनकं, जहि मारय, परिकरालङ्कारः । मायाविनां मायिनां, गुरो रुपदेष्टु, रग्रेसरस्ये त्यर्थः । आनकदुन्दुभे र्वसुदेवस्य, प्राणान्, हर अपहर, इत्येवं निज़ान् स्वीयान्, भृत्यान् भटा नादिशत् आज्ञापयामास ॥ १७

**ग ॥ एव मभिदधाने भोजाधिपे भगवा नतिरोषणस्तरसा रसातला दुद्गम्य मञ्चशिखर मारुढ़ मेनं केसरीव करिणं करग्राहं गृहीत्वा निपात्य, वसुमत्या मस्यो परि स्वयमपतत् ॥ १८**

एवमिति— भोजाधिपे कंसे, एव मभिदधाने वदति सति, अतिरोषणः अत्यन्तकुपितः स्वगुरुद्रोहवाक्यश्रवणादिति भावः । भगवान् कृष्णः, रसातला द्भूतला, त्तरसा द्रुत, मुद्गम्य उलङ्घ्य, मञ्चशिखरं मञ्चाग्र, मारूढ मधिष्ठितवन्त, मेनं कंसं, करिणं गजं, केसरी सिंह इव करग्राहं गृहीत्वा हस्ते गृहीत्वा, वसुमत्यां भुवि, निपात्य पातयित्वा, अस्य कंसस्य, उपरि स्वय मपतत् पपात ॥ १८

**श्लो ॥ गणरात्र मसौ कंस श्चिन्तारचितजागरः**
**परिश्रान्त इवाश्रान्तं दीर्घनिद्रा मुपाददे ॥ १९**

गणरात्रमिति ॥ गणरात्रं बह्वीर्निशाः, कालाध्वनो रत्यन्तसंयोगे द्वितीया । 'गणरात्रं निशाबह्व्य' इत्यमरः । चिन्तारचितजागरः चिन्तया कृतजागरः 'अस्या स्ते लय मष्टमः कलयिता गर्भो भगिन्या' इत्येतदाकाशवाणीश्रवणादारभ्य स्वस्यापमृत्युचिन्तया निर्णिद्र इतिभावः । अतएव परिश्रान्त इव श्रमं प्राप्त इवे त्युत्प्रेक्षा, निद्राविहीनो हि भृशं परिश्रन्तो भवतीति भावः । असौ कंसः, अश्रान्त मविच्छिन्नं यथातथा । दीर्घनिद्रां मृतिम्, अतिनिद्रामिति च, उपाददे जग्राह प्रापेत्यर्थः । निद्राभावकृतपरिश्रमः पुन र्निद्रालाभे नश्यतीति भावः । श्लेषोज्जीवितोत्प्रेक्षालङ्कारः ॥ १९

**ततः**— कंसमरणानन्तरम् ॥

**श्लो ॥ हाहा शब्दो भुवि समभव न्मानुषाणां विषादै**
**र्हाहाशब्दो दिवि दिविषदा माविराशी त्प्रमोदैः**
**कंसः खिन्नै रवनिवनितालिङ्गितोऽदर्शि मर्त्यै**
**र्गीर्वाणैश्च त्रिदिवललनाश्लिष्टमूर्तिः प्रहृष्टैः ॥ २०**

हाहेति– विषादे दुःखे हेतुभूतैः, मानुषाणां मनुष्याणां सम्बन्धी, हाहाशब्दः हाहेति-शब्दः, भुवि भूमौ, समभव दुद्भूतः; स्वप्रभुनाशनेन विष्णा स्सन्तः सर्वे हाहाकारं चक्रु रित्यर्थः। 'हा' इति खेदेऽव्ययं; तस्य सम्भ्रमाद् द्विरुक्तिः। दिविषदां देवानां, प्रमोदे स्सन्तोषै र्हेतुभिः, हाहाशब्दः हाहाख्यगन्धर्वध्वनिः, हाहेति शब्दश्च, आविरासी दभूत्। देवानां प्रमोदे सति; तच्चोदिताः हाहादयो गन्धर्वा स्तदाऽगायन्निति भावः। 'हाहाहूहू श्चैवमाद्या गन्धर्वा' इत्यमरः। अत्र प्रमोदे हाहेति शब्द आसीदिति, वर्णनाद्विभावनालङ्कारभेदः। 'अकारणा त्कार्यजन्म चतुर्थीस्या द्विभावने' ति लक्षणात्। कंसः अवनिवनितालिङ्गितः अवनिः भूः सैव वनिता स्त्री तया आलिङ्गितः आश्लिष्ट स्सन्, खिन्नैः दुःखितै, मर्त्यैः मनुष्यै, रदर्शि दृष्टः। तथा कंस इत्यत्राप्यन्वेति, प्रहृष्टैः कंसवधात्सन्तुष्टैः, गीर्वाणैः देवैः, त्रिदिवललनाश्लिष्टमूर्तिः त्रिदिवललनाभि रप्सरोभिः, त्रिदिवललनये त्येकत्वं वा, आश्लिष्टा आलिङ्गिता मूर्ति र्देहो, यस्य स तथोक्त स्सन् अदर्शीति पूर्वेणान्वयः। युद्धे निहतस्य स्वर्नारीलाभादिति भावः। अत्र एक एव कंसः युगपदेव भूपतितशवाकारेण, देवाङ्गनालङ्कृतदिव्यविग्रहात्मना च, मर्त्यैः, रमर्त्यैश्च, दृष्ट इत्यसम्भावितार्थवर्णना द्विरोधः। तस्य च मानुषदिव्यशरीरभेदात् सजीव-देहे इव निर्जीवदेहे च भ्रान्त्या कंसपदवाच्यत्व सत्वा च्च परिहारः। तेन विरोधाभासालङ्कारः॥

**श्लो ॥ अथ कङ्कमुखानष्टौ रुष्टकंससहोदरान्**
**हरिराहवकण्डूलान् पशुमार ममारयत् ॥** २१

अथेति– अथ कंसनाशानन्तरं, हरिः कृष्णः सिंहश्चेति प्रतीयते। आहवकण्डूलान् युद्धे कण्डूतिशालिनः; चिराद्युद्धालाभेन तत्रात्यन्तासक्तानित्यर्थः। एतेना मीषां शूरत्वातिशय स्सूच्यते। रुष्टान् कुपितान्; अग्रजमारणादिति भावः। कङ्कमुखान् कङ्कादीन्, अष्टौ, कंससहोदरान् कंसस्य सोदरान्, पशुमार ममारयत् पशूनिव मारयामास। 'उपमाने कर्मणिचे' ति णमुल्। यथा विध्यनुप्रयोगश्च। सिंहः पशूनिव कृष्णः कङ्कादीन् मारया-मासेत्यर्थः। उपमालङ्कारः॥ २१

**स्थाने हि तत्** ॥ हरिः कङ्कादीनमारयदिति यदुक्तं; तत् युक्तमेवेत्यर्थः॥

अत्र ॥ तदेव प्रपञ्चयति ॥

**श्लो ॥ आयान्तु नाम युधि कङ्कमुखाः परासु**
**मेकामिषप्रणयिनः प्रसमीक्ष्य कंसम्**
**अभ्यर्णवर्तिनि हरा वतिरोषणे तु**
**तेषां नितान्तमफला खलु जीविताशा ॥** २२

आयान्त्विति ॥ एकामिषप्रणयिनः एकराज्यभोक्तार इत्यर्थः । 'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनीति' केशवः । कङ्कमुखाः कङ्कादयः, युधि युद्धे, परासुं मृतं, कंसं स्वभ्रातरं, प्रसमीक्ष्य दृष्ट्वा, आयान्तु नाम; आगच्छन्तु । नामेत्यङ्गीकारे । मृतं भ्रातरं दृष्ट्वा, तद्वैरनिर्यातनाशया तदनुजानां युद्धदेश म्प्रत्यागमनं युक्तमेवेति भावः । अतिरोषणे अतिकोपने, हरौ कृष्णे, अभ्यर्णवर्तिनि समीपगते सति तु; तेषा मागतानां, कङ्कादीनां, जीवनाशा प्राणधारणाशा, नितान्त मत्यन्त, मफला व्यर्था; भवतीति शेषः । खलु प्रसद्धौ, निश्चयार्थेवा, चाणूरकेश्यादिनिहन्तु र्हरेः पुरतः केऽमी कङ्कादय इतिभावः । व्यङ्ग्यार्थस्तु - युधि युद्धे । परासुं कंसं, प्रसमीक्ष्य दूरादेव दृष्ट्वा; गृध्राणां दूरदृष्टित्वादिति भावः । एकामिषप्रणयिनः मांसैकलोलुपाः कङ्कमुखाः गृध्रादयः पक्षिणः, आयान्तु नाम; मृतकंसशवमांसभक्षणार्थमिति भावः । अतिरोषणे, हरौ सिंहे, अभ्यर्णवर्तिनि सति तु; सिंहस्यापि मांसभक्षकत्वादितिभावः । तेषां पक्षिणां, जीवनाशा भक्ष्याशा, जीवयतीति जीवनमिति व्युत्पत्त्या जीवनहेतौ मांसादौ जीवनशब्दप्रयोग स्सुलभ इति ज्ञेयम् । नितान्त मफला खलु । ग्रामसिंहं दृष्ट्वापि ये भिया पलायन्ते; तेषां पक्षिणां सिंहसमीपस्थमांसलाभः कथं? स्या दितिभावः इति । न चैवं, पूर्वश्लोकेऽपि हरि स्सिंहः कङ्कमुखानष्टौ पक्षिणः पशुमार ममारयदिति ध्वन्यते एवेति वाच्यम्; सिंहस्य वनचरस्य खेचरपक्षिहनन मसिद्ध मिति ॥ २२

**ग ॥ अथ निजनाथप्रमथनवार्ताविरावार्ता स्सङ्गतमनोगदा स्खलदङ्गदा-**
**स्तदङ्गना स्सरभस माचस्कन्दु राचक्रन्दु रतिकरुण मेवं विलेपु श्च ॥ २३**

अथेति— अथ युद्धसमाप्त्यनन्तरं, निजनाथस्य स्वभर्तुः, कंसस्य, निजनाथानां कंसकङ्कादीना मिति वा, प्रमथनं मारणं, तद्वार्ताविरावेण तद्वृत्तान्तध्वनिना, आर्ताः पीडिताः, कर्णकठोरत्वा दस्याः वार्ताविरावे त्युक्तं; नतु वार्ता श्रवणेति— तेन आसां वर्णग्रहणं नाभूत्; किन्तु ध्वनिग्रहण मेव। असौ च ध्वनिः दीनत्वादार्तिं मकरोदिति सिद्धम्। यद्वा विरावो ध्वनि रुच्चारणमिति यावत्। उच्चारणस्यापि ध्वनित्वाविशेषात - वार्तोच्चारणेन हेतुना आर्ता इत्यर्थः । चारकृतेन तादृशवार्तोच्चारणेन व्यथिता इति यावत् । सङ्गतमनोगदाः उदित मनोव्यथाः, स्खलदङ्गदाः गळद्भुजाभरणाः, वर्तानिशमनसमये एव खेदातिशया दतिकृशत्वा दिति भावः । तदङ्गनाः तेषां कंसादीनामङ्गनाः ललनाः, सरभसं ससम्भ्रमं, यथातथा, आचस्कन्दुः आजग्मुः स्कन्दिर् गति शोषणयोः । आचक्रन्दुः रुरुदुः, सकरुणं सदयं यथातथा श्रोतॄणा म्मनसि दयामावहन्त्य इत्यर्थः । विलेपु श्च विलापं चक्रुः ॥ १३

**श्लो ॥ हानाथ! हाप्रियतम! त्रिजगल्ललाम!**
**कस्मादिमा मधिगतोऽसि? दशा मकस्मात्**

नीतः प्रतार्यय दिवासि ? सुरूपरूप
लोलाभि रात्तरतिभि स्सुरसुन्दरीभिः ॥ २४

हेति– हा नाथ! हा इति सव्यथं सम्बुद्धिः। हेपते! हाप्रियतम! हा इति सशोकं सम्बुद्धिः परमप्रिय! त्वत्तोऽन्यन्मम प्रियं नास्तीति भावः। त्रिजगल्ललाम! त्रिलोकभूषण! कस्माच्छ्लोस्सकाशात्, अकस्मा दवितर्कितं, इमा मेतां, दशामवस्थां, चरमावस्थामित्यर्थः। मृतिमितियावत्। अधिगतः प्राप्तः असि ? भवसि ? यद्वा – प्रबलस्य तव न कोऽपि हन्ता स्यादिति मत्वा, पक्षान्तरमाहुः। नीत इति- यदिवा यद्वा, सुरूपरूपलोलाभिः सुरूप मतिसुन्दरं यत्तव रूप-माकृति स्तत्र लोलाभि रासक्ताभिः- यद्वा - सुरूपरूपे अतिसुन्दरे त्वयि लोलाभिः-एतेन देवाङ्गना-नामपि काम्यत्वात्त्वं पुरूरवा इवातिसुन्दर इति व्यज्यते। अत एव आत्तरतिभिः प्राप्तोत्कण्ठाभि, स्सुरसुन्दरीभि र्देवाङ्गनाभिः, प्रतार्य वञ्चयित्वा, त्वां मस्मानिति वा शेषः। नीतः त्वल्लोकं प्रापितः, असि भवसि, त्वं मामुत्सृज्य, देवाङ्गनासम्भोगाभिलाषया स्वतोनदेवलोकं गतः; तव मय्यनुकूलत्वा; त्किन्तु प्रतारितस्सन्नेव ताभि र्नीतोऽसीति भावः। शोकपूर्विकाया मप्यस्यां वाचि उत्तरार्धे गम्योत्प्रेक्षालङ्कार स्स्फुट एव - चमत्कारावहत्वात्॥ २४

श्लो॥ उद्यन्माना मवनिवनितां त्वच्चरित्रै रमित्रै
रालिङ्ग्यैना मनुनयसि किं ? प्रेमभारानुबन्धात्
तादक्ष स्त्वं विरहविधुरां प्रेयसीं नेक्षसे मां
नापि ब्रूषे कथ! मशरणां प्राणनाथ! प्रसीद॥ २५

उद्यदिति– अमित्रैः अनभिमतैः, त्वचरित्रैः त्वदाचरणैः, परस्त्रीसम्भोगरूपै रित्यर्थः। उद्यन्मानां उत्पन्नमानां, 'स्त्रीणा मीर्ष्याकृतः कोपमानोऽन्यासङ्गिनि प्रिये' इति लक्षणात्। एना 'मिमा, मवनिवनितां भूरमणीं, प्रेमभारानुबन्धात् स्नेहातिशयसम्बन्धा, दालिङ्ग्य आश्लिष्य, चिर म्बहुकाल, मनुनय प्रसादय। एतेन न त्वं मृतो भुवि पतितः; किन्तु भुवि ललनायां प्रेम्णा पतित इति अपह्नवो ध्वन्यते। रूपकालङ्कारः। तादक्षः भूम्यपेक्षयापि मय्यत्यन्त मनुरक्त इत्यर्थः। त्वं विरहविधुरां वियोगविह्वलां, प्रेयसीं प्रियतमां मां, कथं कुतो नेक्षसे ? न पश्यसि ? तथा अशरणां अरक्षकां, अनाथामित्यर्थः। मामित्यत्राप्यन्वयः। कथं कुतः नब्रूषे ? अपि नैव प्रतिवदसि ? हे प्राणनाथ! प्राणेश्वर! प्रसीद प्रसन्नो भव। मां दृष्ट्वा मया साकं सल्लापं कुर्वित्यर्थः। तव भूमि, रहं चे, त्युभे जाये। तयोरेकस्या म्मयि त्वं दृढानुरक्त इति हि भुवो मान आसीत्। तां मानिनी मनुनेतुं त्व मेवं तामालिङ्ग्य यदि शेषे; तर्हि क्षणकालमपि त्वद्वियोगासहमानायाः तवाप्यतिप्रेमास्पदायाः मम पुनः का वा गतिः ? अतो भुव मुत्सृज्य मा मुपगूहस्वेति भावः। अत्र पूर्वार्धे अमित्रै र्भुवोभारावहै स्त्वचरित्रैः

तावकदुष्टव्यापारैः, रुद्धमना मतिकुपितां, स्वपीडाहेतुत्वादिति भावः। एनां मवनिवनिता मालिङ्ग्या नुनयेति ध्वनिः; तेन च अतिभारपीडिता भूदेवी भगवन्त मवतरय्य त्वा स्मारितवती; नत्वितरथा। ततः पुनरुज्जीवनार्थं भुवमेव प्रार्थयस्वेति भर्तु रुपदेशो व्यज्यते ॥ २५

**श्लो ॥ अपि मां वलितानना निसर्गा दनुनेतुं हि तव त्वरा सशङ्कम्;**
**सभवान् कुररीविरावभङ्ग्या विलपन्तीमपि मामुपेक्षते किम्? ॥ २६**

अपीति– निसर्गा त्स्वभावतः, न तु कोपादिति भावः। वलिताननां वलयोस्यसञ्जाताः वलितं 'तारकादित्वादितच्'-आननं फालं यस्यास्ताम्, वलयो नाम तरङ्गाकाररेखाः- एवंविधामपि मां, अनुनेतुं प्रसादयितुं, सशङ्कं शङ्कया सहितं यथातथा; वर्तमानस्येतिशेषः। मयि मान माशङ्कितवत इत्यर्थः। तव त्वरा सम्भ्रमः बभूवेति शेषः। हिः प्रसिद्धौ। स भवान् सः त्वम्, कुररीविरावभङ्ग्या पक्षिक्रन्दनरीत्या, विलपन्तीमपि विलापं कुर्वन्तीमपि, मां, किं किमर्थं, मुपेक्षते उपेक्षसे? नेयमुपेक्षा तवोचिते त्यर्थः ॥ २६

**श्लो ॥ हृदयं न तृणाय मन्यते मे**
**सुरनारीरपि लोलुपं प्रियायाम्**
**इति शश्वदुदीर्य तद्वशस्त्वं**
**न मृषाभाषणचातुरीधुरीणः ॥ २७**

हृदयमिति– प्रियायां प्रेयस्यां त्वयि, लोलुपं लोलं, मे हृदयं मनः, सुरनारी रपि देवाङ्गना अपि, मानुषाङ्गनापेक्षया अतिसुन्दरी रपी त्यपे र्थः। तृणाय तृणं, न मन्यते नमनुते। 'मन्यकर्मण्यनादरे' इति मन्यतेः कर्मणि चतुर्थी वा। त्वदासक्तस्य मम सुरनार्यस्तृणप्राया इत्यर्थः। इत्येवं, शश्वत् मुहुः, उदीर्य उक्त्वा, तादृशः सुरनारीनिघ्नः त्वं, मृषाभाषणचातुरीधुरीणः मिथ्यावादवैखरीधुरन्धरः, न नभसीति! काकुः मृषाभाष्येवे त्यर्थः ॥२७

**श्लो ॥ कथ मङ्क मपास्य ते सशङ्कं त्रपया गर्भगृहान्धकारलीना**
**दिवसा नवसान मीहमाना प्रिय नेष्यामि मुधाकृता सुजाता ॥ २८**

कथमिति– हेप्रिय! पते! ते तव, अङ्कमुत्सङ्गं, मपास्य त्यक्त्वा; अत एव मुधाकृतासुजाता व्यर्थीकृतप्राणा, जीवितेश्वराभावे जीवितं वृथेति भावः। अत एव अवसानं मरणं, ईहमाना काङ्क्षमाना; व्यर्थप्राणभरणस्य भारावहत्वादिति भावः। त्रपया लज्जया हेतुभूतया, सशङ्कं ससन्देहं यथा तथा, गर्भगृहान्धकारलीना गर्भगृहं गृहान्तर्वर्ति गृहं तत्रयोऽन्धकार स्तस्मिन् लीना मग्ना; विधवानां बहिः निश्शङ्कं प्रवृत्तौ तु तासु महानपवाद उदेष्यतीति भावः। एवंविधा सती, अहमिति शेषः। दिवसान् दिनानि, कथं केन प्रकारेण, नेष्यामि गमयिष्यामि? न कथमपीत्यर्थः। एकैकं दिनं युगायते इति भावः ॥ २८

ग ॥ एव मतिवेलं विलप्य समीपवर्तिनं वासुदेव मेव मवादिषुः ॥ २९

एवमिति– एव मुक्तविधया, अतिवेल मत्यर्थं विलप्य विलापं कृत्वा, समीपवर्तिनं सविधस्थं, वासुदेवं कृष्णं- प्रति, एवं वक्ष्यमाणरीत्या, अवादिषुः अवोचन् ॥ २९

श्लो ॥ कारुण्यवाराकर ! धीः कथं ? ते क्रूरप्राकाराय दिवा तदाऽभूत्
मदीयसौभाग्यसमापकेन समीरणा कर्मसमीरणेन ॥ ३०

कारुण्येति– हेकारुण्यवाराकर ! करुणासमुद्र ! ते तव, धीः बुद्धिः कथं कुतः, क्रूरप्रकारा ? घातुकस्वभावा ? भवतीति शेषः । यदि वा यद्वा, मदीय सौभाग्यसमापकेन मत्सौभाग्यविनाशकेन, कर्मसमीरणेन कर्मरूपवायुना, तव धिय इति शेषः । तथा यथा क्रौर्यं भवे त्तथे त्यर्थः । समीरणा प्रेरणा, अभूत् बभूव । करुणासमुद्रस्यापि तव धीः यथा क्षुभ्यति; तथा मदीयं प्राग्भवीयं कर्मैव समुज्जजृम्भे; न पुन स्तवापराध इति भावः । अत्रमेव वास्तवार्थः । 'वैषम्य नैर्घृण्ये न सापेक्षत्वा' दिति भगता व्यासेन स्फष्टीकृतत्वा दिति बोध्यम् । अत्र भगवति समुद्रत्वं निरूप्य कर्मणि समीरणत्वरूपणा द्रूपकालङ्कारः । तेन च वातवशा त्समुद्रस्येव मत्कर्मवशा त्तव क्षोभ आसीदिति, उपमालङ्कारो ध्वन्यते ॥ ३०

श्लो ॥ यद्राजकुञ्जर मनारतवैरिणं ते
युक्तं हरे ! विकरुणं न्यवधीः क्रुधाति
तस्या निशं सहचरी र्विधिना प्यवध्या
क्रूरा गळन्मदभराः किं मुपेक्षसेनः ! ३१

यदिति– हेहरे ! कृष्ण ! सिंहेति च । ते तव, अनारतवैरिणं अविरतशत्रुं; त्वदुत्पत्तिप्रभृति त्वयि द्वेषं कृतवन्त मित्यर्थः । सहजशत्रु मिति च । राजकुञ्जरं कुञ्जर इव राजा राजकुञ्जरः तम् 'उपमितं व्याघ्रादिभि स्सामान्या प्रयोगे' इत्युपमितसमासः । राजश्रेष्ठ मित्यर्थः । कंस मिति यावत् । अन्यत्र राजा चासौ कुञ्जर श्च राजकुञ्जरः । विशेषणसमासः गजेन्द्र इत्यर्थः । तं क्रुधा कोपेन, विकरुणं निर्दयं यथा तथा, न्यवधीः मारितवानिति; युक्तं उचितं भूभारार्थ मवतीर्णस्य कृष्णस्य तव, त्वच्छत्रुभूतकंसनाशन मुचित मेवे त्यर्थः । अन्यत्र सिंहस्य तव सहजशत्रुभूतकुञ्जरवतंसमारणं युक्तमेवेत्यर्थः । 'सिंहो जम्बुक मङ्क मागत मपि त्यक्त्वा; निहन्ति द्विपमि' ति न्याया दिति भावः । तस्य राजकुञ्जरस्य, अनिशं सहचरीः सदा सहचारिणीः, प्रेयसी रित्यर्थः । न च स्त्रीत्वा दस्मासु दुर्बलत्वं शङ्कस्वे त्याहुः- विधिनापि ब्रह्मणापि, दैवेना पीति वा अवध्याः हन्तु मशक्याः; किमुता न्येनेति भावः । नन्वबला अपि यूयं सबलाः भवन्तु नाम; द्रोहाभावा न्नाहं हन्तु मुत्सहे इत्यत आहुः- क्रूरा इति हिंस्रा इत्यर्थः । हृदयं 'क्षुरधाराभं स्त्रीणां को वेद चेष्टितमि' ति न्याया दिति भावः । गळन्मद-

भराः निवृत्तगर्वाः; प्रियतमनाशादिति भावः। अन्यत्र स्वदर्पपूराः अतिमत्ता इत्यर्थः। एवं विधाः, नः अस्मान्, किं कुतः? उपेक्षसे त्यजसि। शत्रुपक्षीयत्वेन शत्रुभूता नस्मानपि हंसि यदि; तर्हि दुस्तरशोकसागरा दस्मदुत्तारणजन्यं बहुळं सुकृतं तव स्यात् इति भावः। अन्यत्र सिंहः करिणमेव हन्ति; न तु करिणी रिति नियमाभावा दस्मानपि जही ति भावः। तेन च कंसमांसमालादना न्न तव तृप्तिः; अपितु अस्मा नपि खादये ति श्रीकृष्णोपालम्भः प्रतीयते ॥ ३१

**ग ॥ एव मुपरचितनिजजीवितोपक्रोशं क्रोशन्ती स्तदीय पाणिगृहीती रा श्वास्य, पितरा वपि कारागारा द्विमोच्य, यदुनन्दनौ सानन्द मवन्देताम् ॥ ३२**

एव मिति– एवं पूर्वोक्तरीत्या, उपरचितः कृतः, निजजीवितोपक्रोशः स्वजीवितनिन्दा यस्मिं स्तद्यथा तथा, क्रोशन्तीः विलपन्तीः, तदीयपाणिगृहीतीः कंसतद्भ्रातृसम्बन्धिनी र्भार्याः, आश्वास्य शान्तरुदिताः कृत्वाः, कारागारात् बन्धनगृहा, त्पितरौ देवकीवसुदेवौ, विमुच्य मोचयित्वा, यदुनन्दनौ रामकृष्णौ, सानन्दं सप्रमोदं यथा तथा, अवन्देताम् अभिवादयामासतुः। अर्था त्पितरा वित्येव कर्म। 'वदि अभिवादनस्तुत्यो' रिति धातुः॥ ३२

**श्लो ॥ अम्बेति ताते ति तयो रुदारां गिरं तदानीं पितरौ निशम्य,**
**समौज्झतां मङ्क्षु चिराय कारागारानुसाराहित मार्तिभारम् ॥ ३३**

अम्बेति– पितरौ देवकीवसुदेवौ, तदानीं तदा, तयोः पुत्रयो स्सम्बन्धिनीं उदारां महतीं श्लाघ्या मित्यर्थः। अम्बेति हे अम्ब! जननि! इति, तातेति हेतात! जनक! इति च, गिरं वाचं, निशम्य श्रुत्वा, इतः प्रा क्कंसभिया तच्छ्रवणालाभादिति भावः। चिराय चिरा त्प्रभृति, कारागारानुकाराहितं बन्धनगृहस्थितिसम्प्राप्त, मार्तिभारं पीड़ातिशयं, मङ्क्षु द्रुतं, समौज्झतां तत्यजतुः। सामान्यतः पुत्रवाक्यश्रवणेनैव पितरौ सर्वा मपि व्यथा मुत्सृज्य, आनन्दतो हि; किं पुनः परमेश्वररूपपुत्रवाक्यश्रवणेने ति भावः। यद्वा मानसिक श्रीहरिचर, णारविन्दामृतास्वादनेनैव योगिनो निर्व्यथाः परमानन्दं भजन्ति खलु? किं पुनः पितरौ तादृशपरमेश्वरबालिशमधुरतरवचनामृतपातनेने ति भावः॥ ३३

**ग ॥ तदनु मुहु र्मुहु रालिङ्ग्य निरन्तरानन्दबाष्पाभिषेकेन कंसपरासनदीक्षा समापकावभृथमिव दधानौ पितरौ मधुसूदनो मधुर मिद मवादीत् ॥ ३४**

तदन्विति– तदनु पुत्राभिवादनानन्तरं, मुहुर्मुहु रसकृत्, आलिङ्ग्य उपगूह्य, निरन्तरेण अविच्छिन्नेन, आनन्दबाष्पाभिषेकेण सन्तोषाश्रुसेचनेन, कंसपरासनदीक्षायाः कंसमारणव्रतस्य, समापकं समाप्तिजनकं, अवभृथं दीक्षान्तस्नानं, दधानाविव कुर्वन्ता विव; स्थितौ,

इत्युत्प्रेक्षा । पितरौ प्रति मधुसूदनः कृष्णः, इदं वक्ष्यमाणं, मधुरं स्वादु; वचनमिति शेषः । अवादीत् जगाद ॥ ३४

**श्लो ॥ नबालखीलाभि रनन्दयं वां नवारितो वा विपदां प्रवाहः**
**तनूजभावा न्मम किन्तु हन्त ! विमुक्तिमात्रं फलता मया सीत् ॥ ३५**

नेति– वां युवां, बाललीलाभि रर्भकविलासै, र्नानन्दयम् न तोषितवा; नह मित्याक्षेपः। विपदा मापदां, प्रवाह स्समूहो, वा अपि, न वारितः न निवारितः; मयेति शेषः । किन्तु मम तनूजभावात् पुत्रत्वाद्धेतोः, युवयो रिति शेषः । विमुक्तिमात्रं कारागृहो न्मोचनमेव, फलतां फलत्व, मयासी दाप; विमुक्तिमात्रमेव फलं बभूवेत्यर्थः । हन्तेति खेदे । विमुक्तिमात्रं मोक्षमेवेति गम्यते । परमेश्वरोऽहं यत्रो वां पुत्रोऽभूवं; ततो युवयो र्नास्ति पुनर्भव इति भावः ॥ ३५

**श्लो ॥ प्रमोदये द्य स्सुतनिर्विशेषो जनं विजातीय मपि स्वकृत्यैः**
**बाल स्स लोके पुरुषोत्तम स्या द्दूरे स्वपित्रो रपि नन्दनं मे ॥ ३६**

प्रमोदयेदिति– यो बालः, सुतनिर्विशेषः सुतसदृश स्सन् , स्वकृत्यैः स्वकीय बाललीलाभिः, विजातीयमपि स्वेतरजातीयमपि, जनं प्रमोदयेत् आनन्दयेत् ; सजातीयं तु किमुतेति भावः । सः बालः शिशुः, लोके भुवने, पुरुषोत्तमः पुरुषश्रेष्ठः, स्या द्भवेत् ; तस्यैव जन्म सफल मित्यर्थः । मे मम तु, स्वपित्रोरपि स्वजननीजनकयोरपि, नन्दनं सन्तोषणं, दूरे दुर्लभ मित्यर्थः । योऽहं बाल स्सन् जननीजनकावपि नानन्दयं तस्य मम दौर्भाग्य मनिर्वाच्यमिति भावः । व्यङ्ग्यार्थस्तु यो बालः क्षत्रियजातीयोऽर्भकः, सुतनिर्विशेष स्सन् , स्वकृत्यैः विजातीयं वैश्यजातीयं जनमपि, नन्दादिगोपसमूहमपि, प्रमोदयेत् ; स बालः, लोके पुरुषोत्तमो विष्णु स्स्यात् ; तमेव बालं लोकाः परमेश्वरं विदु रित्यर्थः; सर्वेषामपि परप्रेमास्पदत्वादिति भावः । यद्वा यः पुरुषोत्तमः, सुतनिर्विशेष स्सन् ; कस्यचि त्सुतो भूत्वेत्यर्थः । परमकारणस्य भगवत स्सुतत्वायोगा त्सुतनिर्विशेष इत्युक्तम् । विजातीय मपि जनं प्रमोदयेत् आनन्दयितुं शक्नुया दित्यर्थः । परमानन्दरूपत्वादिति भावः । स एव पुरुषोत्तमो विष्णुः, लोके भुवि, बाल स्स्यात् कस्यचित्पुत्र स्स्यात् इत्यन्वयः । एतेन विजातीयनन्दादिगोपप्रमोदकोऽहं न साधारणो बालः; किन्तु पुरुषोत्तमावतारभूत एवेति, स्वयाथार्थ्य माविष्कृतं कृष्णेन । अथ न केवल मेतावत् दूरत स्स्थित्वैव पितरा वप्यनन्दय मित्याह- दूरे इति- स्थित्वा इति शेषः । दूरे स्थित्वापि मे, मया पित्रोरपि नन्दनं तोषणं कृत मिति शेषः । यद्वा- स्थितयो रिति शेषः । दूरे स्थितयोरपि पित्रोः मे ममेति कर्तरि षष्ठी । मत्कर्तृक मित्यर्थः । नन्दनं भवतीति शेषः ॥ ३६

श्लो ॥ भाषितै र्मधुरै रस्य तत्वसर्वङ्कषैरपि
लोकानुकारिभि र्युक्तं मोहितौ पितरा विति ॥ ३७

भाषितैरिति– अस्य कृष्णस्य, सम्बन्धिभिः तत्त्वसर्वङ्कषैरपि तत्त्वमर्मस्पृग्भिरपि, लोकानुकारिभिः लोकं जन मनुकुर्वन्तीति लोकानुकारीणि तैः, लौकिकै रित्यर्थः। मधुरैः स्वादुभि र्भाषितैः वचनैः, पितरौ- मोहितौ मोहं प्रापिताविति, युक्त मुचितम्। अत्र तत्त्वसर्वङ्कषाणां भाषितानां शास्त्रीयत्वेन लौकिकत्वोपन्यासः एको विरोधः। तत्त्वसर्वङ्कषै र्भाषितै र्मोहिता वित्यन्यो विरोधः। तादृशवचनानां मोहनिवर्तकत्वौचित्यात्। एवं विरुद्धार्थयो रपि युक्त मिति योग्यत्वोपन्यास स्तृतीयो विरोधः। व्यङ्ग्यार्थ माश्रित्य तत्त्वसर्वंकषत्वं वाच्यार्थ माश्रित्य तु लौकिकत्व मिति प्रथमविरोधपरिहारः। तत्त्वं प्रच्छाद्य यतो लोकसिद्धार्थं मनुवदन्ति भाषितानि तत स्तैः मोहितत्वं सम्भवत्येवेति द्वितीयस्य परिहारः। लीलामानुषस्य कृष्णस्य मधुरवाङ्मकरन्द मापीय साधारणानामपि मोहस्स्यादिति कृत्वा, किं पुनः पित्रोरिति कैमुत्तिकन्यायं ध्वनयितुं पितरौ मोहिताविति युक्त मित्युक्तम्। तेन तृतीयविरोधपरिहारः। तस्मात् विरोधाभासालङ्कारत्रयम् ॥ ३७

ग ॥ तदनु यदूना मवनिपरिग्रहे ययातिशाप मन्तराय मावेद्य, मातामह मुग्रसेनं सानुनय मुररीकृतराज्यभार मारचय्य, नन्दगोपमपि सप्रार्थनं व्रजं प्रस्थाप्य, यदुकुलपुरोधसा गर्गेण वसुदेवनिदेशा दुपरचितोपनयनसंस्कारौ यदुकुमारौ व्यरोचेताम् ॥ ३८

तदन्विति– तदनु ततः, यदूना- मवनिपरिग्रहे भूपालने, ययातिशापं ययाति रिति कश्चन मूलपुरुषः तस्य शापं, यदुवंशीयानां प्रभुत्वाधिकारो मास्तु; इत्येवं रूपं वाग्दण्डं, अन्त रायं विघ्नं, मावेद्य आलोच्य, मातामहं; देवकीजनको यद्यपि देवको मातामहः तथापि तद्भ्रातरि मातामहत्वव्यपदेशोऽय मौपचारिकः। उग्रसेनं सानुनयं अनुनय सहितं यथा तथा; पुत्र- वियोगातुरत्वादिति भावः। उररीकृतराज्यभारं स्वीकृतराज्यधुरं, आरचय्य कृत्वा, नन्दगोपमपि नन्दाख्यं गोपमपि, सप्रार्थनं प्रार्थनया सहितं यथा तथा, व्रजं गोष्ठं, प्रस्थाप्य यापयित्वा, वसुदेव निदेशात् वसुदेव स्याज्ञया, यदुकुलपुरोधसा यदुवंशपुरोहितेन, गर्गेण तन्नामकमुनिना, उपरचि- तोपनयनसंस्कारौ कृतोपनयनाख्यसंस्कारौ, सन्तौ, यदुकुमारौ रामकृष्णौ, व्यरोचेताम् चकासतुः ॥

श्लो ॥ यं ब्रह्मचर्या निजसूत्रलब्धा
स्प्रागेव गोपप्रमदाङ्गसङ्गात्
भेजे गृहस्थाश्रम मेष शौरि
स्स एष वात्स्यायनसूत्रसिद्धः ॥ ३९

यमिति– एष शौरिः कृष्णः, निजसूत्रलब्धात् स्वसूत्रप्रासात् ; कृष्णस्य क्षत्रियत्वेन इति-कर्तव्यताबोधककल्पसूत्रसद्भावादिति भावः । ब्रह्मचर्यात् ब्रह्मचर्याश्रयणा, त्प्रागेव पूर्वमेव, गोप-प्रमदाङ्गसङ्गात् गोपिकासंयोगा द्धेतोः; यं गृहस्थाश्रमं, भेजे प्राप, सः ब्रह्मचर्या त्प्राकालिकः, एषः गृहस्थाश्रमः, वात्स्यायनसूत्रसिद्धः वात्स्यायन इति कश्चि त्कामशास्त्रोपदेष्टा ऋषिः; तस्य सूत्रेभ्य स्सिद्धः लब्धः भवतीति शेषः । सूत्रसिद्धाऽर्थः प्रमाणमिति भावः । अत्र उपनयना दनन्तरभाविनो गृहस्थाश्रमस्य कल्पसूत्रसिद्धत्वेन तं क्रम मुलङ्घ्य, उपनयना त्प्रागेव गृहस्थाश्रमस्वीकारस्य अप्रामाणिकत्वेऽपि वात्स्यायनसूत्रसिद्धत्वेन प्रामाणिकत्वकल्पना च्छब्दप्रमाणालङ्कारः ॥ ३९

**श्लो ॥ अथो गुरुकुलावास मासाद्य यदुनन्दनौ**
**वेदान् जग्रहतु र्जातु नाभू त्तद्ग्राहिका श्रुतिः** ४०

अथो इति– अथो उपनयनानन्तरं, उपनयनसंस्कारा त्प्रा ग्वेदपाठानधिकारा दिति भावः । यदुनन्दनौ रामकृष्णौ, गुरुकुलावासं कुलशब्दोऽत्र गृहे औपचारिकः गुरुगृहवासं आसाद्य प्राप्य, वेदान् त्रयीं, जग्रहतुः गृहीतवन्तौ अधीतवेदौ बभूवतु रित्यर्थः । जातु, कदाचि दपि, तद्ग्राहिका तयोः परब्रह्मरूपयोः रामकृष्णयोः, ग्राहिका प्रतिपादिका, श्रुति र्वेदो, नाभूत् नासीत् । 'यतो वाचो निवर्तन्ते' इति श्रुतेः । वेदाः नैतौ जगृहु रिति भावः । अत्र श्रुति र्जातु तद्ग्राहिका नाभूदि त्य प्यन्वय स्सुलभः ॥ ४०

**श्लो ॥ क्व हरे श्श्रुतिभागेऽभू न्न पदक्रमकौशलम्**
**ख्याति स्तथापि तस्यासी त्त्रिपदक्रममात्रतः ॥** ४१

केति– हरेः कृष्णस्य, श्रुतिभागे वेदभागे, क कुत्रवा, पदक्रमकौशलं पदं पूर्वपूर्व-पदत्यागपूर्वक मुत्तरोत्तरपदस्वीकरणम् ; क्रमो नाम पदाना मावृत्तिविशेषः; तयोः कौशलं नैपुण्यं, नाभूत् नासीत् ; किन्तु सर्वत्रा पि वेदभागे आसीदि त्यर्थः । तथापि एव मपि, तस्य कृष्णस्य, त्रिपदक्रममात्रतः त्रयाणां पदानां क्रमकथनमात्रात्, ख्यातिः कीर्तिः, रासी ज्जातेति विरोधः । त्रिभिः पदै श्चरणैः क्रमः क्रमणं लोकत्रयाक्रमण मित्यर्थः । पदक्रम एव पदक्रममात्रं, तस्मादिति तत्परिहारः । विरोधाभासालङ्कारः । वेदभागे पदक्रम कौशलं नातीव प्रख्यातिकरं; वैदिकसाधारणत्वात्- किन्तु त्रिभिः पादन्यासैः सर्वलोकाक्रमणमिति यत् प्रतिष्ठाहेतु परमात्मसाधारणत्वादिति भावः ॥ ४१

**ग ॥ अथ चतुष्षष्ट्या वासराणा मधिगतसकलकलाकलापोऽयं भगवा नभवत् ॥** ४२

अथेति– अथ वेदाध्ययनानन्तरं, अयं भगवान् कृष्णः, वासराणां दिनानां, चतु-ष्षष्ट्या, चतुरधिकया षष्ट्या, चतुष्षष्टिवासरै रित्यर्थः । 'अपवर्गे तृतीयेति' तृतीया ।

अधिगतसकलकलाकलापः सकलानां बहुविधानां कलानां विद्यानां कलाप स्समूहः अधिगतः ज्ञातः सः येन, तथोक्तः अभवत् । चतुष्षष्टिकलाप्रवीणो बभूवे त्यर्थः ॥ ४२

**श्लो ॥ विधु रेष चतुष्षष्ठ्या दिनानां सकलाः कलाः**
**पुपोष न तथा प्यासी दासा मपचयः कथम् ॥ ४३**

विधुरिति— एषः विधुः कृष्णः, दिनानां चतुष्षष्ठ्य, सकलाः कलाः विद्याः, कथं? केन प्रकारेण? पुपोष अभ्यस्तवान्! एकैककलाया बहुदिनसाध्यत्वा दिति भावः । तथापि आसां कलाना मपचयो विस्मृतिः, कथं नासीत्? नबभूवः? उत्तरोत्तरविद्याभ्यासे क्रियमाणे पूर्वपूर्वाभ्यस्तविद्यायाः विस्मृते रनिवार्यत्वा दिति भावः । अचिन्त्यमहिमत्वा दित्युभयोः परिहारः । वस्तुतस्तु स्वत स्सर्वज्ञत्वा द्विधो विद्याभ्यासोऽपि विरुद्ध एव । लीलारसत्वादिति तत्परिहारः । व्यङ्ग्यार्थस्तु- एष विधु श्चन्द्रः दिनानां चतुष्षष्ठ्या सकलाः कलाः 'कलातु षोडशो भाग' इत्यमरः । षोडशकलाः कथं पुपोष? वर्धयामास? शुक्लपक्षे पञ्चदशसु दिनेषु पञ्चदशकलापोषः प्रसिद्धः; षोडशकलाया श्शिवेनापहृतत्वात्- एवं सति सर्वकलापोष इत्येको विरोधः- दिनानां चतुष्षष्ठ्या इत्यन्यः । तथापि एवं विरोधद्वयाङ्गीकारेऽपि, आसां कलाना, मुपचयः अपक्षयः, कथं नासीत्? कृष्णपक्षे तासां क्रमेण नाशप्रसिद्धे रिति भावः । इति तृतीयोऽपि विरोध इति भावः ॥ ४३

**ग ॥ तदनु यदुनन्दना वुदन्वदुदरविलीननिजतनयप्रदानरूपगुरुदक्षिणा काङ्क्षिणा पारिकाङ्क्षिणा समीरिते गुरुणा वरुणालय मभजताम् ॥ ४४**

तदन्विति— तदनु विद्यासमाप्त्यनन्तरं, यदुनन्दनौ रामकृष्णौ, उदन्वदुदरविलीनस्य समुद्रगर्भनिर्मग्नस्य, निजतनयस्य स्वपुत्रस्य, प्रदानं समर्पणं तद्रूपं तदात्मिकां गुरुदक्षिणां, 'विद्या-परिसमाप्त्यनन्तरं गुरवे प्रत्यर्प्यमाणं वस्तु गुरुदक्षिणे' त्युच्यते । ता माकाङ्क्षते वाञ्छतीति तथोक्तः । तेन पारिकाङ्क्षिणा तपस्विना, गुरुणा विद्योपदेष्ट्रा, समीरितौ चोदितौ सन्तौ, वरुणा-लयं समुद्रं, मभजतां ययतुः ॥ ४४

**ग ॥ तत्र च ससम्भ्रम मुपरचिताभ्यर्चना दुदन्वतः कमपि जलचरं पञ्चजना भिधानं शङ्खरूपधारिणं तदपहारिण मुपलभ्य, सलीलं सलिल मवगाह्य, तमेन मालभ्य च, तदुदरमन्तरा गुरुतनय मपश्यन्ता वादाय, तदङ्गसम्भवं शङ्खं, संयमिनीनामकं शमननगर मगमताम् ॥ ४५**

तत्रेति— तत्र च समुद्रसमीपे, ससम्भ्रमं सत्वरं यथा तथा उपरचिताभ्यर्चनात्, कृतपूजनात् उदन्वत स्समुद्रा त्सकाशात्, तद्वाक्या दित्यर्थः । जलचरं उदकस्थं, शङ्खरूपधारिणं शङ्खस्वरूप-

घरं, पञ्चजनाभिधानं 'पञ्चजन' इति नामवन्तं, कमपि कञ्चन, यातुधानं राक्षसं, तदपहारिणं गुरुपुत्रापहारिण, मुपलभ्य ज्ञात्वा, समुद्रे स्नानं कुर्वन् गुरुपुत्रः शङ्खरूपिणा दानवेन भक्षित इति समुद्राधिदैवतेन ज्ञापितौ भूत्वेति भावः । सलीलं सविलासं यथा तथा, सलिलं समुद्रोदक, मवगाह्य प्रविश्य, तं समुद्रज्ञापित, मेनं पञ्चजन, मालभ्य हत्वा, तदुदरमन्तरा तद्गर्भमध्ये, गुरुतनयं गुरुपुत्र, मपश्यन्तौ अदृष्ट्वे त्यर्थः । चिराय राक्षसजठराग्निजीर्णो गुरु पुत्रः कथ मधुना दृश्यते इति भावः । तदङ्गसम्भवं तद्देहजन्यं, तस्य शङ्खाकारत्वा दिति भावः । शङ्खं पाञ्चजन्य, मादाय गृहीत्वा, संयमिनीनामकं 'संयमिनी' इति नाम यस्य तत् , शमननगरं यमपत्तन, मगमतां ययतुः । प्राप्तदुर्मरणो गुरुपुत्रो यमपुरे यातनाम् अनुभवन् वर्तते इति मत्वे ति भावः ॥ ४५

श्लो ॥ अथ कालवशाच्छौरि रुपनीय द्विजात्मजम्
अदिश द्गुरवे जन्म तद् द्वितीय मिवाभवत् ॥ ४६

अथेति– अथ यमपुरगमनानन्तरं, शौरिः कृष्णः, कालवशात् यमाधीनतां निर्वर्त्येति-ल्यब्लोपे पञ्चमी । द्विजात्मजं ब्राह्मणपुत्र, मुपनीय आनीय, गुरवे अदिशत् ददौ । तद्दानं द्वितीयं जन्म, अपरजन्म, अभवत् बभूव । इवशब्दो वाक्यालङ्कारे । गुरुपुत्रात्मना जातोऽयं पुरुषो मृत स्सन् पुन र्यमलोका दिह लोकं प्रत्यागत इति य त्ततोऽस्य जन्मद्वयमिति भावः । यद्वा तद् द्वितीयं जन्मे वाऽभवदिति, इव शब्दः उपमायाम्। तेन नेदं द्वितीयजन्म; किन्तु तत्सदृश मेव । कुतः? गुरुपत्न्युदरा त्पुनः प्रसवाभावात्- एकैकस्य प्रसवस्य ह्येकैकजन्मत्वेन व्यवहार इति- प्राक्तन-गुरुपुत्रकळेबरस्य प्रागेव नाशेऽपि, भगवान् स्वशक्त्या पुनस्तादृशकळेबरं प्रादा दस्येति बोध्यम् । व्यङ्ग्यार्थ स्तु- शौरि रथ कालवशात् गर्भाष्टमादिकालवशात, द्विजात्मजं; त्रैवर्णिकेतरस्य उपनयना-नधिकारादिति भावः । उपनीय उपनयनसंस्कारेण संस्कृतं कृत्वा, गुरवे अदिशत् अध्ययनार्थं गुरुकुले स्थापयामासे त्यर्थः। तदुपनयनं द्वितीयं जन्मेव अभवत् । ' जन्मना जायते शूद्रः कर्मणा जायते द्विज ' इति न्याया दुपनयनस्य द्वितीयजन्मत्वं वैदिकसिद्धम् ॥ ४६

श्लो ॥ शान्तं महीसुरसुतं वपुषैव तेन
भूमि स्पृशं मधुरिपु र्व्यधिताद्भुतंतत्
मायाश्रयो विधि मतीत्य च वर्तमानो
यद्वा न किन्तु विदधातु परार्थलौल्यात् ॥ ४७

शान्तमिति– मधुरिपुः कृष्णः, शान्तं नष्टं, महीसुरसुतं गुरुपुत्रं, तेन वपुषैव नष्टगुरुपुत्र-कळेबरेणैव, भूमिस्पृशं भूभाजं, व्यधित अकरोत् । त त्तथा करण, मद्भुत माश्चर्य मित्यर्थः । मृतस्य पुनर्जन्म नाद्भुतं; किन्तु यो देहो नष्ट स्तस्यैव पुन रागति रित्येतत्तु विस्मयावहमिति

भावः । यद्वा अथवा, मायाश्रयः मायायाः अघटितघटनापटीयस्तमायाः प्रकृते राश्रयः आधारः, 'मायान्तु प्रकृतिं विद्या न्मायिन न्तु महेश्वर' मिति श्रुते रिति भावः । विधिं ब्रह्माण मतीत्य उलङ्घ्य, वर्तमानः प्रवर्तनशीलः, स्रष्टु रपि नियामक इत्यर्थः । एवं विधो मधुरिपुः परार्थलौल्यात् परोपकारार्थं, किन्तु; किं वा! न विदधातु न कुर्यात् । अघटितमपि सर्वं मायाबला द्भगवान् घटयत्येवेति भावः । अत्र पूर्वार्धोक्तस्य अद्भुतत्वस्य उत्तरार्धेन प्रतिषेधा दाक्षेपालङ्कारः । व्यङ्ग्यार्थस्तु शान्तं शमप्रधानं, महीसुरसुतं, ब्राह्मणपुत्रं तेन वपुषैव, भूमिस्पृशं वैश्यं, व्यधित 'वैश्या भूमिस्पृशो विश'इत्यमरः । तदद्भुतं न हि; ब्राह्मणजातीयो येन केना प्युपायेन वैश्यो भवेदिति भावः । मायाश्रयः सकपटः विधिं शास्त्र मतीत्य वर्तमानश्च, स परार्थलौल्यात् परधनासक्त्या किन्तु न विदधातु? सर्वमपि कुर्यादेवे त्यर्थः । वैश्यं विप्रीकर्तुं विप्रं वैश्यीकर्तुं वा शास्त्रप्रमाणाभावेऽपि धनाशया कपटेन, कश्चि त्तथा कुर्यादेव मदीयेयं कन्येति ब्राह्मणेन दत्तां चण्डालकन्या मपि वोढृणां बहूना मधुना उपलम्भादिति भावः ॥ ४७

ग ॥ अथ कदाचि दस्तिप्रास्तिनामभि रुग्रसेनसुतदारै रभिनवविधवापद विधुरै रुद्बोधितो जरासन्धाभिधानो मगधाधिपति र्मधुरानगरवरण मरुणत् ॥ ४८

अथेति– अथ गुर्वनुज्ञया रामकृष्णयो र्मधुरानगरप्राप्त्यनन्तरं, कदाचि त्कस्मिंश्चित्काले अभिनवविधवापदविधुरैः नूतनवैधव्यविवशैः, अस्तिप्रास्तिरिति नाम येषा न्तैः उग्रसेनसुतदारैः, कंसभार्यया 'दाराः पुंसि च भूम्न्येवे' त्यमरः । उद्बोधितः, प्रचोदितः, जरासन्ध इत्यभिधानं नाम यस्य सः, मगधाधिपतिः । मगधदेशाधीश्वरः, मधुरानगरस्य मधुराख्यश्रीकृष्णनिलयपत्तनस्य, वरणं प्राकारं, अरुणत् रुरोध । 'प्राकारो वरण स्साल' इत्यमरः ॥ ४८

अव– निरोधमेव दर्शयति- द्वारमिति ॥

श्लो ॥ द्वारं पूर्व मुपारुधन् क्षितिभृत स्साल्वादयो दक्षिणं
विन्दाद्या अपि पश्चिमं द्रुमसुखा श्शिष्टं शकुन्यादयः
कल्पान्तोद्यदखण्डखण्डपरशुप्रोद्दामढक्काध्वनि
भ्राता डिण्डिमडम्बरेण निबिडं ब्रह्माण्डभाण्डं व्यधुः ॥ ४९

द्वारमिति– साल्वादयः साल्वो नाम कश्चन राजा स आदि र्येषा न्ते । क्षितिभृतो राजानः, पूर्वं प्राग्दिशीयं, द्वारं प्राकारद्वारं, मुपारुधन् रुरुधुः । तथा विन्दाद्याः विन्दप्रमुखाः क्षितिभृतः, पश्चिमं द्वार मुपारुधन्, शकुन्यादयः शकुनिमुख्याः क्षितिभृतः, शिष्ट मुक्तातिरिक्त, मुत्तर मित्यर्थः । द्वार मुपारुधन् । इति 'क्षितिभृतः द्वारमुपारुधन्नि'ति पदत्रयस्य वाक्यचतुष्टयेऽप्यन्वयः आवृत्त्या तन्त्रेणवेति ज्ञेयम् । ते इति शेषः । पूर्वोक्ता स्साल्वादय स्सर्वे, ब्रह्माण्डभाण्डं ब्रह्माण्डः प्रपञ्चः स एवभाण्डः भाजनं तम्, कल्पान्ते प्रळयकाले, उद्यन् विजृम्भमाणः, यः

खण्डः महान्, खण्डपरशुः शिवः, तस्य प्रोद्दामढक्काध्वनेः उद्भटढक्कानादस्य, भ्रात्रा सहोदरेण ल्येने त्यर्थः । घशः पटहो ढक्के' त्यमरः । (आन्ध्रे ढवण) डिण्डिमडम्बरेण डिण्डिम-रम्भेण, ... डमरुमड्डुडिण्डिमझर्झरा' इत्यमरः । निबिडं व्याप्तं व्यधुः चक्रुः उपमालङ्कारः ॥ ४९

ग॥ सपदि विदितोदन्तौ नदन्तौ यदुकदन मासादितस्यन्दनौ यदुनन्दनौ कृतवर्मसात्यकिमुखा नादिश्य नगररक्षायै समधिगतविविधायुधा वायोधनाय तदुत्तरद्वारेण सरयं निरयातां ॥ ५०

सपदिति– सपदि तदा, विदितोदन्तौ, ज्ञातवृत्तान्तौ, यदुनन्दनौ रामकृष्णौ, कृतवर्मसात्यकिमुखान् कृतवर्मा सात्यकि श्च ता वुभे मुखे आदौ येषान्तान्, नगररक्षायै पत्तनरक्षार्थं, मादिश्य आज्ञाप्य, समधिगतविविधायुधौ धृतशङ्खकौमोदकीचक्रहलादिनानाविधायुधौ, आसादितस्यन्दनौ रथारूढौ च सन्तौ, नदन्तौ सिंहनादं कुर्वन्तौ, हर्षादिति भावः । आयोधनाय युद्धार्थम्, यदुकदनं यदुयुद्धरङ्गं प्रति, यदुभि स्सह शत्रवो यत्र युद्ध्यन्ति तदुद्दिश्ये त्यर्थः । तदुत्तरद्वारेण प्राकारोत्तरमार्गेण, सरयं सवेगं यथा तथा, निरयाताम् निर्जग्मतुः ॥ ५०

श्लो ॥ दध्मौ शङ्ख मथावधीरितरिपु श्शौरि र्धरां घूर्णयन्
लोका नाकुलयन् घना न्विघटयन् पृथ्वीभृतः पातयन्
निर्भिन्ना च्च तथा निशम्य मगधाधीशस्य हृत्कन्दरा
च्चित्रं धैर्यहरि स्तदा निरगम न्नालोकयन् पृष्ठतः ॥ ५१

दध्मा विति– अथ ततः, युद्धाय निर्गमनानन्तरमित्यर्थः । अवधीरितरिपुः तिरस्कृतशत्रुः, शौरिः कृष्णः, धरां भुवं, घूर्णयन् भ्रामयन्, लोकान् भुवनानि, आकुलयन् व्याकुलीकुर्वन्, घना न्मेघान्, विघटयन् विदारयन्, पृथ्वीभृतः पर्वतान्, पातयन् भ्रंशयन् सन्, शङ्खं पाञ्चजन्यं, दध्मौ पूरितवान् ध्मा शब्दाग्निसंयोगयोः । एतेन श्रीकृष्णपूरितपाञ्चजन्यनिनदस्य प्रळयाब्द गर्जिततौल्यं व्यज्यते । तथा तत्काले, निशम्य शङ्खध्वनिं श्रुत्वा, शतधा बहुधा, निर्भिन्नात् विदीर्णात्, मगधाधीशस्य जरासन्धस्य, हृत्कन्दरात् मनोरूपगुहतः सकाशात्, पृष्ठतः पश्चात्, नालोकयन् अपश्यन्, धैर्यहरिः धैर्यरूप सिंहः, निरगमत् निर्जगाम । चित्र मद्भुतम्! अत्युल्बणं ध्वनिं श्रुत्वा सिंहः कन्दरा न्निस्सरतु नाम; तस्य पश्चा दवलोकनाभावो विस्मय जनक इत्यर्थः । सिंहस्य पश्चा दवलोकनं प्रसिद्धम् । यथा सर्पादिभ्यो भीतः कश्चन भीत्या पश्चा दपश्यन् केवल पुरो दृष्टि स्सन्नेव पलायते; तद्व च्छङ्खध्वने र्भीतो धैर्यसिंहोऽपी ति भावः । अत्र धैर्यस्य पश्चा दवलोकनं नाम किमिदं वे त्यननुसन्धान मेव । तत श्च शङ्खध्वनिं श्रुत्वा केवलं भीत स्सन् जरा-

सन्धो धैर्यं मुमोच; नतु पुनः किमिद मिति तद् ध्वनियाथार्थ्य मालोचितवानि ति परमार्थः । रूपकालङ्कारः ॥ ५१

ग ॥ तदनु समपद्यत विविधं यशोधन मायोधनम् ॥ ५२

तदन्विति– तदनु शङ्कापूरणानन्तरं, विविधं बहुविधं, यशोधनं यशः कीर्तिरेव धनं पणं यस्मिं स्तत् , आयोधनं युद्धं, समपद्यत प्रवृत्त मभूत् ॥ ५२

तथाहि ॥ युद्धमेव प्रतिपादयतीत्यर्थः ॥

श्लो ॥ स्थाने वैरिविदारणाय यदभू दायोधनंशार्ङ्गिणो
यन्मित्राङ्गविदारणाय च पुन श्चित्रं त दालक्ष्यते
सङ्घर्षी प्रतिपद्यता मुपयमं तेनारिभूभृद्गणं
पश्यन् दिव्यवधूगणोऽप्युपयमं तेनैव चित्रं त्विदम् ॥ ५३

स्थाने इति– शार्ङ्गिणः कृष्णस्य सम्बन्धि, आयोधनं युद्धं, वैरिविदारणाय शत्रुनाशनार्थं, मभू द्बभूव, इति यत् ; स्थाने युक्तम् । भगवतो युद्धे शत्रुविदारण मुचित मेवे त्यर्थः । शर्ङ्गिणः आयोधनमिति पदद्वय मुत्तरवाक्ये प्यन्वेति । मित्राङ्गविदारणाय च सुहृच्छरीरविमर्दनार्थ मपि, सूर्यमण्डलभेदनार्थ मिति च, अभूदिति यत् ; त त्पुन स्त तु, चित्र मद्भुत, मालक्ष्यते ज्ञायते । भगवान् युद्धे सुहृदङ्गविदारणं कृतवा नित्येत तु विरुद्धमिति भावः । 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ परिव्राड्योगयुक्त श्च रणे चाभिमुखो हतः' इति स्मरणात्- भगवता स्वाभिमुखं युद्धे निहताः पुरुषा स्सर्वेऽपि सूर्यमण्डलं बिबिधु रिति परमार्थः । विरोधाभासालङ्कारः । तेन युद्धेन हेतुना, सङ्घर्षी कलहोन्मुखः, अरिभूभृद्गणः शत्रुराजसङ्घः, उपयमं यमसमीपं, प्रतिपद्यतां भजतां । युक्तमेत द्युद्धे कलहिनां मृति रिति पश्यन् युद्धं पश्यन् , दिव्यवधूगणोऽपि देवाङ्गनासङ्घोऽपि, तेन युद्धेनैव हेतुना, उपयमं यमसमीपं, विवाहं च, एति प्राप्नोति इदं तु द्रष्टॄणां तत्रापि स्त्रीणा मुपयमप्राप्ति रि त्येत त्तु चित्रं; विरुद्धत्वा दद्भुत मित्यर्थः । अत्रापि विरोधाभासालङ्कारः हरे श्शत्रुषु मित्रेषु च साम्येन वर्तना तुल्ययोगिता विशेषालङ्कार श्च- 'हिताहिते वृत्तितौल्य मपरा तुल्ययोगिते' ति लक्षणात् ॥ ५३

श्लो ॥ युद्धे तत्र समुद्धतो यदुपतिः कालाग्निरुद्राकृति
स्तेने ज़्याविरहं न धन्वसु परं धन्वि ष्वराति ष्वपि
वंशं केवल माच्छिद न्न धनुषः क्षुद्रक्षितीशा मपि
स्वं चक्रं पर मग्रही न्नकुपितो वैरीश्वराणा मपि ॥ ५४

युद्धे इति—तत्र तस्मिन् युद्धे, समुद्धतः अतिदृप्तः, कालाग्निरुद्राकृतिः कालाग्नेः प्रळयानलस्येव रुद्रा प्रचण्डा आकृति राकारो यस्य सः तथोक्तः, यदुपतिः कृष्णः, धन्वसु परं चापेष्वेव, ज्याविरहं मौर्वीवियोगं, न तेने न चकार। न केवलं धनूंषि छिन्नमौर्वीकाणि कृतवा नित्यर्थः। किन्तु धन्विषु धनुष्मत्सु, अरातिष्वपि शत्रुष्वपि, ज्याविरहं भूवियोगं, धनुर्वियोगमिति च, गम्यते। तेने इति पूर्वान्वयः। तथा यदुपतिः धनुषः चापस्य, वंशं केवलं वेणुमेव, चापदण्डमित्यर्थः। नाच्छिदत् न चिच्छेद। किन्तु क्षुद्रक्षितीशामपि शत्रुभूपाना मपि, वंशं कुलं, सङ्घ मित्यर्थः। वेणुमिति च गम्यते। अच्छिदत्। कुपितो रुष्टः, यदुपतिः स्वं स्वीयं, चक्रं परं चक्रायुधमेव, नाग्रहीत् न जग्राह; किन्तु वैरीश्वराणा मपि शत्रुराजाना मपि, चक्रं राष्ट्रम्, चक्रायुधमिति च, गम्यते - अग्रहीत् स्वायत्तीचकार। अत्र तुल्ययोगितालङ्कारत्रयम्। 'वर्ण्याना मितरेषां वा धर्मैक्यं तुल्ययोगिते'ति- लक्षणात्। श्रीकृष्णेन धन्वनां धान्विनाञ्च ज्याविरहः कृतः - धनु र्वंशो - राजवंश श्च छिन्नः स्वचक्रं परचक्रञ्च गृहीत मिति सिद्धत्वात्। धन्वज्याभेदादिक्रियायौगपद्यप्रतीत्या समुच्चयालङ्कार इति रत्नावळीकाराः। अत्र समुच्चयालङ्कारो न- वाच्यः; किन्तु ध्वनित एवेति मन्मनीषा॥ ५४

श्लो ॥ भानुं खण्डित मारचय्य, विविधै रायोधनै मायिना
तेजोभानु रखण्डितो विरचित स्त्वस्यैव कंसारिणा
स्वस्यावर्ध्यत राजमण्डलमपि च्छित्वा यशश्चन्द्रमा
इत्थं स्वार्थपरः कथं स जगतां हेतु र्हिते गीयते॥ ५५

भानु मिति— मायिना महेश्वरेण 'मायिनन्तु महेश्वर मिति' श्रुतेः - कपट शालिनेति च— कंसारिणा कृष्णेन, विविधै र्नानाविधै, रायोधनैः युद्धैः, भानुं सूर्यं, खण्डितं विदारितं, आरचय्य कृत्वा, युद्धहतपुरुषाणां सूर्यमण्डलभेदनस्मरणा दिति भावः। स्वस्य तेजोभानुः प्रतापरविः, अखण्डितः अविच्छिन्नः, विरचित एव कृतो हि। स्वानर्गळप्रतापभानुत्वं प्रकटीकृत मित्यर्थः। अत्र परगृहं भङ्क्त्वा, तत्काष्ठसञ्चयेन यथा स्वगृहं दृढी कुरुते; तद्व द्भानुं भङ्क्त्वा, तत्तेज श्शकलै स्स्वप्रतापभानुं परिपुपोषे ति ध्वनिः। तथा कंसारिणे त्यत्रा प्यन्वेति। राजमण्डलं शत्रुराजसङ्घं, चन्द्रमण्डल मिति च- च्छित्वा विदारयित्वा, स्वस्य यशश्चन्द्रमा अपि कीर्तिरूपचन्द्र श्च, अवर्ध्यत वृद्धिं प्रापितः। सकलराजविनाशनेन अत्यद्भुतकीर्ति रासी त्कृष्णस्ये ति भावः। अत्रापि चन्द्रमण्डलं छित्वा, तदंशैः स्वकीर्तिचन्द्रं पुपोषे ति ध्वनिः। इत्थं ध्वनितार्थावेव कवि स्स्वय माविष्करोति- इत्थ मिति - इत्थ मेवं, स्वार्थपरः स्वार्थासक्तः, सः कृष्णः, जगतां लोकानां, हिते, हेतुः हितकर इति, कथं गीयते? लोकोपकारीति कुत श्श्रुति- स्मृत्यादिभि रुद्घोष्यते? इत्यर्थः। 'गुणीभूतव्यङ्ग्य मिदं कविनाऽ विष्कृतं यदी'ति तल्लक्षणात्। न च ध्वनि रित्येवास्तु। इत्थं राजवंशभेदनद्वारा स्वकीर्तिप्रतापपरितोषणशीलत्वा

स्वार्थपरः कृष्णः, कथं लोकोपकारी भवे ? न्न कथम पीत्यर्थवर्णनात्, इति वाच्यम् - भानुं खण्डित मारचय्येति प्रथम वाक्येन राजच्छेदनस्य कण्ठतो प्रतिपादितत्वा दिति बोध्यम्। 'तेजो भानुं, यशश्चन्द्रमा' इति रूपकद्वयम् किञ्च भानुखण्डै स्तेजोभानुः, चन्द्रखण्डै र्यशश्चन्द्र श्च, वर्धित इत्यसम्भवार्थ वर्णना दतिशयोक्तिद्वयम्। चन्द्रे दृश्यमानोऽयं न कळङ्कः; किन्तु स्वकीययशश्चन्द्रसंवृद्धिकामेन कृष्णेन चन्द्रसारांशे हृते सति सुषिर मेवे त्यपह्नवालङ्कारः प्रतीयते ॥ ५५

**ग ॥ तदनु चैद्यमगधाधिपा वभिधावमानं मधुसूदनं मगधाधिपति रुद्धत मेव मभ्यधात् ॥ ५६**

तदन्विति - तदनु एवं, सामान्यराजन्विनाशनानन्तरं, चैद्यमगधाधिपौ शिशुपाल जरासन्धौ- कर्म, अभिधावमानं अभिमुखं शीघ्रं गच्छन्तं, मारणार्थ मिति भावः। मधुसूदनं कृष्णं प्रति, मगधाधिपति जरासन्धः, उद्धतं सगर्वं, मेवं वक्ष्यमाणरीत्या, अभ्यधा दुवाच। उपसर्गवशा दर्थान्तरे प्रयोगः ॥ ५६

**श्लो ॥ किं राजसिंहस्य ममाग्रतोऽस्य हरे तवैत् प्लवनं चकास्तु**
**न मक्षिकाभ्यः किमु वालहस्त सञ्चालनं स्वावयवावनाय ॥ ५७**

किमिति - हे हरे ! कृष्ण ! कपे! इति च, 'शुकाहिकपिभेकेषु हरि र्ना' त्यमरः। राजसिंहस्य राजश्रेष्ठस्येत्यर्थः। राजा चासौ सिंह श्च राजसिंहः सिंहश्श्रेष्ठः तस्ये ति च- यद्वा राजैव सिंह इतिरूपकं वा, तस्य अस्य अतिशूरस्येत्यर्थः। मम अग्रतः पुरतः, एतत् तव प्लवनं लङ्घनं, चकास्तु भासतु किम् ? न चकासे देवे त्यर्थः। सिंहस्याग्रे कपे रिव मदग्रे तव प्लवनं न शोभावह मिति भावः। अत्र श्लेषोज्जीवितोपमालङ्कारः। पक्षे तु रूपकालङ्कार एव। न च हरे! इत्य त्रास्त्येव श्लेष इति वाच्यम्; हरिः कृष्ण इति, हरिः कपि रिति, श्लिष्टरूपकेणैव तन्निर्वाहादिति। वालहस्तसञ्चालनं पुच्छप्रेरणं, कपे रित्यर्थः। 'पुच्छोऽस्त्री- लोमलांगूले वालहस्तश्च वालधि' रित्यमरः। मक्षिकाभ्यः क्षुद्रजन्तुभ्य स्सकाशात्, स्वावयवाव- नाय स्वाङ्गरक्षणाय, मक्षिकाभि र्दश्यमान मङ्गं रक्षितु मित्यर्थः। न किमु ? न स्यात्किम् ? तदर्धमे वे त्यर्थः मदवासनया कप्यङ्गं बहुधा दशन्ति मक्षिका इति प्रसिद्धं। तादृशमक्षिका निवारणमात्रोपयोगि भवति तदीय वालचालनं; न तु सिंहनिर्यापक मित्यर्थः। प्रकृतार्थस्तु — तवेदं वालहस्तसञ्चालनं वबयोरभेदात् बालहस्तचालनं, मक्षिकाभ्यः विषय निगरणेन तत्तुल्यपूतनाबककेश्यादिभ्य स्सकाशात्, स्वावयवावनाय न किमु ? किन्तु तदर्धमे वेत्यर्थः। न त्वस्मादृशेभ्य स्वावयवावनाय बालस्य तवेदं करचालनं क्षमते इति भावः। श्लेषालङ्कारः। वालहस्ते ति श्लेषस्या विवक्षणेतु अप्रस्तुतप्रशंसालङ्कारः ॥ ५७

ग ॥ एवं सपरिवादवीरवाद मेन मतिरोषणो भगवा नवादीत् ॥ ५८

एव मिति—एव मुक्तविधया, सपरिवादवीरवादं सोपहासवीरालापं, एनं मागध मुद्दिश्य, अतिरोषणः अतिकुपितः, स्वारोपितकपित्वश्रवणादिति भावः। भगवान् कृष्णः, अवादी दुवाच ॥ ५८

श्लो ॥ निर्भिन्न शतश श्शतै स्तव वपु र्बाणै र्मदीयैः पुन
स्सन्धास्य त्यचिरा ज्जरेति कुमते! मैनां दुराशां कृथाः
नो कौमार्यपि पालनं तव पराशक्ति र्विधातुं क्षमा
प्राणस्स्या त्तृणतावलम्बिनि भवत्या कृष्णवर्त्माश्रयात् ॥ ५९

निर्भिन्न मिति– हेकुमते! दुर्बुद्धे! मदीयै र्मामकै, श्शतै रमितै, बाणै श्शरैः, शतशो बहुधा, निर्भिन्न विदारितं, तव वपु श्शरीरं, पुन र्भूयः, अचिरा द्द्रुतं, जरा तन्नाम्नी पिशाची, वार्धकावस्था च, सन्धास्यति सङ्घटयिष्यती ति, एनां दुराशां व्यर्थाभिलाषं, माकृथाः माकुरु। जरासन्धः किल जन्मकाले द्विधाभूत स्सन्; जरया पिशाच्या संग्रथितः; अत एव 'जरासन्ध' इति तस्य नामा सीदिति। कथात्रानु सन्धेया। द्वेधा छिन्नस्यैव घटने जराया श्शक्तिः; न तु शतधा छिन्नस्येति भावः। यद्वा - मया छिंन्न त्वां जरापि घटयितुं बिभेति; तस्या अपि मत्त श्छेद भयादिति भावः। कौमारी स्कन्दसम्बन्धिनी 'तस्येदमित्यणि-णित्त्वात् ङीप्' - परा उत्कृष्टा शक्ति रायुधविशेषोऽपि, अल्पयौवनबलमपी ति, ध्वन्यते तव मया हन्यमानस्य ते, पालनं रक्षां, विधातुं कर्तुं, नो क्षमा न शक्ता। स्कन्दशक्त्या गुप्तमपि त्वांहन्यामेवे त्यर्थः। यौवन शक्तिरेवत्वांरक्षितुमशक्ता; किमुतजरेति ध्वनिः। तृणतावलम्बिनि धनुर्धारिणि 'धर्मोना तृणता स्त्रिया, 'मस्त्रियां चाप धनुषा' विति वैजयन्ती। भवति त्वयि, आकृष्णवर्त्माश्रयात् आ इति पृथक्पदम्। कृष्णेन सह कलहपर्यन्त मित्यर्थः। एवं हि लोके प्रयुञ्जन्ते; तेन सह कलहं मा कुर्वि त्यर्थे तस्य वर्त्मना न गच्छेदिति। अतएव लोकोक्तिः। यद्वा कृष्णशब्दोऽत्र कृष्णबाणेषु लाक्षणिकः, कृष्णबाणमार्गप्राप्तिपर्यन्त मित्यर्थः, प्राणः हृत्स्थानिलः, स्यात् वर्तेत; कृष्णवर्त्माश्रयणा दनन्तरन्तु नवर्तेतैवे त्यर्थः, अत्र तृणतावलम्बिनि तृणत्वावलम्बिनि तृणे, इत्यर्थः। भवति त्वयि, आकृष्णवर्त्माश्रयात् कृष्णवर्त्मा अग्निः तदाश्रयणपर्यन्तं, प्राणशक्ति स्स्यात्। तृणस्य अग्न्याश्रयणा दनन्तरं भस्मत्वापत्त्या न शक्तिमत्त्व मित्यर्थः। 'हृत्स्थानिलेऽनिले जीवे बले प्राणः प्रकीर्तित' इति रुद्रः। इति ध्वनिः। अनेन च अग्निकल्पस्य मम पुरतः तृणकल्पस्य तव स्थिति रेव न सम्भवतीति वस्तु व्यज्यते ॥ ५९

ग ॥ एव मभिदधानौ मधुसूदनमगधाधिपा वनालक्ष्यशरसन्धानमोक्ष मति-वेलपरस्परजयाकाङ्क्ष ममन्दभुजकौशलं कलहलालसेन तापसेना प्यननुभूतपूर्व माराधितसुरासुरं समरं समरचयताम् ॥ ६०

एवमिति— एव मुक्तरीत्या, अभिदधानौ वदन्तौ, मधुसूदनमगधाधिपौ कृष्णजरासन्धौ, अनालक्ष्यशरसन्धानमोक्षं अनालक्ष्यौ अदृश्यौ शरसन्धानमोक्षौ बाणसन्धानतन्मोचने यस्मिं स्तत्, अतिवेलपरस्परजयाकाङ्क्षम् अतिवेलं भृशं, परस्परस्य अन्योन्यस्य, जयाकाङ्क्षा विजयाभिलाषो यस्मिं स्तत्, यद्यपि जयाकाङ्क्षा मनस्येव वर्तते; न तु युद्धे। तथापि जयाकाङ्क्षाप्रयुक्तवीरालापवत्त्वा देव मुक्त मिति बोध्यम्। अमन्द मतिशयं, भुजकौशलं बाहुचातुरी यस्मिं स्तत्, कलहलालसेन कलहप्रियेन; न तु पुनः कलहभीरुणे ति भावः। यद्वा - न तु ब्रह्मध्यानतत्परेणे ति भावः। तापसेन ऋषिणा, नारदेने त्यर्थः। न तु मन्देनेति भावः। तेनापि अननुभूतपूर्व मदृष्टचरं, आराधित सुरासुरं आराधिताः प्रमोदिता स्सुरासुराः येन तत्, यद्वा सुरा असुराश्च यस्मिं स्तत् सुरासुरं, देवासुरयुद्धमि त्यर्थः। आराधितं अनुगतं सुरासुरं येन तत्, तत्तुल्यमि त्यर्थः। समरं युद्धं समरचयतां चक्रतुः ॥ ६०

**ग ॥ अथ विगतरथं द्रुत मपि हलायुधेन मगधाधिप मपत्रपानमिताननं कार्यगौरवेण करुणयेव मोचयित्वा, मधुरिपु रधिमधुरानगर मगमत् ॥ ६१**

अथेति— अथ युद्धप्रवृद्ध्यनन्तरं, मधुरिपुः कृष्णः, विगतरथं नष्टस्यन्दनं, अपत्रपानमिताननं लज्जया नीचीनमुखं, मगधाधिपं जरासन्धं, द्रुत मपि शीघ्र मेव, विळम्बे मृतिशङ्कयेति भावः। कार्यगौरवेण भविष्यत्कार्यभारेण, तदालोच्ये त्यर्थः। करुणयेव दययेव; न तु वस्तुत स्तथेति भावः। हलायुधेन बलेन प्रयोज्यकर्त्रा, मोचयित्वा त्याजयित्वा, एतेन बलो जरासन्धं भुविपातयित्वा, हन्तु मुद्युक्तोऽभूदिति व्यज्यते। मधुरानगरमधि मधुराम्प्रति, अगमत् ययौ ॥ ६१

**ग ॥ एवं सप्तदशकृत्वः कृत्वा, समरापदान मष्टादशसंग्रामकामे सति मगधाधिपे नारदप्रचोदितो जवनो यवनो मधुरानगर मुपगम्य मधुसूदन माहवा याह्वयत ॥ ६२**

एवमिति— मगधाधिपे एवंरीत्या सप्तदशकृत्वः सप्तदशवारान्, समरापदानं युद्धरूपं शौर्यवृत्तं, कृत्वा विधाय, अष्टादशसङ्ग्रामकामे अष्टादश युद्धाभिलाषिणि सति; नारदप्रचोदितः नारदेन प्रेरितः, जवनः वेगशीलः, यवनः कालयवनः, मधुरानगरं - उपगम्य निरुध्य, मधुसूदनं कृष्णं, आहवाय युद्धार्थं, माह्वयत आकारयामास; भेरीध्वनिनेति शेषः। स्पर्धाया माङ इत्यात्मनेपदम् ॥ ६२

**ग ॥ यदुपति रपि विदितोदन्त स्समुपस्थित मतिविषम मिति सम्मन्त्र्य, मन्त्रिभि स्स्वजनगोपनाय मध्येसमुद्रं विश्वकर्मणा द्वादशयोजनायामं द्वारकाभिधानं पुर मतिरुचिर मचीकरत् ॥ ६३**

यदुपति रिति— विदितोदन्तः ज्ञातवृत्तान्तः, यदुपति रपि कृष्ण श्च, अतिविषम मत्याहितं, समुपस्थितं सम्प्राप्तं; मागधनिरोधसमये एव यवननिरोधस्यापि सम्भवादिति भावः। इत्येवं मन्त्रिभि स्समं सम्मन्त्र्य आलोच्य, स्वजनगोपनाय स्वीय रक्षार्थं, मध्येसमुद्रं समुद्रमध्ये, विश्वकर्मणा देवशिल्पिना, द्वादशयोजनायामः द्वादशयोजनानि आयामो दैर्घ्यं यस्य तत्, अतिरुचिरं अति सुन्दरं, द्वारकाभिधानं द्वारकानामकं, पुर। मचीकरत् कारयामास ॥ ६३

**ग ॥ निधाय च तत्र सलिलदुर्गे निजदायादा न्यादवान् यदुनायक स्स रौहिणेयेन सह संग्राममकामनया नगरा न्निरगात् ॥ ६४**

निधायेति— सः यदुनायकः कृष्णः, सलीलं समुद्रजलं - दुर्गं परिघा यस्य तस्मिन्, तत्र द्वारकायां निजदायादान् स्ववंशीयान् यादवान् वृष्णीन्। निधाय स्थापयित्वा, रौहिणेयेन सह बलरामेण समम्, सङ्ग्रामकामनया युद्धवांछया, नगरा न्निरगात् निर्ययौ ॥ ६४

**ग ॥ आगतं त मेनं नारदोदितरूपधेयसंवादा दरविन्दनाभ मवधार्य यवन स्सोत्कण्ठ मुपकण्ठ मवजगाहे ॥ ६५**

आगतमिति— यवनः कालयवनः, आगतं नगरा न्निर्गतं, तमेनं कृष्णं, नारदोदितरूपधेयसंवादात् नारदोक्तरूपसाम्यात्, 'भागरूपनामभ्यो धेय' इति स्वार्थे धेयः। अरविन्दनाभं कृष्ण, मवधार्य निश्चित्य, सोत्कण्ठं साभिलाष, मुपकण्ठं समीपं, जगाहेच अभजत् ॥ ६५

**ग ॥ भगवानपि चपल मबल इव पलायमान स्तमेन मनुधावमान मनयवेदिन मनय दवनीधरकन्दरान्तर मन्तरधात् ॥ ६६**

भगवानिति— भगवानपि कृष्ण श्च, अबल इव न तु दुर्बल इव, वस्तुतोऽबलत्वं मायिनं इति भावः। चपलं चञ्चलं यथातथा, पलायमानः पलाय कुर्वन्, अनयवेदिनं रक्षणा द्धिया पलायमानं नानुगच्छे दिति न्याय मजानानन्, अतएव - भनुधावमानं अनुसृत्य शीघ्र मागच्छन्तं, त मेनं यवनं, अवनीधरकन्दरान्तरं कस्यचित्पर्वतस्य गुहामध्य, मनयत् प्रापयामास, नयति र्द्विकर्मकः। अन्तरधात् तत्क्षणमेव स्वयं तिरोदधे चे त्यर्थः ॥ ६६

**ग ॥ स एष दुर्मनीष स्तत्र गिरिकन्दरान्तराळे मान्धातृतनय मैक्ष्वाक मसुरसङ्गरसङ्गतश्रमापनयनाय त्रिदशधीशनिदेशत श्शयाळु भवतु भवतो निद्राभङ्गहेतु र्भस्मसादिति समासादितवरं राजर्षिं मुचुकुन्दाभिधानं मुकुन्दधिया सक्रोधं पादघात मवधीत् ॥ ६७**

स इति— दुर्मनीषः दुर्बुद्धिः, स एष यवनः, तत्र गिरिकन्दरान्तराळे पर्वतगुहान्तः, मान्धातृतनयं मान्धातुः पुत्रं, ऐक्ष्वाकम् इक्ष्वाको रपत्यं, 'अपत्यं पौत्रप्रभृतिगोत्र' मितिपरिभाषि-

तत्वा तद्वंशीयेष्व प्यपत्यत्वव्यवहारः । इक्ष्वाकुवंशज मित्यर्थः । 'दाण्डिनायनादित्वात् टिलोपः । असुरैः राक्षसै स्सह, सङ्गरे युद्धे, सङ्गतस्य लब्धस्य, श्रमस्य आयासस्य, अपनयनार्थं निवारणार्थं, त्रिदशाधीशनिदेशतः इन्द्राज्ञावशात्, शयालुं निद्राणं, 'स्पृहि गृहीति सूत्रस्थ रीङोवाच्य इति वार्तिका दालुच्' । भवत स्तव, निद्राभङ्गहेतुः निद्रानाशकर्ता, भस्मसात् भवतु, भस्मीभवतु । 'विभाषासाति कार्त्स्न्ये' इति साति: । इत्येवं आसादितवरं प्राप्तवरं, देवेन्द्रा दिति भावः । मुचुकुन्दाभिधानं मुचुकुन्दनामानं, राजर्षिं राजा चासौ ऋषिश्च तं, राजवंश्यं मुनि मित्यर्थः । मुकुन्दभिया कृष्ण इति भ्रान्त्या, सक्रोधं सरोषं यथातथा, पादघात मवधीत् पादेन जघानेत्यर्थः । करणे हन इति णमुल् ॥ ६७

**ग ॥ सोऽपि समुपजातजागर स्समुत्थाय सर्वासु दिक्षु चक्षु र्विक्षिप न्नक्षिपातेनैव पुरोवर्तिनं भस्मसाद्विधाय, किमिद मस्थाने समुपस्थितमिति चिन्तयन्, पश्चादुपविष्ट मक्षीणमहिमान मधोक्षज मद्राक्षी दस्तौषीच ॥ ६८**

सोऽपीति– मुचुकुन्द श्च समुपजातजागरः प्रबुद्धः, समुत्थाय उत्थितो भूत्वा, सर्वासु दिक्षु दशदिशासु, चक्षु र्दृष्टिं, विक्षिपन् प्रेरयन्, सर्वत्र पश्यन्नित्यर्थः । पुरोवर्तिनं अग्रस्थं, यवन मित्यर्थः । अक्षिपातेनैव विलोकनेनैव, भस्मसाद्विधाय भस्मीकृत्वा, अस्थाने अयोग्यस्थाने, समुपस्थितं सम्प्राप्त मिदं पुरुषदहनं, किमिति चिन्तयन् विचारयन्, पश्चा त्ततः, उपविष्टं निषण्ण मिति वा, अक्षीणमहिमानं अखण्डितानुभावं, अधोक्षजं कृष्णं, मद्राक्षीत् अपश्यत्, अस्तौषी च स्तुतिं चक्रे ॥ ६८

तथाहि– मुचुकुन्दकृतमुकुन्दस्तुतिमेव प्रतिपादयती त्यर्थः ।
अथ पञ्चभि श्श्लोकै स्स्तौति - गुणानित्यादिभिः ॥

**श्लो ॥ गुणा नारोप्य त्वय्यनिश मसत स्तोतृषु कृपा**
**न लोकेऽन्य न्मत्तः परतरमिति स्वस्तुति रपि**
**वच स्सर्वं मिथ्या तव भवति दूरं परिचया**
**द्यशोराशि श्चित्रं तदपि निरहङ्कार इति ते ॥** ६९

गुणानिति– त्वयि ब्रह्मणि, अनिशं कालत्रयेऽपि, असतः अविद्यमानान्, अपरमार्थभूतानित्यर्थः । गुणान् सत्यकामत्वादीन् आरोप्य कल्पयित्वा, स्तोतृषु स्तुतिं कुर्वाणेषु, कृपा दया, तव अस्तीति शेषः 'तेषां नित्याभियुक्तानां योगक्षेमं वहा म्यहमि'ति गीतावचनादिति भावः 'अनेन त्व मिन्द्र स्त्वं चन्द्र, इत्या द्यत्यन्तासम्भावितेषु वाचाटचाटुवादे ष्वनुरज्यसे' इति निन्दा च व्यज्यते । लोके भुवने, मत्तः 'पञ्चम्यास्तसिः' - मदित्यर्थः । परतर मुत्कृष्टं, अन्यत् इतरत्,

वस्तु पदार्थः, नास्ति न विद्यते । इति स्वस्तुतिः, स्वस्वरूपकथन मपि; अस्तीति शेषः । अह मखिलोत्कृष्टः, मदुपासनयैव कैवल्यं; नतु क्षुद्रदेवतोपासनयेति, हित मुपदिशसी त्यर्थः 'मत्तः परतरं नान्य त्किञ्चि दस्ति धनञ्जये' ति वचना दिति भावः । अनेन च आत्मश्लाघारूपं विकत्थनं व्यज्यते । तव सर्वं वचः अनन्तवेदरूपं समस्तवाक्यं, जात्येकवचनम् । सर्वाण्यपि वचंसीत्यर्थः । दूरं चिरं, परिचयात् निदिध्यासना, दि त्यर्थः । मिथ्या भवति मृषा भवति । तस्यापि जगदन्तःपातित्वादिति भावः । 'ज्ञानेन ज्ञेय मालोच्य पश्चात् ज्ञानं च सन्त्यजे दि'ति वचनात् । अनेन च नवीनानां सत्यवादी व प्रतीयसे; परिचयेन तु मृषा भाषीति निश्चीयसे, इति निन्दा च व्यज्यते । तदपि दुष्कीर्तिकारणे सत्यपी त्यर्थः । ते निरहङ्कारः अहङ्काररहितः, मायाऽवश्यत्वा दिति भावः । इति यशोराशि अमितं यशः; न तु यत्किय-दित्यर्थः- अस्तीतिशेषः । चित्रं अद्भुतम् । 'पुण्यैर्यशो लभ्यते' इति न्यायादितिभावः । अत्र दुष्कीर्तिकारिणेभ्य स्स्वस्तुत्यादिभ्यः तद्विरुद्धसुकीर्त्युदयवर्णना द्विषमालङ्कारः । 'विरूपकार्यस्योत्पत्ति रपरं विषमं मत' मितिलक्षणात् । स्वस्वरूपप्रकाशादीनां दयालुत्वप्रख्यापकानां गुणानां दोषीकरणात् लेशालङ्कार श्च ॥ ६९

श्लो ॥ इयं त्वा माक्रम्य प्रथयतु भिदाबुद्धि मसती
सजातीयान् जीवान् रचयतु भवद्वेश्मविमुखान्
भवानास्ते नो वेत्त्यपि विशय मुत्पादयति यं
प्रिया मायास्माकं तमपहर लाभोऽय ममितः ॥ ७०

इयमिति– इय मेषा, असती मिथ्याभूता, तव प्रिया प्रेयसी, त्वदनपायिनी माया-प्रकृतिः त्वामाक्रम्य आवृत्य, भिदाबुद्धिं द्वैतबुद्धिं, प्रथयतु जनयतु; एकमपि ब्रह्म मायावशेन बहुधा जगदाकारेण प्रतीयमानत्वा दिति भावः । सजातीयान् चेतनत्वेन ब्रह्मसजातीयान्, जीवान् भवद्वेश्मविमुखान् त्वत्पदविमुखान्, मोक्षदूरानित्यर्थः । रचयतु करोतु 'नहिज्ञानपदं दुःख मेक श्शोचितु मर्हती'ति न्याया देतद् द्वयं नैव शोचनीयमिति भावः । तर्हि किं ? शोचनीय मत आह- भवा न्परमेश्वर स्त्व, मास्ते विद्यते, नो वा न विद्यते । इति यं विशयं सन्देह, मुत्पादयति जनयति, संशयाभावे 'क्षित्यादिकं सकर्तृकं कार्यत्वा द्घटवदि त्यनुमानं नावतरे दिति भावः । तं संशय मपहर नाशय । अयमेव अमितोऽत्यन्तः; लाभः भवतीति शेषः । जगदीश्वरोऽस्तीति निश्चयमात्रेणापि पापनिवृत्तिसद्भावादिति भावः । यथोक्तं पञ्चदश्यां 'परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकं बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निव' दिति । मायायाः त्वदधीनत्वा दस्मा स्वस्याः पराक्रमं ताव द्दर्शयेति निष्कृष्टार्थः । व्यङ्ग्यार्थ स्तु- इय मसती दुष्टा, तवप्रिया प्रेयसी, माया 'माये'ति तस्या नाम, त्वा माक्रम्य वशीकृत्या, भिदा-बुद्धिं विभागेच्छां, प्रथयतु एतै स्सह न स्थेयं; आवाभ्यां पृथगेव स्थातव्यमिति बोधयत्वि त्यर्थः ।

सजातीयान् जीवान् सुहृद इत्यर्थः । भवद्वेश्मविमुखान् त्वद्गृह पराङ्मुखान् रचयतु । रेरे जाल्माः! कुतो मयि दृष्टिं विक्षिपथे त्येवं तर्जनभर्त्सनादिभि रुच्चाटाय त्वित्यर्थः । सजातीयानामेव एव मवस्थायां; विजतीयानां पुनः का? कथेति भावः । भवानास्ते, नोवे, त्यपि' यं विशय मुत्पादयति इत रै गृहस्य दुष्प्रवेशत्वेन तद्वशस्य तव बहिरागमनाभावेन च हेतुना किमियं क्रूरा; पतिमपि जघानेति संशयमुत्पादयती त्यर्थः । तं संशयमपहर तदाज्ञया नगरदर्शनव्याजेन वा कदाचि द्बहि रागत्य जीवा म्यहमिति ज्ञापये त्यर्थः । अय ममितो लाभः; उच्चाटनेन ताव दस्माकं न हानिः 'आहार स्सर्वजन्तूनां जन्मना सह जायते' इतिन्यायेन येन केनाप्युपायेन यत्र कुत्रापि वा जीवनसम्भवात् । ईदृशहस्तगतस्य तव जीवनमेव त्वत्सुहृदां त्वत्सोदराणां च अस्माकं महान् लाभः इत्यर्थः ॥ ७०

**श्लो ॥ बद्ध्वा सुष्ठुगुणै स्त्रिभि स्तनुभृतः पश्चान्मिळद्वेदनान्**
**दीनं पालय पाहि मामिति मुहु र्मुक्त्याशया क्रोशतः**
**मुक्तान् जीवत एव यद्वितनुषे लाभ स्सएवामृते**
**यद्दुर्गे पुनरेव पातयसि ता नन्ते न शोकाय तत् ॥** ७१

बध्द्वेति— तनुभृत श्शरीरिणः, सुष्टु दृढं, त्रिभि र्गुणै स्सत्वादिभिः, बद्ध्वा परवशीकृत्य, पश्चात् सांसारिकदुःखकृतनिर्वेदनानन्तरं, मिळद्वेदनान् मिळत् सम्भवत् वेदनं सर्वदा परमेश्वर एव शरणीकरणीय इत्येवंरूपं ज्ञानं - येषान्तान्, अत एव - दीनं कृपणं मां, पालय पाहि, रक्ष रक्ष सम्भ्रमा देकार्थकधातुद्वयप्रयोगः । इत्येवं, मुक्त्याशया मोक्षवाञ्छया, मुहुः अतिशयेन, क्रोशतः स्तुवतः तान् तनुभृतः, जीवतएव प्राणधारिण एव, मुक्ता न्वितनुषे करोषि, जीवन्मुक्तिं ददासी त्यर्थः । इति यत् स एव लाभः -विधेयप्राधान्यात्पुंस्त्वम् । परमानन्दाविर्भावा ज्जीवन्मुक्ति-रेव लाभ इत्यर्थः । अन्ते देहनाशानन्तरं, दुर्गे दुर्लभे, अमृते मोक्षे पुन र्भूयः, जीवन्मुक्त्य-पेक्षया पुनरित्युक्तं, पातयसीति यत्; क्षिपसीति यत्; मुक्तिं ददासीति यदित्यर्थः; तत्, मुक्तिदानं न शोकाय - तत्र्थकोऽयं नशब्दः - अत्यन्ताभावार्थः । नशोकः शोकात्यत्यन्ताभावः । तस्मै भवतीति शेषः । जीवन्मुक्तिदशायां क्षुत्पिपासादिदुःखलेशानुवृत्ति रस्ति; विदेहकैवल्ये तु दुःखस्यात्यन्तिकनिवृत्ति र्भवतीति महानयं लाभ इति भावः । व्यङ्ग्यार्थस्तु तनुभृतः सुष्टु त्रिभि र्गुणैः रज्जुभि र्बध्द्वा, पश्चान्मिळद्वेदनान् दृढबन्धेनोत्पन्नव्यथान्, अत एव दीनं माम्पालय पाहीति मुक्त्याशया बन्धविमोक्षवाञ्छया, क्रोशतः उच्चै र्विलपतः, तान् जीवत एव मुक्तान् वितनुषे इति य; स्स एव लाभः- मरणात्प्राग्जीवदशायां मोचनं लाभ एवेत्यर्थः । अन्ते मोचनानन्तरं, दुर्गे अगाधे, अमृते जले, समुद्रादावित्यर्थः । पातयसी ति यत्तदपि शोकाय न भवति; सद्यो मरणादिति भावः ॥ ७१

श्लो ॥ कल्याणं त्व मनन्त मात्मवशयन् कोशा नसारा न्ददं
स्त्वं चापातमनोरमान् व्यभजथा जीवान्यतो मोहयन्
त त्ते मायिन माकलय्य, सुचिरा त्त्वा मैक्यकामा स्पुनः
खिद्यन्तेऽनशनादिभि श्श्रुतिहितै र्न्यायैश्च केयं कला ? ॥ ७२

कल्याण मिति– यतो यस्मात् कारणात् , त्वं अनन्त ममितं, कल्याणं शुभं, चिदानन्दलक्षण, मात्मवशयन् स्ववशं कुर्वन् , अविद्यानावृतत्वादिति भावः। जीवेभ्यः इति शेषः । असारान् विण्मूत्रादिदूषितत्वेन अश्लाध्यान्, आपातमनोरमान् मनोहरवदवभासमानान्, 'कनकलतिका वा किमबले' त्यादि काव्यादिति भावः। कोशान् अन्नमयादीन् पञ्चकोशान् ; देहादीनां तत्त्वावरकत्वसाम्या त्कोशत्वेन व्यवहारः । ददत् प्रयच्छन्, 'नाभ्यस्ता च्छतु' रिति नु निषेधः । अत एव मोहयन् मोहं जनयन्, जीवान् व्यभजथाः विभक्तानकुथाः, त्वमेव जीवरूपेण विभक्तोभू रित्यर्थः । आवरणविक्षेपशक्तिभेदेन एकमेव ब्रह्म जीवेश्वररूपेण द्वेधा विभक्तं सन् , एकं सर्वज्ञं सच्चिदानन्दादिसकलकल्याणगुण निलयं स; च त्वमतिभाति; स त्वमेव यत्त्वन्यत् किञ्चित् ज्ञ दुःखित्वाद्यकल्याणनिलयं; तत्पुन स्स्वावरककोशभेदेन बहुविधा वय मिति भावः । एतेन 'कोशान्ददत् व्यभजथा' इत्यनेन अमीषां उपाधिवशादेव भेदो न तु वस्तुत इति सिद्धम् । तस्मात् यस्मा त्त्वमेवं जीवान् व्यभजथा स्तस्मा त्कारणा दित्यर्थः । ते जीवाः सुचिरा दनेकजन्मभिः अनन्तभवसञ्चितानन्तसुकृतपरिपाकवशेनेत्यर्थः, मायिनं महेश्वरं, त्वा माकलय्य आपाततो ज्ञात्वा, आङोऽत्र ईषदर्थबोधकत्वात्- पुनः स्वतोऽभिन्नानामेव मध्ये उपाधिवशा द्भेदमाप्त्या पुन रित्युक्तम् । ऐक्यकामाः त्वया सह सायुज्य मभिलषन्तः सन्तः, अनशनादिभिः उपवासादिभिः आदिशब्देन 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसे' ति श्रुतिगतयज्ञादिसंग्रहः– श्रुतिहितैः वेदसंवादिभिः न्यायैः युक्तिभि श्च; न तु दुस्तर्कै रित्यर्थः । 'दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयता' मिति भगवत्पादवचनात् । खिद्यन्ते क्लिश्यन्ति। इयं कला विद्या, का ? अत्यद्भुते त्यर्थः । यया स्वय मभ्रान्तः परान् भ्रामयसीति भावः । व्यङ्ग्यार्थे स्तु– यतः त्वं अनन्तं कल्याणं सुवर्णं 'कल्याणं मङ्गळे स्वर्णे' इति भास्करः। आत्मवशय न्नपहरन् , असारा नन्तस्सारहितान्। सुवर्णस्य सर्वस्यापि त्वयैवापहृतत्वादिति भावः । आपातमनोरमान् पेटिकादिबहुळतया निस्सीमद्रविणगर्भत्वेन परिदृश्यमाना नित्यर्थः ! कोशान् धनगृहाणि, ददत् अत एव मोहयन् , जीवान् भ्रातृजीवानित्यर्थः । व्यभजथाः; त त्तस्मात् ते भ्रातृजीवाः, सुचिरात् त्वां मायिनं वञ्चक, माकलय्य ज्ञात्वा, ऐक्यकामा स्संसृष्टिकामा स्सन्तः अनन्तकल्याणभागलाभार्थ मिति भावः । अनशनादिभिः आदिशब्देन निरोधदारिद्र्यप्रकटनरोदनादयो गृह्यन्ते । श्रुतिसुखैः श्रोत्रसुखैः श्रोतॄणा मुपपन्नतया प्रतीयमानै रित्यर्थः । न्यायै रिति यावत् । खिद्यन्ते, केयं कलाः कि मिदं चातुर्यमित्यर्थः ॥ ७२

श्लो ॥ सन्त स्त्वां हृदये त्रिविक्रम इति ज्ञात्वापि किं कुर्वते
यद्वा नून मविद्यया किमु हितं विस्मारितस्वात्मनाम्
प्रा गाक्रम्य हृदेव तत्र च वशे सर्वं तदात्मा नम
प्यात्मन्येव निपात्य तेषु यदहो! नामाकृती लुम्पसि ॥ ७३

सन्त इति– सन्तः विबुधाः, त्वां त्रिविक्रम इति त्रिविक्रमावतार इति, ज्ञात्वापि, यत्किञ्चिदवकाशप्रदाने भिक्षुपादप्रसारणन्यायेन सर्वाक्रमणशील इति ज्ञात्वापी त्यर्थः। वामनीभूय बलिं पादत्रयं याचित्वा, लब्धदान स्त्रिविक्रमो भूत्वा तत्सर्वस्वापहारस्य त्वया कृतत्वा दिति भावः। किं किमिर्थं, हृदये मनसि, कुर्वते स्थापयन्ति 'अङ्गुष्ठमात्रः पुरुष' इति श्रुत्या अङ्गुष्ठमात्तं त्वाम्मत्वा त्रिविक्रममपि त्वविचार्य ध्यानार्थं स्थापयन्ती त्यर्थः। युक्तं चैत दित्याह। यद्वा- अथवा अविद्यया अज्ञानेन विस्मारितस्वात्मनां आवृतस्वरूपाणां किमु हितं? त्वच्चरण-ध्याना दन्य त्किं वा हितमि त्यर्थः। अन्यत्र अविद्यया विस्मारितस्वात्मनां मत्तानां किमु हितं? हिताहितज्ञानं मत्तानां कुतः? इत्यर्थः। नूनं ध्रुवम्। तस्येदं कर्मणः फलमित्याह– प्राक् प्रथमं, हृदेव मनः एव, आक्रम्य, ध्यानबला न्मनः परमेश्वरैकतानं भवतीति परमार्थः। हृदयरूप मवकाशं कञ्चित्काले तिष्ठेति दत्त मपि स्ववशीकृत्येति व्यज्यते। तत्र हृदि वशे आधीने च सति; सर्व मशेषं, तदात्मानमपि तं जीव मपि, स्वस्मिन्नेव ब्रह्मण्येव, निपात्य पात यित्वा, स्वसायुज्यं दत्वे त्यर्थः। स्वरूपमेवा पहृत्ये ति च व्यज्यते। तेषु जीवेषु, नामाकृती नामरूपे, लुम्पसि नाशयसि। 'तथा विद्वा न्नामरूपाद्विमुक्तः परात्परं पुरुष मुपैति दिव्य'-मिति श्रुते रिति भावः। यथा नामापि नश्रूयते; तथा समूल मुन्मूलयामासिथे ति च व्यज्यते। यद्वा सन्तः त्वां त्रिविक्रम इति सर्वव्यापीति, ज्ञात्वापि हृदये किं कुर्वते 'यत्सर्वभूतदयया सदलभ्ययैको नानाजनेष्ववहित स्सुहृदन्तरात्मा' इति स्मृत्या 'सर्वं खल्विदंब्रह्मे' ति श्रुत्या च सर्वभूतेषु त्वद्बुध्या पूजितव्येषु सत्सु मनस्येव त्वा मारोप्य कुतो ध्यायन्ती त्यर्थः। 'दहर-मुपासते य ऋषि वर्त्मसु कूर्पदृश' इति श्रुतिगीतया 'अङ्गुष्ठमात्रः पुरुष' इति श्रुति मनुसृत्य दहरोपासकानां स्थूलदृष्टित्वस्य प्रतिपादितत्वा द्विदुषां नेद मेकान्तसाधन मिति भावः। उपासकाना मादौ युक्त मेवेद मित्याह - यद्वेति - अविद्यावृतस्वरूपाणा मत एव भिन्नबुद्धीनां सर्वत्र समदृष्टे रादौ दुर्लभत्वा द्धृदि कल्पितभवच्चरणारविन्दध्यानं तेषां युक्त मेवे त्यर्थः। यथा ज्ञानमार्गेण भगवत्प्राप्ति स्तथानेन भक्तिमार्गेणा पि भवत्येव; किन्त्वत्र मार्जार किशोर न्यायेन सौलभ्यमपीत्याह - प्रागित्यादि– ये भगवन्तं हृदा ध्यायन्ति तेषां हृदये भगवान् स्वयमेव आविर्भूय, स्वदिव्यविग्रहस्य परमानन्दरसमयत्वेन तादृशस्वरूप द्रष्टॄणां तेषां प्रापञ्चिकपदार्थविषयवैरस्यं जनयित्वा, क्रमेण तदपि मनो विलाप्य, तान् मुक्तान् करोषीत्यर्थः। भागवते कपिलदेवहूतिसंवादे स्फुटोऽय मर्थः। विस्तरभिया ते श्लोकाः अत्र न प्रपञ्चिताः। व्यङ्ग्यार्थो व्याख्यात एव ॥ ७३

श्लो ॥ अपाणि र्गृह्णासि त्वरित मपदो धावसि विदृ
ङ्ङप्रपश्य स्त्वश्रोत्र श्श्रवणपटु रालोकनपरः
तव प्राचः प्रत्यग्दृगिति कथ मेत त्कि मथवा
भ्रमन्ति ब्रह्माद्या अपि न विदिता स्तत्त्वपदवीम् ॥ ७४

अपाणि रिति– त्वं अपाणिः पाणिरहित स्सन् ; गृह्णासि स्वीकरोषि, अपदः चरणरहित स्सन् ; त्वरितं द्रुतं, धावसि गच्छसि। विदृक् नेत्ररहित स्सन् ; प्रपश्यसि सर्वं पश्यसि। अश्रोत्रः श्रवणरहित स्सन् ; श्रवणपटुः श्रवणसमर्थो; भवसीति शेषः। शृणोषीत्यर्थः। 'अपाणिपादो जवनो गृहीता पश्यत्यचक्षु स्सशृणो त्यकर्ण' इति श्रुते रिति भावः। वस्तुतोऽनिन्द्रियस्यापि तत्तदिन्द्रियसम्बन्धा त्तत्तद्विषयग्रहण मात्मनो भवति, इति गूढाभिप्रायः। प्राचः पुराणस्य तव आलोकनपरः द्रष्टा, प्रत्यग्दृक् ज्ञानचक्षु र्भवतीति शेषः। यस्त्वन्तर्मुख स्स एव त्वां पश्यति; न तु बहिर्विषयासक्त इत्यर्थः। प्राचः पूर्वदिक्स्थस्य तव, आलोकनपरः प्रत्यग्दृक् पश्चिमदिग्द्रष्टा, भवतीति विरोधो व्यज्यते। पूर्वाभिमुख एव पूर्वदिग्भवं वस्तु पश्यति; नतु पश्चिमाभिमुख इति प्रत्यक्षत्वादिति भावः। ध्वनितमेव विरोधं स्फुटयति - एत त्कथमिति - कथं? वै तत्सङ्गच्छेते त्यर्थः अस्य ध्वनेः कविना स्फुटितत्त्वादेव गुणी भूतत्वं; तेन विरोधाभासालङ्कारः। अथवा - यद्वा ब्रह्माद्या अपि ब्रह्मेन्द्रादयोऽपि, नविदिताः अज्ञा स्सन्तः, - विदेः कर्तरि क्तः - नञर्थकेन नशब्देन सह समासः। तत्त्वपदवीं ब्रह्ममार्ग मित्यर्थः 'कालाध्वनो रित्यत्यन्तसंयोगे' द्वितीया। भ्रमन्ति मुह्यन्ति किम्? तत्त्वस्य दुरवगाहत्वादितिभावः। त्वद्याथार्थ्यं न केऽपि विदु रिति परमार्थः। मायिन स्तव अघटितघटकत्वा त्त्वं प्राग्द्रष्टार मपि प्रत्यग्दृष्टिं कुर्या एवे त्यन्योभावः। ७४

ग ॥ एवं तार माशंसितारं मुचुकुन्दं मुकुन्द स्सानन्द मभिनन्द्य, सन्दाय च वरं प्रत्यावर्तत मधुरा मधरीणसकलरिपुः ॥ ७५

एवमिति– एव मुक्तरीत्या, तार मत्यन्तं, आशंसितारं स्तुवन्तं, मुचुकुन्दं - सानन्दं समोदं यथातथा, अभिनन्द्य श्लाघयित्वा, वरं जन्मान्तरे तव मत्सायुज्यं भूया दित्येवंरूपं, सन्दाय तस्मै दत्वा, अधरीणसकलरिपुः तिरस्कृतसर्वशत्रुः, मुकुन्दः कृष्णः, मधुरां नगरीं, प्रत्यावर्तत प्रत्याजगाम ॥ ७५

ग ॥ अथ मुचुकुन्दः कन्दरोदरा न्निस्सरन् प्रतिपद्य गन्धमादनं नरनारायणा श्रये बदर्याश्रमे सपर्या ममर्यादां मुररिपो रकरोत् ॥ ७६

अथेति– अथ श्रीकृष्णनिर्गमनानन्तरं, श्री कृष्णनिदेशानन्तर मिति वा, मुचुकुन्दः कन्दरोदरात् गुहान्तराळात् सकाशात्, निस्सरन् निर्गच्छन्, निर्गम्ये त्यर्थः। गन्ध मादनं

पर्वतं, प्रतिपद्य प्राप्य, नरनारायणाश्रये नरनारायणयो रावासभूते, बदर्याश्रमे, मुररिपो विष्णोः, अमर्यादां उद्वेलां, सपर्यां पूजां, मकरोत् चकार। तदाश्रमभूषणं नारायणं बहुधा अपूजयदित्यर्थः ॥ ७६

**ग ॥ भगवति च यवनानुयायिन स्तुच्छान् म्लेच्छा नुच्छिद्य तदीय मखिल मपि द्रविणं द्वारकां नयति सति सन्निधाय मागधो विधाय मकरव्यूहं मुरवैरिण स्सरणि मरुणत् ॥ ७७**

भगवतीति– भगवति श्रीकृष्णे च, यवनानुयायिनः यवनानुसारिणः, तुच्छान् क्षुद्रान्, म्लेच्छान् जात्यन्तरीयान्, उच्छिद्य हत्वा, तदीयं यवनसम्बन्धि, अखिलं सर्वमपि, द्रविणं धनं, द्वारकां स्वपुरीं, नयति प्रापयति सति; मागधो मगधानां राजा- 'जनपदशब्दादित्यञ्- तस्य राजन्य पत्यवदिति वार्तिकात्' - जरासन्ध इत्यर्थः। मकरव्यूहं मकराकारो व्यूहः सैन्यविन्यासवैखरीविशेषः मकरव्यूहः तं, 'व्यूहो ना बलविन्यासनिर्माणनिकुरुम्बयो' रिति रुद्रः। विधाय रचयित्वा, मुरवैरिणः कृष्णस्य, सरणिं मार्गं, मरुणत् रुरोध ॥ ७७

**ग ॥ विधाय च विविध मायोधन माक्रम्य च जातरूपजात मुपजातप्रीति रभिप्रेत्य समर मरविन्दनयनपरिसर मसरत् ॥ ७८**

विधायेति– विविधं शस्त्राशस्त्र्यादिबहुविधं आयोधनं युद्धं, विधाय कृत्वा च, जातरूपजातं स्वर्णसन्दोहं,माक्रम्य हृत्वा च,उपजातप्रीतिः सञ्जातानन्दः मागध इत्यस्य अत्राप्यन्वयः। समर मभिप्रेत्य युद्ध मभिलष्य, अरविन्दनयनपरिसरं कृष्णप्रान्तदेशं, मसरत् ययौ ॥ ७८

**ग ॥ भगवानपि तदीयसंरम्भ मसहमान इव सहबलेन चपलं पलायमानः पवमानवेगः करवीरपुरे नीत्वा निशीथिनी मुदयति मयूखमालिनि गोमन्तनामानं सानुमन्त मारुरोह ॥ ७९**

भगवानिति– भगवानपि श्रीकृष्ण श्च, तदीयसंरम्भं मागधाडम्बरं, असहमान इव सोढु मसमर्थ इव; न तु वस्तुतो भगवतः एवंविधत्वमिति भावः। बलेन रामेण सह, चपलं द्रुतं, पलायमानः अपगच्छन् सन्, अत एव पवमानवेगः वायुत्वरः, वायुव दतिजवनो भूत्वे त्यर्थः। करवीरपुरे करवीराभिधे पत्तने, निशीथिनीं रात्रिं, नीत्वा गमयित्वा, निशाया न्तत्र निवसित्वे त्यर्थः। मयूखमालिनि सूर्ये, उदयति आविर्भवति सति; गोमन्तनामानं गोमन्ताख्यं, सानुमन्तं पर्वतं, मारुरोह आरोहति स्म। मागधग्रहणभियेनेति भावः ॥ ७९

ग ॥ तत्र च प्रवर्षणाभिधानं गिरिशिखर मारूढौ फलमूलाशिनौ वसुदेव नन्दनौ जिघ्रक्षु र्मागध स्सपरिवारः परिववार च शिखरिण मारुह्यच निलीना वेता वलभमानः सकल मचल मनलसा दचकलत् ॥ ८०

तत्रेति– तत्र च पर्वते, प्रवर्षणाभिधानं प्रवर्षणनामकं, गिरिशिखरं पर्वतशृङ्गं, मारूढौ अधिष्ठितवतौ, गोमन्तपर्वतस्य प्रवर्षणाभिधः कूटः कश्चनास्ति, तमारूढावित्यर्थः। फलमूलाशिनौ फलानि मूलानि कन्दानि च अश्नति इति तथोक्तौ, वसुदेवनन्दनौ रामकृष्णौ, कर्म - जिघ्रक्षुः गृहीतुमिच्छुः; अतएव सपरिवारः सपरिजनः मागधः, शिखरिणं गोमन्तपर्वतं, परिववार रुरोध च, 'आरुह्य च शिखरिण' मिति पद मत्रा प्यन्वेति। निलीनौ पर्वतकन्दरे क्वापि गूढचारिणौ, एतौ रामकृष्णौ, अलभमानः अपश्यन्, सकलं सर्वं, मचलं पर्वतं, अनलसात् अग्न्यधीनम् - तदधीनवचने इति सातिः। अचकलत् अकरोत्। पर्वते दग्धे सति; एतौ दग्धौ भवेता मित्याशयेनेति भावः ॥ ८०

ग ॥ यदुनन्दनौ च विहाय हुतवहपरीतं गोमतं सचमत्कार मुत्पत्य समतीत्य च दश योजनानि सहसा सह साहसेन सर्वंसहा मावसताम् ॥ ८१

यदुनन्दनाविति– यदुनन्दनौ रामकृष्णौ - च, हुतवहपरीतं अग्निवेष्टितं, गोमन्तं पर्वतं, विहाय त्यक्त्वा, सचमत्कारं सलील, मुत्पत्य उड्डीय, साहसेन सह साहस मालम्ब्य, सहसा तूर्णं, दशयोजनानि - समतीत्य अतिक्रम्य, च, सर्वंसहां भुवम् आवसताम् अधिष्ठितवन्तौ, प्रापतु रित्यर्थः ॥ ८१

श्लो ॥ आयातां द्वारका मेता वतिसन्धाय मागधम्
सोऽपि हृष्टः पुरीं प्राया न्मुग्धो दग्धाविमा विति ॥ ८२

आयाता मिति– एतौ रामकृष्णौ, मागधं जरासन्धं, मतिसन्धाय प्रतार्य, द्वारकां स्वपुरीं, मायातां प्रापतुः। 'आङ्पूर्वका द्या धातो र्लङ स्तसिरूप मिदम्''। मुग्धो मूढ, स्सोऽपि मागध श्च, इमौ स्वशत्रू रामकृष्णौ, दग्धौ पर्वतपरीतवह्निना भस्मीकृतौ, इति मत्वेति-शेषः। अतएव हृष्ट स्सन्तुष्ट स्सन्; पुरीं स्वपत्तनं, प्राया त्प्राप ॥ ८२

ग ॥ अनन्तर मानर्ताधिपो रैवत श्चतुराननियोगा न्निजतनया रेवतीं रौहिणेयाय प्रायच्छत् ॥ ८३

अनन्तर मिति– अनन्तरं रामकृष्णयो र्द्वारकाप्रवेशानन्तरम्, आनर्ताधिपः आनर्तनामकदेशाधीशः, रैवतः - तस्य नामेदं। चतुराननियोगा द्ब्रह्मणः। आज्ञावशात्, निज-तनयां स्वसुतां रेवतीं रौहिणेयाय बलभद्राय, प्रायच्छ ह्ददौ 'दाणो यच्छादेशः' ॥ ८३

श्लो ॥ ता मैतु सन्मार्गगत स्स कन्यकां न रौहिणेयो विधिचोदना त्कथम्
स चित्र मत्रैव निवेशिताशय श्चचाल नोत्तुङ्गगृहाप्तिहर्षितः ८४

तामिति– सन्मार्गगत स्सदाचारः॰ सः रौहिणेयो । बलरामः, विधिचोदनात् ब्रह्म शासनात्, तां कन्यकां कन्यां रेवतीं, कथं कुतो नैतु? न प्राप्नोतु? उद्वह त्वेवे त्यर्थः । चित्रं त्वेत दित्याह - सः रामः॰ अत्रैव रेवत्यामेव॰ निवेशिता शयः दत्तचित्तः, अनुरक्त इत्यर्थः । उत्तुङ्गगृहाप्तिहर्षितः लोकोत्तरदारलाभेन सञ्जातहर्षस्सन् 'गृहाः पत्न्यां गृहे स्मृता' इति विश्वः । नचचाल धर्ममार्गा न्नाचलत्, स्त्र्यन्तरं न परिजग्राहे त्यर्थः । इदं तु चित्र मित्यन्वयः । महाप्रभोः कृष्णाग्रज स्यास्य एकदारत्वं विचित्रमि त्यर्थः । व्यङ्ग्यार्थस्तु - सन्मार्ग-गतः नक्षत्रमार्गसञ्चारी, 'भवान्यां तु सती स्त्री स्या न्नक्षत्रे तु न पुंसक' मित्यमर शेषे । स रौहिणेयो बुधः विधिचोदनात् देवनियोगात्, तां कन्यकां कन्याराशिं॰ स्वार्थे कप्रत्ययः - 'केन इति ह्रस्वः, - अजन्तत्वा ट्टाप्' । कथं नैतु? प्राप्नो त्येवे त्यर्थः । द्वादशराशीना मपि भोग्यत्वाविशेषादितिभावः । उत्तुङ्ग गृहाप्तिहर्षितः उच्चस्थानप्राप्त्या॰ सन्तुष्टः स बुधः, कन्याराशि र्बुधस्य उच्च इति वराहमिहिरः । 'अजवृषभमृगाङ्गनाकुळीरा झषवणिजौ च दिवाकरादितुङ्गाः' इति । अत्रैव कन्याराशावेव॰ निवेशिताशय स्सन्; न चचाल राश्यन्तरं नजगामे त्यर्थः । इदन्तु चित्रं ॥ ८४

एवं रामस्य गृहाश्रमप्राप्ति मुक्त्वा अथ कृष्णस्य तं वक्तु मारभते ।

श्लो ॥ भीष्मस्य बालाऽथ गुणैकलोला विधोः करेण ग्रहणं समैच्छत्
मौग्ध्या दुरापस्य समुन्नतस्य स तस्य लिप्साऽपि हसाय तस्याः ८५

भीष्मस्येति– अथ ततः, गुणैकलोला गुणेष्वेवासक्ता, सकलसद्गुणनिलये त्यर्थः । भीष्मस्य तन्नामकस्य राज्ञः, बाला तनया॰ रुक्मिणीत्यर्थः । विधोः कृष्णस्येति - कर्मणि षष्ठीकरेण स्वहस्तेन, ग्रहणं पीडनं, समैच्छत् अभिललाष । कृष्णं परिणेतु मियेषे त्यर्थः । यद्वा विधो स्सम्बन्धिना करेण स्वस्य ग्रहण मैच्छ दित्यन्वयः । कृष्णकर्तृकं स्वपरिणय मैच्छदित्यर्थः । विधो श्चन्द्रस्येति च प्रतीयते । बालत्वा च्चन्द्रं धर्तु मियेषे त्यर्थः । दुरापस्य दुर्लभस्य समुन्नतस्य लोकोत्तरस्य, कृष्णस्येति कर्मणि षष्ठी । लिप्साऽपि लब्धुमिच्छा च, तादृशकृष्ण कर्मकाभिलाषः इत्यर्थः । मौग्ध्या त्सौन्दर्याद्धेतोः; तस्याः रुक्मिण्याः, हसाय परिहासाय, नाभूत् । लोकोत्तर-सौन्दर्याभावे शूर्पणखायः रामाभिलाषवः दस्या अप्यपहास्यत्वं स्यादिति भावः मौग्ध्यात् मौढ्या द्बालत्वादिति च प्रतीयते । यद्य बालो यः कोऽपि विधुग्रहणार्थं यतेत; तर्हि स परिहास्य एव । बालस्तु न तथा - किन्तु लीलाविशेषत्वेन तदपि बालस्य शोभावहमेवेति भावः । ८५

श्लो ॥ विधु रप्यथ राजकन्यकां चकमे कामविमोहितो हिताम्
स घटेत नवेति संशयं विधि मुल्लङ्घ्य चरन् करोतु किम् ॥ ८६

विधुरिति–अथ ततः, कामविमोहितः, मदनार्दितः, विधु रपि कृष्ण श्च, तां राजकन्यकां भीष्मतनयां, चकमे कामयाम्बभूव। एतेन 'एकत्रैवानुरागश्चेत्तिर्यङ्म्लेच्छगतोऽपि' वेत्युक्तलक्षणो रसाभासदोषो निवृत्तः; उभयो रुभयत्रानुरागवत्त्वकथनात्। अत्र रुक्मिणीं कामयित्वा ततः कामविमोहितोऽभूदिति वक्तव्ये, तद्वैपरीत्येन कथना दत्यन्तातिशयोक्तिः। 'अत्यन्तातिशयोक्तिस्स्यात्पौर्वापर्यव्यतिक्रम' इति लक्षणात्-इति रत्नावळीकाराः। वस्तुतस्तु रुक्मिणी सौन्दर्यादिश्रवणेन कामविमोहितो भूत्वा; अत एव तां चकमे-न हि अकामहतस्य स्त्रीकामना क्वापि दृष्टेति नात्र तदलङ्कारस्यावकाशः; किन्तु साभिप्राय विशेषणात् परिकरालङ्कारः। न हि कामनामात्रेणेष्टवस्तुलाभ इत्याशङ्कयाह– विधिं दैव, मुलङ्घ्य अतिक्रम्य, चरन् वर्तमानः, दैवस्यापि नियामक इत्यर्थः। सः कृष्णः घटेत मदभिलाष मिति शेषः सिद्धयेत् वा? अथवा नघटेत न सिद्धयेत्? इत्येवंरूपं संशयं सन्देहं, करोतु किं? न कुर्यादेव; तस्य अमोघकामत्वादिति भावः। रुक्मिण्याः कृष्णो दुर्लभः इति पूर्वश्लोकेन प्रतिपादयित्वा, अधुना कृष्णस्य रुक्मिणीदुर्लभे त्यर्थद्वारा प्रतिपादनात् उभयो रानुरूप्यं व्यज्यते। व्यङ्ग्यार्थस्तु- स्वयं विधु श्चन्द्रोऽपि, राजकन्यकां चन्द्रसुतां, स्वपुत्रीमित्यर्थः। चकमे तत्र हेतुमाह– कामविमोहित इति। कामान्धः किं नकुर्या दित्यर्थः। ननु कामान्धस्यापि कथ मीदृशो दुराचारः? इत्यत आह– विधिं शास्त्र मुलङ्घ्य चरन् सः घटेति नवेति संशयं स्वसुताकामना युक्ता वा नवेति संदेहं, करोतु किम्? विधिनिषेधलङ्घिनः पापिष्ठाः किं किं नकुर्यु रिति भावः। यद्वा- विधि मुलङ्घ्य चर न्नित्यनेन इतः प्राक्तनं गुरुदारसम्भोगं व्यज्यते। विधि मुलङ्घ्य गुरुदारानेव यो यभितवान्; तस्य स्वसुताकामनं कियदिति भावः। अथवा विधिं ब्रह्माणमुलङ्घ्ये त्यर्थः। यथाविधिः स्वसुतां रमयामास; तथा चन्द्रोऽपीति कृत्वा स्रष्ट्रा स्वीकृतोऽय माचारो न सृज्यानां दुराचार इति भावः। अन्योऽप्यर्थः प्रतीयते- कामविमोहितो विधु र्विष्णु रपि तां अथ राजकन्यकां धरा न भवती त्यधरा समुद्रः तज्जां कन्यां लक्ष्मी मित्यर्थः। चकमे केनचित्कारणेन लक्ष्मी विष्णुवक्षस्स्थल मुत्सृज्य समुद्रा दुद्भूत् तां पुन र्विष्णुरेव चकमे इति भागवतकथात्रानुसन्धेया! सः लक्ष्म्यां विष्णो रभिलाषः घटेत वा नवा युक्तं वा नवेति संशयं विधि मुलङ्घ्य चरन् बौद्धो जनः करोतु किम्? अप्रत्यक्षानां विष्णवादीनां तन्मते असत्यत्वात्- किन्तु आस्तिकः कुरुते। कुतः यस्य श्रम स्तस्यैव फल मितिन्यायात्। देवासुरस्वीकरणयोग्या मिमां विष्णु श्चकमे इत्ययुक्तम्। अवाप्तसमस्तकामस्य भगवतः स्त्रीकामना सुतरा मयुक्तेति नेय मपूर्वा; किन्तु तत्पत्नी लक्ष्मीरेवेति स्वपत्नीकामना युक्तैव। देवासुरपर्वतादिषु प्रविश्य स्वस्यापि मन्थकत्वा दतिश्रमवतो विष्णो रेतत्कामना युक्तैव। ब्रह्मणोऽपि लीलया भक्तानुग्रहार्थं वा स्त्रीकामना प्युचितैव। इत्येव मास्तिको विचारयतीति भावः। सर्वमेत न्मदीयायां रमापरिणयाभिधायां कृतौ द्रष्टव्यम्॥ ८६

ग ॥ एवं परस्परगुणाकर्णननिर्णीतसम्पर्कयोः रुक्मिणीवनमालिनोः प्रतिकूलचारिणो रुक्मिण शिशुपालगताशयस्य, हृदयनिवेदनाय, रुक्मिणी कमपि संदेशहर मासतर मग्रजन्मान मनु मधुसूदनं प्राहिणोत् ॥ ८७

एवमिति– एवं परस्परगुणाकर्णणेन अन्योन्यगुणश्रवणहेतुना, नीर्णीतसम्पर्कयोः निश्चित बन्धयोः, "सर्वथा रुक्मिणी मह मुद्वहिष्यामि, सर्वथा कृष्णमेवाह मुद्वहिष्यामि" इति एवं दृढनिश्चययो रित्यर्थः । रुक्मिणीवनमालिनोः रुक्मिणीकृष्णयोः, प्रतिकूलचारिणः प्रतिकूलाचरण-शीलस्य, यद्वा रुक्मिणीवनमालिनोः परस्परगुणाकर्णननिर्णीतसम्पर्कयो स्सतोः, प्रतिकूलचारिण इति वा अन्वयः प्रातिकूल्यमेव प्रकटयति– शिशुपालगताशयस्येति ॥ "शिशुपालाय मत्सोदरीं दास्यामि" इत्येवं शिशुपालासक्तचित्तस्येत्यर्थः रुक्मिणः स्वाग्रजस्य हृदयनिवेदनाय अभिप्राय-प्रकटनाय, रुक्मिणी आप्ततर मत्याप्तं, सन्देशहरं हरति नयतीति हरः सन्देशस्य वाचिकस्य हरः तं, कमपि कञ्चित्, अग्रजन्मानं ब्राह्मणं, अनुमधुसूदनं कृष्ण मुद्दिश्य, प्राहिणोत् प्रेषयामास ॥ ८७

श्लो ॥ श्रुत्वैव सन्देश मथ प्रियाया श्शौरि र्द्विजा द्भाविन मन्वभू त्प्राक्
सर्वस्व मुद्वाहमहोत्सवस्य निरीक्षणं किं त्ववशिष्ट मस्याः ॥ ८८

श्रुत्वेति– अथ ततः, शौरिः द्विजा द्ब्राह्मणा त्सकाशात्, प्रियायाः रुक्मिण्याः' सन्देशं श्रुत्वा निशम्य, भाविनं भविष्यन्तम्, उद्वाहमहोत्सवस्य विवाहोत्सवस्य, सर्वस्वं सर्व-सारम्, प्रागेव पूर्वमेव, अन्वभूत् अनुभूतवान् । विवाहे जाते यथा हर्षरोमाञ्चादिकं भजते तथा अधुनैव कृष्णो भेजे इत्यर्थः । स्वस्यामोघसङ्कल्पत्वात् । तस्याश्च स्वस्मिन्नेव अनुरक्तत्वा द्विवाहं जातप्रायं मेने इति परमार्थः किन्तु अस्याः रुक्मिण्याः निरीक्षण मवलोकन मवशिष्टं शेषीभूतम्- अत्र निरीक्षणात्प्रागेव उद्वाहमहोत्सवः आसी दिति वर्णनात् अत्यन्तातिशयोक्तिः ॥ ८८

ग ॥ अथ सन्देशहरेण महीसुरेण यदुनन्दना वतिविनतानन्दनं स्यन्दन मासेदिवांसौ दिवसेनैकेन सपरिवारौ कुण्डिननगर मगमताम् ॥ ८९

अथेति– अथ ततः, सन्देशहरेण सन्देशहारिणा, महीसुरेण ब्राह्मणेन सह, अतिविनतानन्दनं अतिक्रान्तगरुडं; ततोऽपि वेग वदित्यर्थः । स्यन्दनं रथ, मासेदिवांसौ आरूढौ 'सहयोगाभावेऽपि वृद्धो यूनेति ज्ञापनात्तृतीया' - यदुनन्दनौ रामकृष्णौ, सपरिवारौ, सपरिजनौ सन्तौ, एकेन दिवसेन । दिनेन अपवर्गे तृतीयेति तृतीया - कुण्डिननगरं भीष्मस्य राजधानी, कुण्डिनम् त दिति नगरं पत्तनं, अगमतां ययतुः ॥ ८९

ग ॥ तदैव चेदिपति रपि स्वगृह्यै स्साल्वजरासन्धादिभिस्सह रुक्मिणीमेव परिणेतुकामः कुण्डिननगर मगमत् ॥ ९०

तदेति– तदैव कृष्णागमनसमकाल मेव, चेदिपति शिशुपालोऽपि, रुक्मिणीमेव परिणेतुकामः परिणेतु मुद्वोढुं कामोऽभिलाषो यस्य स तथोक्त स्सन्, स्वगृह्यैः स्वपक्षस्थैः, साल्वजरासन्धादिभिः साल्वजरासन्धप्रमुखै स्सह, कुण्डिननगर मगमत् प्राप ॥ ९०

श्लो ॥ अत्रान्तरे सोत्कलिकेऽपि शौरौ विशंक्य वैमत्य मखिद्यतैषा ।
स्वतो विधावस्त्वनुकूलभाव स्सब्रह्मणा केन विना वगम्यः ॥ ९१

अत्रेति - अत्रान्तरे अस्मिन् समये, सोत्कलिके सोत्कण्ठेऽपि, शौरौ कृष्णे, वैमत्य मनङ्गीकार, माशंक्य शङ्कित्वा, हरि र्मां नाङ्गीचकार किमित्याशङ्कयेत्यर्थः। एषा रुक्मिणी, अखिद्यत खिन्नाभूत्। ननु य स्स्वयमेव रुक्मिणीं चकामे तस्य कुत स्तस्यां वैमत्यं स्यादित्यत आह - विधौ कृष्णे, स्वतः परप्रेरणं विनैव, अनुकूलभावः आनुकूल्य मस्तु; सः अनुकूलभावः ब्रह्मणा विना ब्राह्मणमृते केन पुंसा अवगम्यः ज्ञेयः - यथा रुक्मिणी कृष्णं कामयते तथा कृष्णोऽपि रुक्मिणीमिति सन्देशहरो जानातुनाम- श्री कृष्णेन स्वविरहस्यापि तत्पुरतः प्रपञ्चितत्वात् - अन्यस्य तु कथं तद्ज्ञानम्? । तस्मात् रुक्मिण्या स्संशय स्साधीयानेवेति भावः। उत्तरार्धे त्विदं व्यंग्यं - विधौ ब्रह्मणि स्वतोनुकूलभावोऽस्तु नाम; रुक्मिणी कृष्ण सम्पर्कानुकूलएव विधिर प्यस्तुनाम! सतु ब्रह्मणा स्वेन विना केनावगम्यः ब्रह्मानुकूल्यं ब्रह्मैव वेद नत्विरः! इतरस्तु फलद्वारा विधिसङ्कल्प मनुमिमीते इति भावः। ब्रह्मसङ्कल्पज्ञानाभावा द्रुक्मिण्या स्संशय स्समीचीन एवेति ध्वन्याशयः ॥ ९१

ग ॥ तदनु द्विजन्मापि सत्वर मापत्य, "यदुपति रुपनत" इति निवेदयितु मन्तःपुर मवजगाहे ॥ ९२

तदन्विति– तदनु ततः, द्विजन्मापि ब्राह्मणोऽपि, सत्वरं द्रुतं, मापत्य आगत्य, यदुपतिः कृष्णः, उपनतः आगत इति, निवेदयितुं ज्ञापयितुं, अन्तःपुरं रुक्मिणीवासगृह मवजगाहे विवेश ॥ ९२

श्लो ॥ आलोकमात्राद् द्विजराज एना मनन्दय द्राजसुतां तत स्सा
कृता त्वविला रुचिभङ्गकृत्या सत्रासनो मन्दतनूजभाजा ॥ ९३

आलोकेति– ततः अन्तःपुरगमनानन्तरं, द्विजराजः सन्देशहरो ब्राह्मणः, आलोकमात्रा द्दर्शनमात्रादेव, एनां राजसुतां रुक्मिणी, मनन्दयत आनन्दयामास - कार्यसिद्धिसूचक ब्राह्मणमुखविकासादिदर्शनेनैव सन्तुष्टे त्यर्थः। सा रुक्मिणी,_ मन्दतनूजभाजा मन्दो मूढः,

तनूज स्सुतः, रुक्मीति यावत् - तद्भाजा त मनुगतेन, सवित्रा पित्रा भीष्मेण, कृतात् चिकीर्षिता दित्यर्थः। रुचिभङ्गकृत्यात् रुचि रिच्छा, तस्या भङ्गः विघातः, तस्य कृत्यं क्रियाकरणमिति यावत् - तस्मात् स्वाभिलाषवैयर्थ्यकरणा दित्यर्थः। शिशुपालसमर्पणरूपा दिति भावः - यद्वा रुचेः स्वाभिलाषस्य, भङ्गो यस्मि स्तत् रुचिभङ्गं, तच्च तत्कृत्यं कार्यं, तस्मादिति समासः। नतत्रास नबिभेतिस्म। भगवदागमननिश्चया दितिभावः। व्यंग्यार्थस्तु - द्विजराज श्चन्द्रः, आलोकमात्रा त्प्रकाशमात्रात्, राजसुतां स्वतनया, मनन्दयत्। तत स्सा चन्द्रसुता, मन्दतनूजभाजा - मन्द श्शनिः, सएव तनूज स्तद्भाजा शनिना पुत्रवतेत्यर्थः। सवित्रा सूर्येण, कृतात् रुचिभङ्गकृत्यात् तेजोनाशकरणात्, सूर्यस्य पुरत श्चन्द्रस्य निस्तेजस्कत्वादिति भावः। न तत्रास - भीत्रार्थानामिति पञ्चमी - चन्द्रसुता रविप्रभया निस्तेजस्कं पितर मवलोक्य खिन्नासती तदस्तमयानन्तरमुदितस्य चन्द्रस्य प्रकाशदर्शनेन सन्तुष्टेति निर्गळितार्थः। अन्योऽप्यर्थः प्रतीयते - द्विजराजो हंसः, आलोकमात्रादेव एनां राजसुतां, दमयन्ती मनन्दयत्। हंसं दृष्ट्वा तद्रूपसम्भ्रमविमोहिता तं गृहीतुं दमयन्ती इयेषेति भावः। ततः सा तादृशस्वर्णपक्षहंसग्रहणैकलोलुपेत्यर्थः। मन्दतनूजभाजा सवित्रा सूर्येण कृतात् रुचिभङ्गकृत्यात् आतपसञ्चारेण सुकुमारं शरीरं म्लायते इति भावः। न तत्रास श्रममपि न गणयामासेति भावः॥ ९३

श्लो ॥ सुदृशो द्विजत श्श्रुत्वा हरे रापातधी रभूत्
तेनैव परमानन्दं भेजे साक्षात्कृते रिव ॥ ९४

सुदृशइति— सुदृशो रुक्मिण्याः, द्विजतः ब्राह्मणात - ब्राह्मणस्येति षष्ठी वा, वाक्य मितिशेषः - श्रुत्वा, हरेः कृष्णस्या, आपातधीः आगमनबुद्धि, रभूत्। ब्राह्मणवाक्येन हरि रायातीति निश्चिकायेत्यर्थः। सा इति कर्तृपदस्य शेषः। तेनैव श्रवणेनैव, साक्षात्कृतेरिव, हरिसाक्षात्कारादिव, परमानन्द मतितोषं, भेजे प्राप। आप्तवाक्यं प्रत्यक्षसदृशं हीति भावः। व्यंग्यार्थस्तु- सुदृशो विबुधस्य अधीतवेदत्वेन वेदान्तश्रमायोग्यस्य इत्यर्थः। द्विजतो ब्राह्मणात्, श्रुत्वा 'श्रोतव्यो मन्तव्य' इति श्रुतिविहितं गुरूपसदनपूर्वकं श्रवणं कृत्वेत्यर्थः। हरेः परमात्मनः, आपातधीः आपातज्ञान मभूत् - मननिदिध्यासनोत्तरकालिकत्वा न्निश्चयज्ञान स्येति भावः। अत्र यद्यपि श्रुत्वा अभू दित्यनयो स्समानकर्तृकत्वाभावात् 'समानकर्तृकयोः पूर्वकाले' इति क्त्वाप्रत्ययोऽनुपपन्नः - तथापि श्रवणस्य आपातज्ञानभवनस्य च उभयो स्समानकर्तृकत्वसत्त्वा त्कथञ्चि त्तदुपपत्ति र्बोध्या। तथा च माघः :— "अकृत्वा हेलया पाद मुच्चै र्मूर्धसु विद्विषां - कथङ्कार मनालम्बा कीर्तिर्द्या मधिरोह ती" ति। तेनैव श्रवणमात्रेणैव, साक्षात्कृतेरिव ब्रह्मसाक्षात्कारादिव, परमानन्दं भेजे प्राप। स इति कर्तृपदस्य शेषः॥ ९४

ग ॥ अथ विदर्भाधिपति र्वसुदेवसुतौ निजदुहितु रुद्वाहमहोत्सव विलोकनलालसतया समासेदिवांसा ववधारयन्, प्रत्युद्गम्य विधिना समाराध्य नगरबाह्योद्याने न्यवेशयच्च ॥ ९५

अथेति– अथ ततः, विदर्भाधिपति र्भीष्मः, वसुदेवसुतौ रामकृष्णौ, निजदुहितुः स्वपुत्र्याः, उद्वाहमहोत्सवस्य, विवाहोत्सवस्य, दर्शने अवलोकने लालसतया आसक्त्या, समासेदिवांसौ आगतौ, अवधारयन् जानन्, प्रत्युद्गम्य प्रत्युद्गमनं कृत्वा, विधिना यथाशास्त्रं, समाराध्य अर्घ्यादिभिः पूजयित्वा, सजातीयबुध्या - न तु परमेश्वरबुध्येति बोध्यम् । अन्यथा स्वसुताप्रदानप्रातिकूल्यासम्भवात् । नगरबाह्योद्याने पुरबाह्यवने, न्यवेशयच्च प्रवेशयामास ॥

ग ॥ तदैव चेदिराजतनूजं जामातरं मन्वान स्समपूजय न्नगर मन्तरा न्यवेशयच्च ॥ ९६

तदेति– तदैव चेदिराजतनूजं शिशुपालं, जामातरं दुहितुः पतिम्, मन्वानः चिन्तयन्, समपूजयत् पूजयामास । विवाहारम्भे जामातुः पूजनं प्रसिद्धम् । नगरमन्तरा पत्तनस्य मध्ये न्यवेशयच्च निवेशयामास । ९६

श्लो ॥ दमघोषविदर्भेशौ ततो निजतनूजयोः
अङ्गमङ्गळकर्माणि स्वै रचीकरतां जनैः ॥ ९७

दमघोवेति– ततः दमघोषविदर्भेशौ शिशुपालस्य पिता दमघोषः; विदर्भेशो भीष्मः तौ, स्वैः स्वीयैः जनैः परिचारकैः, निजतनूजयोः तनूजश्च तनूजा च तनूजौ - 'पुमांस्त्रियेत्येकशेषः'- निजौ स्वीयौ च तौ तनूजौ च निजतनूजौ, तयोः स्वसुतयोः, अङ्गमङ्गळकर्माणि विवाहाङ्गभूतानि स्वस्तिवाचनकादीनि, अचीकरतां कृतवन्तौ ॥ ९७

ग ॥ आश्चर्य मेतत् ॥ ९८

आश्चर्यमिति– एत द्वक्ष्यमाण माश्चर्यं चित्रम् । तदेव दर्शयति ॥ ९८

श्लो ॥ न चेदिभर्तु श्श्रुति मन्त्रजापि शुभोत्तरा कौतुकधारणाऽऽभूत्
द्विजन्मनो लौकिकमन्त्रतोऽपि सिद्धाऽभवत्सैव शुभाय शौरेः ॥ ९९

नेति– चेदिभर्तु श्शिशुपालस्य, श्रुतिमन्त्रजापि वेदमन्त्रकृतापि, कौतुकधारणा कौतुकबन्धाख्यः कर्मविशेषः, कुतूहलिता च शुभोत्तरा शुभोदर्का, नाभूत् । शौरेः कृष्णस्य, द्विजन्मनो ब्राह्मणस्य, लौकिकमन्त्रतः गुप्तवादात् भाषानिर्मितकृतकमन्त्राच्च सिद्धा जाता । सैव कौतुकधारणैव शुभाय विवाहरूपभव्याय, अभवत् बभूव । वेदमन्त्रसिद्धकौतुककर्मबन्ध

श्शुभाय नाभूत् । भाषानिर्मितकृतकमन्त्रसिद्धकौतुककर्मबन्धस्तु शुभायाभू दिति विरोधः । वेदमन्त्रश्रवणजन्यं शिशुपालकुतूहलित्वं शुभाय नाभूत् । ब्राह्मणसन्देशसिद्धकृष्णकुतूहलित्वं तु शुभा याभू दिति परिहारः । विरोधा भासालङ्कारः ।

ग ॥ समनन्तर मनर्गळ मङ्गळतूर्यरवमुखरितेषु हरिन्मुखेषु दुर्वार परिवारवार वरवर्णिनीगळविगळदमलकल गीतवाचालितेषु दिगञ्चलेषु नानाविधोपहारहारिणीषु विपणिश्रेणीषु समीरितालोकशब्देषु सकलालोककलोकेषु वर्षधरप्रायपुरुषशतपरिवृता समधिगतविविधायुध योधयूथवलयिता शचीव हरिपरायणा स्वाहेव कृष्णवर्त्मदत्तचित्ता संयमिनीव जीवितेशहृदया तामसीव निरन्तराशाश्रित पुण्यजनैकलब्धा भार्गवीव भुवनाधिपानुरक्ता सदागतिरिव प्रियस्पर्शनाभिलाषिणी सर्वसम्पदिव मनुष्यधर्मानुवर्तिनी पार्वतीव वृषाकपिप्रणयिनी भारतीव विध्यानुकूल्यकामा छायेव पद्माप्ताभिलाषिणी रोहिणीव विधुसङ्गमाभिलाषिणी तारेव कमनीयधिषणा देवसेनेव कौमारविभ्रमप्रणयिनी रतिरिव कन्दर्पवशगा द्रुपदात्मजेव धर्मानुरक्ता सुभद्रेव पार्थकामवर्जिता चित्राङ्गदेव प्रियविजयाभिलाषिणी इळेव बुधश्लाघनीया सतीव तातानभिमतपतिकामुका च ऊर्मिळेव रामानुजानुरक्ता देवयानीव कमनीयकचाऽहल्येव कृप्तातिरिक्तपतिकामुकापि मूर्तेव पातिव्रतीगतिरामणीयकेन हंससमीपजगमिषया च हंसगामिनी धृतहारिद्रवसनतया माधवानुरक्ततया च पीताम्बरप्रणयिनी सत्यकामतया हरिवाञ्छया चाच्युतकामा मञ्जीरमञ्जुळशिञ्जिततया जलजविजिगीषया गर्जदिव पदयुगळ मधिवसुन्धर मर्पयन्ती तपःप्रभावसम्भूतजङ्गमभावमिव रम्भास्तम्भयुगळ मूरुयुगळ माकलयन्ती काञ्चीपदतया तपस्सिद्धिक्षेत्रमिव मदनस्य नितम्बबिम्ब मवलम्बमाना तदङ्गनिर्माणसमये कृतलम्बोदरा नादरेण विधिना विस्मृत मवलग्नं बिभ्राणा हृदयेशय स्वाङ्गजमतङ्गजस्य जगतीधरविलङ्घिषया पुरःप्रसारितमुखस्य कुम्भानुकारिणा कुचयुगळेन शुण्डादण्डानुकारया रोमरेखया च शोभमाना वदनेन्दुसेवनाय समुपनतया नक्षत्रमालयेव नक्षत्रमालावलयितगळप्रदेशा तिरस्कृतचन्द्रतायामपि वस्तुत स्सुधांशुसोदर मिदमिति दुष्कीर्तिनिवर्तनायेव स्वीकृतजन्मान्तरेण वदना रविन्देन लोभनीया प्रथमं मधुमातवैरिणा तत स्सर्वधा समुज्झ तमधुरेण हरिणापि स्पृहणीयमाधुरीधुरीण मधरं बिभ्राणा बिम्बाधरमाधुरीसमभ्यसनाय समुपस्थानीयेन सुधाबिन्दुनेव नासामौक्तिकेन नालंकृता अपरिपूर्णेन वदनसौंदर्यसागरसेतुनेव नासिकया विराजमाना मधुपसोदरतया श्रुतिविलङ्घननिर्बिशङ्केन नयन युगळे नालङ्कृता

किन्नरेशप्रतारणेन मुकुन्दाभिधकल्याणनिधिविलोकनानुकूलं सिद्धाञ्जनमिव मृगमदतिलक मळीकदेशे बिभ्राणाऽनुभूतसीमन्तकर्मभृतियुवतीगर्भकुहराविर्भूतं वालजालं शिरसाश्लाघयमाना विद्युदिव प्रावृषेण्यं नील ममृतमुच मनुवर्तमाना तारकेव विष्णुपदलोला चन्द्रिकेव कुवलयामोदिनी वासरलक्ष्मीरिव राजमण्डलमलिनीकरणोत्सुका दीपशिखेवानन्तस्नेह निक्षेपयोग्या कल्पलतेव विगतादरणीयपल्लवानुषक्ता कामदुघेव गोविंदाधीनजीवनाचिन्ता मणिरि वाभीष्टस्पर्शनबध्दादरा अमृतधारेवावश्यम्भावि विष्णुरथापहारा सिद्धरसलहरीव जातरूपौचत्यलालसधन्यजनैकलभ्या दिव्यौषधिरिव सकलाङ्गजरुजापहारिस्पर्शा कुमुदिनीव विधुस्पृहणीयपुष्पोद्गमा रत्नमयमेखलेव कल्याण मम्बद्धा मणिमञ्जरीवालम्बितगुणगणा रत्नमालेवान्तरावेशितनायकरत्ना शान्तिरिव हरियोगानुकूला करुणेव परसुखावहा क्षमेव पुरुषोत्तमनिर्वाणहेतुभूता श्रद्धेव पुरुषोत्तमकृतमकलेष्टसाफल्यसम्पादिका मुक्तिरिव विबुधश्लाघनीया तीर्थयात्रेव शिशुपालदुरवापा सुरभिरिव गदाधरभीरुभावोचिता भागीरथीव जगतीपतितपोलभ्या यमुनेव कृष्णगुणप्रणयिनी सरस्वतीव विश्वम्भरान्तर्गतजीवना कवेरतनयेव चोळदेशगतमधुरतरपयोधरा सरयूरिव हंसावासमानसप्रसृतसर्वतो-मुखसम्भ्रमा विरजेव वैकुण्ठसमीपगामिनी तुङ्गभद्रेव मधुरतरपर्वतोमुखाटोपा कुसुम-मञ्जरी वाळिकदम्बकरञ्चिता कीर्तिरिव सुखस्वरूपा सुकृतपरम्परेव हरिप्रीतिजनका भगवती भीष्मतनया स्वयमेव सर्वमङ्गळोपासितापि सर्वमङ्गळा मुपासितु मन्तःपुरतः पुरतो निर्गत्य भवानीभवन मभजत ॥

समनन्तरमिति– समनन्तरं अङ्गमङ्गळनिर्वहणानन्तरम्, हरिन्मुखेषु दिङ्मुखेषु, अनर्गळेन उद्वेलेन, मङ्गळतूर्यरवेण मङ्गळार्थतूर्यध्वनिना, मुखरितेषु शब्दितेषु सत्सु, दिगञ्चलेषु दिगन्तेषु, परिवारभूताः वारवरवर्णिन्यः परिवारवारवर्णिन्यः, दुर्वाराः अमिताः, परिवार-वर्णिन्यः परिजनभूतवेश्याङ्गनाः, तासां गळेभ्यः कण्ठेभ्य स्सकाशात्, विगळद्भिः निर्गच्छद्भिः, अमलैः स्वरदोषरहितैः, कलगीतैः मधुरगानैः, वाचालितेषु मुखरितेषु सत्सु, विपणिश्रेणीषु आपणसङ्घेषु, नानाविधै र्बहुविधै, रुपहारै र्बलिभिः, वस्तुसङ्घै रित्यर्थः। हारिणीषु मनोहरासु - यद्वा - नानाविधाना मुपहाराणां हाराः स्समूहा एव हाराः स्रजो यासान्तासु - अत इनिः - ऋन्नेभ्यो ङीप्। सतीसु सकलालोककलोकेषु सर्वद्रष्टृसङ्घेषु सर्वद्रष्टृजनेष्विति वा - समीरिता-लोककशब्देषु उक्त जयजय शब्देषु सत्सु. भगवती षाड्गुण्यनिलया, भीष्मतनया रुक्मिणी, स्वयमेव सर्वमङ्गळोपासितापि सर्वमङ्गळैः सर्वमङ्गळया पार्वत्येति च, उपासिता सेविता सत्यपि,

सर्वमङ्गळां पार्वती, मुपासितुं सेवितुं-विरोधाभासालङ्कारः। अन्तःपुरात् गर्भगृहात्, ततः पुरतः पत्तनाच, निर्गत्य निर्गम्य, भवानीभवनं पार्वतीसदनं, अभजत प्राप इत्यन्वयः। भीष्मतनयामेव वर्णयति-वर्षधरप्रायेण षण्डतुल्येन 'षण्डो वर्षधर स्तुल्या' वित्यमरः। अन्तःपुररक्षिणो हि कञ्चुकिनः छिन्नवृषणत्वा न्न स्त्रियो न पुरुषाः किन्तु षण्डा एव। तत्रापि न केवलं षण्ढाः षण्डानां वृषणच्छेदाभावात्। अत उक्तं वर्षधरप्रायेति-पुरुषशतेन अपरिमितपुरुषैः परिवृता परिवेष्टिता, समधिगतविविधायुधैः धृतबहुविधायुधैः योधयूथै र्भटसङ्घैः, वलयिता वेष्टिता-रक्षार्थमिति भावः। शचीव इन्द्राणीव, हरिपरायणा कृष्णासक्ता इन्द्रासक्तेति च-स्वाहेव अग्निभार्येव, कृष्णवर्त्मे दत्तचित्ता श्रीकृष्णमार्गन्यस्तदृष्टिः, एतावतापि कुतो नागाम कृष्ण इति तन्मार्गमेव पश्यन्तीत्यर्थः। अग्निगतहृदयेति च-संयमिनीव यमपत्नीव, जीवितेशहृदया जीवितेशः प्राणेशः कृष्णः, तत्र हृदयं मनो यस्यास्सा-अत्र गद्ये प्रायशः उक्त मेवार्थं भङ्ग्यन्तरेण पुन रुच्यते-औपम्यार्थमिति न तत्र पुनरुक्तिदोष श्शंक्यः- विच्छित्तिविशेषसद्भावात्-यमचित्तेति च-'जीवितेशो यमेपि' चेति रत्नकोशः। तामसी निऋतेः पत्नी, सेव निरन्तराशाश्रितेण गाढानुरागवता, पुण्यजनेन सुकृतिना, एकेन कृष्णेनै वेत्यर्थः। लभ्या लब्धुं शक्या; अतिसुकृतपरिणामस्य कृष्णस्यैवेयं सुलभा; नतु शिशुपालादेरिति भावः - निरन्तरं यथातथा आशां दिशं प्रतीचीमित्यर्थः - आश्रितेन पुण्यजनेन यातुधाननिर्वृतिनेत्यर्थः। एकेनैव लभ्येति च-भार्गवी वरुणपत्नी, सेव भुवनाधिपानुरक्ता लोकाधिपे कृष्णे अनुरक्ता. भुवनं जलं, तदधिपो वरुणः, तत्र सानुरागेति च - सदागतिः वायोः, पत्नी सेव प्रियस्पर्शनाभिलाषिणी प्रियालिङ्गनाभिलाषिणी, प्रियभूतवायुकांक्षिणीति च-सर्वसम्पत् कुबेरजाया, न च समस्तसम्पदिति वाच्यं प्रक्रमभङ्गदोषात् - सेव मनुष्यधर्मानुवर्तिनी मनुष्यवेषधारिणी, वस्तुतो लक्ष्मीत्वादिति भावः - धनदानुवर्तिनीति च - पार्वतीव हैमवतीव, वृषाकपिप्रणयिनी विष्णुप्रणयिनी, ईशानस्नेहवतीति च - 'हरविष्णू वृषाकपी' त्यमरः। एतावता अष्टदिक्पालकपत्नीतौल्यं व्यक्तं रुक्मिण्याः। भारतीव सरस्वतीव, विध्यानुकूल्यकामा दैवानुकूल्याभिलाषा, शिशुपालं प्रतार्य कृष्णो मां यथा स्वीकुर्यात्तथा दैवं मम अनुकूलं भवत्विति कामयमानेत्यर्थः। ब्रह्मानुकूल्यकामेति च - छाया सूर्यपत्नी, सेव पद्माप्ताभिलाषिणी पद्मायाः लक्ष्म्या, आप्तो विष्णुः, तदभिलाषिणी, पद्मानां माप्तो रवि स्तदभिलाषिणीति च - रोहिणीव विधुसङ्गमाभिलाषिणी, विधु र्विष्णु श्चन्द्रश्च - तस्य सङ्गमं तेन सह सङ्गमं सम्बन्धमिति वा अभिलषते इति तथोक्ता - तारेव बृहस्पति पत्नीव कमनीयधिषणा मनोज्ञबुद्धिः कमनीय आशास्यो धिषणो बृहस्पति र्यस्यास्सेति च - 'गीष्पति र्धिषणो गुरुः - बुद्धि र्मनीषा धिषणा' इति चामरः। देवसेनेव कुमारपत्नीव, कौमारविभ्रमप्रणयिनी यौवनविलासवती, स्कन्दलीलासुप्रणयवतीति च - रति रिव मन्मथपत्नीव, कन्दर्पवशगा मन्मथाधीना - मदनशरपरवशेत्यर्थः। मन्मथस्य पत्यु रधीनेति च - द्रुपदात्मजेव द्रौपदीव, धर्मानुरक्ता धर्मे आसक्ता, धर्मराजे आसक्ता च - सुभद्रेव अपार्थकामवर्जिता व्यर्थानुरागरहिता न पार्थः अपार्थः

अर्जुनभिन्नः, तत्र कामः अनुरागः, तेन वर्जिता पार्थैकानुरक्तेत्यर्थः - चित्राङ्गदेव प्रियविजयाभिलाषिणी श्रीकृष्णजयकांक्षिणी प्रियभूतार्जुनकांक्षिणीति च - इळा बुधपत्नी, सेव बुधश्लाघनीया विद्वदभिनन्दनीया, बुधेन पत्या श्लाघनीया च - सतीव दक्षसुतेव, तातानभिमतपतिकामुका च तातस्य जनकस्य भीष्मस्य दक्षस्य च, अनभिमत मनिष्टम्, पतिं कृष्णं शिवं च कामयतीति तथोक्ता तस्मिन् कामुकेति वा - ऊर्मिळा लक्ष्मणजाया, सेव रामानुजानुरक्ता रामो बलराम श्श्रीरामश्च, तदनुजः कृष्णो लक्ष्मणश्च, तत्र अनुरक्ता - देवयानी शुक्रसुता, सेव कमनीयकचा सुन्दरशिरोजा, कमनीयः कचः तन्नामा पुरुषः यस्या स्सा इति श्लिष्टसाधर्म्योपमालङ्कारः। अहल्येव गौतमपत्नीव, कृसातिरिक्तपतिकामुकापि उद्दिष्टा च्छिशुपाला द्भिन्नं पतिं कृष्णं कामयन्त्यपि परिणीता द्भिन्न मिन्द्रं पतिं कामयन्तीति च - मूर्ता मूर्तिमती पातिव्रतीव पातिव्रत्य मिव स्थितेत्युत्प्रेक्षा— उपमा - विरोधाभासश्च। गतिरामणीयकेन गमनचातुर्या, हरिसमीपजिगमिषया च कृष्णसमीपं गन्तुमिच्छया च, हंसगामिनी कलहंसगमना, हंसः परमात्मा कृष्णः तं प्रतिगच्छतीति हंसगामनीति च - धृतहारिद्रवसनतया हरिद्रामयं वसनं हारिद्रवसनं, धृतं हारिद्रवसनं यया सा धृतहारिद्रवसना, तस्या, भाव स्तत्ता तया - 'त्वतलो रिति पुंवद्भावः। विवाहे मङ्गळकरत्वात् हारिद्रवसनं कन्यया वरेण चाच्छादयन्तीति प्रसिद्धं- माधवानुरक्ततया च - कृष्णासक्तत्वेन च पीताम्बरप्रणयिनी पीते अम्बरे प्रणयो यस्या स्सा, पीत मम्बरं यस्य तस्मिन् कृष्णे, प्रणयो यस्या स्येति च - सत्यकामतया अमोघसङ्कल्पत्वेन, हरिवांछया च, कृष्णकांक्षया च, अच्युतकामा न च्युतोऽच्युतः कामः यस्या स्सा - अच्युते कृष्णे कामो यस्यास्येति च - इति श्लेषालङ्कारत्रयम्। अथ तत्प्रत्यङ्गवर्णनं कर्तु मारभते। मञ्जीराणां नूपुराणाम्, मञ्जुळेन मनोज्ञेन, शिञ्जितेन नादेन, 'भूषणानान्तु शिञ्जित' मित्यमरः। अमरञ्जिततया अलंकृतत्वेन हेतुना, जलजविजिगीषया कमलजयेच्छया, गर्जत् शब्दायमान मिव स्थित मित्युत्प्रेक्षा। पदयुगळं चरणद्वन्द्वम्, अधिवसुन्धरं भुवि अर्पयन्ती, कुर्वन्ती तपःप्रभावसम्भूतजङ्गमभावं तपःप्रभावेन पूर्वभवार्जिततपोमहिम्ना सम्भूतः जातः, जङ्गमभावः जाङ्गमत्वं यस्यतत् नित्यकृतजलाधिवासौ भास्कर मवलोकयन्तौ तपःकृत्वेव तादृशतपःफलात् स्थावरत्व मुत्सृज्य जङ्गमत्वं गता वित्यर्थः। रम्भास्तम्भयुगळमिव मोचापकाण्डद्वयमिव स्थितमित्युत्प्रेक्षा। ऊरुयुगळं सक्थिद्वय, माकलयन्तीदधाना, काञ्चीपदतया मेखलास्थानभूतत्वेन, काञ्चीनामकपुण्यक्षेत्रविशेषत्वेनेति च - मदनस्य मारस्य, तपस्सिद्धिक्षेत्रं तपस्सिद्धिस्थल मिव वर्तमान नितम्बबिम्बं कटिमण्डल, मवलम्बमाना बिभ्राणा - श्लेषोज्जीवितोत्प्रेक्षालङ्कारः। एतन्नितम्बबिम्बरूपं छायासरित्पुलिन मधिष्ठाय तपः कृत्वा मदनः त्रिलोकविजयकार्यसिद्धिम् जगामेत्युत्प्रेक्षाशयः। यथा काञ्चीपदे बहव स्तपसिद्धिम् गता स्तद्वदत्रापि काञ्चीपदे नितम्बे मदन स्तपसिद्धिम् गत इति श्लेषेण उपमालङ्कारो ध्वन्यते। तदङ्गनिर्माणसमये रुक्मिणीशरीरकरणसमये कृतलम्बोदरानादरेण कृतः लम्बे उदरे अनादरो येन तेन अशोभावहत्वा ल्लम्ब

मुदर मनाद्रियमाणेनेत्यर्थः । कृशमेवोदरं सृष्टवतेति यावत् । कृतः लम्बोदरे विनायके अनादरो येन तेनेति च - विधिना ब्रह्मणा विस्मृत मन्तर्गतं अवलग्नम् मध्यभागं बिभ्राणा दधाना, विघ्ननिवारणार्थं विनायकपूजाया अकृतत्वा दवलग्नं स्रष्टुं विधि र्विस्मृतवा नित्येको भावः । कृशोदरनिर्माणा द्वलग्नदेशो न दृश्यते इत्यन्यो भावः । असम्बन्धे सम्बन्धरूपातिशयोक्तिः । हृदयेशयस्य मनसि वसतः, जगतीधरविलङ्घयिषया जगतीधरः कृष्ण एव जगतीधरः पर्वत इतिश्लिष्ट रूपकम् । तस्य कर्मणि षष्टी - जगतीधरमित्यर्थः । विलङ्घयिषया लङ्घितु मिच्छया, विजिगीषया कुट्टनेच्छयेति च-पुरः अग्रे, प्रसारितमुखस्य प्रसारितवदनस्य, गजो हि वप्रक्रीडायां पुरतो मुखं प्रसारयति– अङ्गज एव मतङ्गज, स्तस्य मन्मथरूपगजस्य इति रूपकम् । कुम्भानुकारिणा कुम्भतुल्येन, कुचयुगळेन कुचद्वन्द्वेन, शुण्डादण्डानुकारया शुण्डाकरो, दण्ड इव शुण्डादण्डः, तस्य अनुकारः अनुकरणम्, यस्या स्तया, तत्तुल्ययेत्यर्थः । रोमरेखया रोमराज्या च इत्युपमाद्वयं– शोभमाना भासमाना- वदनेन्दुसेवनाय मुखरूपचन्द्रसेवार्थम्, समुपनतया आगतया, नक्षत्रमालयेव अश्विन्यादिसप्तविंशतितारासङ्घेनैव स्थितया इति रूपकोज्जीवितोत्प्रेक्षालङ्कारः । नक्षत्रमालया सप्तविंशतिमौक्तिकमयमालया वलयितगळप्रदेशा परिवेष्टितकण्ठभागा - अत्र नक्षत्रमालावलयितेत्येकसमासपाठः कचित्कोऽपपाठ एव - एक देशान्वयदोषात् । 'सैवनक्षत्रमाला स्या त्सप्तविंशतिमौक्तिके'त्यमरः । तिरस्कृतचन्द्रतायामपि तिरस्कृतः अवधीरितः, सहजशत्रुत्वात् स्वस्मा दपकृष्टत्वादिति च - चन्द्र स्सुधांशु र्येन त त्तिरस्कृतचन्द्रम्, तस्य भाव स्तत्ता तस्यां सत्यामपि– इद मब्जं, वस्तुतः स्वभावतः, सुधांशुसोदरं चन्द्रतुल्यं चन्द्रसहजमिति च - चन्द्राब्जयोः जलजत्वाविशेषादितिभावः– इति दुष्कीर्तिनिवर्तनायेव एवंरूपदुर्यशोनिवारणार्थमिवेति फलोत्प्रेक्षा श्लेषोज्जीविता । स्वीकृतजन्मान्तरेण धृतान्यजन्मना अब्जजन्म उत्सृज्य मुखात्मना पुनर्जातेनेत्यर्थः । वदनारविन्देन मुखरूपकमलेनेति रूपकम् । लोभनीया श्लाघनीया चन्द्रपद्मयो स्सहजरिपुत्या त्तिरस्कृतचन्द्रस्य पद्मस्य चन्द्रसाम्यं नीचोपमेति हेतोर्दुष्कीर्ति रासीदिति ता मपनेतुं पद्मं तन्मुखात्मना जातमिति निर्गळितार्थः । पद्मस्य मुखात्मना परिणतत्वासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः । यद्वा तिरस्कृतचन्द्रताया मपि सौन्दर्यजितचन्द्रत्वेऽपि वस्तुत स्सुधांशुसोदरमिति चन्द्रलक्ष्म्यो रेकोदरत्वप्रसिद्धेः दुष्कीर्तिनिवर्तनायेव स्वीकृतजन्मान्तरेण वदनारविन्देन अरविन्दमिव वदनं तेन लक्ष्मीमुखं चन्द्रातिशायिन स्स्वस्य चन्द्रसाम्यदुष्कीर्तिनिर्हरणार्थं रुक्मिणीमुखात्मना जातमिति निर्गळितार्थः । अथवा वस्तुत स्सुधांशुसोदरमपि चन्द्रसहजमपीदं पद्मं तिरस्कृतचन्द्रतायां वर्तते इति शेषः । अब्जं चन्द्र मवधीरयतीत्यर्थः - इति दुष्कीर्तिनिवर्तनायेव स्वीकृतजन्मान्तरेण वदनारविन्देन मुखरूपकमले नेत्यन्वयः - चन्द्रसहजस्य पद्मस्य द्वेषप्रयुक्तचन्द्रावधीरण स्यानुक्तत्वात् तज्जन्म विहाय रुक्मिणीमुखरूपेण पद्मं जातं सत् सौन्दर्यातिशयेन चन्द्रतिरस्करणं कुर्वत्सत् कीर्तिम् प्राप्नोतीति निर्गळितार्थः । अत्र पद्मं जन्मान्त-

रेऽपि चन्द्रतिरस्करणरूपं सहजगुणं न तत्याजेति अहो पद्मस्य दीर्घः क्रोध इति व्यज्यते। प्रथम मादौ मधुमात्रवैरिणा मध्वेव मधुमात्रं केवलं क्षौद्रम्, तस्य वैरिणा शत्रुणा मधुनामकरक्षोवैरिणा च - ततः सर्वथा सर्वप्राकारेण, समुज्झितमधुरेण त्यक्तमधुरवस्तुना, मधुमात्रं प्रथम मनिष्टं ततः क्रमेण सर्वमपि मधुरवस्तुजातं तस्यानिष्ट मासीदिति भावः। त्यक्तमधुरानगरेणेति च द्वारकां गतवतेत्यर्थः। हरिणापि श्रीकृष्णेनापि स्पृहणीयमाधुरीधुरीणं स्पृहणीयायाः आशास्यायाः, माधुर्याः मधुररसस्य, धुरीणं धुरन्धरं - यथा अतिविरक्तस्यापि लोकोत्तरलावण्यशालिन्यां कदाचि दनुरागः एवं मधुरवस्तुमात्रप्रद्वेषिणोऽपि कृष्णस्य एतदधरः स्पृहणीय इत्यहो अधरस्य माधुर्यातिशय इति भावः। अधरं अधरोष्ठं, बिभ्राणा दधाना - श्लेषालङ्कारः। बिम्बाधरमाधुरीसमभ्यसनाय बिम्बं बिम्बीफलमिव अधरः बिम्बाधरः - उपमानानि सामान्यवचनै रिति समासः - तस्य माधुर्याः मधुरत्वस्य समभ्यसनाय अभ्यासार्थम्। समुपस्थानीयेन उपस्थितेन आगतेनेति यावत् - 'भव्यकेये' त्यादिना कर्तरि निपातः - सुधाबिन्दुना अमृतपृषतेव स्थितेनेत्युत्प्रेक्षा। नासामौक्तिकेन नासाग्रलम्बिमुक्ताफलेन, समलंकृता भूषिता; यथा बुधोऽपि अधिकविद्यालाभार्थं गुरोः स्सविधे वसति तद्व न्मधुरोऽपि सुधाबिन्दुः अधिकमाधुर्यलाभार्थं मधरसविधे वसतीति भावः। सुधाबिन्दो रपि अधरे माधुर्य मधिकमिति व्यतिरेकोऽलङ्कारः। उपमालङ्कारस्तु ध्वनितः। अपरिपूर्णेन असमाप्तेन वदनसौन्दर्यसागरसेतुना मुखलावण्यसमुद्रसेतुनेव स्थितया सौन्दर्यातिशये सागरत्वरूपण लब्धत्वा द्रूपकोज्जीवितेय मुत्प्रेक्षा। नासिकया नासया, विराजमाना समुद्रे श्रीराम इव तद्वदनच्छायासमुद्रे मन्मथ स्सेतुं कर्तुं प्रवृत्तस्सन् तत्सेतुसमाप्तेः प्रागेव त्रिलोचन-नेत्रानले तस्य दग्धत्वा त्सेतु रपरिसमाप्त स्सन् नासिकाच्छलेन भातीति भावः। मधुपसोदरतया भृङ्गसादृश्येन, मद्यपायिसहजत्वेनेति च - मद्यपायिसहज स्स्वयं मद्यपाय्येव भवतीति भावः। श्रुतिविलङ्घननिर्विशङ्केन श्रोत्रातिक्रमणनिश्शङ्केन, निश्शङ्कं श्रोत्र माक्रमतेत्यर्थः। आकर्णान्त-विश्रान्तेनेति यावत् - वेदलङ्घननिश्शङ्केनेति च - श्लेषालङ्कारः। नयनयुगलेन नेत्रद्वयेन, अलङ्कृता भूषिता, किन्नरेशप्रतारणेन किन्नरेशो धनदः, कुत्सितनरेश शिशुपालादिश्च, तस्य वञ्चनेन तं वञ्चयित्वेत्यर्थः। मुकुन्दाभिधस्य मुकुन्दनामकस्य, कल्याणनिधेः स्वर्णनिधेः, शुभाश्रयस्य च, कृष्णस्येत्यर्थः। 'मुकुन्दः कुन्दनीकाचेति कुबेरनिधि' ष्वमरः। विलोक-नानुकूलं दर्शनानुगुणम्, सिद्धाञ्जनमिव, औषधीमूलादिनिर्मितनिध्यञ्जनमिव स्थित मित्युत्प्रेक्षा श्लेषोज्जीविता। मृगमदतिलकं कस्तूरीचित्रकं, अळीकदेशे फालतले, बिभ्राणा दधाना, यथा फाले अञ्जनरसं निधाय धनिकेनाविज्ञातं यथा तथा निधि मवलोक्य कश्चि त्कुशलो गृह्णाति तद्वदिति भावः - अनुभूतसीमन्तकर्म - अनुभूतं कृतम्, सीमन्तकर्म केशमार्गसमीकरणं यस्य तत्, सम्य ग्विभज्य संस्कृत्य, बद्धमित्यर्थः। अन्यत्र अनुभूतं प्राप्तं सीमन्ताख्यं कर्म संस्कारो येन तमिति च - गर्भाधानानन्तरं सीमन्तमिति कर्म वैदिकाः कुर्वन्तीति प्रसिद्धम्, अनेन गर्भस्य प्राथमिकत्वं व्यज्यते- श्रुतियुवतीगर्भकुहराविर्भूतं श्रुति र्वेदः, सैव युवती स्त्री,

तस्या गर्भकुहरा दुदरगुहातः, आविर्भूतं जातं, श्रुतिप्रतिपादित मित्यर्थः। रुक्मिण्या लक्ष्मीत्वेन श्रुति प्रतिपादितत्वात्तदवयवानां केशानामपि श्रुति प्रतिपाद्यत्व मुपचारा द्भवति - यथा श्रुतीनां मूर्धनो दधति तव यौ शेखरतया यौ चरणा वित्यर्थः- यद्वा श्रुतिशब्दोऽत्र लक्षणया श्रोत्रयुक्तं शिरो बोधयति। श्रुति शिर एव युवती तस्या गर्भकुहरा दाविर्भूतं शिरोज मित्यर्थः। वालजालं चिकुरप्रकरं, वबयो रभेदात् बालसङ्घं च - शिरसा श्लाघयमाना बिभ्राणा, अन्यत्र एकस्मा त्प्रथमगर्भादेव बहव शिशव स्सञ्जाता इति आश्चर्येण शिर श्चालयतीत्यर्थः। श्लेषालङ्कारः - इति पादादिकेशान्तं वर्णयित्वा अथ तस्याः गुणा न्पुनर्वर्णयति- विद्यु त्स्टि लद्रेव पावृषेण्यं प्रावृषिभवं श्रीकृष्णस्य श्रावणाष्टम्या मुत्पन्नत्वात् - अन्यत्र वार्षिकं नीलं नीलवर्णं, अमृतमुचं मोक्षदातारं, कृष्ण मित्यर्थः। अन्यत्र जलमुचं मेघ मित्यर्थः। अनुवर्तमाना अनुसरन्ती तारका तारेव तारका स्वार्थे कप्रत्ययः। अश्विन्यादि रित्यर्थः। सेव विष्णुपदलोला कृष्णपादासक्ता, आकाशे भ्रमन्तीति च-चन्द्रिका कौमुदीव, कुवलयामोदिनी भूमण्डलानन्दिनी- उत्पलविकासकारिणी च - वासरलक्ष्मीः दिनशोभा, सेव राजमण्डलं शिशुपालादिनृपसङ्घम्, चन्द्रबिम्बं च तस्य मलिनीकरणे निस्तेजस्कीकरणे, उत्सुका उत्का, दीपशिखेव दीपज्वालावत्, अनन्तस्नेहनिक्षेपयोग्या कृष्णानुरागनिधानार्हा कृष्णे स्वय मनुरागं कर्तुं कृष्ण स्स्वस्मि न्ननुरागं कर्तुं वा उचितेत्यर्थः। अमिततैलनिधानयोग्येति च - कल्पलतेव कल्पवृक्षवत्, जगदादरणीयपल्लवानुषक्ता जगदादरणीयः लोकस्पृहणीयः, सचासौ पल्लवो विटः 'षिड्गः-पल्लवको विट' इत्यमरः। कृष्ण इत्यर्थः। तथोक्तं कर्णामृते लीलाशुकेन - 'जगदादरणीयजारभाव' मिति। अन्येषां जारत्वन्तु जगन्निन्द्यमिति भावः। तस्मिन् अनुषक्ता अनुरक्ता, जगदादरणीयैः पल्लवैः किसलयैः अनुषक्ता युक्तेति च - कामदुघेव कामधेनु रिव, गोविन्दाधीनजीवना भगवदधीनजीविता, तस्य प्राणेशत्वा दिति भावः। कोपाधीनजीवनेति च - धेनूनां गोपपाल्यत्वात् - यद्वा - गोविन्दो बृहस्पतिः तदधीनजीवना बृहस्पते र्देवपुरोहितत्वा दिति भावः। 'गोष्ठाध्यक्षेऽपि गोविन्द' इत्यमरः। अपिना कृष्णबृहस्पत्योरपीति तत्रैव व्याख्यातं च - चिन्तामणिः समुद्रजो रत्नविशेषः स इव अभीष्टस्पर्शनं प्रियालिङ्गनं इष्टार्थदानं च - तत्र बद्धादरा जातप्रीतिः 'विश्राणनं वितरणं स्पर्शनं प्रतिपादन' मित्यमरः। अमृतधारा सुधासार इव अवश्यम्भावी अवश्यं भवतीत्यवश्यम्भावी अनिवार्य इत्यर्थः। विष्णुरथापहारः कृष्णकर्तृकरथकरणकापहरणं गरुडकर्तृकापहरणं च यस्या स्सा- 'नागान्तको विष्णुरथ' इत्यमरः। सिद्धरसलहरीव औषधीमूलादिना कृतशुद्धिः पारद स्सिद्धरस इत्युच्यते-- 'चपलो रस स्सूत श्च पारदे' इत्यमरः। तस्य लहरी प्रवाहः सेव - यद्वा सिद्धानां सम्बन्धिनी रसलहरीत्यर्थः। जातरूपौन्नत्यलालसधन्यजनैकलभ्या - जाता उदिता, रूपौन्नत्यलालसा सौन्दर्यातिशयस्पृहा, यस्य तेन अन्यत्र जातरूपस्य सुवर्णस्य, औन्नत्ये अभिवृद्धौ, लालसेन लोलुपेनेति च - धन्यजनेन कृतेन कृष्णेनेत्यर्थः - कुशलेनेति च - यद्वा तत्र साधुरिति यतिधने साधुर्धन्यः

स चासौ जनः तेनेति वा, एकेनैवलब्धालब्धुं शक्या पारदरसलहर्या सिद्धा स्सुवर्णं कुर्वन्तीति प्रसिद्धं- दिव्यौषधिरिव दिव्यमूलिकाविशेष इव, सकलाङ्गजरुजापहारिस्पर्शा- सकलाया स्समस्तायाः, अङ्गजरुजायाः मन्मथव्यथायाः, शरीरजातरोगस्य च, अपहारी निवारकः, स्पर्श स्सम्पर्कः यस्या स्सा, कुमुदिनीव उत्पललतेव, विधुस्पृहणीयपुष्पोद्गमा विधुना कृष्णेन चन्द्रेण च, स्पृहणीय आशास्यः, पुष्पोद्गमः रज आविर्भावः, प्रसूनाविर्भाव श्च यस्या स्सा - रत्नमयमेखलेव मणिप्रचुर-काञ्चीव, कल्याणसम्बद्धा मङ्गळयुक्ता, स्वर्णबद्धेति च - न हि स्वर्णं विना मणयो मेखलाकारेण वर्तितुं क्षमन्ते इति भावः। मणिमञ्जरीव मणिसङ्घ इव, आलम्बितगुणगणा धृतसकलकल्याणगुणा, धृतरज्जुगुणेति च - रज्जुग्रथनं विना नहि मणयो धर्तुं शक्यन्ते इति भावः। रत्नमालेव मणिहार इव, अनन्तरावेशितसायकरत्ना। हृदयस्थापित श्रीकृष्णा, रत्नमिव नायक इत्युपमितसमासः। मध्यस्थापितनायकमणि रितिच-शान्तिरिव हरियोगानुकूला श्रीकृष्णसम्बन्धानुगुणा, भगवद्ध्यानानु-कूला च - करुणा दया, सेव परसुखावहा परस्य परमात्मनः कृष्णस्य, सुखावहा आनन्द-कारिणी, परेषां सुखावहेति च - परदुःखप्रहाणेच्छा हि करुणेति भावः। क्षमा क्षान्ति रिव, पुरुषोत्तमनिर्वाणहेतुभूता कृष्णसुखकारणभूता, पुरुषश्रेष्ठानां मुक्तिहेतुभूतेति च - श्रद्धेव कर्म-स्वादर इव, पुरुषोत्तमेन कृष्णेन कृतानां सकलेष्टीनां सर्वमनोरथानां, साफल्यस्य सफलत्वस्य, सम्पादिका प्रापका, श्रीकृष्णमनोरथान् सर्वानपि सफलयन्तीत्यर्थः। अन्यत्र पुरुषोत्तमैः पुरुष-श्रेष्ठैः, कृतानां सकलाना मिष्टीनां यागानां साफल्यसम्पादिका 'श्रद्धयादेयं अश्रद्धयाऽदेय' मिति श्रुतेः। श्रद्धया कृतमेव सर्वं फलतीति भावः। मुक्ति र्मोक्ष इव, विबुधश्लाघनीया विबुधैः देवैः कविभिश्च, श्लाघनीया आशास्या, देवानामपि प्रीतिदायिनीत्यर्थः। तीर्थयात्रेव शिशुपालदुरवापा शिशुपालस्य शिशुपालानां च, दुरवापा दुर्लभा, शिशुमतां हि तीर्थाटनं दुष्करम्-सुरभि रौरिव, गदाधरभीरुभावोचिता धरतीति धरः गदायाः कौमोदक्याः धरः गदाधरः कृष्णः, तस्य भीरुः स्त्री तस्या भावः कृष्णदारत्व मित्यर्थः। तत्र उचिता योग्या, अन्यत्र गदाधरात् गदापाणे, भीरुभावः भीतत्वं, तद्युक्तं तेति-भागीरथी गङ्गेव जगतीपतितपोलभ्या जगतीपतिः कृष्णो, भूपति र्भगीरथश्च, तेन तपसा लभ्या - यमुनेव कृष्णगुणप्रणयिनी श्रीकृष्णगुणरागिणी नीलगुणवतीति च - यमुनाया नीलवर्णत्वात् - सरस्वतीव तन्नामिका नदीव, विश्वम्भरान्तर्गतजीवना कृष्णान्तर्गतप्राणा धरान्तर्ग-तोदकेति च - कवेरतनया कावेरीव, चोळदेशगत मधुरतरपयोधरा चोळदेशः कूर्पासदेशः, 'चोळः कूर्पासकोऽस्त्रिया' मित्यमरः। तं गतौ प्राप्तौ कूर्पाससंछन्नावित्यर्थः। मधुरतरौ अति सुन्दरौ पयोधरौ कुचौ यस्या स्सा - अन्यत्र चोळाख्यदेशगतं मधुरतरं स्वादु पयः जलं तस्य धरा धारिणी चोळदेशे तत्प्रवाहप्रसरणादितिभावः। यथोक्तं भगवता वेदान्तदेशिकेनः - 'खेलच्चोळ-वधूविधूतकबरीशैवालितामन्वहं पश्येम प्लवमानहंसकिरणस्मेरां कवेरात्मजा' मिति। सरयूरिव हंसावासमानसप्रसृतसर्वतोमुखाटोपा हंसस्य परमात्मनः कृष्णस्य, आवासभूते आश्रयभूते, मानसे मनसि, प्रसृताः व्याप्ताः, सर्वतोमुखाः सर्वप्रश्रीनाः, आटोपास्सम्भ्रमाः यस्या स्सा,

सप्राणेशं, ससम्भ्रमं चास्या हृदय मित्यर्थः । हंसाना मावासभूता न्मानसा त्सरस स्सकाशा त्प्रसृतः निर्गतः सर्वतोमुखाटोपः उदकाडम्बरः यस्यास्सेति च - मानससरःप्रसृता सरयू - नदीति प्रसिद्धम् । विरजेव वैकुण्ठलोकस्थनदीव वैकुण्ठसमीपगामिनी कृष्णसविधं गच्छन्ती वैकुण्ठपत्तनसमीपे प्रवहन्तीति च - तुङ्गभद्रेव मधुरतरसर्वतोमुखाटोपा मधुरतरः अतिसुन्दरः सर्वतोमुख स्सर्वपथीनश्च आटोप स्सम्भ्रमो यस्या स्सा, अति स्वादुजलाडम्बरेति च - कुसुम-मञ्जरीव पुष्पगुच्छवत् । आळीकदम्बकरञ्चिता सखीजनपरिवृता, अन्यत्र आळीकदम्बपरिवृतेति छेदः - भृङ्गस्त्रीसन्दोहव्याप्ता ‘ जातेरस्त्रीविषया दयोपधादिति स्त्रियां ङीष ’ आळीत्यत्र तु - ‘कृदिकारादक्तिन - इति ङीप् ’ कीर्तिरिव यश इव सुखस्वरूपा सुखकराकृतिः, सुकृतपरम्परेव पुण्यसङ्घ इव हरिप्रीतिजनिका भगवत्तोषकारिणी । पूर्वे श्लिष्टसाधर्म्योपमालङ्कारः । इमौ द्वौ तु केवलोपमालङ्कारावेव । १००

**ग ॥ कृताभ्यर्चना च निर्गत्य भवानीभवनत स्सह सखीजनेन देवमायेव मनुजदुरवापा अघटितघटनापटीयसीव सकलमपि राजमण्डलं पूर्वपक्षवास्तव्य मनालोकपात्रतापादनेन स्वल्पीकुर्वाणा कृष्ण पक्षाश्रितं राजमण्डल मभिवर्धयन्ती समन्दाक्षं मन्दमन्दं मुकुन्दस्यंदनाभिमुख मयासीत् ॥ १०१**

कृतेति– भीष्मतनयेति कर्तृपदस्यात्राप्यन्वयः । कृताभ्यर्चना कृतभवानीपूजना च भवानीभवनतः पार्वत्यालयात् सखीजनेन सह सखीभिस्सह निर्गत्य निष्क्रम्य, देवमायेव देवानां-मायेव, मनुजदुरवापा मनुष्यदुर्लभा मनुष्यदुर्विज्ञेयेति च - अघटितघटनापटीयसी च अघटित-स्यापि घटनायां पटीयसी समर्था च। तत्त्वतोऽघटितमपि माया घटयति हि इन्द्रजालव-दित्येकोभावः । अघटितः पित्रा पतित्वेन अनुद्दिष्टः कृष्ण इत्यर्थः । तेन सह घटनायां संयोगे, पटीयसी उपायशालिनीत्यर्थः । इति प्रकृतोभावः । पूर्व पक्षवास्तव्यं दूष्यकोटिप्रविष्टं अनभि मतमिति यावत् , अन्यत्र शुक्लपक्षे वर्तमानं च सकलं सर्वमपि कलाभि स्सहितमिति च, राज-मण्डलं नृपबृन्दं चन्द्रबिम्बं च । अनालोकपात्रतापादनेन दर्शनानर्हत्वसम्पादनेन निस्तेजस्कता करणेनेति च - आलोकशब्दस्य दर्शनप्रकाशोभयार्थकत्वात् आलोकपात्रं नभवती त्यनालोक-पात्रं तस्य भाव स्तत्तेति प्राकरणिकः - आलोकाभावः । अनालोकः अप्रकाशः तस्य पात्र मर्हः तस्यभाव स्तत्तेत्यप्राकरणिकश्च समासः । स्वल्पीकुर्वाण तृणीकुर्वन्तीत्यर्थः । कृष्णपक्षाश्रयं श्रीकृष्णपक्षावलम्बि बहुळपक्षस्थमिति च । राजमण्डलं राजसङ्घं चन्द्रबिम्बं च । अभिवर्धयन्ती आनन्दयन्ती प्रवृद्धंकुर्वन्तीति च । स्वप्रतिभटं सम्पूर्णचन्द्रं न्यूनीकुर्वन्ती, दीनं चन्द्रन्तु कलादानेन वर्धयन्तीति च कृष्णव दियमपि शत्रुसंहारिणी दीनशरण्या चेति व्यज्यते । एवम्भूतासती समन्दाक्षं सलज्जं यथातथा मन्दंमन्दं अतिमन्दं यथा तथा - नित्यवीप्सयोरिति द्विर्भावः । मुकुन्दस्यन्दनाभिमुखं श्रीकृष्णरथाभिमुखं यथा तथा च - अयासी जगाम । १०१

श्लो ॥ राजमण्डल मासन्नं त्यक्त्वा चक्रैकभासुरम्
सवितृप्रेमपात्रं सा पद्माप्तस्यन्दनं ययौ ॥ १०२

राजेति— सवितृप्रेमपात्रं सवितुः पितुः भीष्मस्य, प्रेमपात्रं स्नेहविषयभूता, सा रुक्मिणी, आसन्नं सन्निहितं, राजमण्डलं शिशुपालादिनृपबृन्दं, त्यक्त्वा विहाय, चक्रैकभासुरं चक्रेण सुदर्शनेन, एकभासुर मत्युज्ज्वलं, पद्माप्तस्यन्दनं पद्मायाः लक्ष्म्याः, आप्तः प्रियः कृष्णः, तस्य स्यन्दनं रथं, ययौ प्राप। व्यङ्ग्यार्थस्तु— सवितृप्रेमपात्रं सवितु स्सूर्यस्य प्रेमपात्रं सा पद्मिनी आसन्नं सूर्यमण्डला चन्द्रमण्डलस्य अधस्स्थत्वात्सन्निहितमित्यर्थः। राजमण्डलं चन्द्रमण्डलं, त्यक्त्वा तत्र प्रीति मकृत्वेत्यर्थः। चक्रैकभासुरं एकचक्रदीप्तं 'सप्त युञ्जन्ति रथ मेकचक्र' मिति श्रुतेः। पद्माप्तस्यन्दनं पद्माना माप्त स्सूर्यः तस्य स्यन्दनं रथं ययौ, तत्र प्रीतिं चकारेत्यर्थः। अन्योऽप्यर्थः प्रतीयते— सवितृप्रेमपात्रं एतेन महाराजस्यापि भीष्मस्य प्रेमपात्रत्वेन अतिसुन्दरा सुगुणेति च प्रतीयते। सा रुक्मिणी चक्रैकभासुरं राष्ट्रैकोज्ज्वलं चक्रवर्तित्वाद्भासुरमित्यर्थः। एतेन चक्रवर्तिसुतायाः अस्याः चक्रवर्तिसम्पर्कः श्लाघ्यः इति प्रतीयते— आसन्नं सन्निहितम् एतेन 'सिद्ध मन्नं परित्यज्य भिक्षा मटति दुर्मति' रिति न्यायात। सन्निहितस्य अपरित्याज्यत्वं सूच्यते— राजमण्डलं एतेन सजातीयत्वा द्योग्य स्सम्बन्ध इति व्यज्यते— त्यक्त्वा हिताहितज्ञाना- भावादिति भावः— पद्मया सम्पदा आप्तः पद्माप्तः धनिकः इत्यर्थः। तस्य स्यन्दनं ययौ धनलोभादिति भावः॥ १०२

श्लो ॥ प्रेयसीहरणा दन्यदनिच्छन् हरणं हरिः।
चचाल चपलं हृष्टः पश्यतां सर्वभूभुजाम् ॥ १०३

प्रेयसीति— हरिः कृष्णः। प्रेयसीहरणात् रुक्मिण्यपहारात् रुक्मिणीरूपात् हरणादिति च- अन्यद्भिन्नं हरणं यौतकं विवाहे जामातु र्दुहितुश्च दीयमानं वस्तु— 'यौतकादितु तद्देयं सुदायोहरणं च त' दित्यमरः। अनिच्छन् सन् हृष्टः, प्रियायाः प्राप्त्या सन्तुष्टश्च सन्, सर्वभूभुजां सर्वेषां नृपाणां, पश्यतां अवलोकयतां सतां पश्यत स्सर्वानपि भूपाला ननादृत्येत्यर्थः। षष्ठीचानादरे इति षष्ठी — चपलं त्वरितं चचाल असरत् ॥ १०३

ग ॥ अथ जरासन्धादय स्साभिमानं युद्धाय बद्धादरा मधुसूदन मनुधाव्य विधाय च विविध मायोधन मुपजातपराजया भग्नरथा शिथिलमनोरथाश्च भूत्वा प्रत्यावृत्य त्रिदिवपरिभ्रष्टमिव नहुषं पुरुहूतपातितमिव त्रिशङ्कु मादगळितविद्यमिव विपश्चितं पश्यतोहरप्रमुषितरत्नमिव सार्थवाह मतिदूनमानसं शिशुपाल माश्वास्य तेन-सह स्वस्वभवन मभजन्॥ १०४

अथेति– अथ रुक्मिणीं हृत्वा भगवत्प्रयाणानन्तरं, जरासन्धादयः जरासन्धप्रमुखा शिशुपालपक्षस्थाः राजानः, साभिमानं अभिमानेन सहितं यथातथा, युद्धाय युद्धं कर्तुमित्यर्थः। बद्धादराः धृतप्रीतयस्सन्तः, मधुसूदनं कृष्ण मनुधाव्य अनुद्रुता भूत्वा, विविधं बहुविधं, आयोधनं युद्धं विधाय कृत्वा च, कृष्णेन सहेत्यर्थः। उपजातपराजयाः सञ्जातापजयाः भग्नरथाः नष्टस्यन्दनाः, शिथिलमनोरथा श्च व्यर्थकामाः भूत्वा प्रत्यावृत्य पुनरागत्य, त्रिदिव-परिभ्रष्टं स्वर्गात्पतितं नहुषमिव, पुरुहूतपातितं इन्द्रभ्रंशितं त्रिशङ्कुमिव, प्रमादगळितविद्य-प्रमादोऽनवधानता–तेन हेतुना गळिता विस्मृता विद्या यस्य तं विपश्चितं विद्वांसमिव– पश्यतो-हरप्रमुषितरत्नं चोरापहृतमणिकं सार्थवाहं वणिजमिव अतिदूनमानसं अतिभिन्नहृदयम्। मालोपमालङ्कारः। शिशुपाल माश्वास्य 'दैवाधीनेषु वित्तेषु पुंसां का? नाम वाच्यते' त्यादिरूपेण-तं शान्तदुःखं कृत्वेत्यर्थः - तेन शिशुपालेन सह स्वस्वभवनं स्वस्वगृहं अभजन् प्रापुः॥ १०४

ततः– जरासन्धादि पराजयानन्तरम्।

**श्लो ॥ हरि मायोधने हत्वा गृह्णन्नायामि सोदरीं**
**इति प्रतिश्रुतं सत्यममर्षादथ रुक्मिणा ॥** १०५

हरिमिति– हरिं कृष्ण मायोधने युद्धे हत्वा मारयित्वा, अथ ततः, सोदरीं सहजां रुक्मिणीं गृह्णन् स्वीकुर्वन्, आयामि आगच्छामीति-गृह्णन् न आयामीति च छेदः-नायामीत्यन्वयः इति च व्यज्यते। इत्येवं रुक्मिणा रुक्मिणीसोदरेण, अमर्षा दसहनाद्धेतोः सत्यं यथार्थं प्रतिश्रुतं प्रतिज्ञातम्। भावे क्तः। यद्वा - इति रुक्मिणा अमर्षात्प्रतिज्ञातमपि सत्यमेवाभूत् इत्यन्वयः - विरोधाभासालङ्कारः॥ १०५

**ग ॥ एवं राज्ञा मग्रतः प्रतिज्ञाय सक्रोधमक्षौहिणीप्रमितवाहिन्या सह मधुसूदन मभ्यधावत् ॥** १०६

एवमिति– एवं राज्ञा मग्रतः राजमण्डलस्य अग्रे, प्रतिज्ञाय प्रतिश्रुत्य, अक्षौहिणीप्रमित-वाहिन्या अक्षौहिणीपरिमितसेनया सह, सक्रोधं सकोपं यथातथा मधुसूदनं कृष्ण मभ्यधावत् अभिदुद्राव। रुक्मीति – शेषः॥ १०६

**श्लो ॥ स्वसार मादाय गत स्स रुक्मिणः पुनः प्रयच्छेत्किमु पश्यतो हरः**
**स्वमृत्यवेऽथापि नकृष्णवर्त्मभा क्तथाविधः क्वापि विलोकितः श्रुतः ॥**

स्वसारमिति– सः रुक्मिणः स्वसारं भगिनी मादाय गृहीत्वा गतः यातः पश्यतोहरः पश्यतस्सतो हरतीति पश्यतोहरः प्रसिद्धचोरः कृष्णः, नतु गूढचोर इत्यर्थः। पुनः भूयः, प्रयच्छेत् दद्यात्किमु? न प्रयच्छे देवेत्यर्थः। यदि गूढचोरः तर्हि प्रयच्छेत्– अयन्तु पश्यतो हरएव कुतः

पुनः प्रयच्छे दितिभावः। अथापि तथापि स्व मृत्यवे स्वमरणार्थं कृष्णवर्त्मभाक् कृष्णमार्गगतः तथाविधः रुक्मिसदृशः पुमान्, क्वापि न विलोकितः कुत्रापि नदृष्टः, नश्रुतः नापि श्रुत इत्यर्थः। यद्वा— विलोकितश्चासौ श्रुतश्च विलोकितश्श्रुत इत्येकमेव पदं— पश्यन्तं सराजमण्डलं स्वमनाहृत्यैव प्रसह्य य स्स्वसारं चुचोर, तेन सह कलहे स्वस्य मृत्युर्ध्रुव इत्यनालोच्य, रुक्मी कृष्ण मभ्यधावत्। एवंविधो मूढस्तु अदृष्टश्रुतचर इति निर्गळितार्थः। व्यङ्ग्यार्थस्तु— रुक्ममस्यास्तीति रुक्मी धनिकः तस्य स्वसारं निजसारभूतं धनमित्यर्थः। यद्वा स्वं धनं तस्य सारं स्थिरांशं आदाय गतः सः पश्यतोहरः चोरः, पुनः प्रयच्छेत्किमु तथापि धननाशेऽपि, स्वमृत्यवे कृष्णवर्त्मभा गग्निं प्रविष्टः धननाशप्रयुक्तदुःखासहिष्णुत्वादितिभावः। तथाविधः क्वापि न दृष्टः नापि श्रुतः — अर्थेभ्यश्च पराः प्राणाः, आत्मानं सततं रक्षे द्दारै रपि धनैरपि— इति वचनाभ्यां स्वल्पधनार्थ मुत्कृष्टप्राणापहारो न युक्तः। किञ्च 'जीवन् भद्राणि पश्यतीति' वचनाच्च जीवतः पुन र्धनादिभद्रलाभ स्स्यादेवेत्येव मनालोच्य अग्निप्रवेशेन मृतो न दृष्टश्रुतचर इति निर्गळितार्थः॥ १०७

**ग ॥ गत्वा च मधुसूदनसविध मिद मवादीत् ॥** १०८

गत्वेति॥ मधुसूदनसविधं कृष्णसमीपं, गत्वा इदं वक्ष्यमाणं वचन, मवादीच्च अवोचत्॥ १०८

**श्लो ॥ आयान्ति कर्कशमुखा न पुन स्स्वसार**
**मप्राप्य जीवति हि रुक्मिणि मार्गणौघाः**
**क्रूरस्वभाव! मलिन! त्यज गाढमुष्टि**
**मत्यागत स्स्वपरिपालनधीः खला ते ॥** १०९

आयान्तीति॥ रुक्मिणि मयि जीवतिसति कर्कशमुखाः तीक्ष्णाग्राः, मार्गणौघाः बाणगणाः, स्वसारं भगिनी, मप्राप्य अगृह्य, कृष्णहनद्वारेत्यर्थः पुनर्नायान्ति; अमोघा ममबाणा इत्यर्थः। हेक्रूरस्वभाव! दुष्टबुद्धे!, अतएव मलिन पापिष्ठ! गाढमुष्टिं दृढमुष्टिं, दृढाभि निवेश मित्यर्थः। त्यज विसृज। अत्यागतः रुक्मिण्या अविसर्जनात् रुक्मिणी मत्यक्त्वेत्यर्थः। ते तव, स्वपरिपालनधीः आत्मरक्षाबुद्धिः खला विफला। रुक्मिणीं नत्यजसि चे त्त्वं न भविष्यसीत्यर्थः। व्यङ्ग्यार्थस्तु- कर्कशमुखाः कटुभाषिणो, मार्गणौघाः याचकसङ्घाः, रुक्मिणि धनिके, जीवति सति, स्वसारं सर्वस्व, मप्राप्य पुन र्नायान्ति- यदि मृत स्स्यात् तर्हित्यजेयुः अन्यथा नेति भावः। हेक्रूरस्वभाव! मलिन!, गाढमुष्टिं लोभं, त्यज-अत्यागतः धनाभावेन ते स्वपरिपालनधीः धनसञ्चयनेच्छा, खला दुष्टा विफलेतियावत्। 'य द्ददाति य दश्नाति तदेव धनिनां धन' मित्युक्तत्वा दिति भावः। परमार्थस्तु- स्वसार मप्राप्य पुनः केवलं जीवति व्यर्थजीविते इत्यर्थः। रुक्मिणि कर्कशमुखाः मार्गणौघाः त्वदीयबाणाः नायान्ति न

पतन्ति त्वया सह युद्धेपराजिते अतएव प्राणावशिष्टे मयि परमकारुणिकस्य तव बाणप्रसारो न स्यादेवेत्यर्थः । क्रूरस्वभाव मलिन! क्रूरस्वभावे ष्वस्मादृशेषु विषये मलिन! साग्रह,! गाढमुष्टि मभिनिवेशं त्यज; कृपां गृहाणेत्यर्थः । ते तवेति कर्तरि षष्ठी- अत्यागतः त्वत्कर्तृकत्यागाभा-वादित्यर्थः । करुणया मां त्वयि अत्यजति सतीत्यर्थः । स्वपरिपालनधीः ममेति शेषः-खला व्यर्था । मा महं परिपालयितुं न शक्तो मीत्यर्थः ॥ १०९

ग ॥ एव मभिहितवति रुक्मिणि ॥ ११०

एवमिति- एव मुक्तरीत्या, रुक्मिणि अभिहितवति सति उक्तवतिसति ॥ ११०

श्लो ॥ तत्काल मादित गताहिभयो न चन्द्र
हासं हरिः पर ममुष्य यशोऽपि तादृक्
सिक्तानि नो रिपुवपूंषि परं तदास्रैः
स्वर्गाङ्गनातनुलता अपि सत्वजै स्तैः ॥ १११

तत्कालमिति– तत्कालं तस्मिन्काले- 'कालाध्वनो रत्यन्तसंयोगे द्वितीया'- गता-हिभयः निवृत्तशत्रुभयः, 'महीभुजा महिभयं स्वपक्षप्रभवं भय' मित्यमरः । हरिः परं कृष्ण-एव, चन्द्रहासं खड्गं, नादित न स्वीचकार । 'खड्गे तु निस्त्रिंश चन्द्रहासासिरिष्टय' इत्यमरः । किन्तु अमुष्य कृष्णस्य, सम्बन्धि तादृक् तं कृष्णमिव पश्यन्ति यत तादृक् कृष्णतुल्यं, तद्वद्गताहिभय मित्यर्थः । अन्यत्र निवृत्तराहुभयमिति च । यशोऽपि कीर्ति श्च, चन्द्रहासं चन्द्रपरिहास, मादित चकार । खड्गं स्वीचकारेति च । स्वस्य नाहिभयं; चन्द्रस्य तु तदस्तीति जहासेत्यर्थः । यद्वा तत्कालं गताहिभयो हरिः चन्द्रहासं परं चन्द्रतुल्यं हासमेव नादित निर्भयत्वा न्मन्दस्मितसुन्दरवदनारविन्दोऽभू दित्यर्थः । किन्तु तादृक् चन्द्रहास मित्यर्थः-चन्द्रस्येव हासः प्रकाशो यस्य तत्, अमुष्य रुक्मिणः, यशोऽपि आदित अपजहार । हेलया रुक्मिणं जिगाय; तत्प्रतिष्ठां विलोपयामासेत्यर्थः । तदा अस्रैः रक्तैः, रिपुवपूंषि परं शत्रु-शरीराण्येव, नो सिक्तानि नाभिषिक्तानि, किन्तु सत्वजैः आनन्दजैः, तैः अस्रैः अश्रुभिः 'अश्रु-शोणितयो रस्र' मिति भास्करः । रक्तैरिति च- स्वर्गाङ्गनातनुलता अपि स्वर्नारीशरीरवल्-र्योऽपि, सिक्ता इति लिङ्गविपरिणामेन योज्यं; नूतनपतिलाभादिति भावः । अत्र हरि र्यशश्च चन्द्रहास मादित, रिपुवपूंषि स्वर्गाङ्गनातनुलताश्च अस्रै स्सिक्तानि, इत्येकक्रियान्वया तुल्य-योगितालङ्कारद्वयम् । हरि श्चन्द्रहासं तादृगमुष्य यश श्चादितेत्यर्थान्तरवर्णने तु समुच्चया लङ्कारः । अचेतनस्य यशस श्चन्द्रपरिहासासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्ति रलङ्कारः । तेन च यशस श्चन्द्रव्यतिरेकः स्वयं गताहिभयं; अतएव यश श्चन्द्रं जहासेति साभिप्रायविशेषणा त्परिकरालङ्कारः- स च श्लेषोज्जीवितः- गताहिभयः अतएव हरिः चन्द्रतुल्यं हास मादितेत्यर्थे

सपरिकरोपमालङ्कारः । एवं चन्द्रहासं यशोपीत्यत्रापि उपमालङ्कारः । एतेषां यथायथं संसृष्टि-सङ्करादिक मूह्यम् ॥ १११

**ग ॥ अथ निहितवाहिनीवाहन मुपजातपराजयं रुक्मिणं हन्तुकामे सति योधयूथे ॥** ११२

अथेति- अथ युद्धानन्तरं, योधयूथे कृष्णभटसङ्घे, निहतवाहिनीवाहनं वाहिनी सेना, वाहनानि गजादीनि, सेनाङ्गत्वाद्द्वन्द्वे एकत्वं । वाहिनी च वाहनानि च वाहिनीवाहनं-यद्वा वाहिन्या स्सेनात्वेन तदङ्गत्वानुपपत्तेः वाहिनीवाहनानीत्येव । निहतानि नष्टानि, वाहिनी वाहनानि यस्य तं- अतएव उपजातपराजयम् , रुक्मिणं हन्तुकामे हन्तुं मारयितुं, कामो यस्य तस्मिन् सति । ११२

**श्लो ॥ प्रेयसीदीनवचन सुधारस मधाद्धरिः**
**रुक्मिण स्त दभू च्चित्रं मरणाभावसाधनम् ॥** ११३

प्रेयसीति– हरिः कृष्णः, प्रेयसीदीनवचनसुधारसं - प्रेयस्याः रुक्मिण्याः, दीनवचनानि कृपणवचांसि, 'मम भ्रातरं त्रायस्व! तव दासी भविष्यामी,त्यादीनि'-तेषां तेष्विति वा, सुधारस ममृतरसम्, अधात् पपौ । 'धेट् पाने- लङि गातिस्थाघुपेति सिचो लुक् ' तत् श्रीहरिकृता-मृतरसपानम्, रुक्मिणः मरणाभावसाधनं मृतिनिवारणसाधनम्, अभूत् आसीत् - चित्र मद्भुत मिदं - य एवामृतं पिबति तस्यैव मरणाभाव इति सिद्धे सति, तद्वैपरीत्येन हरा वमृतं पिबति सति रुक्मिणो मरणाभावोऽभूदिति वचनं चित्र मित्यर्थः । अत एव असङ्गत्य-लङ्कारः । ' विरुद्धभिन्नदेशत्वं कार्यहेत्वो रसङ्गति ' रिति लक्षणात् । रुक्मिणीप्रार्थनया रुक्मिणं कृष्णो मुमोचेति वक्तव्ये सति, भङ्ग्यन्तरेण कथना त्पर्यायोक्त मलङ्कार श्च ॥ ११३

**ग ॥ तदनु केशवनिदेशेन मुण्डितमुण्डनेन समुपजातवैरूप्यं प्रग्रहै र्बबन्धुः ॥** ११४

तदन्विति– तदनु रुक्मिणीप्रार्थनानन्तरम्, मुण्डितमुण्डं वपितशिरसम्, ' मुण्डो दैत्यान्तरे राहौ मूर्ध्नि त्रिषु तु मण्डित'मिति भास्करः। श्रीकृष्णेनेति शेषः । अत एव उपजात-वैरूप्यं सञ्जातविरूपभावम् , एवं रुक्मिणं केशवनिदेशेन कृष्णाज्ञया, हेतुना प्रग्रहैः रथवाह-बन्धनरश्मिभिः, ' तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोपि ' चेत्यमरः । बबन्धुः बन्धितवन्तः; योधाः इति शेषः ॥ ११४

**स्थाने हि तत् ॥**

तत् रुक्मिणो मुण्डनं, स्थाने हि युक्तमेव । तदेव दर्शयति ॥

श्लो ॥ अन्तभाजि धनुर्वेदनैपुण्ये तस्य यद्भवेत्
समावर्तनमस्याङ्गं चिकुरश्मश्रुमुण्डनम् ॥ ११५

अन्तेति– तस्य रुक्मिणः, धनुर्वेदनैपुण्ये धनुर्वेदे 'आयुर्वेदो धनुर्वेद' इत्युपवेदत्वेन परिगणिते, धनुर्विद्याया मित्यर्थः। यन्नैपुण्यं कौशलम्, तस्मिन् तथोक्ते, अन्तभाजि सति परिपूर्णे सति, नष्टे सति च यत् समावर्तनं तन्नामकसंस्कारो भवेत्, वेदसमावर्तनस्यावश्यकत्वा दिति भावः। चिकुरश्मश्रुमण्डनं - चिकुरा शिरोजाः श्मश्रूणि पुरुषस्य ओष्ठयो श्चिबुके च वर्तमानाः रोमसङ्घाः, 'तद्वृद्धौ श्मश्रु पुम्मुखे' इत्यमरः। (आन्ध्रे गड्डमुमीसालु) तेषां मुण्डनं वपनम्, अस्य समावर्तनकर्मणः अङ्गं अङ्गभूतम्, समावृत्तस्य वपनानन्तरं समावर्तन-संस्कारविधाना दिति भाव.। अत्र क्रोधात्कृते चिकुरश्मश्रुमुण्डने समावर्तनाङ्गत्वारोपणा दभेदरूपकं। तच्च अन्तभाजीति श्लेषोज्जीवितम् ॥ ११५

ग ॥ अथ परमकारुणिकेन रामेण मोचिते प्रतिनिवृत्तमाने रुक्मिणि प्राणमात्रशेषे हरिरपि द्वारका मुपगम्य विधिना रुक्मिणीं पर्यणैषीत् ॥ ११६

अथेति– अथ बन्धनानन्तरं, परमकारुणिकेन अतिदयालुना, रामेण बलेन, मोचिते त्याजिते, प्राणमात्रशेषे प्राण एव प्राणमात्रं शेषो यस्य तस्मिन्, बलाहङ्कारादिकं तु नष्ट मित्यर्थः। रुक्मिणि प्रतिनिवर्तमाने अपगते सति, हरिरपि कृष्णश्च, द्वारका मुपगम्य प्राप्य, विधिना स्वसूत्रोक्तविधिमनतिक्रम्येत्यर्थः। रुक्मिणीं पर्यणैषीत् परिणीतवान् ॥ ११३

श्लो ॥ तदाशयग्रहो द्वेधा रचितो मुरवैरिणा
द्विजन्मसाक्षिकः पूर्वः परः पावक साक्षिकः ११७

तदिति– मुरवैरिणा कृष्णेन, द्वेधा द्वैविध्येन, वर्तमान इति शेषः। द्विधाभूत इत्यर्थः। तदाशयग्रहः तस्याः आशयो मनः, तस्य ग्रहः ग्रहणं, शोधन मित्यर्थः। तस्या आ समन्ता च्छय-ग्रहः पाणिपीडनमिति च 'पाणिः कर श्शयो हस्त' इतिवामनमालायाम्। रचितः कृतः तन्मनश्शोधनं तत्पाणिपीडनं चेत्युभयमपि कृतमित्यर्थः। श्लेषालङ्कारः। पूर्वः प्रथमः, मनश्शोधन रूप इत्यर्थः। द्विजन्मसाक्षिकः रुक्मिणीप्रेषितब्राह्मणसाक्षिकः, अभवत् इतिशेषः। परः द्वितीयः पाणिग्रहणरूप इत्यर्थः। पावकसाक्षिकः अग्निसाक्षिक आसीदिति शेषः। ब्राह्मणद्वारा तन्मन श्शोधनं चकार; अग्नेः पुरत स्तत्पाणिग्रहणं चकारेति च भावः ॥ ११७

ग ॥ अथ कदाचन पुरा पुरारिनयनज्वालावलीढः काम श्शरीरकामः कमलापति मनुप्राविशत् ॥ ११८

अथेति– अथ रुक्मिणीपरिणयानन्तरं, कदाचन कस्मिंश्चित्समये, पुरा पूर्वं, पुरारिनयन ज्वालावलीढः शिवनेत्राग्निशिखादग्धः, कामः मन्मथः, शरीरकामः तनुवाञ्छ स्सन्, कमलापतिं श्रीकृष्ण मनुप्राविशत् प्रविवेश। स्वस्य आदावपि कमलापतिपुत्रत्वात् अधुनापि तदेवोचितमिति मत्वा, श्रीकृष्णरेतसि प्रविष्टोऽभू दित्यर्थः ॥ ११८

**ग ॥ ततश्च वैदर्भीगर्भा दाविर्भूत मेन मनतीतसूतकं प्रद्युम्ननामानं शम्बर स्स्ववैरिणं मत्वा हृत्वा च मध्येसमुद्र मक्षिपत् ॥ ११९**

तत इति–ततश्च प्रवेशानन्तरम्, वैदर्भीगर्भात् रुक्मिणीगर्भा, दाविर्भूतं जातम्, अनतीत-सूतकं अनतिक्रान्तसूतकम्, दशदिनमध्यस्थ मित्यर्थः। प्रद्युम्ननामानं प्रद्युम्नाभिधम्, एनं मन्मथम्, स्ववैरिणं मत्वा स्वशत्रुं ज्ञात्वा, शम्बरः तन्नामको राक्षसः, हृत्वा एनमित्येव-अपहृत्य, मध्येसमुद्रं समुद्रमध्ये, अक्षिप च पातयामास। भविष्यत्कार्यगौरवात् श्रीकृष्णोऽपि न तदानीं शम्बरं मायाविनं जहारेति बोध्यम् ॥ ११९

**श्लो ॥ मीनकेतु रसा वस्मान् दण्डं चिर मलम्भयत्**
**इति वैरीव मीन स्तं निजगार महान् शिशुम् ॥ १२०**

मीनेति– मीनकेतुः मत्स्यध्वजः, असौ मन्मथः, अस्मान् चिरं बहुकालम्, 'अत्यन्त-संयोगे द्वितीया' दण्डं दण्डनम् ध्वजदण्डं च, अलम्भयत् प्रापयामास। मन्मथस्य मत्स्यकेत-नत्वात् स्ववाहनभूतान् मत्स्यान् गतिसमये शिक्षयामासेत्यर्थः– इति स्मृत्वेति शेषः। एवं स्मृत्वे वेति हेतूत्प्रेक्षा। वैरी शत्रुः, महान् पृथुः, मीनः मत्स्यः, यद्वा इति हेतोः वैरीव शत्रुरिव महान् मीनः, शिशुं बालम्, निजगार अग्रसत्। मीनकेतुरिति परिकरालङ्कारः। अत्र मीनकेतनत्वेन मीनपोषके मन्मथे मीनानां सुहृद्बुद्धे र्जातव्यत्वे सति तद्वैपरीत्येन वैरित्वबुद्ध्युदय-वर्णना द्विषमालङ्कारः प्रतीयते। स्वेष्टार्थं स्वपोषितस्य मीनस्य स्वग्रसनकरत्वात् केवलानिष्ट-प्रतिलम्भरूपोऽयं विषमालङ्कारभेदः ॥ १२०

**ग॥ त मेनं मीनं शम्बराय धीवरै रुपहारीकृत मुपनीय, सूपकार श्शङ्कुलया शकलीकृत्य, तदन्तर्गतं पोतं पौरोगवपदनिवेशितायै मायावत्यपरनामिकायै रत्यै न्यवेदयत् ॥ १२१**

तमिति– धीवरैः मत्स्यग्राहिभि रित्यर्थः। उपहारीकृतं बलित्वेनार्पितं, मीनस्यास्य महत्त्वात् गर्भस्थशिशुतेजस्संक्रमणेन दीप्तत्वा च श्लाघ्योऽय मित्यमुं राज्ञे समर्पितवन्तः इति भावः-तं प्रसिद्ध मेनं प्रद्युम्नं गिळितवन्तं मीनं, सूपकारः पाचकः, उपनीय आनीय, शङ्कुलया भेदनसाधनेन, शकलीकृत्य विदार्य, तदन्तर्गतं मत्स्योदरस्थं, पोतं शिशुं, पौरोगवपदनिवेशितायै

पौरोगवपदं पाचकाधिकारः, 'पौरोगव स्तदध्यक्ष' इत्यमरः। तत्र निवेशितायै स्थापितायै, अत्रच पुरा स्मरदाहानन्तरं तत्पत्नीं रतिं बन्दीकृत्य शम्बरः पाचकाध्यक्षा मकरोदिति कथाऽनुसन्धेया। मायावत्यपरनामिकायै मायावतीति अपरं नाम यस्या स्तस्यै रत्यै, न्यवेदयत् निवेदयामास, ददावित्यर्थः॥ १२१

**ग ॥ सापिकिमिदमिति शङ्कितमानसा तदनु नारदवचनादमुष्य तत्त्वं मत्वा पतिलाभपरितुष्टा परिपुपोष ॥ १२२**

सापीति– सापि रती च, इद मेत दपत्यं, किमिति कोवायं मत्स्योदरस्थशिशु रितीत्यर्थः। शङ्कितमानसा सशङ्कचित्ता सती, तदनु ततः, नारदवचनात् त्वत्पति र्मन्मथ एवायं रुक्मिण्यां जात इति नारदवाक्यात्, अमुष्य शिशोः, तत्त्वं याथार्थ्यं, मत्वा ज्ञात्वा, अतएव पतिलाभपरितुष्टा भर्तृप्राप्तिपरितुष्टा, परिपुपोष अपत्यमित्येव कर्म पोषितवती॥ १२२

**ग ॥ अथ कियतापि कालेन सञ्जातयौवनः प्रद्युम्न स्स्वशरशरव्यता मगमत् ॥ १२३**

अथेति– अथ ततः, कियतापि कालेन बहुना कालेन, सञ्जातयौवनः उदितयौवनः, प्रद्युम्नः, स्वशरशरव्यतां स्वबाणलक्ष्यत्वं, अगमत् भेजे। यथा सञ्जातयौवनं पुरुषं मन्मथबाणा बाधन्ते; तथा सञ्जातयौवनं मन्मथावतारं प्रद्युम्नमपि मन्मथबाणाः बाधितवन्तः इत्यर्थः। प्रद्युम्नस्य मन्मथोद्रेक आसीदिति भावः॥ १२३

**श्लो ॥ साङ्गोऽपि हा हन्त! कथन्नु सोऽय मात्मानमेव प्रजहार यद्वा**
**अपि क्षणं यो न हि मध्वपायी न तत्र चित्रं स्वहिता प्रतीतिः ॥**

साङ्गेपीति– सोऽयं स्मरः, साङ्गोऽपि प्रद्युम्नरूपेण सशरीरोऽपि, आत्मानं स्वमेव, कथन्नु कथं वा, प्रजहार ताडितवान्! हा हन्तेत्याश्चर्यातिशये। अनङ्गत्वदशाया मात्मनि स्वेनैव ताडिते मुष्टिभि राकाशताडनव न्न हानिः; साङ्गत्वदशायां तु हानिरेवेति भावः। यद्वा अथवा यः क्षणमपि मध्वपायी मधु र्वसन्तः तस्य अपायो विश्लेषः मध्वपायः सोऽस्यास्तीति वसन्तवियुक्तः; पिबतीति पायी न पायी अपायी मधुनो मद्यस्य अपायी मध्वपायी मद्यपानरहित इति च, नहि न भवति– तत्र तस्मिन्, प्रद्युम्ने, स्वहितप्रतीतिः स्वहितज्ञानाभावः, न चित्रं नाद्भुतं। 'वासो यथा परिहृतं मदिरामदान्ध' इति न्यायात्– सर्वदापि अमध्वपायिनोऽस्य स्वप्रहरण मप्युचितमेव मदान्धत्वा दिति भावः। अत्र मन्मथे असम्भावितस्य स्वताडनस्य अमध्वपायित्वहेतुना समर्थना त्काव्यलिङ्गं श्लेषोज्जीवितम्। आत्मताडन मयुक्तमिति स्वेनैवोक्तार्थस्य यद्वेत्युत्तरार्धेन विचार्य प्रतिषेधा दाक्षेपालङ्कार श्च॥ १२४

ग ॥ तदानीं प्रियया मायावत्या प्रतिग्राहितमायाभञ्जनविद्याविद्योतमानः प्रद्युम्नः सत्वरं शम्बर माहवा याह्वयत ॥ १२५

तदानीमिति–तदानीं तदा, प्रियया प्रेयस्या, मायावत्या रत्या, प्रतिग्राहितया दत्तया, मायाभञ्जनविद्यया मायाविनाशनविद्यया, विद्योतमानः विशेषेण लसन्, प्रद्युम्नः सत्वरं द्रुतं, शम्बर माहवाय युद्धार्थं, माह्वयत आकारयामास ॥ १२५

ग ॥ आहूय च तमेन माविर्भूय भूयसा निर्माय माया मायासयन्त मन्तकसा द्विधाय विधेयया मायावत्या सह तद्गृहं विहाय विहायसि स्वमुत्पत्त्यालय मगमत् ॥ १२६

आहूयेति– आहूय शम्बरं युद्धाय आकारयित्वेत्यर्थः। भूयसा बहुवार. मा विर्भूय प्रत्यक्षीभूत्वा, मायां निर्माय तिरोधाय च, आयास यन्तं श्रमं जनयन्तं, तमेनं शम्बरं, अन्तकसा यमाधीनं, विधाय कृत्वा, विधेयया जायया मायावत्या रत्या सह, तद्गृहं शम्बरालयं, विहाय त्यक्त्वा, विहायसि खे, समुत्पत्य उद्गम्य, स्वं निज मुत्पत्यालयं उत्पत्तिगृहं, कृष्णान्तः-पुर मिति यावत्–अगमत् ययौ। प्रद्युम्न इति कर्तृपदं पूर्वगद्यादत्रान्वेतव्यम् ॥ १२६

तत्र च ॥ कृष्णान्तःपुरे ॥

श्लो ॥ कान्तासमेत मवरोधवधूजन स्तं
मत्वा परं ह्रिय मुवाह विदर्भजा तु
ज्ञात्वा पयोधरपयस्स्नपणा दनन्य
जन्मानमेन मपि नावजगाम कामम् ॥ १२७

कान्तेति– अवरोधवधूजनः अन्तःपुरस्त्रीजनः, कान्तासमेतं रतीसहितं, तं प्रद्युम्नं, परं परपुरुषं, मत्वा ज्ञात्वा, प्रायं लज्जा, मुवाह दधार। परपुरुषं दृष्ट्वा स्त्रियो लज्जन्ते इति भावः। यद्वा कान्तासमेतं तं मत्वा दृष्ट्वेत्यर्थः। पर मतिशयेन लज्जा मुवाह। तत्र हेतु स्तु कान्तासमेत मित्येव। अत्यद्भुतसौन्दर्यशालित्वा द्रत्याः तत्सहित मेनं दृष्ट्वा त्रपिता इत्यर्थः। अथवा कान्तासमेतं तं परं परमात्मानं कृष्णं मत्वा तत्पुत्रत्वेन तद्वद्भासमानत्वा दिति भावः। ह्रिय मुवाह अस्मा नुत्सृज्य अस्मदधिकां काञ्चन स्त्रियं रमयतीति लज्जिता इत्यर्थः यद्यपि 'स्त्रीणा मीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' इति प्रकृतेमान एव स्त्रीभिर्धार्यः नतु त्रपा। तथापि तत्कान्तादर्शना त्त्रपोदय स्तासा मिति बोध्यम्। यद्वा तं प्रद्युम्नं, पर मुत्कृष्टं, स्वभर्त्रपेक्षयेति भावः। मत्वेत्यर्थः। इतः प्राक् स्वभर्तारमेव त्रिलोकसुन्दरं मन्यमानाः भृशं गर्विताः; इदानीन्तु ततोऽप्यधिक मेनं दृष्ट्वा त्यक्तगर्वा स्त्रपां भेजिरे इति भावः। विदर्भजा तु रुक्मिणी तु, तु

शब्दो वैलक्षण्यार्थः। एनं प्रद्युम्नं, पयोधरपयस्स्रवणा द्धेतोः स्तन्यस्रावात्, अनन्यजन्मानं पुत्रं मन्मथ मिति च 'कुसुमेषु रनन्यज' इत्यमरः। ज्ञात्वापि कामं मन्मथं नावजगाम न जानाति स्म। विरोधाभासालङ्कारः। पयोधरस्रावा त्पुत्रत्वानुमानेन अनुमानालङ्कारश्च। अयं मत्पुत्रोभवितु मर्हति; एतद्दर्शनेन मत्पयोधरपयस्स्रावात्, आन्यसुतव दिति व्यतिरेकदृष्टान्त मिद-मानुमानम्। अयं मत्पुत्र इति ज्ञात्वापि मन्मथ एवाय मिति तद्याथार्थ्यन्तु न ज्ञातवतीति मुख्यार्थः॥ १२७

श्लो॥ प्रद्युम्न मादाय विनष्टलब्धं। विदर्भजाऽमन्यत भूरिलाभम्
कान्तातति स्तत्प्रमदं विलोक्य। स्वलाभबुद्ध्या मुमुदे पराऽपि॥ १२८

प्रद्युम्नमिति– विदर्भजा रुक्मिणी विनष्टलब्धं पूर्वं विनष्टः पश्चाल्लब्ध इति च विनष्ट लब्धः तं, 'पूर्वकालेत्यादिना समासः'। प्रद्युम्नं पुत्रं, आदाय गृहीत्वा भूरिलाभं महान्तं लाभं, अमन्यत मेने। महान् लाभोऽयमिति ज्ञातवतीत्यर्थः। पुत्रलाभादपि विनष्टपुत्रलाभो महानिति भावः। परा रुक्मिणीव्यतिरिक्तापि, कान्तातति: स्त्रीजनः, तत्प्रमदं रुक्मिणीसन्तोषं, विलोक्य दृष्ट्वा, तुष्टां रुक्मिणीमवलोक्येत्यर्थः। स्वलाभबुद्ध्या स्वलाभधिया, मुमुदे तुतोष। नायं रुक्मिण्या ऐव लाभः; किन्त्वस्माकम प्ययमतीव लाभ इत्यमन्यतेत्यर्थः। न च सपत्नी सुनत्वा त्तस्मिन् सुतवत्यां तस्यां सपत्न्यां च अमष चक्रुरिति भावः। अनेन रुक्मिण्याः निरुपाधिक सौख्यं व्यज्यते। अत्र विनष्ट लब्धं प्रद्युम्नं प्रकृष्टस्वर्णम्, 'हिरण्यं द्रमी द्युम्न मि'त्यमरः आदाय लब्ध्वा, विदर्भजा विदर्भदेशजा काचन स्त्री भूरिलाभं स्वर्णलाभ ममन्यत– 'भूरिप्राज्यसुवर्णयो' रिति विश्वः। परापि कान्ता-ततिः तत्सखीजनः, तत्प्रमदं विलोक्य स्वलाभबुद्ध्या धनलाभबुद्ध्या, मुमुदे इति व्यङ्ग्यार्थः प्रतीयते। नष्टधना काचित् नष्टद्रव्यलाभे सति भृशं तुष्टा स्वानुसारिजनाय कियद्द्रव्यं प्रदत्ते-तस्मात् धनिकस्त्रीवत् तदनुसारिण्योपि स्वलाभबुद्ध्या मोदन्ते एवेति भावः। नासौ ध्वनिः किन्तु समासोक्तिरेव। विदर्भजापदश्लेषाभावादिति रत्नावळीकाराणा माशयः॥ १२८

ग॥ अथ कदाचन शमन्तकं नाम सकरुणदिनमणिवितीर्णं दिव्यमणिं बिभ्राण स्सत्राजि दपर इव तरणि रधिद्वारवति निजभवन मभजत॥ १२९

अथेति– अथ ततः, कदाचन कस्मिंश्चित्काले, सकरुणदिनमणिवितीर्णं सकरुणेन दिनमणिना सूर्येण, वितीर्णं दत्तम्, सूर्येण दयया दत्तमित्यर्थः। शमन्तकं शमन्तकाख्यम्, नामेति प्रसिद्धौ। दिव्यमणिं दिवि भवं दिव्यं रत्नम्, बिभ्राणः धरन्, सत्राजित् अपरः अन्यः, तरणि स्सूर्य इव द्वितीयसूर्यव दित्यर्थः। उत्प्रेक्षालङ्कारः - भासमान इति शेषः - ज्वलन् सन् अधिद्वारवति द्वारवत्याम्, निजभवनं स्वगृह, मभजत आपत्॥ १२९

**ग ॥ अवलोक्य च तमेनं दुर्दर्शमणिकिरणमसृणितशरीर मवलोकनाय तव कर्मसाक्षी साक्षा दुपनत इतिनिवेदयति नागरिकलोके मोघदृष्टि रयमिति समन्दस्मितेन मुकुन्देन सत्राजिद्भवन मासेदुषा विहितायां मणिप्रार्थनायां व्यर्थायाम् ॥ १३०**

अवलोक्येति– दुर्दर्शैः द्रष्टु मशक्यैः, मणिकिरणैः रत्नरुचिभिः, मसृणितं व्याप्तम्, शरीरं देहो, यस्य तं तथोक्तम्; त मेनं सत्राजित मवलोक्य पत्तनप्रवेशसमये दृष्ट्वेत्यर्थः - तव भगवत स्ते अवलोकनाय दर्शनार्थम्, कर्मसाक्षी सूर्यः, साक्षा त्प्रत्यक्षेण, उपनतः आगतः - इत्येवं, नागरिकलोके पुरजने, निवेदयति ज्ञापयति सति, अयं लोको जनः, मोघदृष्टिः व्यर्थचक्षुष्क इति हेतोः मत्वेति वा। समन्दस्मितेन समन्दहासेन, मन्दम्मन्दं स्मयमानेनेत्यर्थः। सत्राजिद्भवनं सत्राजितः गृह, मासेदुषा प्राप्तवता, मुकुन्देन श्रीकृष्णेन, विहितायाम् कृतायाम्, मणिप्रार्थनायां शमन्तकविषययाच्ञायां व्यर्थायां विफलायां सत्याम्, चिररचिततपसा सूर्या दाराधिता न्मया लब्धोऽयं मणि र्न तुभ्यं देय इति सत्राजिता मुकुन्दः प्रत्याख्यात इत्यर्थः ॥ १३०

**ग ॥ प्रसेनोनाम सत्राजिदनुज स्तमेव मणिं बिभ्राणो मृगयाव्यापारेण विपिनवर्त्मना सञ्चरमाणः केसरिणा मणिलोलुपेन व्यापादितः ॥ १३१**

प्रसेन इति– प्रसेनो नाम प्रसेन इति सत्राजिदनुजः सत्राजित स्सोदरः तमेव मणिं शमन्तकरत्नमेव, बिभ्राणः धरन् सन्, मृगयाव्यापारेण आखेटव्यापारेण, विपिनवर्त्मना वनमार्गेण, सञ्चरमाणः गच्छन् सन् - 'समस्तृतीये त्यात्म' नेपदम्! मणिलोलुपेन शमन्तकासक्तेन, केनापि केसरिणा सिंहेन, व्यापादितः मारितः बभूवेति शेषः ॥ १३१

**ग ॥ तस्मिन्नपि केसरिणि कन्दरान्तरगते जाम्बवता निहते मणौ च तनयाक्रीडनाय नियोजिते सोदरविरहविह्वलेन सत्राजिता नियत मेनं चक्रपाणि र्मणिलोभेन निहतवानिति समारोपितां परिवादगिर मसहमानो हरिरपि विपिन मुपगम्य परासुं प्रसेन मवलोकयन्, विहाय बहिरेव सहचारिणो जाम्बवत्याधिष्ठितं गह्वर मगाहत ॥ १३२**

तस्मिन्निति– कन्दरान्तरगते गुहान्तर्गते, तस्मिन केसरिणि सिंहे च, जाम्बवता निहते मारिते सति, तनयाक्रीडनाय तनयायाः पुत्र्याः क्रीडनाय क्रीडार्थं, मणौ नियोजिते निर्दिष्टे च सति, कन्दुकवन्मणौ क्रीडनके कृते सतीत्यर्थः। सोदरविरहविह्वलेन अनुजवियोगविवशेन, सत्राजिता एनं मदनुजं मणिलोभेन हेतुना चक्रपाणिः कृष्णो निहतवान् नाशयामास। नियतं ध्रुवं इत्येवं समारोपितां सम्यगारोपितां, परिवादगिरं अपवादवाचं असहमानः सोढु मक्षमः सन्, हरिरपि कृष्णश्च, विपिनं वन, मुपगम्य प्रविश्य, परासुं मृतं, प्रसेनं अवलोकयन्

पश्यन्, सहचारिणः अनुचरान्, बहिरेव गुहाबहिःप्रदेशे एव, विहाय त्यक्त्वा, जाम्बवत्या मणिना क्रीडन्त्या जाम्बवत्सुतया, अधिष्ठितं गह्वरं गुहां, अगाहत विवेश ॥ १३२

**ग ॥ तत्र च मणिहरणार्थ मर्भकाभ्यर्णभाजिनि भगवति जाम्बवा नतिरोषण स्सहसा सन्निधाय च मुष्टीमुष्टि सावष्टम्भः पिष्टाखिलावयवतयापि विलीनबलः क्षितितले निपत्य सञ्जातप्रत्यभिज्ञः स्तुत्वा चिरमरविन्दलोचनं मणिना सह रमणीमणिं जाम्बवतीं नाम निजतनयां प्रायच्छत् ॥ १३३**

तत्रेति– तत्र गुहायां च मणिहरणार्थं शमन्तकापहारार्थं, भगवति कृष्णे, अर्भकाभ्यर्ण भाजिनि शिशुसमीपगते सति, अतिरोषणः अतिकोपनः, जाम्बवान् सहसा द्रुतं, सन्निधाय सन्निहितो भूत्वा, मुष्टीमुष्टि सावष्टम्बः, मुष्टीमुष्टि युद्धे साहंकारश्च भूत्वेति शेषः। पिष्टाखिलावयवतया चूर्णितसर्वाङ्गत्वेन हेतुना, श्रीकृष्णमुष्ट्यभिघातवशादिति भावः। विलीनबलः विगतबलस्सन्, अत एव क्षितितले भूतले, निपत्य पतित्वा, सञ्जातप्रत्यभिज्ञः जातस्मृतिः, अरविन्दलोचनं कृष्णं, चिरं स्तुत्वा मणिना सह रमणीमणिं रमणीनां स्त्रीणां मणिं रत्नभूतां, जाम्बवतीं नाम जाम्बवतीमिति, निजतनयां स्वसुतां, प्रायच्छत् अर्पितवान् श्रीकृष्णायेति शेषः ॥ १३३

**ग ॥ हरिरपि लब्धरमणीमणिः कन्दरोदरा न्निस्सृत्य सानुचरः पुरमधिगम्य सत्राजित माहूय तदाहरणप्रकार मावेद्य मणि ममुष्मै प्रायच्छत् ॥ १३४**

हरिरिति– लब्धरमणीमणिः प्राप्तनारीरत्नः, हरिरपि कृष्णश्च, कन्दरोदरात् गुहामध्यात्, न्निसृत्यनिर्गत्य, सानुचरः सपरिजन स्सन्, पुरं द्वारका, मधिगम्य प्राप्य, सत्राजितं आहूय आकारयित्वा तदाहरणप्रकारं मण्यानयनविधा, मावेद्य ज्ञापयित्वा, मणिं अमुष्मै सत्राजिते, प्रायच्छत् ददौ ॥ १३४

**ग ॥ सत्राजिदपि समुपजातलज्जो यदुनन्दनानन्दनोपाय मनधिगच्छन् तेनैव मणिना सह सत्यभामां नाम स्वतनयां हरये व्यतरत् ॥ १३५**

सत्राजिदिति– सत्राजिच्च समुपजातलज्जः जातलज्ज स्सन्, यदुनन्दनस्य कृष्णस्य, आनन्दनोपायं सन्तोषजननसाधन, मनधिगच्छन् अजानन्, तेन मणिनैवसह, सत्यभमां नाम स्वतनयां निजपुत्रीं, हरये कृष्णाय, व्यतरत् ददौ ॥ १३५

**श्लो ॥ रमणीमणि नैवाल मिति मत्वैव माधवः**
**प्रत्यदा त्प्रियवाक्येन सत्रा सत्राजिते मणिम् ॥ १३६**

रमणीति– रमणीमणिनैव नारीरत्नेनैव, सत्यभामयैवेत्यर्थः। अलङ्कृतम् रमण्येव मम पर्याप्तेत्यर्थः। इत्येवं, मत्वेव आलोच्येवेत्युत्प्रेक्षा। माधवः सत्राजिते प्रियवाक्येन सत्रा प्रियभाषितेन

सह, मणिं रत्नं, प्रत्यदात् पुन र्ददौ। अत्र मणिरमणीमण्यो र्मध्ये मणिव्यतिरेको रमणीमण्यां सचेतनत्वादिरूपः प्रतीयते। अन्यथा हरिः कुतो मणिमेव त्यजेत् – तेन च सत्यभामायाः निरतिशयसौन्दर्यं व्यज्यते ॥ १३६

श्लो ॥ अक्रूरकृतवर्मभ्यां शतधन्वा प्रवर्तितः
सत्राजित मह न्मण्यै कुरूनथ हरौ गते ॥ १३७

अक्रूरेति– अथ ततः, हरौ कृष्णे, कुरून् कुरुदेशान्, गते याते सति, 'पाण्डवाः लाक्षागारदग्धाः' इति वार्तां श्रुत्वा, तद्दिदृक्षयेति भावः। अक्रूरकृतवर्मभ्यां प्रवर्तितः प्रेरितः, शतधन्वा मण्यै एव रत्नार्थं सत्राजितं अहन् मारयामास ॥ १३७

श्लो ॥ पितृनाशार्तया सत्यभामया गतया कुरून्
नीतो हरिः पुरं घात मियेष शतधन्वनः ॥ १३८

पितेति– पितृनाशार्तया सत्राजिन्मरणदुःखितया, कुरून् गतया यातया, सत्यभामया पुरं द्वारकाम्, नीतः प्रापितः, हरिः कृष्णः, शतधन्वनः घातं वधम्, इयेष इच्छति स्म ॥ शतधन्वानं हन्तुमैच्छदित्यर्थः ॥ १३८

श्लो ॥ विन्यस्य मणि मक्रूरे पलायित ममुं भयात्
योजनानि शतं शौरि रवधी दनुधाव्य च ॥ १३९

विन्यस्येति– अक्रूरे मणिं विन्यस्य स्थापयित्वा, भयात् कृष्णाद्भीत्या, पलायितुं अपर्दुतम्, अमुं शतधन्वानम्, शौरिः कृष्णः, शतं शतसङ्ख्याकानि योजनानि 'कालाध्वनो रत्यन्तसंयोगे द्वितीया' अनुधाव्य अनुद्रुत्य, अवधीत् मारयामास च। यद्यपि पलायितस्य वधो न युक्तः; तथापि मणिं गृह्य स्वयं पलायते इति हेतो र्मण्यर्थं तदनुधावनं सत्राजिद्धननप्रयुक्तपापनिवारणार्थं हननं च कृष्ण श्चकारेति बोध्यम्। एतदपि सत्यभामा मनोविनोदनार्थमेव नतु स्वतः ॥ १३९

श्लो ॥ तस्मिन् मणि मदृष्ट्वार्त स्ततोऽक्रूर मयाचत
लब्ध्वाच मणि मक्रूरा दस्यै प्रत्यर्पयन् मुदा ॥ १४०

तस्मिन्निति– तस्मिन् शतधन्वनि, मणिं रत्न, मदृष्ट्वा, आर्तः दुःखित स्सन्, ततः अक्रूरं अयाचत प्रार्थयामास। हरिरिति पूर्वश्लोका त्कर्तृपद मत्रान्वेतव्यम्। अक्रूरा न्मणिं लब्ध्वा स्वीकृत्य, अस्यै सत्यभामायै, मुदा सन्तोषेण, प्रत्यर्पयत् समर्पयामास ॥ १४०

श्लो ॥ जगाम निर्वर्णयितुं ततोऽर्जुनं। हरि र्हरिप्रस्थ मतीवलालसः
विलोक्य पार्थः परभागभाग्भू। दपार्थखेदादरिणं जनार्दनम् ॥ १४१

जगामेति— ततः मणिप्रत्यर्पणानन्तरम्, हरिः कृष्णः, अर्जुनम् पार्थम्, निर्वर्णयितुं द्रष्टुम्, अतीव अत्यन्तम्, लालसः आसक्तस्सन्, हरिप्रस्थं इन्द्रप्रस्थपुरम्, जगाम ययौ। पार्थः अर्जुनः, अपार्थखेदादरिणं आदरः प्रीति रस्तीति आदरी पार्थस्य खेदे आदरी पार्थखेदादरी स न भवती त्यपार्थखेदादरी पार्थसन्तोषादरीत्यर्थः। तं, स्वसन्तोषलालसमिति यावत्। जनार्दनं कृष्णम्, विलोक्य परभागभाक् गुणोत्कर्षं प्राप्तः अभूत्, ननन्देत्यर्थः। व्यङ्ग्यार्थस्तु हरिः कृष्णो नील इत्यर्थः। यद्वा हरि र्ना कपिले त्रिष्वि त्यभिधानात्। कपिलवर्णः कश्चित् अर्जुनं श्वेतम्, कश्चित् निर्वर्णयितुं कर्तुं अश्वेतीकर्तु मित्यर्थः। अतीव लालस स्सन् हरिप्रस्थं जगाम पार्थः सोप्यर्जुनः श्वेत इत्यर्थः। अपार्थखेदादरिणं व्यर्थखेदभाजम्, स्वचिन्तित कार्यस्य अनिष्पत्ते रिति भावः। जनार्दनं विलोक्य परभागभाक् गुणोत्कर्षं प्राप्तः अतिशयितश्वेतगुण इत्यर्थः - अभूत्। 'अन्यथाचिन्तितं कार्यं दैव मन्यत्र चिन्तये' दिति न्यायादिति भावः। अत्र कृष्णसादृश्या दप्यर्जुनः कृष्णो नाभू दित्यतद्गुणः। अर्जुनं कृष्णीकर्तुं कृष्णे आगते सति अर्जुनोऽतिश्वेतोऽभूदिति विषमः। वाच्यार्थे तु अर्जुनं दृष्ट्वा हरिः, तं दृष्ट्वाऽर्जुनश्च, ननन्दे त्यानुरूप्यालङ्कारः॥ १४१

**श्लो ॥ परस्परं परिष्वज्य ततः कृष्णार्जुना वमू**
**रक्ता वतितरां नेदं चित्रं य न्मित्रता तयोः॥** १४२

परस्परमिति— ततः दर्शनानन्तरम्, अमू कृष्णार्जुनौ हरिपार्थौ, नीलश्वेताविति च। परस्परं अन्योऽन्यम्, परिष्वज्य आलिङ्ग्य, अतितरा मत्यन्तम्, रक्तौ अनुरागिणौ, रक्तवर्णौ च; बभूवतु रिति शेषः। यद्यस्मात्, तयोः हरिपार्थयोः, मित्रता सौहार्दम्, सूर्यत्वं च; अस्ति। यत्तदोर्नित्यसम्बन्धा त्तदिति पदस्य लाभः। त तस्मात्, इदं रक्तत्वम्, न चित्रं नाद्भुतम्। सुहृदा वुभावपि हरिपार्थौ अन्योन्य मालिङ्ग्य, अत्यनुरागिणाविति न चित्रमिति प्रकृतार्थः। नीलश्वेतयो रुभयोरपि परस्परसम्पर्केण रक्तत्वमिति यत्तदपि न चित्रं; नीलश्वेतयोरुभयोरपि सूर्यत्वात्; सूर्यस्य अरुणत्वाच्चेत्यन्योऽर्थः। अत्र नीलश्वेतयोरुभयो स्सम्बन्धेन उभयात्मिके वर्णविशेषे जातव्ये सति तद्वैपरीत्येन रक्तवर्णोदयो विषमः। 'विरूपकार्यस्योत्पत्ति रपरं विषमं मत' मिति लक्षणात्। इदञ्च वैषम्यं उभयो स्सूर्यत्वा दरुणत्वं युक्तमेवे त्यनेन समर्थितमिति काव्यलिङ्गम्। इदं च प्रौढोक्तिकल्पितमेव नीलश्वेतयो स्सूर्यत्वस्यै वासम्भवात्॥ १४२

**ग ॥ अथ कदाचि देतौ दूरीकृतदुरितावपि पापर्धिकाङ्क्षिणौ विगतमोहावपि गहनमवगाह्य वृषैकगवेषणाऽनुरक्तावपि नानामृगान्वेषिणौ भूत्वा ततः परितृप्तावपि तृष्णापरीतौ यमुना मुपगम्य विपीतपरजीवनावपि स्वादूदकं निपीय तेनैव पथा सञ्चरमाणौ कामपि कमललोचना मलोकयताम्॥** १४३

अथेति– अथ ततः, कदाचित् एतौ कृष्णार्जुनौ, दूरीकृतदुरितावपि दूरीकृतं निरस्तम्, दुरितं पापम्, स्वस्य स्वानुगतभक्तजनस्य वा याभ्यान्तौ तथापि पापर्थिकङ्क्षिणौ मृगयालालसौ 'पापर्थिश्च पराधिश्चेति' निघण्टुसारे - पापवृद्धिकङ्क्षिणाविति च - विगतमोहावपि निरस्ताज्ञानावपि, गहनं वनं दुःखमिति च। 'गहनं वनदुःखयो' रिति भास्करः - अवगाह्य प्रविश्य, वृषैकगवेषणानुरक्तावपि धर्मान्वेषणलालसावपि, धर्मसंरक्षिणा वपीत्यर्थः। वृषभैकान्वेषणतत्पराविति च, नानामृगान्वेषिणौ बहुविधमृगान् अन्वेषयन्तौ भूत्वा, ततः मृगयापरिश्रमणानन्तरम्, परितृप्तावपि अवाप्तसमस्तकामत्वेन नित्यतृप्तावपि, तृष्णापरीतौ तृष्णया पिपासया आशयेति च, परीतौ व्याप्तौ, अत एव यमुना मुपगम्य प्रविश्य, विपीतपरजीवनावपि अपहृतशत्रुप्राणावपि, विशेषेण पीतं परमुत्कृष्टम्, जीवनं उदकम्, याभ्यान्तावपीति च जलपानेन नित्यतृप्ता वपीत्यर्थः। स्वादु मधुर, मुदकं जलम्, निपीय पीत्वा, तेनैव पथा वनमार्गेणैव, सञ्चरमाणौ चरन्तौ सन्तौ, कामपि कमललोचनां ललनाम्, आलोकयताम् अपश्यताम्॥

**ग ॥ धनञ्जयः केशवनिदेशेन ता मेतां व्याजहार ॥** १४४

धनञ्जयेति– धनञ्जयः अर्जुनः, केशवनिदेशेन भगवदाज्ञया, तां परिदृष्टाम्, एतां बालाम्, व्याजहार प्रत्युवाच॥ १४४

**ग ॥ कल्याणि ! का त्व मेकाकिनी वनदेवतेव कानने चरसि किं? कामना? चेति ॥** १४५

कल्याणीति– हे कल्याणि ! मङ्गळशालिनि! त्वं का? देवाद्यङ्गनासु कासीत्यर्थः। एकाकिनी असहाया, त्वं किं कामना किमभिलषन्ती, वनदेवतेव उदकाभिमानिनीदेवता काननदेवता च, सेव, कानने वने, चरसि सञ्चरसि च, इति व्याजहरेति पूर्वेण सम्बन्धः॥

**ग ॥ सापि सव्याजं प्रत्यवादीत् ॥** १४६

सापीति– साच सव्याजं सकपटम्, प्रत्यवादीत् प्रत्युवाच। उक्तिप्रकारमेवाह युक्त मित्यादिना॥ १४६

**ग ॥ युक्त मुक्तं भवता वनदेवतेवेति सवितृतनया वनदेवतैवाहमस्य क्षेत्रस्य मनोहरतरुणातिलोभनीयस्यासन्नपुष्पोद्गमस्य माधवस्य समागमं प्रतीक्षमाणा काननमन्तरा चरामीति ॥** १४७

युक्तमिति– वनदेवतेवेति भवता त्वया, यदुक्तं त द्युक्तमुचितं सत्यमिति यावत्। यद्वा भवता वनदेवतेवेति युक्त मुचित मुक्तम्; ननु त्वयि वनदेवतात्व मस्तु नाम; किं काननदेवतात्वरूपं ब्रत्? उत जलदेवतात्वरूप मत आह-सवितृतनया सूर्यपुत्री अहं वनदेवतैव

जलदेवतेव गङ्गादीनां नदीनां हि प्रवाहातिरिक्तः कश्चि त्स्वस्वरूपोऽप्यस्ति ततश्च कालिन्दी-सूर्यतनया यमुनेत्यादि शब्दवाच्या या यामुना नदी प्रवाहरूपे णास्माकं प्रतिभाति तस्याः स्वस्वरूपभूतेय मधिदेवतेति भावः । एवं का त्वमिति प्रथमप्रश्न स्योत्तर मुक्त्वा किं कामना चरसीति द्वितीयस्योत्तरं वदति अस्येति - मनोहरतरुणा जात्येकवचनं - मनोज्ञतरुभिः अतिलोभनीयस्य अतिसुन्दरस्य आसन्नपुष्पोद्गमस्य सन्निहितप्रसूनोद्गमस्य, अस्य क्षेत्रस्य, सिद्धस्थानस्य माधवस्य वसन्तस्य, समागमं सम्पर्कम्, वसन्तेन सह क्षेत्रसंयोग मित्यर्थः । प्रतीक्षमाणा कांक्षयन्ती सती । अन्यत्र आसन्नपुष्पोद्गमस्य आसन्न स्सन्निहितः, पुष्पोद्गमः रजोनिर्गमः, यस्य तस्य रजस्वलीभवितुं सिद्धस्येत्यर्थः । अत एव मनोहरतरुणातिलोभनीयस्य, मनोहरै-र्मनोज्ञैः, तरुणैः युवभिः, अतिलोभनीयस्य अतिस्पृहणीयस्य, अस्य क्षेत्रस्य शरीरस्य 'क्षेत्रं कळत्रे केदारे सिद्धस्थानशरीरयो' रिति प्रतापः - माधवस्य कृष्णस्य समागमं संयोगं प्रतीक्ष-माणेति काननमन्तरा काननस्य मध्ये, चरामि इति सव्याजं प्रत्यवादी दित्यनेनान्वयः ॥

अव– श्लिष्टार्थमेव स्वयं कविः प्रपञ्चयति ॥

श्लो ॥ कालिन्दीं सवितुः पुत्रीं तिष्ठमानां मुरारये
निर्धार्य वचना त्तस्याः फल्गुनो हरयेऽभ्यधात् ॥ १४८

कालिन्दीमिति– फल्गुनः अर्जुनः, तस्याः वचनात् वाक्यात्, ता मिति शेषः - मुरारये कृष्णाय, तिष्ठमानाम् मुरारिसमागमं प्रतीक्षमाणा मित्यर्थः 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान' इति चतुर्थी - प्रकाशनस्थेयाख्ययोश्चेति तङ् - सवितुः सूर्यस्य, पुत्रीं तनयाम्, कालिन्दीं निर्धार्य । निश्चित्य, हरये कृष्णाय, अभ्यथात् उवाच ॥ १४८

श्लो ॥ रथ मारोप्य ता मेता मनुज्ञाप्य पृथासुतान्
द्वारकां मुरजि त्प्राया द्विधिना च व्युवाह ताम् ॥ १४९

रथमिति– मुरजित् कृष्णः, ता मेतां कालिन्दीम्, रथ मारोप्य आरोहयित्वा, पृथासुतान् अर्जुनादीन्, अनुज्ञाप्य अनुज्ञां वाचयित्वा, तै रनुज्ञात इत्यर्थः । द्वारकां प्राया ययौ । तां कालिन्दीम्, विधिना स्वसूत्रोक्त विधिना, व्युवाह च परिणीतवान् ॥ १४९

श्लो ॥ विन्दानुविन्दभगिनीं मित्रविन्दां ततो हरिः
हरन् पितृकुला द्वीर्या दुपयेमे विधानतः ॥ १५०

विन्देति– ततः कालिन्दीपरिणयानन्तरम्, हरिः विन्दानुविन्दभगिनीं विन्दश्च अनु-विन्दश्च विन्दानुविन्दौ अवन्तिदेशाधीश्वरौ, तयो र्भगिनीं सोदरीम्, मित्रविन्दां तन्नाम्नीं कन्याम्, पितृकुला त्पितृवंश त्सकाशा, द्वीर्यात् पराक्रमेण, हरन् स्वीकुर्वन्, अपहरन्निति वा; विधानतः विधिना, उपयेमे परिणीतवान् ॥ १५०

ग ॥ अथ नग्नजितः कोसलेश्वरस्य दुहितरं सत्याभिधानां वृषभसप्तकविजय-लभ्यां परिणेतुकामो वनमाली कोसलपतिपुर मभजत वृषभा नजैषी त्पर्यणैषीच्च ॥

अथेति– अथ मित्रविन्दापरिणयानन्तरम्, वृषभसप्तकविजयलभ्यां सप्तवृषभजयशुल्का मित्यर्थः। सत्याभिधानां सत्यानाम्नीं, कोशलेश्वरस्य कोसलदेशाधिपतेः, नग्नजितः दुहितरं पुत्रीं, परिणेतुकामः उद्वोढुमना स्सन्, वनमाली कृष्णः, कोसलपतिपुरं नग्नजिन्नगर, मभजत-प्राप - वृषभान् सप्तवृषान्, अजैषीत् जितवान्; पर्यणैषीच्च सत्यामिति शेषः - उपयेमे च। समुच्चयालङ्कारः ॥ १५१

श्लो ॥ भद्रात्मा गोपति श्शौरि र्वृषश्च तनुमा निति
मत्वापि विस्मिता स्सर्वे सप्ताजैषीद्वृषानिति ॥ १५२

भद्रेति– शौरिः कृष्णः, भद्रात्मा कल्याणस्वरूपः, वृषभस्वरूप श्च 'उक्षा भद्रो बलीवर्द'-इत्यमरः। गोपतिः गोः स्वर्गस्य गवां वाचां वा गो भूदेव्या वा पतिः गोपतिः, गवां धेनूनाम्, पति रिति च - तनुमान् शरीरधारी, वृषः धर्मः वृषभ श्च - भवतीति शेषः - इत्येवं मत्वा ज्ञात्वापि, वृषभस्य वृषभजयो युक्त इति ज्ञात्वापीत्यर्थः। सप्तपृषान् वृषभान्, अजैषीत् जितवान्, शौरिरित्येव - इति हेतो स्सर्वे जनाः विस्मिताः विस्मयवन्तः बभूवुरिति शेषः - एकस्य वृषभस्य सप्तवृषभजयोऽद्भुत इति भावः। यद्वा भद्रात्मत्वादिभि श्शौरिं भगवन्तं मत्वापि सप्तवृषभजयेन विस्मिता इति विरोधः - नहि सर्वजगत्संहारकसङ्कल्पस्य परमेश्वरस्य सप्तवृषभनिर्जयः चित्रमिति भावः। भद्रात्मत्वादिभि श्शौरिं वृषभं मत्वा एकस्य वृषभस्य सप्तवृषभजयेन विस्मिता इति तत्परिहारः - विरोधाभासालङ्कारः ॥ १५२

श्लो ॥ श्रुतकीर्तिसुतां ततोऽनु भद्रां। परिजग्राह सलक्षणां च माद्रीम्
विधु रीप्सितलक्षणोऽपि सोऽयं। विकलङ्को भवति स्म विस्मयाय ॥

श्रुतेति– ततोऽनु सत्यापरिग्रहानन्तरं, स कृष्णः श्रुतकीर्तिसुतां श्रुतकीर्ते स्तनयां, भद्रां; माद्रीं मद्रराजतनयां, लक्षणां च, परिजग्राह उपयेमे - ईप्सितलक्षणोऽपि ईप्सिता आभीष्टा लक्षणा तन्नामकजाया यस्य सः ईप्सितं लक्षणं कळङ्को यस्येति च विकळङ्कः निरवद्यः निर्लक्ष्मेति च, सोऽयं विधु र्विष्णु श्चन्द्रश्च, विस्मयाय आश्चर्यार्थं भवति स्म बभूव - विरोधाभासालङ्कारः ॥

श्लो ॥ अथ भूमिसुतं हत्वा। मुरारि रम्युनार्जितम्
अहर द्राजकन्यानां। षट्सहस्राधिकायुतम् ॥ १५४

अथेति— अथ एवं रुक्मिणी जाम्बवती सत्यभामा कालिन्दी मित्रविन्दा सत्या भद्रालक्ष्मणा इत्यष्टभार्यापरिग्रहानन्तर मित्यर्थः । मुरारिः कृष्णः, भूमिसुतं नरकासुरं, हत्वा सत्यभामया नाशयित्वे त्यर्थः - अमुना नरकासुरेण, आर्जितं सम्पादितं, राजकन्यानां राजसुतानां, षट्सहस्राधिकायुतं 'अयुतं दशसाहस्र' मित्यमरः । सषट्सहस्र मयुत मित्यर्थः - षोडशसहस्रसङ्ख्याकराजकन्या इत्यर्थः अहरत् स्वीचकार ॥ १५४

श्लो ॥ कन्याराशि रसौ नैव । भौमभोगार्हता मगात्
विधु स्स्वगृहबुद्धयातु । बुभुजे विस्मयाय तत् १५५

कन्येति— असौ कन्याराशिः राजकन्यागणः, भौमभोगार्हतां भूमे रयं भौमः अपत्यत्वविवक्षाभावा न्न ढक् किन्तु तस्येद मित्यण् - नरकासुरः तस्य भोगार्हतां, भोग्यत्वं, नैवागात् न प्राप । विधुः कृष्णस्तु, स्वगृहबुद्ध्या, स्वदारधिया, बुभुजे अनुभूतवान् - कन्याराशि मित्येव - तत् नरकार्जित कन्याराशिं कृष्णो बुभुजे इति य त्त दित्यर्थः — विस्मयाय अद्भुताय भवतीति शेषः— सरघाकृतक्षौद्रपटलन्यायेन परभोग्यत्व माश्चर्य मित्यर्थः - अत्र स्वभोगार्थं कन्याराशिं स्वीकृतवतो नरकस्य न केवलं तद्भोगा लाभः किन्तु स्वरूपहानि रपीति विषमालङ्कारभेदः - 'अनिष्टस्या प्यवाप्ति श्च तदि ष्टार्थसमुद्यमा' दिति तल्लक्षणात् - व्यङ्ग्यार्थस्तु असौ कन्याराशिः भौमस्य अङ्गारकस्य, भोगार्हतां नैवागात्- इत्येक माश्चर्यं । द्वादशराशीनामपि भोग्यत्वाविशेषात् इति भावः -विधुः चन्द्रः. स्वगृहबुद्ध्या स्वराशिधिया, कन्याराशिं बुभुजे । चन्द्रस्य कर्कट एव स्वगृहमिति ज्योतिश्शास्त्रा दितीदं द्वितीयमद्भुतमिति भावः ॥ १५५

श्लो ॥ कुसुतस्य हि जीवना दनर्थं । कलय न्नेव ममुं जघान शौरिः
रमणी र्बुभुजेऽपि तस्य चित्रं । नरकस्यैव तथापि नो कथापि ॥

कुसुतस्येति— कुसुतस्य भौमस्य नरकस्य, जीवना त्प्राणधारणा द्धेतोः, अनर्थः पीडा, लोकस्य भवतीति शेषः - तस्य राक्षसत्वादिति भावः - एव मित्थं, कलयन् मन्वानः, शौरिः अमुं नरकं, जघान हतवान् - तस्य नरकस्य सम्बन्धिनीः शेषे षष्ठी - तत्सम्पादिता इत्यर्थः । रमणीः स्त्रियः, बुभुजे रमयामास - तथापि एवं नरकं हत्वा तत्कन्यारा श्यपहरणेपि नरकस्यासुरस्य कथापि वार्तापि, नो एव नास्त्येव - नरकस्तु म्रियता नाम; तत्कथापि नावशिष्टेति भावः । चित्र मद्भुत, मिदं हरिणा नाशितत्वेन कथामात्रशेषी नरकासुरे तच्छेषाभावकथनं विरुद्धमिति भावः । किञ्च नायं नरकासुर स्समूलं नाशितः, किन्तु तत्स्त्रियः हरिणा भुज्यमाना स्सन्त्येवेति

कथामात्रस्या प्यवशेषाभावकथन मतीव विरुद्धमिति भावः। व्यङ्ग्यार्थस्तु कुसुतस्य दुष्टपुत्रस्य, जीवना दनर्थः भवती त्येवं कलयन् शौरि रसुं दुष्टपुत्रं जघान, तस्य रमणी भार्याः स्नुषा इत्यर्थः। बुभुजेऽपि अनुभूतवांश्च। तथापि सुतनाशने तद्भार्यासङ्गमे च कृते सत्यपि, नरकस्य निरयस्य कथापि, नोएव चित्रं - कुसुतस्व परित्याग एव युक्तो न घातः - हतेऽपि पुत्रे स्नुषाभोगो न युक्तः - एव मपि दुर्गतिसम्भावनापि नास्तीति विचित्र मित्यर्थः॥ १५६

**ग॥ तदैव प्रेयसीप्रेरणया नन्दनवनवासिना पारिजात मुन्मूल्य, प्रक्रान्तसमरा नमरा नभिभूय, विश्वम्भर स्सत्यभामाभवन प्रमदवन मनयत्॥ १५७**

तदेति— तदैव तदानी मेव, प्रेयसीप्रेरणया सत्यभामाचोदनेन, हेतुना - नन्दनवनवासिनं इन्द्रवनगतं, पारिजातं तरु मुन्मूल्य समूल मुत्पाट्य, प्रक्रान्तसमरान् उपक्रान्तयुद्धान्, युद्धाय बद्धादरा नित्यर्थः। अमरान् देवान्, अभिभूय जित्वा, विश्वम्भरः विश्वं बिभर्तीति तथोक्तः, निखिलजगत्कुक्षिम्भरस्य भगवतो वासुदेवस्य नेदं चित्रमिति भावः। अत एव परिकराङ्कुरालङ्कारः। सत्यभामायाः भवनस्य गृहस्य, सम्बन्धी प्रमदवन मुद्यानवनं, अनयत् प्रापयामास॥

**श्लो॥ पारिजातं प्रियाप्रीत्यै। नन्दना दुद्धर न्नपि**
**नन्दनं प्रापयामास। प्रियायाः प्रिय माचरन्॥ १५८**

पारिजातमिति— पूर्वगद्यस्थ विश्वम्भरपद स्यात्राप्यन्वयः। प्रियाप्रीत्यै सत्यभामासन्तोषणार्थम्, नन्दना दिन्द्रवना, त्पारिजातं तरु, मुद्धर न्नपहरन्नपि, प्रियाया स्सत्यभामायाः, प्रिय मिष्ट, माचरन् कुर्वन् सन्, नन्दनं हर्षम्, नन्दनवनञ्च; प्रापयामास - प्रिया मित्येव - प्रिया मानन्दयामासेत्यर्थः। अत्र पारिजातं नन्दना दुद्धरन्नपि नन्दनं प्रापयामासेत्येको विरोधः - प्रियाप्रीत्यै नन्दना दुद्धृतं पारिजातं पुन र्नन्दनं प्रापयित्वापि प्रियायाः प्रिय माचचारेति द्वितीयं-वना त्पारिजात मुद्धरन् अतएव प्रियायाः प्रियमाचरन् प्रिया मानन्दयामासेति तदुभयपरिहारः। विरोधाभासालङ्कारः। यद्वा नन्दना द्वना त्पारिजात मुद्धरन्नपि उद्धर्तुं प्रवृत्तोऽपि नन्दनवनं प्रापयामासे त्यसङ्गतिनामकालङ्कारः। 'अन्य त्कर्तुं प्रवृत्तस्य तद्विरुद्धकृति श्च से'ति लक्षणात् - अयं श्लेषोत्थापितः॥ १५८

तदानीमेव— पारिजातापहरणकाले एवेत्यर्थः॥

**श्लो॥ दिव्या शिलीमुखगणा हृतपारिजात**
**मन्वैत्य तं यदुपतिं द्रुत मात्तगन्धाः**

प्राप्ताः पुन स्सुमनस स्सुमनस्सु यद्वा
तेजोभवे न्मधुहरं कथ मन्तरेण ॥ १५९

दिव्याइति– दिव्याः दिविभवाः, 'दिगादिभ्य' इति यत् - शिलीमुखगणाः बाणसङ्घाः, हृतपारिजातं अपहृतसुरतरुं, सापराधमिति भावः । तं यदुपतिं, कृष्णं; अन्वेत्य अनुसृत्य, द्रुतं शीघ्रं, आत्तगन्धाः अभिभूता स्सन्तः, 'आत्तगन्धोऽभिभूत स्स्या' दित्यमरः । कृष्णबाणै रिति शेषः - पुन र्भूयः, सुमनसः देवान् प्राप्ताः भेजिरे - इदमेव हि बाणानां दिव्यत्वं नाम य ल्लक्ष्यं प्राप्यापि पुन स्तूणीरप्रवेश इति । मनुष्यस्य कृष्णस्य, बाणैः कथं देवबाणा अभिभूता इति न विस्मयितव्य मित्याह - यद्वेति - यद्वा अथवा सुमनस्सु देवेषु, मधुहरं कृष्ण, मन्तरेण उद्दिश्य तेजः प्रतापः, कथं भवेत् - नायं कृष्णः प्राकृतः किन्तु सर्वेश्वर एवेति सर्वेश्वरं प्रति देवानां प्रतापः कथं भवे दित्यर्थः भगवद्दत्तसत्ताकत्वादेव तेषामिति भावः । अत्र उत्तरवाक्यार्थेन पूर्ववाक्यार्थसमर्थना त्काव्यलिङ्गम् । अन्यार्थस्तु - दिव्याः नन्दनवनगत्वा दिति भावः । शिलीमुखगणाः भृङ्गसङ्घाः 'अलिबाणौ शिलीमुखा' वित्यमरः । आत्तगन्धाः स्वीकृतपरिमळा स्सन्तः, परिमळं गृहीत्वेत्यर्थः । हृतपारिजातं यदुपतिं, अन्वेत्य कृष्णहृतं पारिजात मनुधाव्येत्यर्थः । गन्धस्यानुरूपकत्वादिति भावः । पुनः सुमनसः तत्पारिजातपुष्पाणि, प्राप्ताः । वृक्षोत्पाटनसमये तच्चलनवशा द्भीत्या पलायिताः भृङ्गाः पुनरपि तत्कुसुमसङ्घं प्रापु रित्यर्थः । यद्वा - तथा हि - अव्ययाना मनेकार्थकत्वात् - सुमनस्सु कुसुमेषु, मधुहरं भृङ्गं, मन्तरेण विना, तेजः शोभा, कथं भवेत्? भृङ्गसम्बन्धेनैव कुसुमानि शोभन्त इति भावः । अत्र उभयो रप्यर्थयोः प्रकृतत्वा त्प्रकृतश्लेषालङ्कारः । प्रकृताप्रकृतार्थयो श्लिष्टत्वे एव ध्वने रवकाश इति विवेकः ॥ १५९

श्लो ॥ जगदादृतपल्लवाप्तिहर्षो । हरित स्सिद्ध्यति पारिजाततो वा
तदपि त्रिजगत्पति र्नियुक्तः । प्रियया तत्सुमनःपरीक्षणाय ॥ १६०

जगदिति– जगदादृतपल्लवाप्तिहर्षः जगदादृतः सर्वलोकश्लाघितः, पल्लवो विटः किसलयं च; तस्य आप्तिः प्राप्तिः, तया हर्ष स्सन्तोषः, हरितः कृष्णात्, पारिजाततो वा पारिजाता द्वा, सिद्ध्यति सम्भवति - प्रियाया इति शेषः - लोकोत्तरपल्लवं लब्ध्वा नन्दितुं न पारिजातं सत्यभामा आचकाङ्क्षे लोकोत्तरपल्लवस्य कृष्णस्य लब्धत्वादिति भावः । अत्र जगदादृतपल्लवाप्तिहर्षाधायकत्वरूपधर्मसाम्यनिबन्धनं हरिपारिजातयो रौपम्य मर्था त्सिद्ध्यती त्युपमालङ्कारध्वनिः । वा इत्यस्य विकल्पार्थ मनुक्त्वा पारिजाततो वा पारिजातादिव हरितो हर्ष स्सिद्ध्यतीत्यर्थोक्तौ तु उपमालङ्कारो वाच्य एव - नन्वेवं पल्लवार्थं पारिजातस्यानाकाङ्क्षितत्वे कुतः कृष्णं पारिजातार्थं सत्यभामा प्रेरितवतीत्यत आह । तदपीति - तदपि तथापि अपूर्वपल्लवलाभहर्षाभावेपि त्रिजगत्पतिः कृष्णः, प्रियया सत्यभामया, तत्सुमनःपरीक्षणाय पारिजातकुसुमदर्शनार्थम्, मनसः परीक्षणं तस्मै श्रीकृष्णहृदयस्य सम्यक् शोधनार्थ मित्यर्थः । कृष्णो मयि दृढ मनुरक्तो वा नवेति परिशीलितु

मिति यावत् - नियुक्तः चोदितः बभूवेति शेषः । सत्यभामायाः पारिजाताकाङ्क्षा न पल्लवलोभात् ; किन्तु पुष्पलोभा दित्येको भावः । नापि पल्लवपुष्पलोभात् किन्तु कृष्णानुरागपरीक्षार्थ मित्यन्यो भावः । उभयस्य प्रकृतत्वात् तत्सुमनः परीक्षणा येत्यत्र प्रकृतश्लेषः ॥ १६०

**श्लो ॥ यस्मि न्शङ्करदारसौरभजरीजृम्भत्कटाक्षच्छटा**
**पाताः कल्पलताबितानसुमनोगुम्भप्रियम्भावुकाः**
**तस्यासौ नवकाळिदासविदुषः काव्ये तृतीयोत्तर**
**श्चम्पूनामनि धीमतां कृतसमुल्लासो विलासोऽगमत् ॥** १६१

यस्मिन्निति– तृतीया दुत्तरः परः तृतीयोत्तरः चतुर्थ इत्यर्थः - अन्य त्सर्वम् व्याख्यातम् ॥

इति श्रीहयवदनरदनरुचिसदनवदनफेनमधुरतररससमास्वादनित्यतृप्तस्य,
फणितरमापरिणयादिप्रबन्धस्य पुलिघल्ल रामसूरिकरुणासमासादितानवद्यशब्दविद्यस्य,
बेलङ्कोण्डोपनामक मोहनरायतनूभवस्य रामस्य कृतिषु
चम्पूभागवतव्याख्यायां, मन्दरसमाख्यायां
च तु र्थो वि ला सः ।
श्रीहयग्रीवार्पण मस्तु ।



ॐ

श्रीहयवदनपरब्रह्मणे नमः

# श्रीचम्पूभागवतम्

## पञ्चमो विलासः



श्लो ॥ ताभि स्समं मधुजित स्सुरतापवर्ग
हारी बभूव तरुणीभि रथो विहारः
स्थाने विचित्रचरिते वनमालिनीत्थ
मामोदवान् सुमनसां निवहो बभूव ॥ १

ताभिरिति– अथो अनन्तरम् , मधुजितः मधुसूदनस्य कृष्णस्य, 'कृष्णस्तु भगवान् स्वय' मिति साक्षाच्छ्रीमहाविष्णुरेव कृष्णरूपेणावतीर्ण इति उभयो रेकत्वात् मधुजित्पदेन कृष्णस्य व्यवहारः - ताभिः अष्टोत्तरषोडशसहस्रसङ्ख्याभिः पूर्वोक्ताभिः, तरुणीभिः युवतीभि, स्समं सह, सुरतापवर्गहारी सुराणां देवानाम् , तापवर्गः तापसञ्चयः, तस्य हारी निवर्तकः; सुरतं मैथुन, मेवापवर्गः फलम् , तेन हारी मनोहर श्च, विहारः क्रीडा, बभूव - स्थाने भगव द्विहारस्य सुरतापवर्गहारित्वं युक्तम् - तदेवाह - वनमालिनि दामोदरे, इत्थं एवम् , विचित्र-चरिते सति अद्भुतचरित्रे सति, कायव्यूहालम्बनेन नानास्त्रीसम्भोगादिरूपाद्भुतव्यापारे सतीत्यर्थः - सुमनसां देवानाम् , स्त्रीणां च 'सुमनाः पुष्पमालत्योः स्त्रियां देवे बुधे तु ना' इति भास्करः । निवह स्समूहः, आमोदवान् हृष्टो, बभूव - भगवद्विहारफलभूतानां प्रद्युम्ना-दीनां देवाहितशम्बराद्यसुरविनाशनेन देवहितसम्पादकत्वा दित्येको भावः । भगवद्विहारेण मन्मथशरविसरसञ्जातव्यथायाः निवृत्तत्वा दित्यन्यो भावः । व्यङ्ग्यार्थस्तु - मधुजितो मधुहृतो भ्रमरस्य, ताभिः प्रसिद्धाभि स्तरुणीभि र्निजाङ्गनाभि, स्समं सुरतापवर्गहारी रतफलमनोज्ञः, विहारः बभूव - भ्रमरो भ्रमरी र्यथेष्टं रमयामासेत्यर्थः । इत्थं विचित्रचरिते भ्रमरीभ्रमरविहार-रूपचित्रचरित्रवति वनमालिनि वनमालाः वनपङ्क्तयः अस्मिन् सन्तीति तथोक्ते स्थाने प्रदेशे वनभूमा वित्यर्थः । आमोदवान् परिमळवान् , सुमनसां पुष्पाणाम् , निवहः बभूव आसीत् - आमोदवत्पुष्पवत्त्वा दत्र भ्रमरीभ्रमरविहार योग्यताऽसीदिति भावः ॥ १

ग ॥ अथ कदाचन सकलमहोत्सवमहनीये गगन इव चन्द्रकान्तालङ्कृते, रजनिकरहृदय इव पुष्परागाश्रिते, सत्यलोक इव मुक्तौघ सङ्कुले, कमलाकर इव पद्मरागशोभिते, केसरामोदिते च, पाकशासन इव वज्ररमणीये, वासन्तिकवन इव प्रवाळसमृद्धे, शरत्काल गगन इव सिताभ्रभासुरे, हंसमण्डिते च, नन्दन इवासन्नपारिजाते, हरिचन्दनामोदवासिते च, गोष्ठ इव भद्ररसास्पदे, गोपालवासयोग्ये च, स्वर्ग इव सुमनस्सङ्कीर्णे, सुरताधिगमयोग्ये च, कैलास इव सदा शिवैकनिलये, नीललोहितस्पृहणीयरत्नास्पदे च, शरत्कालपुलिन इव हिमवालुकालङ्कृते, शार्दूल इव मृगमदामोदहारिणि, मयूरमेचक इवोपबर्हभासुरे, चन्द्रमण्डल इवादर्शलेखानुवृत्ते, भागवत इव शुकालापरमणीये, बौद्धदर्शन इव साधु दूष्ये, पाण्डव इव पाञ्चालिकारमणीये, कल्पपादप इव रमणीय चित्रफलके, सुमेरुशृङ्ग इव कल्याणनिलये, सुरतसमय इव कपोत कूजितरुचिरे, पुष्पक इव विष्णुपदसञ्चारयोग्ये, बलिभवन इवानन्तभोगास्पदे, मेरुकन्दर इव दिव्यभल्लूकबालालङ्कृते, हरिश्चन्द्रचरित इव सत्यानपायिनि' रामचरित इव लक्ष्मणानपेते, महाराजकुल इव भद्रासनयोग्ये, गङ्गाप्रवाह इव काळिन्दीमिश्रते, न्यायदर्शन इव जातिमालानपेते, चैत्ररथ इव मनुष्यधर्माश्रित लोकपालविहारयोग्ये, प्राग्वंश इवेष्टगन्धसम्पन्ने, सत्काव्य इवोत्तमश्लोकगर्भे, स्वयंवरस्थलइव जगतीपतिसमाश्रितभूरिमञ्चाञ्चिते, सुग्रीवसैन्य इव कुमुदामोदिते, हिमगिरिकन्दर इव पुण्डरीकमालाश्रिते, इन्दिरामन्दिर इवाळिगीताद्दतकमलानुषक्ते, क्वचन दिव्यभवने पर्यंक मधिशयानं सत्प्रबन्धमिव विदर्भसुदक्फणितिरीतिबद्धादरं, सारसमिव लक्षणालापलोलुपं, धर्मात्मजमिव सत्योल्लङ्घनभीरुं, भार्गवमिव रवितनयानुरागिण, मृक्षराजसुतानुरागिणं च, सिद्धरसमिव प्रद्युम्नजनक, मारामिव भद्रागमसंवर्धितामोदं, ब्रह्मलोकमिव प्रसन्नमानसं, दुर्योधनमिव मित्रविन्दानुरक्तं, समन्दस्मितं मुकुन्द मुपासीनामोदमाना भगवती भीष्मतनया तस्थौ ॥ २

अथेति– अथ कदाचन कस्मिश्चित्समये भगवती षाड्गुण्यनिलया भीष्मतनया रुक्मिणी क्वचन कुत्रचित् दिव्यभवने दिव्यशब्दोऽत्रलक्षणया प्राशस्त्यं बोधयति - प्रशस्तगृहे पर्यङ्कम् शय्या मधिशयानं अधिष्ठित्य शयानं 'अधिशीङ्स्थेति' आधारस्य कर्मत्वं - मुकुन्दं कृष्ण मुपासीना सेवमाना सती अत एव मोदमाना आनन्दवती तस्थौ स्थितवतीत्यन्वयः। दिव्यभवनं विशिनष्टि - सकलेत्यादिभि स्सप्तम्यन्तैः - सकलमहोत्सवमहनीये सर्वविधोत्सवश्लाघ्यतमे गगन इव आकाशे इव चन्द्रकान्तालङ्कृते चन्द्रकान्तमण्यलङ्कृते चन्द्रस्य

कान्ताः प्रियाः अश्विन्यादयः ताभि रलंकृते इति च – रजनिकरहृदय इव चन्द्रमनसीव, पुष्यरागाश्रिते पुष्यरागमण्याश्रिते, पुष्याख्यनक्षत्रविषयानुरागाश्रिते इति च– सत्यलोक इव ब्रह्मपुरवत्, मुक्तौघसङ्कुले मौक्तिकसङ्घव्याप्ते, मुक्तानां हिरण्यगर्भोपासनया ब्रह्मलोकं प्राप्तानां सिद्धाना मित्यर्थः । यद्वा सगुणोपासनया ईश्वरसायुज्यं प्राप्ताना मिति वा – ओघेन समूहेन, सङ्कुले परीते च – कमलाकर इव कासारवत्, पद्मरागशोभिते पद्मरागमण्यलङ्कृते, पद्मानां रागेण रक्तिम्णा शोभिते इति च – केसरामोदिते च केसरैर्वकुळैः, पुन्नागैः, नागकेसरै र्वा, किञ्जल्कै रितिच – आमोदिते वासिते, पाकशासन इव इंद्रवत्, वज्ररमणीये वज्रमणिरमणीये, वज्रायुधमनोहरे इति च – वासंतिकवन इव वसन्तकालिकवनवत्, प्रवाळसमृद्धे विद्रुमव्याप्ते, पल्लवसमृद्धे इति च – शरत्कालगगन इव शारदाकाशवत्, सिताभ्रभासुरे-सिताभ्रः कर्पूरः, 'घनसार श्चन्द्रसंज्ञः कर्पूरो हिमवालुके'त्यमरः-सिताभ्रं श्वेतमेघश्च, तेन भासुरे प्रकाशमाने, हंसमण्डिते च–हंसा श्चित्रलिखिताः मानसौकनश्च, तैर्मण्डिते शोभिते– नन्दन इव इन्द्रवनवत्, आसन्नपारिजाते आसन्न स्सन्निहितो नष्ट श्च, पारिजातो वृक्षः यस्य तस्मिन्, हरिचन्दनामोद-वासिते च– हरिचन्दनं पीतवर्णं चन्दनं, 'तैलपर्णिकगोशीर्षे हरिचन्दन मस्त्रिया' मित्यमरः । देवतरुश्च 'मन्दारः कल्पवृक्षश्च पुंसि वा हरिचन्दन' मित्यमरः । तस्य आमोदेन गन्धेन, वासिते सुरभिते, यद्वा वनपक्षे हरिचन्दनस्य पुष्पाणि हरिचन्दनानि, तेषा मामोद इति वाच्यम्-गोष्ठ इव व्रजवत्, भद्ररसास्पदे-भद्ररसः चन्दनद्रवः वृषभराव श्च, तस्य आस्पदे स्थानभूते – 'आस्वादनध्वनिसुधाम्बुरसाख्यधातुष्विष्टोरस' इति भास्करः । गोपालवासयोग्ये च–गोपालः कृष्णो गोपश्च, तस्य वासयोग्ये निवासार्हे, स्वर्ग इव सुमनसङ्कीर्णे – सुमनोभिः पुष्पैः, देवैश्च, सङ्कीर्णे व्याप्ते, सुरताधिगमयोग्ये च–सुरतस्य मैथुनस्य, अधिगमः लाभः, सुरतायाः देवभूयस्य, अधिगम इति च–तस्य योग्ये अर्हे–कैलास इव सदा शिवैकनिलये-सदा सर्वदा, शिवानां कल्याणाना, मेकनिलये मुख्यस्थाने; सदा शिवस्य शम्भो, रेकनिलये इति च–नीललोहितस्पृहणीयरत्नास्पदे च– नीलानि च तानि लोहितानि च नीललोहितानि, स्पृहणीयानि रत्नानि स्पृहणीयरत्नानि, नीललोहितानि च तानि स्पृहणीयरत्नानि च नीललोहित-स्पृहणीयरत्नानि– यद्वा नीलो नीलवर्णः, लोहितो रक्तवर्णः, ताभ्यां स्पृहणीयानि सुन्दराणि रत्नानीति समासः, । इन्द्रनीलमणयः पद्मरागमणय श्चेत्यर्थः । अन्यत्र नीललोहित शिवः, तस्य स्पृहणीयाः स्पृहाविषयाणि, रत्नानि नीललोहितस्पृहणीयरत्नानि, तेषा मास्पदे च, शरत्कालपुलिन इव शारदपुलिनवत्, 'तोयोद्धितं तत्पुलिन' मित्यमरः । हिमवालुकालङ्कृते हिमवालुका कर्पूरः सीतसिकता च, तया अलङ्कृते भूषिते, शार्दूल इव व्याघ्रवत्, मृगमदा-मोदहारिणिमृगमदः कस्तूरी, तस्य आमोदेन गन्धेन, हारिणि मनोहरे, मृगाणां मद मामोदं सन्तोषं च, हरतीति मृगमदामोदहारी तस्मि न्नितिच– यद्वा मृगाणां मदेन सारांशेन, आमोदं तोषं, हरति भजतीति तथोक्तम्–मयूरमेचक इव शिखिचन्द्रकवत्, उपबर्हभासुरे

उपबर्हे उपधानं, 'उपधान न्तूपबर्हं शय्यायां शयनीयव' दित्यमरः। तेन भासुरे–अन्यत्र उपबर्हे – बर्हे विभक्त्यर्थेऽव्ययीभावः। 'पिञ्छबर्हे नपुंसके' इत्यमरः। तत्र भासुरे भासमाने इति च – चन्द्रमण्डल इव सुधांशुबिम्बवत्, आदर्शरेखानुवृत्ते दर्पणपङ्क्तिपरीते, अन्यत्र रलयोरभेदात् लेखा देवताः, आदर्शं अमावास्यापर्यन्तं, लेखै रनुवृत्ते अनुसृते-भोज्यत्वा दिति भावः। 'अमावास्या त्वमावस्या दर्श स्सूर्येन्दुसङ्गमः'–'आदितेया दिविषदो लेखा अदितिनन्दनाः' 'दर्पणो मुकुरादर्शौ' इति चामरः। भागवत इव भागवतग्रन्थवत्, शुकालापरमणीये–शुकः कीरो व्यासपुत्रश्च, तस्य आलापै र्भाषणैः, रमणीये मनोहरे – बौद्ध-दर्शनइव बौद्धमतवत्, साधुदूष्ये साधूनिबहुमूल्यानि, दूष्याणि वस्त्राणि, यस्मिन्–यद्वा साधु दूष्यं वस्त्रगृहं यस्मिन्–लीलागृहे विचित्रपटादिना खट्वापर्यास्तं वस्त्रगृहं कुर्वन्तीति प्रसिद्धं–'दूष्यं वस्त्रे च तद्गृहे' इति विश्वः–अन्यत्र साधुभि स्सज्जनै र्दूष्ये निन्द्ये-पाण्डव इव पाण्डुपुत्रवत्, पाञ्चालिकारमणीये पाञ्चालिका काष्ठादिनिर्मिता प्रतिमा, द्रौपदी च–'पाञ्चालिका पुत्रिकायां द्रौपदी रतिभेदयो'रिति भास्करः। तया रमणीये, कल्पपादप इव कल्पवृक्षवत्, रमणीयविचित्रफलके रमणीयं चित्रफलक मालेख्याश्रयीभूतं फलकं यस्मिन्, रमणीयाणि चित्राणि फलानि यस्य तस्मिन्निति च-शेषा द्विभाषेति कप्–सुमेरुशृङ्ग इव मेरुपर्वतशिखरवत्, कल्याणनिलये कल्याणं मङ्गळं स्वर्णं च तस्य निलये स्थाने-सुरतसमय इव रतिसमयवत्, कपोतकूजितरुचिरे कपोतानां पक्षिणां, कूजितेन ध्वनिना, कपोतस्येव कूजितेनेति च–रुचिरे कपोतनादै स्सन्त्रास्य पातय ततो विवशां सुखाब्धौ इति तृतीये विलासे–पुष्पक इव विमानवत्, विष्णुपदसञ्चारयोग्ये श्रीकृष्णपादचारार्हे, आकाशसञ्चारयोग्ये च–बलिभवन इव रसातलवत्, अनन्तभोगास्पदे अमितभोगस्थाने, शेषदेहस्थाने, इति च–मेरुकन्दरइव मेरो र्गुहाया मिव दिव्यभल्लूकबालालङ्कृते प्रशस्तजाम्बवतीसमलङ्कृते, प्रशस्तभल्लूक-शिशुभूषिते च– 'अथ भल्लुके ऋक्षाच्छ भल्लभल्लूका' इत्यमरः। हरिश्चन्द्रचरित इव हरिश्चन्द्रो नाम इक्ष्वाकुवंशजः कश्चन सत्यसन्धो राजा तस्य चरितम् चरित्रम्, तस्मिन्निव, सत्यानपायिनि सत्यम् यथार्थभाषित्वं तेन अनपायिनि अवियुक्ते इत्यप्रकृतार्थः – सत्यया नग्नजित्सुतया, अनपायिनीति प्रकृतः – रामचरित इव रामायण इव, लक्ष्मणानपेते लक्ष्मणया माद्या, लक्षणा लक्ष्मणा इति च द्विविधम् तस्या नाम–लक्ष्मणेन च अनपेते युक्ते, महाराजकुल इव महाराजवंश इव, तत्सङ्घ इवेति वा-भद्रासनयोग्ये भद्राया श्श्रुतकीर्तिसुतायाः, आसनम् स्थितिः, भद्रासनम् सिंहासनम् च तस्य योग्ये-गङ्गाप्रवाह इव कालिन्दी मिश्रिते-कालिन्द्या तन्नामिकया स्त्रिया यमुनया च, मिश्रिते युक्ते, न्यायदर्शन इव न्यायशास्त्रवत्, जातिमालान-पेते जातिपुष्पस्रङ्मिश्रिते, असदुत्तरम् जाति रित्युक्तलक्षणजातिरूपदोषसङ्घयुक्ते च–चैत्ररथ इव कुबेरोद्यान इव, मनुष्यधर्माश्रितस्य मानुषत्व माश्रितस्य, लोकपालस्य कृष्णस्य, मनुष्याणामिव धर्मं माश्रितस्य लोकपालस्य कुबेरस्येति च– 'मनुष्यधर्मा धनद' इत्यमरः।

विहारयोग्ये क्रीडार्हे, प्राग्वंश इव यजमानसदस्यादीनां वासाय कल्पितम् गृहम् प्राग्वंश इत्युच्यते— 'प्राग्वंशः प्राग्घवि र्गेहा' दित्यमरः — इष्टगन्धसम्पन्ने इष्टगन्ध स्सुगन्धः, होमधूम श्च— तेन सम्पन्ने समृद्धे, सत्काव्य इव योग्यकाव्यवत्, उत्तमश्लोकगर्भे उत्तमश्लोकः पुण्यश्लोको हरिः — उत्तमाः ध्वनिरसादिमन्तः श्लोका श्च गर्भे अन्तः यस्य तस्मिन्—स्वयंवरस्थल इव जगतीपतिसमाश्रितेन श्रीकृष्णाश्रितेन, महाराजाश्रितैरिति च—भूरिमञ्चः सुवर्णमञ्चः, तेन अनेकमञ्चै श्च अञ्चिते मण्डिते, सुग्रीवसैन्य इव सुग्रीवः श्रीरामसखः कश्चन कपिराजः, तस्य सैन्यम् सेना, तस्मिन्निव, कुमुदामोदिते उत्पलावासिते, कुमुदनामककप्यानन्दि ते च— हिमगिरिकन्दर इव हिमवत्पर्वतगुहाया मिव, पुण्डरीकमाला सिताम्भोजसङ्घः, व्याघ्रसन्ततिश्च 'पुण्डरीको व्याघ्रभेदे' 'पुण्डरीकम् सिताम्भोज मिति' चामरः। तया आश्रिते युक्ते, इन्दिरामन्दिर इव लक्ष्मीसदनवत्, आळिगीतादृतकमलानुष क्ते- आळय स्सख्यः, तासां गीतेषु गानेषु, आदृतया सादरया, कमलया लक्ष्म्या, अनुषक्ते इत्यप्राकरणिकार्थः। अन्यत्र अळयः भृङ्गाः, तेषां गीतैर्झङ्कारैः, रादृतैः युक्तैः, कमलैः पद्मैः, अनुषक्ते युक्ते इति—यद्वा अप्राकरणिकेऽपि अळयो भृङ्गा स्तेषां गीतेष्वित्येव वाच्यम्। अथ मुकुन्दम् विशिनष्टि — सत्प्रबन्धमिव सत्काव्यमिव, विदर्भसुदृक्फणितिरीतिबद्धादरम् विदर्भशब्द स्तद्देशाधीश्वरे भाक्तः। विदर्भस्य भीष्मस्य, सुदृक् बाला रुक्मिणीत्यर्थः— तस्याः फणितिरीत्याम् वचनवैखर्याम्, बद्धादरम् सादरम्, अन्यत्र विदर्भदेशे सुदृश स्सुधियः विदर्भसुदृशः, तेषां फणितिरीतिः वैदर्भीनामिका शब्दरीतिः, तया बद्धः रचितः, आदरः प्रीतिः, विदुषामिति भावः। येन तम्— वैदर्भीरीत्या विबुधा नानन्दयन्त मित्यर्थः — सारसमिव पक्षिविशेषमिव, (आन्ध्रे बेग्गुरु) लक्षणालापलोलुपम् लक्षणा सारसस्त्री, 'सारसस्य तु लक्षणे' त्यमरः। तस्या आलापेषु भाषितेषु, लोलुपम् आसक्तम्, धर्मात्मजमिव धर्मराज मिव, सत्योल्लङ्घनभीरुम् सत्यायाः उल्लङ्घने अतिक्रमणे, सत्यस्योल्लङ्घने च— भीरुम् भयशीलम्, भार्गवमिव परशुराम मिव, शुक्रमिवेति च—रवितनयानुरागिणम् रवितनया काळिन्दी, रवितनयः कर्णश्च, तत्रानुरागिणम् सादरम्, कर्णस्य भार्गवशिष्यत्वम् प्रसिद्धम् भारते—ऋक्षराजसुतादरम् च ऋक्षराजो जाम्बवान् तस्य सुतायाम् जाम्बवत्या मादरः प्रीति र्यस्य तम् — अन्यत्र ऋक्षाणाम् नक्षत्राणाम् राजा चन्द्रः तस्य सुतो बुधः तस्मिन् आदरो यस्य तम्। बुधशुक्रयो र्मित्रत्वम् ज्योतिश्शास्त्रे प्रसिद्धम्—अत्र उपमानयो रामशुक्रयो रुभयो रेकेन भार्गवपदेन ग्रहणात् उपमाप्रतिभोत्थापिता प्रस्तुतश्लेषालङ्कारः—सा चोपमा श्लिष्टसाधर्म्या — सिद्धरसमिव पारदमिव, प्रद्युम्नजनकम् प्रद्युम्नो मन्मथावतारः, प्रकृष्टम् द्युम्नम् स्वर्णम् च—तस्य जनकम् उत्पादकम्, आराममिव उद्यानवनमिव, भद्रागमेन भद्रायाः आगमेन, भद्रनामकवृक्षेणेति च—सम्वर्धितः वृद्धिं प्रापितः, आमोदः हर्षः परिमळ श्च, यस्य तम् तथोक्तम्; ब्रह्मलोकमिव परब्रह्मपदमिव, प्रसन्नमानसम् प्रसादयुक्तहृदयं, प्रकर्षेणसन्नं नष्टं मानसं चित्तं, यस्मिं स्त मिति च—'तन्मनो विलयं याति तद्विष्णोः

परमं पद मिति श्रवणादिति भावः । दुर्योधनमिव मित्रविन्दानुरक्तं मित्रविन्दायां मित्रभूते विन्दे च, अनुरक्तं सानुरागं, विन्दानुविन्दयो र्दुर्योधनमित्रत्वं भारते प्रसिद्धम् । समन्दस्मितं मन्दहाससहितं, उत्तमविषयत्वा न्मन्देत्युक्तम् । २

श्लो ॥ अत्रान्तरेऽनवधिभीष्मसुतानुराग
मन्त र्निरुध्य परिहासकथाप्रधानः
तां भीरु मश्रुतचरै रुरुजीविताधी
शाशावशां हरि रकम्पय दुग्रशब्दैः । ३

अत्रेति॥ अत्रान्तरे अस्मिन् समये, अनवधिभीष्मसुतानुरागः अपारं रुक्मिणीविषयं प्रेम, अन्तर्हृदि, निरुध्य स्तंभयित्वा, तत्र हेतु माह—परिहासकथाप्रधान इति— परिहासकथाः परिहासवचनानि, प्रधानाः मुख्या यस्य सः 'बहुळग्रहणा द्विशेषणस्य परनिपातः' । केवल-परिहासरचनालालस इत्यर्थः । हरिः कृष्णः, उरुजीविताधीशाशावशां उरु महती च सा जीविताधीशाशा प्राणेशानुरागः तस्य वशा मधीनां, प्राणे श्रीकृष्णे, अत्यन्तानुरक्ता मित्यर्थः । तां प्रसिद्धां भीरुं स्त्रियं, रुक्मिणी मित्यर्थः । अश्रुतचरैः अश्रुतपूर्वैः 'भूतपूर्वे चरट्' उग्रशब्दैः तीक्ष्णवचनैः, कठिनभाषणै रित्यर्थः । अकम्पयत् कम्पयामास । अत्रोत्तरार्द्धे हरि सिंहः, भीरुं भयशीलां, तां उरुजीविताधीशाशावशां उरु महती च सा जीविताधीशस्य यमस्य, सम्बन्धिनी आशा दिक्, दक्षिणा—तत्र वशा करिणी तां दक्षिणदिग्गतकरिणी मित्यर्थः । अश्रुतचरै रुग्रशब्दैः भीषणध्वनिभिः, अकम्पयत् भीषयामास । ३

तथाहि॥ हरे रुग्रशब्दा नेव प्रपञ्चयतीत्यर्थः —

ग॥ अयि बाले ! विदर्भराजनन्दने! कथ मासन्नजीवितेशपदं पुण्यजनाग्रगण्य मतिमृदुहृदयतयाभीरुजनानुरक्तं खद्योतातिशायितेजसंसम्पदि किन्नरेशं शान्तनवकीर्तिं तव सहजप्रेमपात्रं गुरुस्पृहाविषयं मदुपसर्पणावसरे नितान्त मभीकया त्वया निश्शङ्क-मवलोकित मत एवासुसदृश मनङ्गैकतुलनीयरूप मसुकुमारप्रभावतया ममाप्यनाक्रमणीयं मयि निश्रिता सुहृद्भावमन्तर्गतधनुर्वेदनैपुण्यं परासुपीडनप्रवीणं स्वस्य निरपायत्राणा याश्रयीकृतभूभृदन्तरं विशेषतो मागधभावानुवर्तिनं चार्जुनस्यापि मालिन्यसंपादिका मन्यामेव कीर्तिं मार्जयन्त माश्रयाशतेजसं निजप्रतापेन पाकशासने प्यसक्तिं व्यक्ती-कुर्वाणं निगीर्ण परपक्षराजमण्डलतया दर्श मनुकुर्वाणं बलादेव धात्री माक्रम्य भुञ्जानं पुरुषर्षभं शिशुपाल मपहाय दोषाकरकुलसम्भव मसत्प्रकृत्याश्रयं कदाचिदपि पराक्रमाविषयं बलिविरोधेन सङ्कोचितात्मप्रभावं भुवि परोत्कर्ष मवलोक्य संप्रति

**विशेषतः क्षमा माश्रयन्त मक्षमेशाननकाम मभद्रासनयोग्य मनतिदुर्लभरूपं त्वया परासक्तहृदययापि दैव मनुगतया लब्ध मत्युन्नतबलानुवर्तनेन कालं नयन्तं भुजङ्ग-भोगलोलात्मानं सर्वदा वाहिनीश मर्जुन मनुवर्तमान मगणितरिपुभयतया साम्प्रत मपरमपिवाहिनीशं शरणं याचितवन्त मजातरूपसम्पन्नं हरिपूजानिवारणेन गोत्रोत्पाट-नेन कुवलयापीडनाशनेन सधेनुशकटत स्स्वलाभेन परशुदग्भोग्यतया चातिरिक्तकीर्ति मसङ्क्लेश मदूरदर्शिनी मा मकामयथाः –**

अयीति॥ अयि बाले विदर्भराजनन्दने भीष्मसुते, राजपुत्र्यास्तव राजैव पति र्भवितु मर्हति न तु मादृश इति भावः– अत एव परिकराङ्कुरालङ्कारः। बालत्वमेव प्रपञ्चयति कथमित्यादिना – अदूरदर्शिनी दीर्घालोचनरहिता, अविमृश्यकारिणीत्यर्थः। त्वं शिशुपालं विहाय कथं कुतो, मा मकामयथाः कामितवती ? इत्यन्वयः– शिशुपालस्य गुणान् प्रपञ्चयति आसन्नेत्यादिभिः– आसन्नजीवितेशपदं– आसन्नं सन्निहितं, जीवितेशपदं प्राणेशत्वं, यस्य तं तव पतित्वे नोद्दिष्ट मित्यर्थः। आसन्नयमपद मितिच सन्निहितमृत्यु मित्यर्थः। पुण्यजनाग्र-गण्यं–पुण्यजनाः धन्यजनाः राक्षसा श्च, तेषा मग्रगण्यं अग्रे गणनीयं, मुख्य मित्यर्थः। रावणकुम्भकर्णयो रेव शिशुपालदन्तवक्त्ररूपत्वेन जातत्वा दिति भावः। अन्यत्र 'ऋषीणां श्रीमतां गेहे योगभ्रष्टोऽभिजायते' इति पुण्यवदग्रेसरत्वादेव अस्य चक्रवर्तिवंशे जन्मेति भावः। अतिमृदुहृदयतया अतिसुकुमारचित्तत्त्वेन, हेतुना भीरुजनानुरक्तं स्त्रीजनानुरागिणं, भयशील-जनानुरक्त मिति च–भयशील मित्यर्थः। खद्योत स्सूर्यः कीटश्च, त मतिशेते इति तदतिशायि, तेजो यस्य तं सूर्या दधिकप्रतापं–कीटवत् क्षुद्र मिति च–सम्पदि विषये किन्नरेशं कुबेरं, कुत्सितनृपं च–शान्तनवकीर्तिं शान्तनवो भीष्मः तस्यैव कीर्ति र्यशो यस्य तं, शान्ता नष्टा नवा कीर्ति र्यस्य तमिति च-नास्य कीर्ति रुत्पत्त्यनन्तरं नष्टा किन्तु उत्पत्ति दशाया मेवेति निष्कीर्ति मित्यर्थः। तव सहजप्रेमपात्रं नैसर्गिक प्रेमास्पदं, सहजस्य सोदरस्य, रुक्मिणः प्रेमपात्र मितिच– गुरुस्पृहाविषयं अधिकानुरागविषयं, गुरो र्भीष्मस्य, स्पृहा अनुरागः, तस्यविषयः गोचरः, त मिति च– मदुपसर्पणावसरे ममेति कर्तरि षष्ठी– अन्यत्र कर्मणि। उपसर्पणं आगमनं, तस्य अवसर स्समय स्तस्मिन्, त्वां प्रति ममागमनसमये इत्येकोऽर्थः। मां प्रति तवागमनसमये इत्यन्यः। नितान्त मत्यन्त, मभीकया कामुकया निर्भययेति च, त्वया निश्शङ्कं निर्लज्जम्, किया नय मिति सोपेक्षं च अवलोकितं दृष्टं, अतएव असुसदृशं प्राणसमं, अननुरूपं च– अनङ्गैकतुलनीयरूपं अनङ्गेन मन्मथेन, एकेन तुलनीय मुपमेयं, रूपं सौन्दर्य माकारोवा, यस्य तं मदनसुन्दर मित्यर्थः। अन्यत्र अनङ्गेन शरीररहितेन, एकेन तुलनीयं रूपं यस्य, सशरीरः कोऽपि ततः कुरोपो नास्तीति भावः। यद्वा नञो विरुद्धत्व मर्थः। विरुद्धानि अङ्गानि अवयवाः यस्य तत् अनङ्गं, अतएव एकेन स्वेनैकेनैव तुलनीयं रूप माकारो

यस्य तं, अनेन तुल्यः कोऽपि विषमावयवो नास्तीति भावः। असुकुमारप्रभावतया तीक्ष्णप्रतापत्वेन, मयापि अनाक्रमणीयं अनुलङ्घ्यम्, मत्तोऽप्यधिकप्रताप मित्यर्थः। अन्यत्र शोभनश्चासौ कुमारो राजपुत्रश्च सुकुमारः, तस्य प्रभावः यस्य न विद्यते सोऽसुकुमारप्रभावः तस्य भाव स्तत्ता तया, मया लक्ष्म्यापि अनाक्रमणीयं प्राप्तु मनर्हं, राजविक्रमवत्येव सम्प द्वर्तते इति भावः। मयि निश्चिता सुहृद्भावं धृतविरोधं मामपि द्विषन्त मित्यर्थः। निश्चितः असुहृद्भावः असून् प्राणान् हरतीति असुहृत् तस्य भावः। प्राणहरत्वं, येन तं, स्वपादस्थितलोचनभञ्जनालिङ्गान्मामेव स्वप्राणापहर्तारं स निश्चितवा निति भावः। अन्तर्गतं परिपूर्णं नष्टंच धनुर्वेदनैपुण्यं धनुर्विद्याकौशलं यस्य तं– परासुपीडनप्रवीणं परेषां शत्रूणा, मसुपीडने प्राणापहारे, प्रवीणं समर्थं, शत्रुराजविनाशक मित्यर्थः। अन्यत्र परासवो मृताः, तेषां पीडने प्रवीण मिति च–पिष्ट पेषणवत् मृतमारक एवायं नतु सजीवमारकः। तेभ्यो भीतत्वा दिति भावः। यद्वा परं केवल मसवः प्राणा येषां ते परासवो व्यर्थजीवा अशक्ता इत्यर्थः। अशक्तानेवायं पीडयति नतु शक्तान् बाधितुं शक्नोतीति भावः। स्वस्य निरपायत्राणाय निरपाय मपायरहितं यथातथा, त्राणं रक्षणं, तस्मै आश्रयीकृतभूभृदन्तरं अनुसृतजरासन्धादिराजान्तरं, एतेन नाय मसहायः किन्तु प्रबलसहाय एवेति सिद्धम्– अन्यत्र निवासीकृतपर्वतमध्यं क्वापि पर्वतगुहायां निलीन मित्यर्थः। विशेषतः अतिशयेन मागधभावानुवर्तिनं मागधभावः जरासंधहृदय, मनुवर्तते इति तथोक्तं– मागधानां भावः वैतालिकत्व मनुवर्तमानमिति च–अर्जुनस्यापि पार्थस्यापि, कार्तवीर्यार्जुनस्यापीति वा मालिन्यसम्पादिकां कलङ्कसम्पादिनीं, अतएव अन्यां लोकविलक्षणां, अन्येयं रूपसम्पत्ति रन्या वैदग्ध्यधोरणी त्यादौ तथा प्रयोगोपलम्भात्–कीर्तिं यशः, आर्जयन्तं सम्पादयन्तं, स्वकीययशसा अर्जुनस्यापि किञ्चिन्न्यूनत्वं जातमिति तत्कीर्तेर प्यधिकेय मस्य कीर्ति रिति भावः। व्यतिरेकालङ्कारः। अन्यामेवे त्यत्र अतिशयोक्तिभेदः–'भेदकातिशयोक्तिस्स्या त्तस्यैवान्यत्व वर्णन' मिति लक्षणात्। अन्यत्र अर्जुनस्य श्वेतस्यापि वस्तुनः नीलगुणविरोधिश्वेतवर्णवतोऽपी त्यपे र्थः। मालिन्यसम्पादिकां नैल्याधायिनीं, तद्गुणालङ्कारः। अतएव अन्यामेव दुष्टामेव, कीर्तिं अपकीर्ति मित्यर्थः। आर्जयन्त मिति आश्रयाशतेजसं आश्रयाशो बृहद्भानुः 'आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः' इत्यमरः। तस्येव तेजः प्रतापो यस्य तं, आश्रयं स्वाश्रितजन, मश्नातीति आश्रयाशः आश्रितपीडक मित्यर्थः। तेजो यस्य तं– आश्रितानेवास्य तेजो बाधते नतु परानिति भावः–यद्वा आश्रितनाशकोऽयं कृतघ्न इति भावः। निजप्रतापेन हेतुना पाकशासने इन्द्रेऽपि अशक्तिं असामर्थ्यं व्यक्तीकुर्वाणं प्रकटयन्तं इन्द्राद प्यधिकप्रताप मित्यर्थः। अन्यत्र पाकशासने शिशुशिक्षणे 'पोतः पाकोऽर्भको डिम्भ' इत्यमरः। शिशुशिक्षणविषये एवायं तेजस्वी न तु तरुणशिक्षणे इत्यर्थः। निगीर्णपरपक्षराजमण्डलतया कबळितशत्रुराजसङ्घत्वेन हेतुना, अपहृतकृष्णपक्षचन्द्रबिम्बतयेति च–दर्श ममावास्या, मनुकुर्वाणं अनुसरन्त मित्युपमालङ्कारः। अनेन शत्रुहन्तेति स्तुतिः–

नीचोपमया निन्दाभिव्यक्ति रिति च ध्येयम् । बलादेव स्वशक्त्या धात्रीं भूमि माक्रम्य स्वायत्तीकृत्य भुञ्जानं पालयन्तं, अनुभवन्तमिति वा – तत्फलभूतसस्यादीनां षष्ठांशस्य राजभोग्यत्वादिति भावः–अन्यत्र बलात् हठात् तदनिच्छयैवेत्यर्थः । एतेन वात्स्यायनसूत्रदृष्ट्यापि अकामितस्त्रीसंसर्गो दुष्ट इति फलितम् । तत्रापि धात्रीं उपमातरमेव 'सकामनाऽपि श्वश्रूपमात्रादयस्त्याज्या' इति वात्स्यायनमत मप्युल्लङ्घित मिति भावः । आक्रम्य भुञ्जानं तयासह रममाण मित्यर्थः । पुरुषर्षभं पुरुषश्रेष्ठं, पुरुषाकारवृषभमिति च द्विपात्पशुमित्यर्थः । अत्र स्तुत्या निन्दाया अभिव्यक्तेः व्याजस्तुत्यलङ्कारः । अयं च श्लेषोज्जीवितः । एवं शिशुपालं वर्णयित्वा अथ अनयैव भङ्ग्या स्वस्य दोषान् प्रपञ्चयति– दोषाकरकुलसम्भवं पापिष्ठवंशजातं, चन्द्रवंशजातं च – असत्प्रकृत्याश्रयं दुष्टस्वभावाश्रितं, मिथ्याभूतमायाश्रयं च – यद्वा प्रकृत्या आश्रयः प्रकृत्याश्रयः प्रकृत्या इति कर्मणि षष्ठी असन् अविद्यमानः प्रकृत्याश्रयो यस्य तं जीववत्प्रकृति मनाश्रितवन्त मित्यर्थः । किन्तु प्रकृतिरेवैन माश्रयतीति भावः – कदाचिदपि पराक्रमाविषयं पराक्रमस्य प्रतापस्य, अविषयं पराक्रमरहित मित्यर्थः । परां शत्रूणा माक्रमः पराक्रमः परकृताक्रमणमित्यर्थः । तस्याविषयं मा माक्रमितुं परा न शक्नुवन्तीति भावः । बलिविरोधेन बलव द्विरोधेन, सङ्कोचितात्मप्रभावं उपसंहृतात्मतेजसं, कालयवनादियुद्धसमये इति भावः–बलिविरोधेन बलिचक्रवर्तिविरोधेन, सङ्कोचितात्मप्रभावं वामनावतारे आत्मप्रभावस्य सङ्कोचितत्वादिति भावः–भुवि लोके, परोत्कर्षं शत्रूत्कर्ष, मवलोक्य दृष्ट्वा, सम्प्रति विशेषतः अतिशयेन, क्षमां क्षान्तिं, भुवं च आश्रयन्तं भजन्तं, स्वापेक्षया शत्रुषु उत्कृष्टेषु सत्सु तत्र विक्रमितु मशक्तत्वात् क्षान्तमित्येको भावः । दुष्टराजकृतभूभार मुद्वीक्ष्य तदुद्धरणार्थं भूमावऽवतीर्ण मित्यन्यो भावः । अक्षमे अशक्ते विषये क्षमारहितोऽक्षमः अहितः तस्मिन्निति च शासनकामं शिक्षासक्तं, अभद्रासनयोग्यं सिम्हासनानर्हं यदुशापादिति भावः – अभद्रस्य अमङ्गळस्य, आसने क्षेपणे, योग्यमर्हं, अनिष्टनिवारकमिति यावत् – आसु गतिक्षेपणयोरिति धातुः । अनतिदुर्लभरूपं अतिदुर्लभं नभवती त्यनतिदुर्लभं लोकसाधारणमिति यावत् रूपं यस्य तं अनतिसुन्दर मित्यर्थः । अन्यत्र अनतयः नमस्कार मकुर्वाणाः तैर्दुर्लभरूपं भक्तैकगम्यं मम रूपमिति भावः । यद्वा अतिदुर्लभं यस्मान्नविद्यते त दनतिदुर्लभं अत्यन्तदुर्लभ मित्यर्थः । रूपं यस्य तं ब्रह्मस्वरूपस्य अतिगम्भीरत्वा दतिदुर्लभत्वं – तथा च 'गुरुशास्त्रे विनात्यन्तं गम्भीरं ब्रह्म वेत्ति क' इति विद्यारण्यश्रीचरणाः – यद्वा 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'ति श्रुतेः । मनसा वचसा च ब्रह्मपदं दुर्लभ मिति भावः । परासक्तहृदययापि परोऽन्यो वरः शिशुपाल इत्यर्थः । परमात्मेति च, तत्रासक्त हृदयं यस्या स्तया, तथापि दैव मनुगतया दैवाधीनया, ग्रामाद्बहि र्वर्तमानं दैवं भवानी मनुगतया, पूजार्थमनुसृतयेति च – त्वया लब्धं प्राप्तं, दैववशादेव आवयोस्सङ्घटनं न तु पुन स्तव मयि काम इति निन्दा – मयि सक्ताया-अपि तव दैवपूजार्थं बहिरागमनसम्भवा दावयो स्सङ्घटन मनुरूप मासीदिति वास्तवार्थः ।

अत्युन्नतबलस्य अमितबलशालिनः, कस्यचि दनुवर्तनेन अनुसरणेन, हेतुना अन्यत्र अत्युन्नतस्य लोकोत्तरस्य, बलस्य रामस्य, अनुवर्तनेनेति च – कालं समयं, नयन्तं गमयन्तं, भुजङ्गभोगः विटभोगः, सर्पशरीरञ्च–तत्र लोलः आसक्तः, आत्मा मनो देहश्च, यस्य तं सर्वदा वाहिनीशं सेनापतिं, अर्जुनं पार्थं, अनुवर्तमान मनुसरन्तं, स्वस्य दुर्बलत्वा दर्जुनसहायेन जीवन्तमित्यर्थः। अन्यत्र अर्जुनं श्वेतं, वाहिनीशं समुद्रं क्षीरोदमिति यावत्, अनुवर्तमानं तत्र शयान मित्यर्थः। अगणितरिपुभयतया अमितशत्रुभयतया, साम्प्रत मधुना, अपर मन्यमपि, वाहिनीशं सेनापतिं, शरणं रक्षकं, याचितवन्तं प्रार्थितवन्तं, अर्जुनसहाये सत्यपि रिपुभयस्यानवधिकत्वेन अन्यसहाय मपेक्षमाण मित्यर्थः। अन्यत्र अगणितरिपुभयतया रिपुभयो येन न गणितः सः अगणितरिपुभयः तृणीकृतरिपु रित्यर्थः। तस्य भाव स्तत्ता तया साम्प्रत मपर मन्यं, वाहिनीशं लवणाब्धिं, शरणं गृहं, याचितवन्तं द्वारकाया स्समुद्रे निर्मितत्वादिति भावः। अजातरूपसम्पन्नं सुवर्ण-सम्पद्रहितं, 'चामीकरं जातरूपं महारजतकाञ्चन' इत्यमरः। अन्यत्र अजात मभूत मपूर्व मितियावत् – रूपं सौन्दर्यं, तेन सम्पन्नं समृद्धं – हरि विष्णु रिन्द्रश्च, तस्य पूजायाः अर्चायाः, निवारणेन निरोधेन, गोत्रं वंशः गोत्रः पर्वतश्च तस्य उत्पाटनेन उन्मूलनेन, गोत्रं कुले नाम्नि च – स्या द्गोत्रस्तु धरणीधर इत्यजय्यः – कुवलयापीडनाशनेन कुवलयस्य भूमण्डलस्य, आपीडः शेखरः, क्षोणीभूषणायितः कश्चित्पुरुषोत्तमः तन्नाशनेन गजनाशनेनेति च – सधेनुकशकटतः धेनुसहिता च्छकटात् स्वलाभेन धनसम्पादनेन, आदौ शकटजीवनं सोऽपि धेनुवाह्य श्चे त्किमु वक्तव्यमित्यर्थः। अन्यत्र सधेनुकासुरा च्छकटासुरात्, स्वलाभेन आत्मलाभेन, हन्तु मागतौ धेनुकशकटासुरौ हत्वा स्वसंरक्षणेनेत्यर्थः। परसुदृग्भोग्यतया च पराङ्गनासङ्गत्या उत्कृष्टविद्वत्सेव्यत्वेन च, अतिरिक्तकीर्तिं अत्यल्पयशसं अधिककीर्तिं च, असङ्गलेशं सङ्गः स्सङ्गमः तस्य लेशोऽपि यस्य न विद्यते सः असङ्गलेशः तं सङ्गमाक्षममित्यर्थः। अन्यत्र यत्र कुत्रापि विषये लेशतोऽपि सङ्गरहितं मायानभिभूतत्वादिति भावः – ४

**श्लो॥ वृणु राजसुते तूर्णं मधुना वर मीप्सितम्**
**माभैषी च्छिद्यते तेन परलोकार्हता न ते– ५**

वृण्विति॥ हे राजसुते राजपुत्रि! अधुना तूर्णं द्रुतं, ईप्सित मिष्टं, वरंपतिं, वृणु कामयस्व; माभैषीः भीतिं मागाः, तेन पुनर्वरान्तरपरिणयेन, ते परलोकार्हता परलोकयोग्यता, न छिद्यते न नश्यति, धर्मव्यतिक्रमो नास्ती त्यर्थः। वरदोषदर्शने पुनर्विवाहाभ्यनुज्ञाना दिति भावः। तथा च स्मृतिचन्द्रिकायां कात्यायनः – 'स तु यद्यन्यजातीयः पतितः क्लीब एव वा विकर्मस्थ स्सगोत्रो वा दासो दीर्घामयोऽपि वा ऊढापि देया साऽन्यस्मै सप्रावरणभूषणा' इति। तथा पराशरोऽपि :– 'नष्टे मृते प्रव्रजिते क्लीबे च पतितेऽपतौ पञ्चस्वापत्सु नारीणां पति रन्यो विधीयते' इति। प्रकृते तु असङ्ग लेश मित्य नेन क्लीबत्वं, गोत्रोत्पाटनादिभि

र्विकर्मकस्थत्वं, दोषाकरकुलसम्भव मित्यनेन पतितत्वं, अभद्रासनयोग्य मित्यनेन दासत्वं, असत्प्रकृत्याश्रयमित्यनेन दीर्घामयत्वं, असती दुष्टा रोगैर्दूषि तेत्यर्थः । प्रकृतिर्देहः 'प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे' इत्यभिधानात् । पञ्चभूतमये देहेऽपि लक्षणया प्रकृतिशब्दो वर्तते; त माश्रयतीति तथोक्त मित्यर्थप्रतीतेः । एवं बहुदोषदूषितत्वा दहं त्वया त्याज्य एवेति भावः – व्यङ्ग्यार्थस्तु – हे राजसुते ! अधुना तूर्ण मीप्सितं वरं कामं वृणु याचस्वेत्यर्थः । माभैषीः । तेनैव याचनेन परलोकार्हता परलोकः उत्कृष्टजनः परमात्मा इत्यर्थः । अहमिंति यावत् – तस्य अर्हता प्रियत्वं नछिद्यते वरं याचमानायामपि त्वयि न मम अमर्षो जायते कल्पवृक्षव दखिलवरप्रदत्वात् – ततः अखण्डितं पतिबाल्लभ्यं भवतीति भावः । यद्वा परलोकार्हता परमपदप्राप्तियोग्यता नछिद्यते भगवन्तं मा मासाद्य परमपदातिरिक्तवरप्रार्थने परमपदप्राप्ति र्न स्यादिति त्वं माभैषीः । मयि दृढानुरक्तत्वा त्तव तदपि सुलभमेवेति भावः – ५

**ग॥ एव मश्रुतपूर्वविप्रियाभासभाषिणि वासुदेवे अशनिहता लतेव, मृगीव दवदहनपरीता, सीतेव दशवदनकरगता, अहल्येव दृष्टापराधगौतमकातरा, शकुन्तलेव दूर्वासक्रोधविषयीकृता, निस्संज्ञा वसुन्धराया मपतत् –** ६

एवमिति॥ एव मुक्तरीत्या, वासुदेवे श्रीकृष्णे, अश्रुतपूर्वविप्रियाभासभाषिणि पूर्वं श्रुताः श्रुतपूर्वाः, न श्रुतपूर्वाः अश्रुतपूर्वाः, पूर्वं यदा कदापि अश्रुता इत्यर्थः – विप्रियत्वेन आभासन्त इति विप्रियाभासाः, आपाततोऽप्रिया इत्यर्थः । वास्तवार्थस्यान्यस्य प्रतीयमानत्वादिति भावः । अश्रुतपूर्वान् विप्रियाभासान् भाषते वदतीति, अश्रुतपूर्वविप्रियाभासभाषी, तस्मिन् तथोक्ते, सति अशनिहता वज्रक्षता लता वल्लरीव, दवदहनपरीता दावाग्निव्याप्ता मृगी हरिणीव, दशवदनकरगता रावणहस्तगता सीता जानकीव, दृष्टापराधगौतमकातरा दृष्टः अपराधः व्यभिचाररूपः येन तस्मात् गौतमात् ऋषेः कातराभीता, अहल्या गौतमपत्नीव, दूर्वासक्रोधविषयीकृता दूर्वासस्य ऋषेः, क्रोधस्य कोपस्य, विषयीकृता गोचरीभूता, शकुन्तला दुष्यन्तपत्नीव, निस्संज्ञा चेतनरहिता सती मालोपमालङ्कारः । वसुन्धरायां भुवि अपतत् पपात– मुमूर्छेत्यर्थः । रुक्मिणीति कर्तृपदस्य शेषः । ६

**श्लो ॥ असामान्यगुणा सेयं यदृच्छाशब्दसन्ततिः**
**न क्रियायै न संज्ञायै सुदृशो विस्मयाय तत् ।** ७

असामान्येति ॥ असामान्यगुणा असामान्याः असाधारणाः, गुणाः श्लेषादयो, यस्या स्सा तथोक्ता, सेयं भगवदुच्चारिता, यदृच्छाशब्दसन्ततिः यदृच्छाशब्दाः स्वेच्छाप्रयुक्ताः अयि बाले इति गद्यस्था श्शब्दाः तेषां सन्तति स्समूहः । सुदृशो रुक्मिण्याः, क्रियायै व्यापाराय, न न जाता; संज्ञायै चेतनायै च न जाता । तत् तादृशसरसवाक्याना मेवंविधरुक्मिणी–

मूर्छा हेतुत्वं विस्मयाय आश्चर्याय भवतीति शेषः। व्यङ्गयार्थस्तु असामान्यगुणा सामान्यं जातिः गोत्वादि गुणः शौक्ल्यादिः, न विद्यते सामान्यगुणौ येषान्ते तथोक्ताः। जातिं गुणं वा प्रवृत्तिनिमित्तीकृत्याप्रवृत्ता इत्यर्थः। सेयं यदृच्छा शब्दसन्ततिः यदृच्छाशब्दाः इच्छापरिकल्पिताः डित्थादयः तेषां सन्ततिः, क्रियायै वचनादिरूपायै, सम्ज्ञायै नाम्ने च नाभूत् – तत् इदं सुदृशो विदुषः, विस्मयाय भवति। असामान्यगुणानां डित्थादीनां शब्दानां अक्रियत्व मुचितमेव– तेषु प्रवृत्तिनिमित्तभूतक्रियाया अप्यभावात्। सम्ज्ञाया अप्यभावस्तु विचित्रः। तेषां सम्ज्ञाया एव प्रवृत्तिनिमित्तत्वात् इत्यर्थः। अतएव भाष्यं 'चतुष्टयी शब्दानां प्रवृत्तिरिति– जातिं गुणं क्रियां सम्ज्ञां च प्रवृत्तिनिमित्तीकृत्य चतुर्विधाश्शब्दाः प्रवर्तन्ते। यथा गौ रश्वः पुरुषः अत्र गोत्वादिजातिः प्रवृत्तिनिमित्तं। नीलः पीतः अत्र नैल्यादिगुणः – पाचको वक्ता गन्ता अत्रपचनादिक्रिया – डित्थो डपित्थः अत्र सम्ज्ञा – कस्यचि न्नामनी अमू एवंस्थिते प्रकृते सामान्यगुणक्रियासंज्ञारूपचतुर्विधप्रवृत्तिनिमित्ताभावा इमे शब्दा इत्यु क्ति र्विरुद्धा – तथाविधशब्दानामे वासम्भवादिति भावः। ७

श्लो॥ तापोऽभव न्मुरजितः कृतविप्रियस्य<br>
स्विन्नाखिलावयवया प्रियया बभूवे<br>
जातो हरि र्द ळितहृ द्दयितापराधा<br>
त्तस्या हृदि प्रवहतिस्म तदास्रधारा। ८

तापइति॥ कृतविप्रियस्य कृतापकारस्य, मुरजितः कृष्णस्य, तापः पश्चात्तापः, सन्तापश्च–अभवत्। प्रियया रुक्मिण्या, स्विन्नाखिलावयवया सस्वेदसर्वाङ्गया, बभूवे भावे लिट् – हरिः दयितापराधात् प्रियाया अपकाराद्धेतोः, दळितहृत् शकलितहृदयः विदारित–वक्षश्च, जातः आसीत्। तदा तस्याः रुक्मिण्याः, हृदि वक्षसि, हृदये च – अस्रधारा अश्रुसम्पातः रक्तप्रवाहश्च, 'अश्रुशोणितयो रस्र मिति भास्करः। प्रवहतिस्म प्रससार। अत्र पूर्वोत्तरार्धयो रसङ्गत्यलङ्कारद्वयम्। 'विरुद्धं भिन्न देशत्वं कार्यहेत्वो रसङ्गति रिति' लक्षणात्। यस्य ताप स्तस्यैव स्वेदोद्गम उचितः – तथा यस्य हृ द्विदारितं तस्यहृद्येव अस्रधारोचितेति प्रकृते तद्वैपरीत्यात् अयं चालङ्कारः श्लेषमूलः। ८

**ग॥ अथ भगवानपि शतधाशकलितहृदयः पर्यङ्कतोऽवतीर्य परिहासकौशलानभिज्ञां प्राणप्रिया मुत्सङ्गसङ्गिनी माधाय, मधुरमधुरया गिरा समाश्वासयन्, मुहुर्मुहु रालिङ्ग्य, गण्डस्थलमचुम्बत्; अवादीच।** ९

अथेति॥ अथ प्रियामूर्छानन्तरं, भगवानपि परमेश्वरोऽपीत्यर्थः। शतधा बहुधा, शकलितं भिन्नं, हृदयं चित्तं, यस्य सः – नहि भगवतः प्राकृतपुरुषवत् प्रियावियोगादिदुःख–

सम्बन्ध उचितइति भावः -- लीलामानुषत्वादिति विरोधपरिहारः -- अतएव विरोधाभासा-लङ्कारः । पर्यङ्कत श्शय्यातला, दवतीर्य अवरुह्य, परिहासकौशलानभिज्ञां परिहासनैपुण्य मजानानां, कृष्णो मामेवं परिहसति नतु वस्तुत इय मुक्ति रित्यजानाना मित्यर्थः । प्राणप्रियां प्राणेभ्योऽतिगरीयसीं, रुक्मिणी मित्यर्थः । उत्सङ्गसङ्गिनीं सक्थिगता, माधाय कृत्वा, मधुमधुरया मद्यवत् क्षौद्रवद्वा, स्वादुना गिरा वचसा, समाश्वासयन् सम्यगाश्वास्य, मुहुर्मुहुः अतिशयेन, आलिङ्ग्य उपगूह्य, गण्डस्थलं तदीयगण्डभाग, मचुम्बत् चुचुम्ब । चुबि वक्त्रसंयोगे-- अवादीच्च तां प्रत्युवाच च-- ९

अव. वचनप्रक्रियां दर्शय त्ये केन श्लोकेन प्राणेत्यनेन--

श्लो ॥ प्राणादपि प्रियतमां तपसाप्यलभ्यां
पाति व्रतीमिव शरीरवतीमपि त्वाम्
आर्तां विधाय कुररीमिव सागसो मे
शिक्षां विधेहि कुचभूधरपातनेन । १०

प्राणेति॥ प्राणादपि प्राणेभ्योऽपि, प्रियतमा मतिप्रियां, प्राणानेव खेदयितुं यः कश्चिदपि नोत्सहते प्रियत्वा त्किं पुनः ततोऽपि प्रियतमां प्रेयसी मिति भावः । वस्तुतस्तु स्वशक्तिभूतायाः लक्ष्म्या स्स्वाभिन्नत्वेन स्वात्मभूतत्वा त्प्रियतमत्वं युक्तमेवेति बोध्यम् । तपसापि अलभ्यां लब्धु मशक्यां, नतु सुलभामितिभावः -- मामकानन्तजन्मसञ्चितसुकृत-परिपाकभूतैव त्वमिति कृच्छ्रार्जितवस्तुनः प्रियत्वेन अतिप्रियैव भवसीति निष्कृष्टार्थः । वस्तुतस्तु तपसापि ब्रह्मादिभि रलभ्यां लक्ष्मीकटाक्षलिप्सया ब्रह्मादयोऽधुनापि तपः कुर्वन्तीति भावः । एतेन निरतिशयसौन्दर्यं व्यज्यते । शरीरवतीं मूर्तां, पातिव्रतीं पातिव्रत्यमिव, स्थिता मित्युत्प्रेक्षा । एतेन मनसापि पत्यन्तरकामुकत्वाभावा त्सौशील्यं व्यक्तं । एवंभूतामपि त्वां, कुररीमिव कुररः उत्क्रोशः तस्य स्त्री कुररी तामिव 'उत्क्रोश कुररौ समौ' इत्यमरः । (आन्ध्रे पेन्नडपुलुगु अनुपक्षि) आर्तां पीडितां खिन्ना मित्यर्थः । विधाय कृत्वा, अतएव सागसः सापराधस्य, मे मम, कुचभूधरपातनेन कुचएव भूधरः पर्वतः तस्मात् पातनेन पर्वत इव कुचः कुचपर्वतः तत्र पातनेनेति च-- शिक्षां दण्डं विधेहि कुरु । शिक्षयेत्यर्थः । यथा सापराधं जनं राजा पर्वता त्पातयति तद्वदिति भावः । सुरतार्थं मां वक्षसि पातये त्यन्यो भावः । अत्र कुचभूधरपातनरूपशिक्षोपदेशव्याजेन त्वेष्टसाधना त्पर्यायोक्तभेदः । 'पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधन' मिति लक्षणात् -- १०

श्लो ॥ एव माश्वासिता तेन प्रसन्नवदनाम्बुजा
मत्वा श्लिष्टवचस्तत्व मथोवाच विदर्भजा । ११

एवमिति॥ एवं तेन कृष्णेन, आश्वासिता अनुनीता, अतएव प्रसन्नवदनाम्बुजा प्रसन्नमुखकमला, विदर्भजा रुक्मिणी, श्लिष्टवचस्तत्वं श्रीकृष्णसम्बन्धि श्लिष्टवाक्ययाथार्थ्यं, मत्वा अथ ततः, उवाच कृष्णं प्रत्युवाच – ११

**श्लो ॥ निगूढपदविन्यास श्चक्रिण स्तव साम्प्रतम्**
**अजिह्मगत्यानुकथं ज्ञेय स्सोयं मया पुनः ?** १२

निगूढेति॥ चक्रिणः कृष्णस्य, सर्वज्ञस्येत्यर्थः । सर्वस्येति च – तव निगूढपदविन्यासः निगूढानां लक्षणया निगूढार्थानां, पदानां शब्दानां विन्यासः रचना, निगूढानां पदानां चरणानां विन्यासः विन्यसनं च, साम्प्रतं युक्तं, सर्वज्ञस्य तव श्लिष्टपदप्रयोग उचितइत्येको भावः । सर्पस्य गूढपात्त्वं सहज मित्यन्यो भावः । मया पुनः मया तु, सोऽयं तावकपदविन्यासः अजिह्मगत्या ऋजुबुद्ध्या, कथं नु कथं वा, ज्ञेयः ज्ञातुं शक्यः – यद्वा अजिह्मगत्या मयेति विशेषणविशेष्यभावः । नजिह्मा अजिह्मा गतिः ज्ञानं बुद्धि रिति यावत्–यस्या स्तयेति समासः । अन्यत्र अजिह्मगत्या अभुजङ्ग्या जिह्मा कुटिला गति र्गमनं यस्या स्सा जिह्मगतिः सर्पाङ्गना– ‘ जिह्मगः पवनाशन ’ इति सर्पस्य जिह्मगत्व मम रेणोक्तत्वात् । सा न भवती त्यजिह्मगतिः तयेति समासः । मया सोऽयं गूढचरणविन्यासः कथं ज्ञेयः ? न कथमपीत्यर्थः । ‘ भुजङ्ग एव जानीते भुजङ्गचरणक्रम ’ मिति न्याया दिति भावः । १२

अव ॥ श्लिष्टवचस्तत्त्वं मत्वेति यदुक्तं तदेव वैदर्भ्युक्त्या विशदयति कविः पुरुषेतिश्लोकेन –

**श्लो ॥ पुरुषाधमतां चै द्ये त्वयि सर्वातिशायिताम्**
**मत्वा तव गिरां तत्त्व माप्ता सम्प्रति निर्वृतिः ।** १३

पुरुषेति॥ चै द्ये पुरुषाधमतां शिशुपाले नीचपुरुषत्वं, त्वयि सर्वातिशायितां पुरुषोत्तमत्वं एतद्द्वयात्मकं तव गिरां वाचां, तत्त्वं मत्वाज्ञात्वा, सम्प्रति अधुना, निर्वृतिः सुखं, आप्ता प्राप्ता मयेति शेषः । अत्रआप्ता सम्प्रति निर्वृतिमिति द्वितीया न्तपाठ उचितः । समान कर्तृकत्व लाभात् – निर्वृतिं सुख माप्ता प्राप्ता भवामीति शेषः अस्मीति वा – १३

**श्लो ॥ प्रान्ते य दवद स्स्वस्य परप्रेमानपायकृत्**
**याचस्व वरमित्येत दाशास्य मधुना मम ।** १४

प्रान्ते इति॥ प्रान्ते उपान्ते, स्वस्य मम, परप्रेमानपायकृत् परप्रेम्णः उत्कटानुरागस्य, अनपायकृत् दार्ढ्यापादकं, वरं याचस्वेति यत्वाक्य मित्यर्थः । अवदः उक्तवानसि । ‘ वृणु राजसुते तूर्ण ’ मितिश्लोकेनेति भावः । एतद्वर मधुना मम आशास्यं प्रार्थ्यं, वरं याचामीत्यर्थः । १४

ग॥ एव मभिहितवत्यां प्रियायाम्

एवमिति॥ एवं प्रियायां रुक्मिण्या, मभिहितवत्यां उक्तवत्यां सत्याम् –

श्लो ॥ स दिष्टायोगशङ्कायां विदर्भभुवि माधवः
तदयोगभया त्सद्य स्सकुशं काम मार्जयत् । १५

सदिष्टेति॥ विदर्भभुवि रुक्मिण्यां, विदर्भा द्भवतीति विदर्भभूः तस्यामिति विग्रहः – सदिष्टायोगशङ्कायां सती सम्भवन्ती, इष्टा योगशङ्का प्रियविरहशङ्का, यस्या स्तस्यां तथोक्तायां सत्यां, प्रियविरह माशङ्क्य निर न्तरपतिवाल्लभ्यसिद्धये वरं याचमानायां सत्यामित्यर्थः । माधवः कृष्णः, तदयोगभयात् तस्याः रुक्मिण्याः, विरह भयात् रुक्मिणीसम्बन्धि स्वप्राणेशविरहभयं पर्यालोच्येत्यर्थः । ल्यब्लोपे पञ्चमी – सद्यः कुशङ्कां कुत्सितशङ्का, ममार्जयत् न्यवारयत् – मनो विनोदार्थं परिहसितासि– वस्तुतः प्राणादपि गरीयस्या स्तव वरदान मनुरागदार्ढ्यापादकमिति कोऽयं व्यामोह इति समादधे इत्यर्थः । यद्वा – तदयोगभयात् स्वस्य रुक्मिणीविरहभयादित्यर्थः । त्वयासह ममावियोगोऽस्तु इति रुक्मिण्यां वरं याचितवत्यां कृष्ण स्तद्वरं ददौ– कुतः ? तेनैव वरदानेन रुक्मिण्यासह स्वस्य अवियोगो भवतीति मत्वेति भावः । एतेन उभयोरपि परस्परवियोगासहिष्णुत्वं व्यक्तम् । अत्र रुक्मिणीवरच्छन्दनव्याजेनकृष्ण स्स्वहितमेव साधितवानिति पर्यायोक्त मलङ्कारः । व्यङ्ग्यार्थस्तु–विदर्भभुवि दर्भशून्यभूमौ, सदिष्टायोगशङ्कायां सत श्श्रेष्ठस्य, इष्टस्य यागस्य, अयोगः असम्भवः, तस्य शङ्कायां संशये सत्यां, याग स्सम्भवे न्नवेति शङ्काया मुत्पन्नायामित्यर्थः । माधवः तदयोगभयात् यागासम्भवं मत्वेत्यर्थः । सद्यः तदैव, कामं पर्याप्तं, कुशं दर्भजातिविशेष, मार्जयत् सम्पादितवान् – १५

श्लो॥ प्रत्येक मभवन् तासां ततो दशदशात्मजाः
जाता स्तत्पुत्रपौत्रास्तु सङ्ख्यावन्तोऽमिता अपि । १६

प्रत्येकमिति॥ ततः तासां स्त्रीणां, प्रत्येकं दशदश आत्मजाः पुत्राः अभवन् । एकैका कृष्णमहिषी दशदश पुत्रान् जनयामासेत्यर्थः । तत्पुत्रपौत्रास्तु तेषां पुत्राः पौत्राश्च, अमिताः असङ्ख्येया अपि, सङ्ख्यावन्तः सङ्ख्याशालिनः, जाताः बभूवुः – इति विरोधः । सङ्ख्यावन्तः पण्डिता इति परिहारः । श्रीकृष्णपुत्रपौत्रा दिभि रिदं जग दापूरितमिति भावः – १६

श्लो ॥ प्रद्युम्ननामाप्यथ रुक्मवत्याः करग्रहं रुक्मिभुव स्स तेने
स भूरिकाङ्क्षाकलितः कथन्नु न चित्तजभ्रान्ति मुपैतु तेन । १७

प्रद्युम्नेति॥ अथ प्रद्युम्ननामा प्रद्युम्नाख्यः, सः रुक्मिणीसुत इत्यर्थः । सोऽपि अपिना रतिसहितोऽपीत्यर्थः – रुक्मिभुवः रुक्मी रुक्मिणीसोदरः, तस्माद्भवतीति रुक्मिभूः, तस्याः

रुक्मिण स्सुताया इत्यर्थः । रुक्मवत्याः रुक्मवतीति तस्या नाम, करग्रहं पाणिपीडनं, तेने चकार – रुक्मवती मुपयेमे इत्यर्थः । भूरिकाङ्क्षाकलितः अतिकामासक्तः, सः प्रद्युम्नः, तेन अतिकामेन हेतुना, चित्तजभ्रान्तिं मन्मथभ्रमं, मदनव्यधा मित्यर्थः – कथन्नु कथंवा, नोपैतु न गच्छतु प्राप्नुयादेवेत्यर्थः । कामवन्तमेव मन्मथो बाधते न तु निष्काममिति भावः । अत्र चित्तजभ्रान्तत्वादेवास्य बहुस्त्रीकाङ्क्षा आसीदिति वक्तव्ये तद्वैपरीत्यकथनात् चपलातिशयोक्ति रलङ्कारः । मन्मथावतारस्य प्रद्युम्नस्यापि मन्मथभ्रान्ति रासी दित्यसम्बन्धे सम्बन्धरूपातिशयोक्ति रलङ्कारः । तेन च किमुतान्येषामिति अर्थापत्ति र्व्यज्यते– व्यङ्ग्यार्थस्तु– प्रकृष्टं द्युम्नम् यस्य स प्रद्युम्नः– प्रकृष्टधन इत्यर्थः – तन्नामापि रुक्मिणो धनिका द्भवतीति रुक्मिभूः, तस्याः रुक्मवत्याः धनवत्याः, करग्रहं तेने धनापेक्षयेति भावः । ननु स्वतो धनिकस्यास्य कुतः पुन स्तदा शेत्यत आह– स इति– भूरिकाङ्क्षाकलितः धनकाङ्क्षाशाली, सः तेन धनकामेन, जित्तजभ्रान्तिं चित्तजां भ्रान्तिं, कथं नु नोपेतु 'प्रायो धनवतामेव धने तृष्णा गरीयसी पस्य कोटिद्वयासक्त लक्षाय प्रवणं धनु' रिति न्याया द्धनिकस्यैव धने अत्याशया अतिभ्रान्ति रिति भावः – १७

श्लो ॥ अनिरुद्धोऽभव त्तस्या मनिरुद्धपराक्रमः
रोचना रोचनायास्य जाता पौत्री तु रुक्मिणः । १८

अनिरुद्ध इति॥ तस्यां रुक्मवत्यां, प्रद्युम्ना दिति शेषः । अनिरुद्धपराक्रमः अप्रतिहत-प्रतापः, अनिरुद्धः तन्नामा कश्चन, अभवत् बभूव । अत्र अनिरुद्धपराक्रम इत्यनेन अनिरुद्ध-पदस्य निरुक्तत्वा न्निरुक्त्यलङ्कारः । पराक्रमविषये अनिरुद्धत्वा दनिरुद्ध इति तच्छब्दार्थः । एतावता वासुदेवप्रद्युम्नानिरुद्धसङ्कर्ष णाख्यव्यूहचतुष्टयाविर्भावः प्रकटितः । 'रौहिणेयं बलो रामस्सङ्कर्षण इति द्विजः । अवद द्वासुदेवोऽसौ कृष्ण इत्यपि नन्दजम्' इति प्रथमविलासे एव रामकृष्णयो स्सङ्कर्षणवासुदेवाभिधत्व स्योक्तत्वात् । अस्य अनिरुद्धस्य, रोचनाय नन्दनार्थं तु रुक्मिणः पौत्री पुत्रपुत्री, रोचना तस्या नामेदं, जाता अभूत्– अत्रापि अनिरुद्धं रोचयतीति रोचना इति व्युत्पत्तेर्व्यज्यमानत्वा न्निरुक्त्यलङ्कारस्य ध्वनिः – १८

**ग॥ अथानिरुद्धविवाहमहोत्सवालोकनाय वैदर्भ्या समं रामकेशवौ भोजकटकं नाम रुक्मिणो नगर मगमताम् ।** १९

अथेति॥ अथ ततः, अनिरुद्धविवाहमहोत्सवस्य अवलोकनाय दर्शनार्थं, वैदर्भ्या रुक्मिण्यासह, रामकेशवौ भोजकटकं नाम भोजकटक मिति प्रसिद्धं, रुक्मिणः नगरं पत्तन, मगमतां ययतुः । १९

**ग॥ तत्र च करग्रहमहामहे समाप्ति माप्तवति ॥**

तत्रेति।। तत्र च तस्मिन्, करग्रहमहामहे विवाहमहोत्सवे, समाप्तिं सम्पूर्तिं, मास्रवति प्राप्ते सति– समाप्ते सतीत्यर्थः। तत्र भोजकटके इति वा–

**श्लो ।। जयराम मनक्षज्ञ मिति काळिङ्गचोदनात्**
**अक्षै र्भीष्मसुतोऽदीव्य त्कृतान्त स्तस्य चासुभिः । २०**

जयेति।। अनक्षज्ञं अक्षशब्दोऽत्र लक्षणया अक्षाङ्गवति द्यूते वर्तते – अक्षक्रीडानभिज्ञ मित्यर्थः। ‘अथाक्ष मिन्द्रिये ना द्यूताङ्गे’ इत्यमरः। यद्वा ‘द्यूतेऽक्षे शारिफलके प्याकर्ष’ इत्यमरात्। अक्षशब्दः आकर्षं लक्षयन् तेन द्यूतं बोधयतीति लक्षितलक्षणा बोध्या। अथवा अक्षान्येवायं न जानाति किमुत तत्क्रीडन मिति विवक्षया अक्षानभिज्ञ मित्येवार्थो वाच्यः। न विद्यन्ते अक्षाणि इन्द्रियाणि यत्र त दनक्षं ब्रह्म तज्जानातीति अनक्षज्ञ मिति वास्तवार्थः प्रतीयते– रामं बलं जय परिभूतं कुरु इत्येवंरूपात् काळिङ्गचोदनात् काळिङ्गस्य कळिङ्ग–देशाधिपतेः तद्राजोऽञ् – चोदनात् प्रेरणात्, हेतोः भीष्मसुतः रुक्मी, अक्षैः द्यूताङ्गैः, अदीव्यत् क्रीडितवान् – तस्य रुक्मिणः, असुभिः प्राणैः, कृतान्तः यमश्च, अदीव्यत्। अत्र एकक्रियान्वया त्तुल्ययोगितालङ्कारः – २०

**श्लो ।। जयोऽभव त्पुरा रामदासस्याप्यक्षतः कपेः**
**रामस्यैव तदा हन्त ततो जातः पराजयः २१**

जयइति।। पुरा पूर्वकाले, त्रेतायुगे इत्यर्थः। रामदासस्य श्रीरामभृत्यस्य, कपे र्हनूमतोऽपि, अक्षतः रावणपुत्रा दक्षनामका दसुरात्, द्यूताङ्गादिति च – जयः विजयः, अभवत्। तदा रामस्यैव बलभद्रस्यैव, श्रीरामस्यैवेति च–ततोऽक्षा त्पराजयः पराभवः, जातः अभवत् – हन्तेत्याश्चर्ये – विरोधाभासालङ्कारः। युद्धे हनूमा नक्षासुरं जिगाय; द्यूते तु बलरामो रुक्मिणा जित इति मुख्यार्थः – २१

**ग।। ततः पुन रधिगतविजय मपि गतविजयं बलदेवं काळिङ्गेन सहक पुनर्गोपालाना मक्षकौशलमिति रुक्मिणि परिहसति राम स्सरोष मुद्यम्य परिघं काळिङ्ग मादाय भग्नदन्तं रुक्मिण मपि शमनभवन मनयत् – २२**

ततइति।। बलराम स्यापजयप्राप्त्यनन्तरं, पुन र्भूयः, अधिगतविजय मपिप्राप्तजयमपि, अक्षक्रीडायां रुक्मिणं जितवन्त मपीत्यर्थः। गतविजयं विगतजयमिति विरोधः – अपगतार्जुन–मिति परिहारः। अत एव विरोधाभासालङ्कारः – तदानीं तत्र अर्जुनसान्निध्यं नास्तीति भावः – यद्वा – इतः प्राग्गतविजय मपि इदानीं पुन रधिगतविजय मिति कालभेदेन विरोधपरिहारः। बलदेवं बलरामं काळिङ्गेन कळिङ्गनाथेन, सह सहिते रुक्मिणि गोपालानां

गोपानां, अक्षकौशलं द्यूतनैपुण्यं, क्पुनः क्वा ? नक्वापीत्यर्थः — यद्वा गोपालानां पुनः गोपानान्तु इति बोध्यम् । इत्येवं परिहसति अपहसति सति, रामः सरोषं रोषेण सहितं यथा तथा, परिघं आयुधविशेष, मुद्यम्य उद्धृत्य, कालिङ्गं भग्नदन्तं छिन्नरदनं, आधाय कृत्वा, दन्तान् प्रकाश्य स्मयमानवदनत्वा त्त स्येति भावः । रुक्मिण मपि रुक्मिणीभ्रातरं च, शमनभवनं यमसदन, मनयत् प्रापयामास — २२

श्लो ॥ रोचना मनिरुद्धं च रथ मारोप्य माधवः
पुरीं सानुचरः प्राया त्परिपूर्णमनोरथः २३

रोचनामिति॥ माधवः कृष्णः, परिपूर्णमनोरथः सम्पूर्ण कामः, स्वद्वेषिरुक्मिहननस्य कृतत्वादिति भावः । अत एव रोचना मनिरुद्धजायां, अनिरुद्धं च रथं स्यन्दन, मारोप्य आरोहयित्वा, सानुचरः सभृत्यस्सन् , पुरीं द्वारकां, प्राया ययौ — २३

**ग॥ पुरा खलु ताण्डवाराधितखण्डपरशुविश्राणितबाहुसहस्रो बाणोनाम बलितनय स्स्वसंरम्भलक्ष्यभूतं प्रतिपक्ष मलक्षयन् , प्रमथनाथ मेवं प्रार्थयत । २४**

पुरेति॥ पुरा पूर्वकाले, खलु प्रसिद्धौ, ताण्डवेन नाट्येन, आराधितः पूजितो, यः खण्डपरशु शिवः, तेन विश्राणितं दत्तं, बाहुसहस्रं सहस्रबाहवो, यस्य स तथोक्तः बाणो नाम बाण इति, बलितनयः बलिचक्रवर्तिपुत्रः, स्वस्य संरम्भस्य आटोपस्य, लक्ष्यभूतं विषयभूतं, स्वसंरम्भसह मित्यर्थः — प्रतिपक्षं प्रतिवीर, मलक्षयन् अपश्यन् , प्रमथनाथं शिवं, एवं वक्ष्यमाणरीत्या, प्रार्थयत प्रार्थितवान् — २४

**ग॥ भगव न्नप्रतिरथस्य मम भाराय परं भुजसहस्र मत स्त्वयैवसह कलह मभिलषामीति — २५**

भगवन्निति॥ हेभगवन् ! 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशस श्श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां वर्गो भगो मत' इति उक्तलक्षणषड्गुणपरिपूर्णसमवीर्यवत्त्वा त्वमेव मयासह योद्धुम् क्षम इत्यभिप्रायगर्भ मिदं — अतएव परिकराङ्कुरालङ्कारः । अप्रतिरथस्य अविद्यमानप्रतिवीर्यस्य, अत एव मम भुजसहस्रं सहस्रबाहवः, परं केवलं, भाराय भवन्तीति शेषः । भारभूता एवेत्यर्थः । परिकरालङ्कारः । अतः बाहुसहस्रवैयर्थ्यहेतोः त्वयैव सह कलहं युद्ध, मभिलषामि इच्छामि— त्वया सह युध्द्वा बाहुसहस्रं सफलं कुर्यामिति भावः — इतीत्यस्य प्रार्थयते त्यनेनान्वयः — २५

**ग॥ एत दाकर्ण्य कर्णपरुष मतिरोषणो वृषभकेतन स्तव केतनभङ्ग समयमेव मदुपमः कोऽपि तत्र विग्रहाय भविष्यती त्यभिधायां तस्थात् — २६**

एतदिति।। कर्णपरुषं कर्णकठोरं, एतत् बाणवचः, आकर्ण्य श्रुत्वा, अतिरोषणः अति कोपनः, वृषभकेतनः शिवः, तव केतनभङ्गसमयमेव ध्वजपतनसमयमेव, यदा त्वध्द्वजो भग्न स्स्या त्तदेत्यर्थः – मदुपमः मया उपमा सादृश्यं यस्य सः मत्तुल्य इत्यर्थः । कोऽपि अनिर्वाच्यः, पुरुषोत्तम इत्यर्थः – तव ते, विग्रहाय युद्धार्थं, भविष्यति सम्भविष्यति – इत्येवं अभिधाय उक्त्वा, अन्तरधात् अन्तर्हितोऽभूत् । अदृश्योऽभवदित्यर्थः – २६

ततः।। एवं वृषभकेतनादेशानन्तरम्

**श्लो ।। उषाख्यया पुत्रिकयास्य रेमे स्वप्नेऽनिरुद्धोऽननुभूतपूर्वः**
**स्वप्न स्सएवात्मसुखाप्तितोऽस्याः कोश स्तदानन्दमयो बभूव । २७**

उषेति।। अननुभूतपूर्वः अदृष्टश्रुतचरः, अनिरुद्धः श्रीकृष्णपौत्रः, उषाख्यया उषा इत्याख्या नाम यस्या स्तया, अस्य बाणासुरस्य, पुत्रिकया तनयया, स्वप्ने स्वप्नावस्थायां, रेमे क्रीडितवान् – अस्याः उषायाः, आत्मसुखा प्तितः स्वस्य सुखलाभाद्धेतोः, तदा स एव स्वप्नः, आनन्दमयः सुखापूरितः, कोशः निधिः, बभूव – अनिरुद्धसम्भोगरूपपरमसुखावहत्वा त्स्वप्न एवानन्दनिधित्वेन आशास्यो बभूवेत्यर्थः – व्यङ्ग्यार्थस्तु – आत्मसुखावाप्तितः स्वरूपानन्दलाभा द्धेतोः स्वप्न एव आनन्दमयः कोश स्सुषुप्तिः बभूव 'सुषुप्तिकाले सकले विलीने तमसावृतः स्वप्नरूपमहानन्दं भुङ्क्ते दृश्यविवर्जित इति वचना' दितिभावः – २७

ततः।। एवं स्वाप्नि कानिरुद्धसङ्गमानन्तरम्

**श्लो ।। विहाय कान्त ! क्वनु यासि हा मा मिति ब्रुवाणा बुबुधे सखेदम्**
**बोधा त्सुखं हि श्रुतिसिद्ध मस्या बोधेन दुःखा प्ति रिदं तु चित्रम् । २८**

विहायेति।। हेकान्त प्रिय! मां विहाय त्यक्त्वा, क्वनु क्वा, यासि गच्छसि ? हा इति खेदे – इत्येवं सखेदं खेदेन सहितं यथा तथा, ब्रुवाणा वदन्ती सती, उषेति शेषः – बुबुधे प्रबुद्धाभूत् । बोधात् ज्ञाना द्धेतोः, सुख मानन्दं, श्रुतिसिद्धं वेदप्रसिद्धं हि– 'तरति शोक मात्मवि' दिति श्रुत्येति भावः – अस्याः उषायास्तु, बोधेन जागरणेन, ज्ञानेनेति च हेतुना – दुःखाप्तिः दुःखप्राप्तिः, अभवदिति शेषः – इदन्तु चित्र मद्भुतं – अतएव विषमालङ्कारः । 'विरूपकार्यस्योत्पत्ति रपरं विषम' मिति लक्षणात् – २८

**ग।। तदानीमेव सुत्स्वप्नायमानां कुम्भाण्डकस्य बाणमन्त्रिण स्तनया चित्रलेखानाम समीपत श्शयाना सखि! कतम स्तव वल्लभः? कमेवं मृगयसी त्यपृच्छत्; सा पि प्रत्यवादीत् –** २९

तदानीमिति॥ तदानीं तदा, एवंरीत्या उत्स्वप्नायमानां प्रबोधमासवतीं, उषा मिति शेषः – प्रति समीपतः सविधे, शयाना स्वपन्ती, बाणमन्त्रिणः बाणस्य असुरस्य, मन्त्री आलोचनकर्ता, तस्य कुम्भाण्डकस्य कुम्भाण्डक इति नाम तस्य तनया सुता, चित्रलेखा नामेति प्रसिद्धौ । हे सखि! तव वल्लभः प्रियः, कतमः कः? यद्वा कतम स्तव वल्लभः इत्यन्वयः । एवं उक्तरीत्या कं पुमांसं मृगयसि अन्वेषयसि? इत्येव मपृच्छत् पृष्टवती; सापि उषा च प्रत्यवादीत् प्रतिजगाद – २९

श्लो ॥ मुह्यन्ति यस्य सुदृश श्श्रवणेन सोऽयं
वाचा विनानुभवमेव किं माविरस्तु
आसी त्करस्थ इव मां गमयन् सुखाब्धि
मन्तर्हितोऽभव दथैष गुरुप्रभावः । ३०

मुह्यन्तीति॥ सुदृशः स्त्रियः, यस्य स्वप्नदृष्टपुरुषस्य, श्रवणेन आकर्णनेनैव, मुह्यन्ति मोहं प्राप्नुवन्ति, दर्शनभाषणादौ तु किमुतेति भावः – सोयं पुमान्, अनुभवं दर्शनं, विना वाचा वचनेन, आविरस्तु किं स्फुटीभवे त्किमु? तथा लोकोत्तरसौन्दर्यशाली पुरुषः त्वया दृष्टश्चेदेव साकल्येन ज्ञायेत; मया तु मन्दधिया कथं वक्तव्य इत्यर्थः । कथञ्चिद्वक्ष्यामिचे च्चिरदर्शनं नास्तीत्याह – गुरुप्रभावः महानुभावः एष पुमान् मां सुखाब्धि मानन्दसागरं, गमयन् प्रापयन्, सुखपारवश्यं सम्पादय न्नित्यर्थः । करस्थ इव हस्तगत इव वश्य इवेत्यर्थः – आसीत् क्षणमिति शेषः – अथ ततः, अन्तर्हितः अदृश्यः, अभवत् – अतो न वक्तुं शक्य इत्यर्थः – व्यङ्ग्यार्थस्तु – सुदृशः सुधियः, यस्य परमात्मनः श्रवणेनापि मुह्यन्ति यं मुहुर्मुहु श्शृण्वन्तोऽपि तत्त्वं न जानन्ती त्यर्थः – 'श्रुत्वा प्येनं वेद न चैव कश्चि' दिति गीता-वचनादिति भावः । सोऽयं परमात्मा अनुभवं निदिध्यासनं विनावाचैव आविरस्तु किम् – वचनमात्रेण अपरोक्ष स्स्यात्किम्? न स्या देवे त्यर्थः । अथाप्युपदेष्टृवाक्ये महान् प्रभाव इत्याह – मां सुखाब्धिं गमयन् करस्थ इव अपरोक्ष इव आसीत् – अथानन्तर मन्तर्हितोऽभवत् – एषः गुरुप्रभावः गुरोस्सामर्थ्यम् परोक्षस्यापि क्षणमात्र मपरोक्षत्वेन भानं गुरुवचन महात्म्या दित्यर्थः – ३०

ग॥ तथापि कथयामि

तथापीति॥ तथापि लोकोत्तरसौन्दर्यशालित्वेन वक्तु मशक्यत्वेऽपि, कथयामि कथञ्चि त्स्वशक्त्यनुसारेण वच्मीत्यर्थः ।

श्लो ॥ पीतवासा गुणावास श्श्यामः कमललोचनः
अधरं मधुरं स्वस्य पाययित्वा तिरोदधे । ३१

पीतेति॥ पीतवासाः पीताम्बरधारी, गुणावासः गुणानां सौन्दर्यादीनां, आवासः निलयः, श्यामः नीलवर्णः, कमललोचनः कमलाक्षः, कोऽपि पुमानिति शेषः – स्वस्य मधुरं स्वादु, अधरं अधरोष्ठं, पाययित्वा मयेति शेषः – स्वाधरसुधां मह्यं दत्त्वेत्यर्थः । तिरोदधे अन्तर्हितोऽभूत् । ३१

**ग॥ एत दाकर्ण्य चित्रलेखनकुशलया चित्रलेखया नरसुरकिन्नरगन्धर्वविद्याधरेषु सुन्दरतया प्रतीतान् पुरुषा नखिला ननुलिख्य कतम स्तवात्राभिमतः इति पृष्टा तु तुष्टा च सेयं सोऽयमिति प्राद्युम्नि निरदिशत् । ३२**

एतदिति॥ एतत् उषावचन, माकर्ण्य श्रुत्वा, चित्रलेखनकुशलया आलेख्यनिर्माण निपुणया, चित्रलेखया मन्त्रितनयया, नरसुरकिन्नरगन्धर्वविद्याधरेषु मध्ये सुन्दरतया रूपवत्त्वेन, प्रतीतान् प्रसिद्धान् , अखिलान् सर्वान् , पुरुषान् पुंसः, अनुलिख्य क्रमेण लिखित्वा, अत्र एषु मध्ये तव अभिमतः प्रियः कतमः कः इति पृष्टा अभियुक्ता, तुष्टा सन्तुष्टा, स्वाभिमत-पुरुषदर्शना दिति भावः – सेय मुषा च, सः मयानुभूतपूर्वः पुमान् , अयं एष एवेति, प्राद्युम्नि मनिरुद्धं – अत इञ् – निरदिशत् निर्दिष्टवती । ३२

**श्लो ॥ चित्रलेखे तवान्वर्थं नामेति मुदिताप्यसौ**
**मुग्धा पुन रभू त्सेर्ष्या भर्तु श्चरणलेखनात् । ३३**

चित्रेति॥ असौ मुग्धा सुन्दरी, उषेत्यर्थः । हेचित्रलेखे ! तव नाम अन्वर्थं सार्थकं – चित्राणि आलेख्यानि लिखतीति चित्रलेखा इति – चित्रा विस्मयनीया रेखा लेखनं यस्या स्सेति वा – योगलाभादिति भावः । अतएव निरुक्ति रलङ्कारः । इत्येवं वदन्तीति शेषः – ब्रुवाणा सतीत्यर्थः – मुदितापि तुष्टापि, पुन र्भूयः, भर्तु श्चरणलेखना द्धेतोः प्रियस्य पादकरणाद्धेतोः, सेर्ष्या सख्यां सासूया अभूत् । चरणसद्भावे पूर्वव त्पलायिष्यते इति शङ्कयेति भावः – ३३

**श्लो ॥ प्रविश्य गुरुकृत्या सा पुरीं द्वारवतीं निशि**
**अनिरुद्धं ततो रक्तं निन्ये शोणितपट्टणम् । ३४**

प्रविश्येति॥ गुरुकृत्या गुरु दुर्भरं अशक्य मित्यर्थः – कृत्यं कार्यं, यस्या स्सा अशक्येऽपि कार्ये प्रवर्तमानेत्यर्थः – सा चित्रलेखा, निशि रात्रौ, द्वारवतीं तन्नाम्नीं पुरीं पत्तनं, प्रविश्य गत्वा, ततः प्रवेशानन्तरं, रक्त मुषाया मनुरक्तं, तस्यापि स्वप्ने उषासङ्गमसम्भवादिति भावः । अनिरुद्धं शोणितपट्टणं शोणितनामकबाणपुरं, निन्ये प्रापयामास । व्यङ्ग्यार्थस्तु – सा गुरुकृत्या गुर्वी कृत्या देवता ' कृत्या क्रियादेवतयो ' रित्यमरः । निशि कृत्यानां

रात्रावेव सञ्चारादिति भावः – द्वारवतीं पुरीं, प्रविश्य ततः अनिरुद्धं केनाप्यनिवारितं, तत्र मान्त्रिकान्तरप्रयुक्त देवता न्तरस्यासत्त्वादिति भावः । रक्तं स्वनिहितपुरुषशोणितं शोणितपङ्कं निन्ये । उपासकाज्ञया देवता कमपि मारयतीति भावः – ३४

श्लो ॥ चित्रलेखोपक्लृप्तेऽस्मिन् कुर्वती प्राणव द्धियम्
रेमे सम मुषा तेन रहस्यविषये नृणाम् । ३५

चित्रेति॥ उषा चित्रलेखोपक्लृप्ते चित्रलेखया आनीते, अस्मि न्ननिरुद्धे, प्राणवत् प्राणे इव, धियं बुद्धिं, कुर्वती कुर्वाणा सती, प्राणसमं तं मन्वानेत्यर्थः । तत्र तस्येवेति सप्त म्यर्थे वतिः । नृणां मर्त्यानां, मविषये ईषद्दुर्गमे, नतु सुतरां दुर्गमे अत एव उत्तरकालिकोऽनर्थ इति भावः । ' राष्ट्रं जनपदो दुर्गो जनान्तो विषयः स्मृत ' इति धनञ्जयः । अनुदरा कन्येति-वत् ईषदर्थेऽपि नञ् समासः । यदाहुः ' तत्सादृश्य मभावश्च तदन्यत्वं तदल्पता अप्राशस्त्यं विरोधश्च नञर्था षष्ट्प्रकीर्तिता ' इति । रहसि एकान्ते – तेन अनिरुद्धेन समं सह, रेमे क्रीडितवती । व्यङ्ग्यार्थस्तु – चित्रलेखोपक्लृप्ते चित्रलेखया लिखिते, अस्मिन् प्राणव द्धियं प्राणोऽस्यास्तीति प्राणवान् चेतनः, स इति धियं बुद्धिं, कुर्वती सती नृणा मविषये रहसि, तेन सम मुषा रेमे इति – ३५

ग॥ तदनु कतिपयदिनै रन्तर्वंशिकजनेन तदीयसङ्केते कथञ्चि दनगम्य माने – ३६

तदन्विति॥ तदनु उषानिरुद्धयोः क्रीडाप्रवृत्त्यनन्तरं, कतिपयदिनैः स्वल्पदिवसैः, अन्तर्वंशिकजनेन अन्तःपुराधिकृतजनेन – ' अन्तःपुरे त्वधिकृत स्स्या दन्तर्वंशिको जन ' इत्यमरः । कथञ्चि त्कृच्छ्रेण, तदीयसङ्केते उषासम्बन्धिनि रहस्ये, अवगम्यमाने ज्ञाते सति–३६

श्लो ॥ शुभग्रहाढ्या मपि कन्यका मिमा
मसत्क्रियापात्रतया विमृश्य ते
उपस्थितं दुस्समयं न्यवेदयन्
नृपाय दोषज्ञतया चुकोप सः । ३७

शुभेति॥ ते अन्तर्वंशिकाः, शुभग्रहाढ्यां शुभः श्लाघ्यः ग्रहः निर्बन्धः अभिनिवेश इति यावत् । ' ग्रहो अनुग्रह निर्बन्धग्रहणेषु रणोद्यमो ' इति विश्वः । तेन आढ्यां श्लाघ्यां, कुलशीलरूपादिभि रतिश्लाघ्य मेव पुरुष मभिलषितवती मित्यर्थः । एवंविधामपि इमां कन्यका, मुषां असत्क्रियापात्रतया दुराचारविषयतया, विमृश्य ज्ञात्वा, अनूढेयं कन्या केनचि द्गूढपुरुषेण सह रमते इति तस्यां व्यभिचारदोष माशं केत्यर्थः । गर्भधारणचिह्नदर्शनादिति भावः ।

उपस्थितं प्राप्तं, दुस्समयं दुराचारं, व्यभिचाररूप मिति भावः – नृपाय बाणासुराय, न्यवेदयन् व्यजिज्ञपन्। स राजा दोषज्ञतया दोषज्ञानेन हेतुना चुकोप रुष्टोऽभूत्। व्यङ्ग्यार्थस्तु– ते दैवज्ञाः शुभग्रहाढ्यामपि शुक्रादिशुभग्रहयुक्तामपि इमां कन्यकां कन्याराशिं असत्क्रियापात्रतया शुभकर्मानर्हतया विमृश्य विचार्य नृपाय राज्ञे दुस्समयं दुष्कालमुपस्थितं प्राप्तं न्यवेदयन् – दुष्काल उपागत इति निवेदितवन्त इत्यर्थः। स राजा दोषज्ञतया पण्डित त्वेन हेतुना ' विद्वा न्विपश्चि द्दोषज्ञ ' इत्यमरः। चुकोप – तेषु कुपित इत्यर्थः। शुभग्रहाढ्यत्वेन सुसमयत्वादिति भावः – ३७

**श्लो ॥ स्वकन्याकामुकस्याथ करग्रहकृते रतः**
**बाण स्स्वकिङ्करा न्मूढो निनायोपयमं बहून्। ३८**

स्वेति॥ अथ दोषज्ञानानन्तरं, स्वकन्याकामुकस्य स्वसुताप्रियस्य अनिरुद्धस्येत्यर्थः। करग्रहकृते हस्तग्रहणार्थं, अनिरुद्धं हस्ते गृह्य बन्धयितु मित्यर्थः – गतः यातः। बाणः असुरः, मूढः स्वपरबलाबलविवेकरहितः, अत एव बहून् स्वकिङ्करान् अनन्ता न्निजभृत्यान्, उपयमं यमस्य समीपं, निन्ये प्रापयामास। यो मत्कन्यां भ्रंशयामास तं बध्द्वेहानयतेति बाणासुराज्ञया अनिरुद्धसविधं गत्वा तेन बहवो हता इति निर्गळितार्थः। मूढ इत्यनेन अय मपराधः स्वकन्याया वा उत अनिरुद्धस्ये त्यजानानः अत एव स्वकन्यां शिक्षितुं बाणो नोत्सहे – किन्त्वनिरुद्ध मेवेति व्यज्यते। व्यङ्ग्यार्थस्तु – स्वकन्याकामुकस्य करग्रहणार्थं पाणिग्रहणार्थं, विवाहार्थं मिति यावत् – गतो बाणः बहून् स्वकिङ्करान् उपयमं पाणिग्रहणं निनाय। स्वजामातु र्विवाहार्थं गतस्य बाणस्य अन्यदीयविवाहकरणा दसङ्गत्यलङ्कारोऽयम् – ' अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च से ' ति लक्षणात्। ३८

**ग॥ निहतेषु च बहुषु निजानुयायिषु नितान्तरोषणो बाण स्त मेनं कन्यकान्तःपुरगतं भुजङ्गपाशै राबद्ध्य हाहेति क्रोशन्तीमुषा मप्यविगणय्य क्वचन कारागारे न्यवेशयत्। ३९**

निह तेष्विति॥ बहुषु अनेकेषु, निजानुयायिषु स्वानुचरेषु, निहतेषु अनिरुद्धेनेति शेषः – हतेषु सत्सु, नितान्तरोषणः स्वकन्याभ्रंशनेन रोषणः; स्वानुचरनाशनेन तु अतिकुपित इत्यर्थः – बाणः कन्यकान्तःपुरगतं उषान्तःपुरवर्तिनं, तं कृतापराध मेन मनिरुद्धं, भुजङ्गपाशैः नागपाशैः, आबद्ध्य बध्द्वा, हाहा इति क्रोशन्तीं रुदन्ती, सुषां स्वपुत्री मपि, अविगणय्य अनादृत्य, क्वचन कस्मिंश्चित्, कारागारे कारागृहे, न्यवेशयत् स्थापयामास। अनिरुद्धं नागपाशबद्धं बन्दीचकारेत्यर्थः। ३९

ग॥ अथ नारदवचनेन विदितो दन्ताः प्रद्युम्नसाम्बपुरस्सराः यादवाः रामकेशवौ पुरस्कृत्य विरचिताभिषेणनाः बाणनगरवरण मरुन्धन् । ४०

अथेति॥ अथ एवं अनिरुद्धबन्धनानन्तरं, नारदवचनेन नारदस्य कलहभोजनस्य मुने, र्वचनेन वाक्येन, विदितो दन्ताः ज्ञातवृत्तान्ताः, प्रद्युम्नसाम्बौ पुरस्सरौ अग्रेसरौ येषांते, तथोक्ताः, यादवाः रामकेशवौ बलकृष्णौ, पुरस्कृत्य अग्रे कृत्वा, विरचिताभिषेणनाः विरचितं कृतं अभिषेणनं सेनया शत्रो रभिमुखगमनं यै स्ते तथोक्ताः – 'य त्सेनयाऽभिगमन मरौ त दभिषेणन' मित्यमरः । सन्तः बाणनगरवरणं शोणितपुरप्राकारं अरुन्धन् आवृतवन्तः । ४०

ग॥ तदैव भगवानपि वृषकेतनः किङ्करकरुणापरवशः सानन्दं नन्दिन-मध्यासीन स्सः । ४१

ग॥ कुमारेण परिपन्थिप्रमथनैः प्रहथै रपि परिवृतः तमेवोद्देश मविशत् । ४२

तदेति॥ तदैव भगवान् किङ्करकरुणापरवशः भृत्यभूतबाणे सदयः, वृषकेतनोऽपि शिवश्च, नन्दिनं वृषभ, मध्यासीनः अधिष्ठित स्सन्, कुमारेण स्कन्देन, परिपन्थिप्रमथनैः शत्रुविदारकैः, प्रमथैः प्रमथगणै श्च, परिवृतः परिवेष्टितस्सन्, सानन्दं सतोषं यथा तथा, बाणासुरगर्वनिर्ह रणकाल स्योपयातत्वादिति भावः – तमेव उद्देशं रणरङ्ग, मविशत् प्रविष्टोऽभूत् । बाणासुरद्वारपालकत्वा च्छिवस्येति भावः । ४१–४२

श्लो ॥ य स्तत्र त्रिपुरारिशौरिबलयो रासी दसीमा रणः
तं वैधात्र्यपि भारती भयभरा न्नै वाभिधातुं क्षमा
लीनो भानु रभू त्स्वभेदनभिया छायाछला न्नन्दके
सार्थं शोणितपूरपूरिततया नामापि तस्याः पुरः । ४३

य इति॥ तत्र तदा, त्रिपुरारिशौरिबलयोः शिवकृष्णसेनयोः – अल्पाच्तरं पूर्व मिति शौरिपदस्यैव यद्यपि पूर्वनिपातो न्याय्यः – तथापि शिवस्य देवशरीरत्वेन कृष्णस्य मानुष-वेषभाक्त्वेन च कृष्णा च्छिवस्य अभ्यर्हि तत्वा दभ्यर्हितं पूर्वमिति पूर्वनिपातः – यद्वा 'लक्षणहेत्वोः क्रियाया' इति निर्देशेन पूर्वनिपातशास्त्र मनित्यं । असीमा अनवधिः, यः रणः युद्ध, मासीत् तं रण मभिधातुं वर्णयितुं, वैधात्री ब्रह्मसम्बन्धिनी, भारती वाक्, वेदरूपेत्यर्थः । यद्वा – विधातु स्स्त्री वैधात्री भारती सरस्वतीदेवीत्यर्थः । सापि भयभरा द्भयातिशया द्धेतोः, न क्षमा न समर्था; कुतोऽहं प्राकृत इति भावः । एवं कवि स्स्वशक्ति प्रकटीकृत्य तथापि किञ्चि द्वर्ण यितु मुपक्रमते लीन इति – भानु स्सूर्यः, स्वभेदनभिया स्वमण्डलविदारणभयेन, शिव-केशवबलशरपरम्परया मन्मण्डलं विदारितं स्यादिति भयेन, तद्बाणविदारितपुरुषै र्विदारितं

स्यादिति भयेनेतिवा–छायाछलात् प्रतिबिम्बव्याजात् , नन्दके श्रीकृष्णस्य खड्गे, लीनः लग्नः निगूढ इत्यर्थः । अभूत् – सापह्नवगम्योत्प्रेक्षालङ्कारः । एतेन नन्दकस्य अतिस्वाच्छ्यं गम्यते – तेन च तीक्ष्णधारत्वं वस्तु व्यज्यते । तस्याः पुरः बाणपत्तनस्य नामापि शोणित–पूरपूरितया रक्तप्रवाहभरितत्वेन हेतुना सार्थ मन्वर्थ मभूत् । शोणितस्य पुरं शोणितपुरमिति व्युत्पत्त्येति भावः । निरुक्ति रलङ्कारः – ४३

श्लो ॥ स्वाधीने विजये द्वयोरपि तयो स्सत्पाण्डुकीर्त्याावहे
सामान्ये गजदैत्यमर्दनरसे तुल्येऽपिनाकग्रहे
अन्यूनेऽपि खलान्तकारिचरिते स्वाम्ये पशूनां समे
दुर्धर्षं युधि मेनकातनुभुवः प्राप्यं विलङ्घे हरिः । ४४

स्वाधीनेति॥ सत्पाण्डुकीर्त्यावहे सती श्रेष्ठा, पाण्डु शुभ्रा, च या कीर्ति र्यशः, तस्या आवहे सम्पादके, विजये शत्रुजये, द्वयोरपि शिव केशवयोः, स्वाधीने स्वायत्ते सति, द्वयोरपि परमात्मत्वादिति भावः । सत श्श्रेष्ठस्य, पाण्डोः राज्ञः, कीर्त्यावहे विजये अर्जुने, द्वयोरपि तयो स्स्वाधीने सति एकत्र भक्तत्वा दन्यत्र सख्याच्चेति भावः – इति च व्यज्यते । गजदैत्यमर्दनरसे गजासुरहननेच्छायां, गजस्य कुवलयापीडस्य, दैत्यानां बकादीनां च, मर्दनरसे हननेच्छायामितिच – सामान्ये तुल्ये सति द्वयोरपि तयो रिति पदं अत्र उत्तरत्र चान्वेति – अत्रार्थश्लेषालङ्कारः । तुल्येऽपि नाकग्रहे इत्येकत्र तुल्ये अपिनाकग्रहे इत्यन्यत्र च छेदः 'पिनाकोऽजगवं धनु' रित्यमरः । अजगवधनुर्धारणे इत्येकत्रार्थः – नाकशब्दो लक्षणया नाकिनो बोधयति – देवाना मनुग्रहे इत्यर्थः – कृष्णस्य दानवान्तकत्वेन देवपक्षपात-त्वादिति भावः 'नाकग्रह अन्तरिक्षे युद्धोद्यम' इति रत्नावळीकाराः – तुल्येऽपि समेऽपि, शब्दश्लेषालङ्कारः । खलान्त कारिचरिते खलस्य दुष्टस्य, अन्तकस्य यमस्य, अरिणि शत्रुभूते, चरिते चरित्रे, इत्येकत्र मार्कण्डेयरक्षावसरे यमस्य शिवेन निबर्हितत्वादिति भावः । अन्यत्र रलयो रभेदात् खरस्य तन्नाम्नोऽसुरस्य, अन्तकारिणि नाशकारिणि, चरिते इति श्रीरामावतारे खरस्य निबर्हणादिति भावः – अन्यूने समेऽपि पशूनां जीवानां, गवां च; स्वाम्ये पातित्वे, समे 'शम्भुरीशः पशुपति' रिति कोशात् – कृष्णस्य गोपालकत्वाच्चेति भावः । एवं वस्तुतो व्यवहारतश्च उभयो स्साम्ये सत्यपि, युधि युद्धे, दुर्धर्षं अन्यै र्धर्षि तु मशक्यं, मेनकातनुभुवः पार्वत्याः प्राप्यं गम्यं, शिवमित्यर्थः । हरिः कृष्णः, विलङ्घे जिगाय । अत्र मेनकातनुभुवः मैनाकस्य, प्राप्य मब्धि मित्यर्थः । हरिः कपिः, हनुमान् विलङ्घे लङ्घितवानिति ध्वनिः । अत्र एकस्य विजये हेत्वभावेऽपि विजयरूपकार्योत्पत्तिवर्णनात् विभावनालङ्कारः । यद्वा उभयो रेकतरस्य विजयाभावं प्रति हेतुभूतस्य साम्यस्य सत्त्वेऽपि तद्वैपरीत्येन विजयोदयस्य वर्णितत्वेन विषमालङ्कारः – ४४

श्लो ॥ प्रत्यक्षैव बभूव शक्ति रतुला स्कन्दस्य नैतादृशी
प्रद्युम्नस्य बला दसौ लघुतर स्तस्मि न्महासेनता
नासा वन्यबलाश्रितः कलयते तं नीलकण्ठः पुनः
पृष्ठे हन्त तथापि सोऽय मजयत् षाण्मातुरं नातुरः । ४५

प्रत्यक्षेति॥ स्कन्दस्य कुमारस्य, अतुला अनुपमा, शक्ति रायुधविशेषः, बलं च प्रत्यक्षा चक्षुर्वेद्या, अनुभवैकवेद्या च, बभूव आसीत् । प्रद्युम्नेव सह युद्ध स्कन्दः स्वबलं प्रदर्शयन् स्वायुधं शक्तिमपि तस्मिन् प्रयुयोजेत्यर्थः । यद्वा स्कन्दस्य अतुला प्रत्यक्षा चक्षुर्वेद्यैव शक्ति रायुधविशेषो बलं च बभूव अस्ति स्म । प्रद्युम्नस्य तु एतादृशी प्रत्यक्षा शक्ति र्न नास्ति । शक्ति रायुधः प्रद्युम्नस्य नास्तीत्येकोऽर्थः — प्रद्युम्नबलं न चक्षुर्वेद्य ममूर्तत्वा दित्यन्योऽर्थः — एतेन सप्रत्यक्षशक्तेः स्कन्दात् अप्रत्यक्षशक्तिः प्रद्युम्नो दुर्बल इति सिद्धम् — अत्र कुमारबलस्य प्रत्यक्षत्वप्रतीते र्विरोधः — तस्य च कुमारशक्त्यायुधस्य प्रत्यक्षत्ववर्णनेन परिहारः — अतो विरोधाभासालङ्कारः । बला त्सैन्यात् , असौ प्रद्युम्नः लघुतरः स्वल्पः स्वल्पसैन्य इत्यर्थः — बला द्बलभद्रा ल्लघुतरः स्वल्पवयस्क इति च — बला त्कृष्णो लघुः कृष्णा दयं च लघु रिति बलापेक्षया अय मत्यन्तं लघु रिति लघुतर इत्युक्तं — तस्मिन् स्कन्दे महासेनता महासेनपद-वाच्यत्वं ' कार्तिकेयो महासेन ' इत्यमरः । अधिकसैन्यवत्त्वं च — अस्तीति शेषः — एतेन शरीरबलांशे प्रद्युम्नो न्यूनो भवतु नाम सैन्यस्याधिक्ये तु कथञ्चिदस्य जयो भवे त्तदपि नास्तीति सिद्धम् — असौ प्रद्युम्नः अन्यबलाश्रितः अन्यं बल माश्रितो न भवति किन्तु स्वपितृव्यमेव बल माश्रित इत्यर्थः । अन्यस्य बलं नाश्रितः असहाय इत्यर्थः इति च व्यज्यते । तं पुनः कुमारन्तु नीलकण्ठः मयूरः, पृष्ठे कलयते धत्ते मयूरवाहनत्वादिति भावः — नीलकण्ठः शिवः पृष्ठे कलयते पश्चा त्करोति स्वयं पुरोभूत्वा अस्य साहाय्यक माचरतीति भावश्च व्यज्यते — हन्ते त्याश्चर्ये — तथापि स्वबलसेनाबलपरबलवत्त्वेन कुमारस्य प्रबलत्वेऽपि तत्त्रिविधबल-राहित्येन प्रद्युम्नस्य दुर्बलत्वेऽपीति च सोऽयं प्रद्युम्नः नातुरः अनातुरः अभिन्नस्सन् हेलयैवेत्यर्थः । षाण्मातुरं स्कन्द, मजयत् जितवान् विरोधाभासालङ्कारः — ४५

श्लो ॥ अन्योन्यस्य सदृक्षलक्ष्यमिळना दाबद्धयुद्धादरौ
तौ कण्डूं भुजदण्डयो रनवधिं चित्रं तदैवोज्झताम्
यत्संवर्णनमात्रलोलमनसां काव्यामृतोत्पादिनां
कण्डूराननकन्दरान्तरगता नाद्यापि विश्राम्यति । ४६

अन्योन्यस्येति॥ अन्योन्यस्य परस्परस्य, सदृक्षलक्ष्यमिळनात् — सदृशलक्ष्यसंयोगाद्धेतोः, समानप्रतिभटलाभादित्यर्थः — आबद्धयुद्धादरौ धृतसङ्गरप्रतीतौ, कुमारप्रद्युम्नौ अनवधिं अपारं,

भुजदण्डयोः दण्डाविव भुजौ भुजदण्डौ तयोः, कण्डूं कण्डूतिं तदैव युद्धप्रारम्भसमये एव, औज्झं तां त्यक्तवन्तौ – इतः प्रा क्समानभदाभावा द्बाह्वोः कण्डूति र्नोपरता – इदानीन्तु – तल्लाभा दुपरतेति भावः – चित्र मद्भुतं, बहुकालाद्भूतकण्डूतिः क्षणादेव गतेत्यद्भुत मित्यर्थः। वस्तुतस्तु नेदं चित्रं – किन्तु वक्ष्यमाणमेव चित्रमेव दर्शयति यदिति – यस्य भुजकण्डू-निरसनफलकस्य युद्धस्य संवर्णनमात्रे वर्णने एव लोलं आसक्तं मनो येषां तेषां यत्संवर्णनमात्र-लोलमनसां युद्धे उभयो र्भुजकण्डूतिनिरसनप्रकारं वर्णयता मित्यर्थः – कण्डूतिमेव वर्णयता-मिति वा – काव्यामृतोत्पादिनां काव्यरूप ममृतं सुधा मुत्पादयन्तीति तथोक्ताः तेषां कवीना मित्यर्थः। आननकन्दरान्तरगता मुखात्मकगुहान्तर्गता कण्डूः कण्डूतिः अद्यापि न विश्राम्यति नोपरमति – इदं चित्र मित्यर्थः। अत्र कण्डूतिमद्भुजदण्डकृतयुद्धवर्णनमात्रासक्तिवशादेव कवीनां मुखेषु कण्डूति रभव दित्येको विरोधः – लोके हि पामादिवत्त्वेन कण्डूति मन्तं स्पृष्ट्वा अन्ये कण्डूतिभाजो भवन्तीति प्रसिद्धत्वात्। किञ्च सा च कण्डूति रद्यापि न विश्राम्यती त्यन्यो विरोधः। तद्युद्धं बहुधा वर्णयन्तोऽपि कवयः मुहुर्मुहु स्तद्वर्णने एव प्रवर्तन्ते न तु ततो विरमन्तीति परमार्थः। विभावनालङ्कारभेदः। 'हेतूना मसमग्रत्वे कार्योत्पत्तिश्च सा मते' ति लक्षणात्। उदाहृतं च – 'उद्यानमारुतोद्धूता श्चूतचम्पकरेणवः उदस्रयन्ति पान्थाना मस्पृशन्तो विलोचने' इति। नाद्यापि विश्राम्यतीत्यत्र तु विरोधाभासः। ४६

**ग॥ एवं गदाधरस्य पशुपतिना हरिकिशो रजात्मजेन मुसलिनः कुम्भाण्डकेन कृतवर्मणो बाणेन च भवति महति संप्रहारे कृष्णस्य विजयप्रणयितायां व्यक्तायां बाणजनन्या कोटरया तनयरक्षणाय केशवं शरण मुपयातया तया मोचितप्राणे बाणे च नगरं गतवति –** ४७

एवमिति॥ एवंरीत्या गदाधरस्य कृष्णस्य गदां धृतवत इतिच– पशुपतिना शिवेन सह पशुश्रेष्ठेनेति च – गदाधरस्य पुरुषस्य, यथा पशुजय स्सुलभ स्तद्व त्कृष्णस्यापि शिवजय इति भावः। एव मुत्तरत्रापि ऊह्यं। हरिकिशोः प्रद्युम्नस्य, सिंहकिशो रिति च – अजात्मजेन शिवतनयेन, छागडिम्भेनेति च – 'अजा विष्णुहर च्छागा' इत्यमरः। मुसलिनः बलभद्रस्य, मुसलधारिणः पुरुषस्येति च – कुम्भाण्डकेन बाणमन्त्रिणा, कुत्सितघटेनेति च– कृतवर्मणः तन्नामकस्य यादवस्य धृतकवचस्येति च – बाणेन असुरेण शरेणेति च – न हि कवचं शरो निर्भेत्तुं शक्नोतीति भावः। महति अद्भुते, संप्रहारे युद्धे, भवति संप्रवृत्ते सति, कृष्णस्य विजय-प्रणयितायां जयशालित्वे अर्जुनमित्रत्वे इति व्यज्यते। व्यक्तायां स्फुटायां सत्यां, तनयरक्षणाय बाणसंरक्षणार्थं, केशवं कृष्णं, शरणं रक्षक, मुपयातया उपगतया, बाणजनन्या बाणस्य मात्रा, तया कोटरया कोटरा इति तस्या नाम मोचितप्राणे त्याजितप्राणे कृष्णशररूपमृत्युवक्त्रादिति भावः – बाणे नगरं पत्तनं, गतवति प्राप्ते च सति – ४७

**श्लो ॥ माहेश्वरज्वरं हन्तुं भगवा न्वैष्णवज्वरम्**
**विनिर्ममे तयो रासी द्युद्ध मुद्धतकर्मणोः ॥** ४८

माहेश्वरेति॥ भगवान् कृष्णः, माहेश्वरज्वरं शैवज्वरं, हन्तुं नाशयितुं, वैष्णवज्वरं विनिर्ममे निर्मितवान् – योगमायाबलादिति भावः । उद्धतकर्मणोः उद्भटक्रिययो स्तयोः ज्वरयोः युद्धं संग्राम आसीत् । ४८

**ग ॥ तदनु वैष्णवज्वराभिभूतो माहेश्वरज्वर श्शरण मभजत मधुरिपु मनौषीच्च ॥** ४९

तदन्विति॥ तदनु ततः, वैष्णवज्वरेण अभिभूतः तिरस्कृतः, माहेश्वरज्वरः मधुरिपुं कृष्णं, शरण मभजत प्राप, अनौषीच्च अस्तौषीत् – अनावीदिति सुवचम् – शीङ्स्नुणुक्ष्विति णुधातोऽनुदात्तत्वेन इटि इट ईटीति सिज्लोपात् – ४९

तथाहि॥ माहेश्वरज्वरकृतमधुरिपुस्तुतिं दर्शयति कवि रित्यर्थः –

**श्लो ॥ बध्द्वासौ प्रकृतिः प्रिया तव गुणैः क्रूरा नरान् बाधते**
**हृत्वा त्वं वसु मोचयन् गुणगणा द्गूढेऽमृते दुर्गमे**
**एता न्पातयसीत्यत स्तव कृपा पारं न जानीमहे**
**चित्रं हन्त तथापि सेय मसती माया भवान् सन्निति ॥** ५०

बध्द्वेति॥ असौ एषा, तव प्रिया प्रेयसी, वदनपायिनी क्रूरा घातुका, प्रकृतिः माया, नरान् मनुष्यान्, तेषामेव मोक्षाधिकारादिति रत्नावळीकाराः । वस्तुतस्तु – देवादीनामपि मोक्षाधिकारोऽस्तीति भगवान् व्यासः – अतः नरात् न रीयन्ते न क्षीयन्ते इति नराः जीवाः तान् इत्यर्थो वाच्यः – गुणैः सत्त्वादिभिः, बध्द्वा सन्धाय, मोहयित्वेत्यर्थः – बाधते पीडयति । सच्चिदानन्दलक्षणं स्वस्वरूपं छादयित्वा कामादिवशा द्दुःखित्वादीं स्ते ष्वारोपयतीति भावः । त्वं वसु धनं, हृत्वा 'यस्यानुग्रह मिच्छामि तस्य वित्तं हरा म्यह' मिति वचनादिति भावः । गुणगणात् सत्त्वादिगुणबृन्दात्, मोचयन् त्याजयन्, गुणातीतान् कुर्वन्नित्यर्थः – गूढे रहस्ये, दुर्गमे गन्तु मशक्ये, अमृते मोक्षे, एतान् जीवान् पातयसि । एतेषां स्वसायुज्यं ददासीत्यर्थः – इत्यतो हेतोः तव कृपापारं कृपायाः दयायाः, पार मवधिं, न जानीमहे न विद्मः । अपारत्वा त्तव दयाया इति भावः – कृपापूरमिति पाठे कृपाप्रवाह मित्यर्थः । माया मोहिता न्मोक्षप्रदानेन अनुगृह्णत स्तव कृपा निरवधिरिति भावः – तथापि एव मपि, सेयं माया असती अपरमार्था । भवान् त्वन्तु सन् परमार्थः – इतीदं चित्र मद्भुतं – हन्ते त्याश्चर्ये – यथा मोक्ष स्तथा बन्धोऽ प्यनुभवारूढत्वेन परमार्थएव भवतीति

बन्धमोक्षदात्रो रुभयो र्मायेश्वरयोः परमार्थत्वे भवितव्ये सति एक स्त्वं परमार्थः अन्या त्वपरमार्थेत्युक्तिरतीव विचित्रेत्यर्थः – वस्तुतस्तु सच्चिदानन्दलक्षणस्य मोक्षस्य ब्रह्मणश्च कालत्रयवृत्तित्वेन सत्यत्वं बन्धस्य तदभावेन असत्यत्वमिति नात्र चित्रमिति भावः । व्यङ्ग्यार्थस्तु – असौ तव प्रिया प्रेयसी, क्रूरा प्रकृतिः प्रकृतिरिति जायायाः नाम । गुणैः रज्जुभिः, नरा न्मनुष्यान्, बध्द्वा बाधते ताडयति । त्वन्तु तेषां वसु धनं, हृत्वा गुणगणात् रज्जुवृन्दात्, मोचयन् गूढे दुर्गमे, अमृते जले, एतान् पातयसि पैशुन्यभयादिति भावः । इत्यतो हेतोः तव कृपापारं न जानीमहे । विरोधिलक्षणया त्वत्तो निर्घृणः क्वापि नास्तीत्यर्थः । तथापि जायापत्योः क्रौर्ये समानेऽपि सेयं माया प्रकृतिः असती दुष्टा; भवान्सन् निरवद्यः; इतीदं चित्रं । हन्ते त्याश्चर्ये – माया बध्द्वा ताडनमात्रं करोति – त्वन्तु धनमपि हृत्वा स्वरूपनाशम प्यकरोः – एवंसति सा दुष्टा त्वं साधुरिति वैषम्यं न क्वापि दृष्टपूर्व मित्यर्थः – ५०

श्लो ॥ एकस्यां पुरि भक्तकांक्षिणि निजे पश्य त्यनश्नत्यपि
स्वैरं स्वादु च खाद निर्घृण मसौ नात्मज्ञ इत्यागसा
पश्चाद्दीनतया श्रियः पति रिति ज्ञात्वा श्रितं त्वा ममुं
निष्पापं च्युतनामरूप मकृथा जीवं कृपा ते कुतः ? ॥ ५१

एकस्यामिति॥ एकस्यां पुरि शरीरे, 'पूः स्त्री पुर शरीरयो' रिति भास्करः । भक्तकांक्षिणि आश्रितकृपाळौ, निजे स्वस्मिन् स्वके, नित्ये निजं तेष्विति निजशब्दो यद्यपि स्वकवाची तथापि निजोपयुक्तशेष मनुचरेभ्यो दत्वेत्यादिप्रयोगा न्निजशब्द स्स्ववाची च – अनश्नति कर्मफल मभुञ्जाने पश्यति जीवव्यापार मवलोकयति सति साक्षित्वादिति भावः । नात्मज्ञः आत्मज्ञानशून्यः असौ जीवः, निर्घृणः निर्जुगुप्सं 'घृणा जुगुप्सा कृपयो' रिति विश्वः । याव दविद्यं कर्मफलेषु जुगुप्सा न जायत इति भावः – स्वैरं यथेच्छं स्वादु यथातथा अस्वाद्वपि स्वादूकृत्येत्यर्थः । रागवतः खलु पुंसो विरसा स्सरसा भवन्त्यमी विषयाः आमलकरूषितायां जिह्वाया मम्बु नीरसं सरसमिति वचनादिति भावः – चखाद भुंङ्क्तेस्म "द्वौ सुपर्णौ सयुजौ सखायौ समानंवृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्व त्त्यनश्न न्नन्यो अभिचाकशीति' इतिश्रुते रिति भावः । इत्यागसा एव मपराधेन विषयानुभवरूप मेन मपराधं, हृदि निधायेत्यर्थः । पश्चाद्दीनतया दारिद्र्येण भगवदनुग्रहकृतविषयदौर्लभ्ये नेत्यर्थः । त्वां समीपस्थं, श्रियःपति र्लक्ष्मीपति रिति ज्ञात्वा – परमात्मेति निश्चित्येत्यर्थः । श्रित माश्रितं, अतएव निष्पापं पापरहितं, अमुं जीवं, च्युतनामरूपं विगतनामरूपं मुक्त मित्यर्थः । अकृथाः, कृतवानसि – 'तथा विद्वान्नामरूपा द्विमुक्तः परात्परं पुरुष मुपैति दिव्य'मिति श्रुतेरिति भावः । ते कृपा कुतः अनिर्वाच्येत्यर्थः – व्यङ्ग्यार्थस्तु – एकस्मिन् पुरि पत्तने भक्तकांक्षिणि

ओदनार्जिनि क्षुधिते इति यावत् – अनश्नति अन्नाभावा दभुञ्जाने निजे स्वस्मिन् पश्यतिसति कदाचि दयं दयया कम्बळमात्रं वा प्रयच्छेदिति साकांक्ष मीक्षमाणेसतीत्यर्थः । अनात्मज्ञः परेङ्गितानभिज्ञः, असौ जीवः निर्घृणं निर्दयं, स्वैरं यथेच्छं, चखाद बुभुजे इत्यागसा पश्चाद्दीनतया चिरभोगानन्तरनिर्धनत्वेन हेतुना त्वां श्रियः पतिः लक्ष्मीवानिति ज्ञात्वा यः पूर्व मस्मि न्नगरे मयासार्थ मुवास । स इदानीं भाग्यवान् जातइति श्रुत्वेत्यर्थः । श्रित माश्रितं, अतएव निष्पापं निरपराधं, सापराधस्यापि शरणागतस्य निरपराधत्वादिति भावः । अमुं जीवं जीवतीति जीवः तं प्राणधारिणं प्राणमात्रशेषमित्यर्थः । बहुकाला दन्नाभावादिति भावः । च्युतनामरूप मकृथाः – यथा नामापि न श्रूयते – तथा समूल मुन्मीलितवानसीत्यर्थः – पूर्वापराधस्य अविस्मृतत्वादिति भावः । ते कृपा कुतः शरणागतघातपातकेन तव कुतः करुणेत्यर्थः । ५१

**श्लो ॥ दृश्यं किञ्चन नास्त्यनुत्तम मनिन्द्वर्कानलं मत्पदं**
**कांक्ष्यं नेह सुखार्थिना मिति वदन् भुङ्क्षे त्व मेक स्सुखम्**
**कश्चित् ज्ञातरहस्यमेव कृतिनं तत्प्रापयस्यादरा**
**देनं मुञ्चसि नो पुनः कुत इदं चातुर्य मभ्यस्यते ? ॥** ५२

दृश्यमिति॥ दृश्यं ज्ञेयं घटादिवस्तु, किञ्चन किञ्चिदपि, नास्ति नवर्तते मत्पदे इति शेषः । मत्पदं अहमेव पदं वस्तु मत्स्वरूप मित्यर्थः । 'पदं व्यवसितत्राणस्थानलक्ष्मांङ्घ्रिवस्तु' ष्वित्यमरः । अनुत्तमं न विद्यते उत्तमं यस्मा त दनुत्तमं सर्वोत्तममित्यर्थः । अनिन्द्वर्कानलं चन्द्रसूर्याग्निरहितं च स्वयंप्रकाशत्वेन प्रकाशान्तरनिरपेक्ष मित्यर्थः । भवतीति शेषः – 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽय मग्नि' रिति श्रुते रिति भावः । इह मत्पदे सुखार्थिना मैहिकसुखापेक्षिणां, कन्क्ष्यं कान्क्षितु योग्यं, न किमपि नास्तीत्यर्थः – स्वर्गादिवत्सुखप्रदं वस्त्वन्तरं किमप्यत्र नास्तीति भावः । यद्वा इह सुखार्थिना मित्येकंपदं ऐहिकसुखापेक्षिणां कान्क्ष्यं कान्क्षितु शक्यं, न नभवति मत्पदमित्येव प्रत्यक्प्रवणानामेवेदं सुलभं न तु बहिर्मुखाना मित्यर्थः । इत्येवंवदन् ब्रुवन् भक्तान्प्रत्युपदिशन्नित्यर्थः । त्वमेक स्सुख मात्मानन्दं भुङ्क्षे अनुभवसि – अद्वितीयानन्दरूप स्तिष्ठसीत्यर्थः – । ज्ञातरहस्यं विदिततत्त्वं अत एव कृतिनं धन्यं, कश्चिदेव ज्ञानी त्रैलोक्यदुर्लभ इति वचनादिति भावः । तत् त्वत्पद, मादरात् प्रीत्या, प्रापयसि गमयसि 'प्रियो हि ज्ञानिनोऽत्यर्थ महं स च मम प्रिय' इति वचना त्तव ज्ञानिन्येवादरो नत्वन्यस्मि न्निति भावः । एनं प्राप्तत्वत्पदं धन्यं, पुन र्भूयः, नमुञ्चसि नत्यजसि 'मा मुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते' इति वचनादिति भावः । इदं चातुर्यं कुतः कस्मा दीशे स्सकाशात्, अभ्यस्यते शिक्ष्यते त्वयेति-शेषः । न कुतश्चिदित्यर्थः । सर्वज्ञस्य तव कश्चि देवं कुरुष्वे त्युपदेष्टा नास्तिः करुणैव तत्र

प्रेरिकेति भावः । व्यङ्ग्यार्थस्तु – मत्पदे द्रश्यं द्रष्टुं योग्यं, अपूर्वं मित्यर्थः । वस्तु किञ्चत् नापि नास्ति । अत एव मत्पद म्मदीयस्थान, मनुत्तम मसुन्दरं, अनिन्द्वर्कानलं च, तरुगुल्मादि-प्रचुरतया छायाबहुळ मित्यर्थः । घट्टनस्थानमिति यावत् – भवति – अत एव इहास्मिन् स्थाने सुखार्थिनां काङ्क्ष्यं वस्तु नास्ति कदाचिद्देशोपप्लवादिसमये तिरोधातुं योग्यं; न तु सुखार्थिभिः स्थातुं योग्य मित्यर्थः । इति वदन् एवमुक्त्वा, प्रतारयन्नित्यर्थः । त्वमेक एव सुखं यथातथा भुङ्क्षे तत्रत्य मपूर्ववस्तुजात मनुभवसीत्यर्थः । कृतिनं ऊहापोहसमर्थ मतएव ज्ञातरहस्यं मर्मज्ञं कञ्चित्त्वत्पद मादरा त्प्रापयसि मर्मज्ञं नप्रकोपयेदिति वचनादिति भावः । एनं पुन र्नोमुञ्चसि । स पुन स्त्यक्तश्चे दन्यानप्यानयेदिति भयादिति भावः । इदं चातुर्यं कुतोऽभ्यस्यते – वञ्चकानां त्वमेव परमगुरुः; न तु तवापि परमगुरु रस्तीति भावः – ५२

**श्लो ॥ दत्वा ऽवञ्चय दुत्तरोत्तरगुरून् मौग्ध्यानुरूपं भवान्**
**लेशा न्मर्त्यसुरामराधिपमुखा नानन्दकोशं हरन्**
**किञ्चिन्नैव करोमि भोगविधुरो सङ्गोज्झतो मां विना**
**किञ्चि न्नो मम धामनीति कृशतां ब्रूषे तु तत्काङ्क्षिणाम् ॥ ५३**

दत्वेति॥ भवान् त्वं, आनन्दकोशं सुखराशिं, हरन् भजन्, परमानन्दरूपस्सन्नित्यर्थः 'एषोऽस्य परम आनन्द' इति श्रुतेः । आनन्दनिधिं हरन् मुष्णन्निति च व्यज्यते । उत्तरोत्तरगुरून् उत्तरोत्तराधिकान्, पूर्वपूर्वानन्दापेक्षयेत्यर्थः । 'स एको मानुष आनन्द' इत्यादि श्रुतौ मानुषाद्यानन्दाना मुत्तरोत्तरं शतगुणत्वश्रवणादिति भावः । लेशा नानन्दलेशान्, मौग्ध्यं मौढ्यं, तस्य अनुरूपं मौग्ध्यानुरूपं न्यूनत्वानुगुणं यथा तथेत्यर्थः । मानुषाणा मति-मूढत्वात्स्वल्प एवानन्दः । ततोऽप्यभिज्ञत्वा द्देवाना मधिकः । ततोऽपि ज्ञानाधिकत्वा दिन्द्रस्य देवानन्दा दधिक आनन्दः इत्येवं रीत्येत्यर्थः । यद्वा मौग्ध्यं सौन्दर्यं मुत्कर्ष इति यावत् – तदनुरूप मित्यर्थः । यस्मा द्यस्माद्यो य उत्कृष्टः तत्तदानन्दा दुष्कृष्टस्य उत्कृष्टस्य आनन्द उत्कृष्ट इति भावः । दत्वा वितीर्य, मर्त्यसुरामराधिप मुखान् मानुषदेवमघवप्रमुखान्, मुखशब्देन गन्धर्वबृहस्पतिब्रह्मादयो गृह्यन्ते, अवञ्चयत् वञ्चितवानसि । भवच्छब्दसामानाधि-करण्यात्प्रथमपुरुषनिर्देशः । अत्र यथा कश्चिन्निधिचोरः तदाश्रिताना मुत्कर्षानुरूपं उत्तरोत्त-राधिकं यत्किञ्चिद्धनं दत्वा सर्वं हरति; तद्व दमयपि आनन्दनिधिं मुष्णन् मानुषादीनां स्वल्प-मेवानन्दं दत्तवानिति भावो व्यज्यते तत्काङ्क्षिणाम् त मानन्दकोशं काङ्क्षन्तीति तत्काङ्क्षिणः मुमुक्षव इत्यर्थः । तेषां तु अह मित्यस्याक्षेपः – अहं किञ्चिदपि नकरोम्येव – भोगविधुरः अभोक्ता सङ्गोज्झितः निस्सङ्गश्च भवामीति शेषः । 'अकर्ताऽह मभोक्ताऽह मसङ्गः परमेश्वर' इति वचनादिति भावः । मां विना, मम धामनि पदे, किञ्चिदपि नो नास्ति । इत्येवंप्रकारेण कृशतां ब्रूषे कर्तृत्वादिरहितनिष्कृष्टस्वरूप मुपदिशसीत्यर्थः । अन्यत्र किञ्चिदपि स्वल्पकृत्यमपि नैव

करोमि; किमु तन्निधिहरणादिकं साहसमिति भावः । भोगविधुरः अनुभवरहितः सङ्गोज्झित श्च भवामि । स्वतो भोगरहितस्य सङ्गरहितस्य च, किं धनेनेति भावः । एवमपि तव यदि मय्येव निधिहर्तृत्वविश्वासः; तर्हि मद्गृहं शोधयेत्याह — मां विना मम धामनि गृहे किञ्चिदपि नोनास्ती त्येवंप्रकारेण तत्काङ्क्षिणां निधिकाङ्क्षिणां कथं सर्वानपि प्रतार्य त्वय्यैकेन निधि रपहृतः? अस्माकमपि भागं देहीति याचमानाना मित्यर्थः । कृशतां कार्श्यं दारिद्य मिति यावत् । ब्रूषे प्रकटयसीत्यर्थः । ननु यत्किञ्चिदपि ददासी त्यहो वञ्चकतेति भावः ॥ ५३

श्लो ॥ आवासं परमर्चिषः खरतरा दुच्चण्डघृष्टे र्विषा
पूरा त्सञ्चितसर्वलुण्ठनपदा दप्याश्रितो निर्भयम्
सर्वस्वं तमसि स्फुटे हरसि यदन्यस्य तन्नाद्भुतं
यद्बोधे सति दुःख मस्य न तत स्सा चोरताचातुरी ॥ ५४

आवासमिति॥ खरतरा दत्यन्त तीक्ष्णा, दर्चिष स्तेजसः अग्निलोकादिति यावत् — उच्चण्डघृष्टेः चण्डरश्मेः आदित्यलोका दित्यर्थः । इदं च मध्ये वर्तमानाना महश्शुक्लाद्यभिमानिदेवतालोकानां उत्तरत्र विद्यमानानां चन्द्रविद्युल्लोकादीनां च उपलक्षणम् । अत एव श्रुतिः — 'तेऽर्चिष मभिसम्भवन्ति अर्चिषोऽहः — अह्ना त्पूर्यमाण पक्ष' मित्यादि । विषापूरात् विषस्य उदकस्य आपूरा दासमन्ता त्प्रवाहात् विरजा नद्या इत्यर्थः — सञ्चितसर्वलुण्ठनपदात् सञ्चिताना मनेकजन्मभि रार्जितानां, सर्वेषां सुकृतदुष्कृतानां लुण्ठनपदात् विसर्जनस्थानात्, विरजानद्यतिक्रमणानन्तरभावित्वा त्सुकृतदुष्कृतत्यागस्येति भावः । तथा च श्रुतिः — "तत्सुकृतदुष्कृते विधूनुते; द्विषन्तः पापकृत्यान् सुहृद स्साधुकृत्या नि"ति एतेभ्यः स्थानेभ्यः परं परतो विद्यमानं, निर्भयं निरुपप्लवं, दुःखाद्यसम्भिन्न मिति यावत् । आवासं वैकुण्ठनामकं निलयं आश्रितः अधिष्ठितः, त्वं तमसित मोगुणे स्फुटे उल्बणे सति, धन्यस्य कृतार्थस्य भवत्सङ्कल्पविषयत्वादिति भावः । सर्वस्वं सर्वधनं, हरसि अपहरसीति यत्, त न्नाद्भुतं न चित्रं; धनहरणं विना तमोनिवृत्त्यभावात् । तन्निवृत्त्यभावे च ज्ञानानुदया दिति भावः । तर्हि किं मद्भुतमित्यत आह — बोधे ज्ञाने सति, ज्ञानसाधनभूतनित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसम्पत्तौ सत्या मित्यर्थः । अस्य धन्यस्य, तत स्सर्वस्वहरणा दुःखं, न नासीदिति यत् मदमानादिनिवर्तकत्वेन अनुकूलत्वादिति भावः । सा विधेयप्राधान्यात् स्त्रीलिङ्गनिर्देशः — चोरताचातुरी चोरताया अपहरणस्य चातुरी चातुर्यं, तदेव चौर्यचातुर्यं य दनिष्टमिव प्रथमं भासमानं परिणामे निरतिशयपुरुषार्थसाधनं च भवति। पुरन्दरादीनामन्यशुभद्वेषिणां दिलीपाद्यश्वमेधीयाश्वादिहरणंतु स्वार्थपर्यवसायित्वा न्निन्द्यमिति भावः । व्यङ्ग्यार्थस्तु — खरतरा दर्चिषः ज्वालायाः, उच्चण्ड घृष्टेः अतिकोपना द्वराहात् तत्सञ्चारप्रदेशा दित्यर्थः । 'वराहस्सूकरो घृष्टि' रित्यमरः । विषापूरात् गरळप्रवाहात्, सञ्चितसर्वलुण्ठनपदात् सञ्चितानां, सम्पादितानां सर्वेषां कौपीनादि-

रत्नान्तानां वस्तूनां, लुण्ठनपदा दपहरणस्थानात्, चोरप्रचुरप्रदेशा दित्यर्थः। एतेभ्योऽपि परं परतो विद्यमानं, आवासं निर्भयं यथा तथा श्रितः त्वं तादृशनिवासस्य केनापि दुष्प्रवेशादिति भावः। लोके हि चोराः यत्किञ्चि दुर्गमं घट्टस्थानं गिरिगुहादिक माश्रित्य चोरयन्तीतिप्रसिद्धं – तमसि अन्धकारे स्फुटे सति धन्यस्य धनार्हस्य 'तत्र साधु रिति यत्' वेषव्यवहारादिना प्रथमत एव धनिकत्वेन निश्चितस्येत्यर्थः। सर्वस्वं हरसीति यत् त त्त्वाद्भुतं तावन्मात्रस्य सर्वचोर साधारण्यादिति भावः। बोधे जागरणे सति अस्य नष्टधनस्य तत स्सर्वधनहरणा दुःखं नेति यत् सा चोरताचातुरी स्तेयकरणचातुर्यं केनचि दौषधविशेषेण चोरस्य यावत् स्वस्थानागमनं नष्टधनस्य धननाशप्रयुक्तदुःखं न तावद्भवतीति प्रसिद्धम्॥ ५४

**ग॥ एवं स्तुत्वा समासादिताभये माहेश्वरज्वरे निवर्तमाने बाणे च पुन स्समरवाञ्छया माधव मभिधावमाने॥ ५५**

एवमिति॥ एव मुक्तरीत्या, स्तुत्वा कृष्ण मिति शेषः – समासादिताभये प्राप्ताभये, माहेश्वरज्वरे महेश्वरस्यायं माहेश्वरः स चासौ ज्वरः तस्मिन् निवर्तमाने निवृत्ते सति, बाणे बाणासुरे च, पुन र्भूयः समरवाञ्छया युद्धकाङ्क्षया, माधवं कृष्ण, मभिधावमाने अभिमुखं शीघ्रं गच्छति सति। ५५

**श्लो॥ दोषं छित्वाखिलं बाणं चक्री चक्रे चतुर्भुजम्**
**भवानुवर्तिनो नाभू त्तथाप्यस्य विशोकता॥ ५६**

दोषमिति॥ चक्री कृष्णः, अखिलं सर्वं, दोषं बाहुं, जात्येकवचनम् – सर्वान् बाहू नित्यर्थः। 'भुजबाहू प्रवेष्टो दो' रित्यमरः। छित्वा चतुर्भुजं चत्वारो भुजौ यस्य तं अवशिष्टभुजचतुष्टय मित्यर्थः। चक्रे चकार – तथापि भुजचतुष्टयस्थापनरूपपक्षपातकरणेऽपि भवानुवर्तिनः शिवकिङ्करस्य शिवं तपसा तोषयित्वा बाहुसहस्रं प्राप्तवत इत्यर्थः। अस्य बाणासुरस्य विशोकता शोकराहित्यं नाभूत्। तपसा लब्धाः अत एवातिप्रिया मम अन्ये सर्वे भुजाः च्छिन्ना इति दुःखितवान्; न तु भुजचतुष्टय मछित्वा पक्षपातं कृतवानिति संतुष्ट इत्यर्थः। भवानुवर्तिनोऽपि मम इदृशी दुरवस्थेति चिखेदेति निष्कृष्टार्थः। परिकरालङ्कारः। व्यङ्ग्यार्थस्तु – अखिलं दोषं पापं छित्वा अपहृत्य, बाणं चक्री चतुर्भुजं भगवन्तं चक्रे स्वसारूप्यं तस्य दत्त्वा नित्यर्थः। तथापि विष्णुसारूप्यलाभेऽपि भवानुवर्तिनः शिवदासस्य अस्य विशोकता नाभूत् – घण्टाकर्णव च्छिवसारूप्यं काङ्क्षतोऽस्य विष्णुसारूप्यं किञ्चि च्छोककारण मभवदिति भावः। यद्वा चतुर्भुजं चक्रे स्वसायुज्यं ददौ। लक्षणया स्वसायुज्यो-पयोगिनीं जीवन्मुक्तिं ददावित्यर्थः। तथापि भवानुवर्तिनः भवतीति भवो देहः त मनुवर्तमानस्य,

भव स्संसार इति वा – तस्य विशोकता शोकात्यन्ताभावो नाभूत्। यावद्देहपातं जीवन्मुक्तस्यापि दुःखलेशानुवृत्तेरिति भावः। ५६

ग॥ अनन्तर मवशेषितभुजचतुष्टयस्य बाणस्य कृते समुपजातक्षोभं शम्भुं प्रसाद्य प्रद्युम्नसुत मुषामपि स्यन्दन मारोप्य यदुनन्दन स्सानन्दं नगर मगमत्॥ ५७

अनन्तरमिति॥ अनन्तरं बाणभुजचतुष्टयशेषीकरणानन्तरं, अवशेषितभुजचतुष्टयस्य अवशेषितं शेषीकृतं भुजचतुष्टयं चतुर्भुजाः यस्य तस्य बाणस्य भक्तस्य कृते तदर्थमित्यर्थः। समुपजातक्षोभं उत्पन्नमनोविकारं, शम्भुं शिवं, प्रसाद्य प्रसादयित्वा अनुगृह्येति वा। प्रद्युम्नसुत मनिरुद्ध, मुषां बाणपुत्रीमपि, स्यन्दनं रथ, मारोप्य आरोहयित्वा, यदुनन्दनः कृष्णः, सानन्दं आनन्दसहितं यथा तथा, जयलक्ष्मीसम्बन्धादिति भावः। नगरं द्वारका मगमत् ययौ॥ ५७

श्लो॥ अथ शापवशा त्कृशानुभावं। सरटीभूय हरि र्नृगाभिधानम्
नृगमेव पुन र्विधाय शाप क्षपणा द्देवगमातनो द्विचित्रम्॥ ५८

अथेति॥ अथ ततः, हरिः कृष्णः, शापवशात् विप्रशापवशात्, सरटीभूय कृकलासत्वं प्राप्य, वर्तमान मिति शेषः। अत एव कृशानुभावं नष्टमाहात्म्यं, यद्वा शापवशा त्कृशानुभाव, मत एव सरटीभूय वर्तमानं नृगाभिधानं नृगनामकं राजान मिति शेषः – शापक्षपणात् शापनाशना द्धेतोः, विप्रशापं क्षपयित्वेत्यर्थः। पुनः भूयः, नृगं राजान मेव, नॄन् गच्छतीति नृगः तमिति च। विधाय कृत्वा, देवान् गच्छतीति देवगः तं, देवत्वं प्राप्त मित्यर्थः। अतनोत् चकार। सरटीभूतं नृगं पुन र्नृगीकृत्य ततो देवं चकारेत्यर्थः। विचित्र मद्भुतं, नृगं मनुष्यगं विधायापि देवगं चकारेत्येत द्विरुद्ध मित्यर्थः। पुरा किल इक्ष्वाकुतनयो नृगो नाम राजा विप्रेभ्यः ससुवर्ण शृङ्गखुराः सवत्साः गाः वितरन्, एकस्मै कश्यपाख्याय विप्रायार्पितां पुनर्व्रजगतां गा मन्यस्मै विप्राय दत्वा, सरटीभवेति कश्यपेन शप्तस्सन्, सरटीभूतः कृष्णेन कूपा दुत्तारितः तद्धस्तस्पर्शा द्विगतपापः पुनः स्वराजदेह मासाद्य तदैव विमान मारुह्य दिवं ययौ इति भागवतकथाऽत्र बोध्या॥ ५८

ग॥ अथ कदाचन पौण्ड्रकोनाम करूषाधिपति रात्मानमेव परमात्मानं मन्वानः कमपि सन्देशहरं हरये प्राहिणोत्॥ ५९

अथेति॥ ततः कदाचन कस्मिंश्चि त्समये, करूषाधिपतिः करूषदेशाधीश्वरः, पौण्ड्रकः नामेति प्रसिद्धौ, आत्मानं स्वमेव, परमात्मानं परमेश्वरं, मन्वानः जानन्, हारये कृष्णाय, कमपि कञ्चित्, सन्देशहरं दूतं, प्राहिणो द्विससर्ज॥ ५९

ग॥ सोऽपि समासाद्य यदुपतिसदेशं सन्देश मदिशत्॥ ६०

सोऽपीति॥ सोऽपि दूतः, यदुपतिसदेशं श्रीकृष्णसविध, मासाद्य प्राप्य, सन्देशं वार्ता, मदिशत् जगाद । धातूना मनेकार्थकत्वा द्दिशधातो रपि प्रकृते व्यक्तायां वाचि वृत्तिः । यद्वा सन्देशं लक्षणया वार्तापत्रिका मदिशत् ददौ । दिश अतिसर्जने ॥ ६०

अव॥ सन्देशमेवाह ' जगता मिति '

श्लो ॥ जगता मवनाय वासुदेवो भुवि जातोऽह मनीदृशः पुन स्त्वम्
शरणं भज यच्छ वा समीकं न मृषालक्षणधारणं क्षमं ते ॥ ६१

जगतामिति॥ वासुदेवः परमात्मा, अहम् जगतां लोकाना, मवनाय रक्षणार्थं, भुवि भूमौ, जातः आविर्भूतः भवामीति शेषः । वसन्ति जगन्त्यस्मिन्निति वासुः; दीव्यति भूतपालनादिना क्रीडतीति देवः; वासु श्चासौ देवो वासुदेव इति व्युत्पन्नश्शब्दः । मय्येव वर्तते ममैव परमात्मत्वात्; भूतपालनार्थमवतीर्णत्वा च्चेत्यर्थः । पौण्ड्रकवासुदेव इति तस्य नामेति भावः । त्वं पुनः त्वन्तु, अनीदृशः नैवंविधः — वसुदेवस्यापत्यं वासुदेव एव भवान्; न तु भगवान्वासु देव इति भावः । कर्तव्य मुपदिशति शरणं भजेति मामिति शेषः मां रक्षकत्वेन स्वीकुर्वित्यर्थः यद्वा अनीदृशः त्वन्तु मां शरणं भजे त्येक एवान्वयः । पक्षान्तर माह — वा — अथवा, समीकं युद्धं, यच्छ; ममेति शेषः — मया सह युद्ध्यस्वेत्यर्थः । अत एव विकल्पालङ्कारः । ' विरोधे तुल्यबलयो र्विकल्पालङ्कृतिर्म ते ' ति लक्षणात् । शरणागत-रक्षादीक्षं मां शरणं गत्वा, विभीषणव दिह सुखंवा, मया युध्द्वा रावणव त्परसुखं वा भुङ्क्ष्वेति भावः । ते तव, मृषालक्षणधारणं असत्यचिह्नधारणं, परमात्मनि मयि, व्युत्पन्नानां वासु-देवत्वादीनां स्वस्मि न्नारोपण मित्यर्थः । न क्षमं न युक्तं — वास्तवार्थ स्तु — असुदेवः असून् प्राणानेव दीव्यति पालयतीति तर्पयतीति यावत् असुदेवः । अहं जगता मवनाय हिंसनाय अवतेः रक्षणहिंसाद्यर्थकत्वात् । अनीदृशः ईदृशो जगद्धिंसको नभवती त्यनीदृशः जगद्रक्षक इत्यर्थः । यद्वा ईदृश इति निर्वर्णयितु मशक्य इत्यर्थः । ' ईदृक्ता नास्ति तत्रहि ' इति पञ्चदश्याम् परमात्मेति यावत् । त्वं पुनः त्वन्तु, शरणं गृहं, सतां हृदयगुहा मित्यर्थः । भज तत्र लीनो भवेत्यर्थः । वा अथवा, समीकं यच्छ स्वेश्वरत्वं प्रकाश्य मया सह युद्ध्यस्वेत्यर्थः । ते मृषालक्षणधारणं 'परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ' इति गीतावचनात् खलशिक्षकत्वरूप स्यासत्यचिह्नस्य धारणं न क्षमम् । यदि खलं मां न हन्याः; तर्हि तव खलशिक्षकत्वविरुद्ध मसत्यं स्यादिति भावः । यद्वा वासुदेवः परमात्मा त्वं जगता मवनाय रक्षणाय, भुवि जातः — अहंपुनः अहन्तु, अनीदृशः न परमात्मा; किन्तु जीव इत्यर्थः । शरणं गृहभूतं जीवं मां भज स्वीयत्वेन स्वीकुरु 'य आत्मनि तिष्ठ' न्निति श्रुत्या जीवान्तरात्मत्वं परमात्मनः प्रतिपादितं । वा किञ्च — असमीकं अत्र समीकशब्द स्समितिशब्दं लक्षयन् सङ्गं बोधयतीति लक्षितलक्षणा — अथ सङ्गरे 'सङ्गे सभायां समिति' रित्यमरः । असमीक

मसङ्गं ज्ञान मित्यर्थः — यच्छ दिश । ते मृषालक्षणधारणं मिथ्याभूतस्य पतितपावनव्रतरूपचिह्नस्य धारणं न क्षमम् । मां यदि न तारयसि तर्हि तव पतितपावनव्रत मसत्यं स्यादित्यर्थः । उक्तं च 'विदन्नपि हृदन्तरे प्रतिपदं यदहङ्कृतेः यते यदुपतेः न ते विफलताव्रते स्या' दिति । 'यतोऽसि जगतो गुरु श्श्रुतिनिषेधत स्ते ततो ननाम च फणौमि मय्यथ वृथा . कृधं माकृथाः' इति ॥ ६१

**ग ॥ एत दाकर्ण्य कर्णपरुष मासादितस्यन्दनो यदुनन्दन स्सपरिवारो वाराणसी मासाद्य पार्ष्णिग्राहेण सह काशीराजेन पौण्ड्रकं कृतान्तनिशान्तातिथि माधाय निजभवन मभजत ॥ ६२**

एतदिति॥ कर्णपरुषं श्रुतिकटु, एत द्वचन माकर्ण्य श्रुत्वा, आसादितस्यन्दनः आरूढरथः, यदुनन्दनः कृष्णः, सपरिवारः परिजनसहितस्सन्, वाराणसीं काशीं, आसाद्य प्राप्य, पार्ष्णिग्राहेण शत्रु मभियुञ्जानस्य राज्ञः पृष्ठगत श्शत्रुः पार्ष्णिग्राह इत्युच्यते । 'पार्ष्णिग्राहस्तु पृष्ठत' इत्यमरः । तेन काशीराजेन वाराणसीपतिना सह पौण्ड्रकं कृतान्तनिशान्तातिथिं यमगृहातिथिं, आधाय कृत्वा, उभावपि हत्वेत्यर्थः । पर्यायोक्त मलङ्कारः । निजसदनं स्वगृहं, अभजत प्राप ॥ ६२

**ग॥ तत और्ध्वदैहिकं परिसमाप्य काशीराजतनूज स्सुदक्षिणोनाम पितृवध-वैरनिर्यातनाय सहपुरोहितेन पुरोहित मिद मात्मन इति सत्वर मनुमधुसूदन मभिचार माचचार । सचाभिचारिकानलः पुरुषवेषभीषण स्सत्वरं द्वारका मासाद्य तत्र च गोविन्दचोदितेन सुदर्शनेन कदर्थितः प्रत्यावृत्य सयाजकं यजमानमेव सुदक्षिण मक्षिणोत् ॥ ६३**

ततइति॥ ततः सपौण्ड्रककासीराजव्यापादनानन्तरं, सुदक्षिणोनाम सुदक्षिण इति काशीराज-तनूजः काशीराजस्य पुत्रः, और्ध्वदैहिकं साम्परायिकं, दहनादिक मपरकर्मेत्यर्थः — परिसमाप्य कृत्वा, पितृवधवैरनिर्यातनाय पितृवधरूपस्य वैरस्य शत्रुत्वस्य, निर्यातनाय प्रतीकारार्थं, 'वैरशुद्धिः प्रतीकारो वैरनिर्यातनं तथे' त्यमरः । इदं आभिचारकरणं आत्मन स्स्वस्य, पुरः प्रथमतः, हितं प्रियकरं इति मत्वेति शेषः । इदं पुरोऽग्रे आत्मानं अहितमिति च प्रतीयते । पुरोहितेन पुरोधसा सह, मधुसूदन मनु कृष्ण मुद्दिश्य, सत्वरं द्रुतं, अभिचारं मारणहोमं आचचार कृतवान् । स च सोऽपि, अभिचारभवोऽग्निः पुरुषवेषभीषणस्सन् पुरुषवेषेण भयङ्करस्सन्, सत्वरं द्रुतं, द्वारकां श्रीकृष्णपुरीं, मासाद्य प्राप्य, तत्र च पुरि गोविन्दचोदितेन श्रीकृष्णप्रयुक्तेन, सुदर्शनेन चक्रेण, कदर्थितः तुच्छीकृतः, प्रत्यावृत्य प्रतिनिवृत्तोभूत्वा,

सयाजकं पुरोहितसहितं, यजमानं यज्वानं, सुदक्षिणं काशीराजतनयमेव, अक्षिणोत् हिंसितवान्। 'क्षिणु हिंसायाम्' – महात्मसु कृतापचार स्वस्मिन्नेव फलतीति भावः॥ ६३

**श्लो ॥ ज्वलनो न सुदक्षिणेष्टिजोऽ प्यभव च्चक्रभयापनुत्तये**
**विमुखे तु हरौ भवे च्छुभा कथ मिष्टि र्विधिनापि चारिता ॥ ६४**

ज्वलनइति॥ सुदक्षिणेष्टिजः सुदक्षिणकृतयागजन्यः, ज्वलनः पुरुवेषभीषणोऽग्निः, चक्रभयापनुत्तये चक्रा त्सुदर्शना, द्भयस्य भीते रपनुत्तये निवारणार्थं, नाभवत् न बभूव। विधिना चारितापि यथाशास्त्रं कृतापि, इष्टिः यागः, हरौ कृष्णे, विमुखे पराङ्मुखे सति, कथं केन प्रकारेण, शुभा मङ्गळकारिणी, भवेत् स्यात्? न कथमपीत्यर्थः – अन्यदेवतोद्देशेन यागकरणेऽपि तत्तद्देवतारूपेणापि फलदातृत्वं हरेरेवेति तद्वैमुख्ये फलं न सिद्ध्यतीत्यर्थः। व्यङ्ग्यार्थस्तु – सुदक्षिणेष्टिजः यथोक्तदक्षिणयागजन्योऽपि, ज्वलनः आहवनीयाग्निः, चक्र-भयापनुत्तये चक्रस्य राष्ट्रस्य यद्भयं दुर्भिक्षादिजन्यं तस्य अपनुत्तये, नाभवत्। विधिना चारितापि इष्टिः हरौ इन्द्रे विमुखेसति कथं शुभा भवेत्? – इन्द्रस्यैव वृष्ट्यधिदेवतात्वादिति भावः। अत्र प्राचीनेन तस्मि न्नग्नौ कारीर्यादियागेन जाता वृष्ट्यादिः दुर्भिक्षादिनिवर्तनद्वारा राष्ट्रभयापनोदाय भवति; न तु साक्षादेवाग्नि रिति व्यज्यत इति व्याख्यातम्; तत्तु श्लोकस्य उत्तरभागार्थेनसह असङ्गतमिति बोध्यम्॥ ६४

**श्लो ॥ दक्षेण यजमानेना प्यहितेन वृषाकपेः**
**कृता सती हितं सूता मिष्टि र्नष्टगुणा कथम्? ६५**

दक्षेणेति॥ दक्षेण समर्थेनापि, वृषाकपे र्विष्णो, रहितेन विरोधिना, यजमानेन कृतासती अतएव नष्टगुणा निर्गुणा, इष्टिः यागः, हित मिष्टं, कथं केन प्रकारेण, सूतां जनयतु, कथमपि नसम्पादयत्ये वेत्यर्थः – व्यङ्ग्यार्थस्तु – वृषाकपे श्शिवस्य, अहितेन दक्षेण, दक्षप्रजापतिरूपेणापि यजमानेन, कृता अतएव नष्टगुणा इष्टिः, सतीहितं सत्याः दक्षसुतायाः, देव्याः हित मिष्टं, कथं सूताम् – 'भवान्यान्तु सती स्त्री स्या न्नक्षत्रे तु नपुंसक' मित्यमरः। पतिव्रतानां भर्तर्येव पक्षपातो न तु भर्तृद्वेषिणि पितरीति भावः। यद्वा तादृश-यागदर्शनार्थं गताया एव देव्या नाशसम्भवादिति भावः – ६५

**श्लो ॥ स सप्ततन्तुजालेन गुणसौक्ष्म्या दणीयसा**
**हरि माक्रमितुं वाञ्छन् हा बभूवासुदक्षिणः॥ ६६**

सइति॥ सः सुदक्षिणः, गुणसौक्ष्म्यात् गुणानां सूक्ष्मत्वाद्धेतोः निर्गुणत्वादित्यर्थः – यागस्य भगवत्प्रीतिजनकत्वमेव गुणः; प्रकृते तदभावा न्नैर्गुण्यमिति भावः। अणीयसा स्वल्पेन, तुच्छेनेत्यर्थः। सप्ततन्तुजालेन आभिचारिकयागसङ्घेन, 'सप्ततन्तु र्मखः क्रतु' रित्यमरः। हरिं

भगवन्तं कृष्ण, माक्रमितुं हन्तुं, वाञ्छन् इच्छुस्सन् , अतएव असुदक्षिणः असवः प्राणा एव दक्षिणा यस्य सः तथोक्तः – मृत इत्यर्थः । सुदक्षिणो नभवती त्यसुदक्षिण इति च व्यज्यते – बभूव । हा ! इति चित्र । सुदक्षिणो येन केनापि प्रकारेण असुदक्षिणो न भवेदेवेति तथा भवन मद्भुतमिति भावः । भगवन्तं हन्तु मुद्युक्त स्स्वयमेव हत इति वर्णना द्विषमालङ्कारः । व्यङ्ग्यार्थस्तु – सः पुरुषः गुणसौक्ष्म्यात् तन्तुस्थौल्याभावा दणीयसा सप्ततन्तुजालेन सप्त-सङ्ख्याकतन्तुविरचितेन आनायेनेत्यर्थः । 'जालं समूह आनाय' इत्यमरः । हरिं सिंह, माक्रमितुं गृहीतुं, वाञ्छन् सन् , अतएव असुदक्षिणः अचतुरः, बभूव – अयोमयजालेनैव चतुरेण सिंह आक्रमितव्य इति भावः ॥ ६६

**ग॥ तदनु सुग्रीवमित्रधेयं द्विविदोनाम मैन्दसोदरो वानराधिपतिः कृतपातक इव नरकप्रणयी चक्रवाकइव मित्रविपत्तिपरितप्त स्सुहृदानृण्यकामनया नितान्त मानर्तविषयकदन मापादयन् कदाचन मदिरास्वादनमेदुरीकृतमदस्य बलदेवस्य ललितं गीत माकर्णयन् रैवतक मुपाजगाम ॥ ६७**

तदन्विति॥ तदनु सुदक्षिणनाशनानन्तरं, सुग्रीवमित्रधेयं सुग्रीवस्य मित्रं 'मित्राच्च छन्दसीति छन्दोविषयमपि धेयप्रत्ययं लोकेऽपि कवयः प्रयुञ्जते' निरङ्कुशत्वात् तथा च भवभूति । 'मित्रधेय मस्माकमिति भवन्तो विदाङ्कुर्वन्त्विति' महावीरचरित्रे प्रयुयोज । मैन्दसोदरः मैन्दस्य कपेः सोदरः अनुजः, कृतपातक इव कृतं पातकं येन सः, पातकीत्यर्थः । सइव नरकप्रणयी नरकासुरस्निग्धः नरकभागिति च–चक्रवाक इति रथाङ्गाख्यपक्षिविशेष इव, मित्रविपत्तिपरितप्तः मित्रस्य सुहृदो भानोश्च विपत्तिर्वियोगः, तया परितप्तः सन्तप्तः, वानराधिपतिः कपीश्वरः, द्विविदः नामेति प्रसिद्धौ सुहृदानृण्यकामनया सुहृदो नरकासुरमित्रस्य स्वस्य, आनृण्यं ऋणराहित्यं, तस्य कामनया वाञ्छया, सुहृदृणा दात्मानं मोचयितु मित्यर्थः । यद्वा सुहृदो नरकस्य, आनृण्यकामनया स्वऋणा त्सुहृदं मोचयितु मित्यर्थः । 'ऋणानुबन्धरूपेण पशुपत्नीसुतादय' इति वचनात् । उभयो स्सौहार्दरूपसम्बन्धं प्रति ऋणानुबन्धएव कारणमिति भावः । नितान्तं भृशं, आनर्तविषयकदनं आनर्ताख्यदेशपीडा, मापादयन् कुर्वन् , आ पुत्रेण रैवतेन रेवतीप्रदान समये बलभद्राय दत्तोऽय मानर्तदेशः । कदाचन कदाचित् , मदिरास्वादनमेदुरीकृतस्य मद्यपानमत्तस्य, बलदेवस्य रामस्य, ललितं मधुरं, गीतं गान, माकर्णयन् श्रुण्वन् सन् , रैवतकं गिरिं, मुपाजगाम ययौ । तदानीं तत्र बलरामस्य सत्त्वादिति भावः ॥ ६७

**श्लो ॥ नीलाम्बराश्रिततनुं चलतारकाभिः**
**कान्ताभि रावृत ममन्दकरप्रचारम्**
**तं रेवतीरमण मश्रमसाधुगीतं**
**वालो विलोक्य हरि राक्रमितुं चचार ॥ ६८**

नीलेति॥ बालो मूर्खो, हरिः कपिः द्विविदः; नीलाम्बराश्रिततनुं नीलेन अम्बरेण-वस्त्रेण, आश्रिता छन्ना, तनु र्देहो यस्य तं नीलाम्बरमित्यर्थः। 'नीलाम्बरो रौहिणेय' इत्यमरः। चलतारकाभिः चलाः चञ्चलाः, मदिरामदा द्घूर्णमाना इत्यर्थः। तारकाः कनीनिकाः, यासां ताभिः; 'तारकाक्ष्णः कनीनिके' त्यमरः। कान्ताभि र्ललनाभिः, आवृतं परिवृतं, अमन्दकरप्रचारं अमन्दः अतिशयितः, करप्रचारः हस्तचलनं, यस्य तं मदिरास्वादमदा दितस्ततः करौ विक्षिपन्त मित्यर्थः। अश्रमसाधुगीतं अश्रमसाधु निरन्तर-मनोहरं गीतं गानं यस्य तं, तं प्रसिद्धं रेवतीरमणं बलरामं, विलोक्य दृष्ट्वा, आक्रमितुं जेतुं, चचार अचलत्। व्यङ्ग्यार्थस्तु। बालो हरिः बालसिंहः, यद्वा हरिः कपिलवर्णः। बाल शिशुः, नीलाम्बराश्रिततनुं नीलं कृष्णवर्णं, मम्बर माकाशं, माश्रिता तनु र्यस्य तं, नीरूपोऽप्याकाश स्तामसवशा न्नीलो दृश्यते इति भावः। कान्ताभिः प्रियाभिः, चलतारकाभिः चञ्चलाभि रश्विन्यादिताराभिः, आवृतं अमन्दकरप्रचारं अतिशयितकिरणसञ्चारं, अश्रमसाधु-गीतं अश्रम मनायासं यथा तथा, साधुभि र्बुधैः, गीतं स्तुतं, तं रेवतीरमणं, रेवत्या स्ताराया: रमणं पतिं, चन्द्र मित्यर्थः। विलोक्य आक्रमितुं गृहीतुं चचार। बाला श्चन्द्रं धर्तुं प्रयतन्ते इति प्रसिद्धम्। एतेन बालचन्द्राक्रमणतुल्यं द्विविदरामाक्रमणमिति सिद्धम्॥ ६८

**श्लो॥ कपिः किलकिलारावै र्वैकृतै रमितै रपि**
**शृङ्गारैकरसा स्सोयं सारसाक्षी रहासयत्॥ ६९**

कपिरिति॥ सोऽयं कपि र्द्विविदः, किलकिलारावैः किलकिलध्वनिभिः, अमितैरनेकैः, वैकृतैर्विकारैरपि, शृङ्गारैकरसाः शृङ्गार एकएव रसो येषा न्ते, रसान्तरानभिभूततया प्रवृद्धशृङ्गारा इत्यर्थः। तदुक्तं 'विरुद्धै रविरुद्धैर्वा भावैर्विच्छिद्यते न यः स्वात्मभावं नयत्यन्यान् स्थायीव लवणाकर' इति। सारसाक्षीः कमलाक्षीः, स्त्रिय इत्यर्थः अहासयत् हसन्तीः प्रेरयत्। हेतुमति णिच्; तासां हासं जनयामासेत्यर्थः॥ ६९

**ग॥ सोऽयं सकलागमाग्रलक्ष्यतया हरिपराभिधेयतया पुरा सुग्रीवमैत्रीपालतया वनवासरसिकतया च रामसाम्येऽपि स्वस्य च्युताग्रजतया रिपू नभिधावमानस्या-सहायशूरतया त मेन मच्युताग्रज मात्मनो निकृष्टं मन्वान इव निश्शङ्कं जिघांसु रुपससर्प॥ ७०**

सोऽयमिति॥ सोऽयं द्विविदः, सकलागमाग्रलक्ष्यतया सकलाना मगमानां, वृक्षाणा, मग्रेषु शिखरेषु, लक्ष्यतया दृश्यत्वेन, अन्यत्र सकलैः आगमाग्रै रुपनिषद्भिः, लक्ष्यतया लक्षणावृत्त्या प्रतिपाद्यतया, अनिर्देश्यत्वेन ब्रह्मणि अभिधावृत्ते स्सञ्चारासम्भवादिति भावः। हरिपदाभिधेयतया हरिरिति पदस्य अभिधेयः अर्थः तस्य भाव स्तत्ता तया, हरिपदस्य अर्थ

भूतत्वेनेत्यर्थः । यद्वा हरिपदेन अभिधातुं योग्यतया हरिपदवाच्यत्वेनेत्यर्थः । हरति दुरित मिति व्युत्पत्त्या दुरितहरणक्रियायाः प्रवृत्तिनिमित्तभूताया अत्र सत्त्वा दभिधाया स्सञ्चारोऽस्त्येव । न चैवं पूर्वोक्तव्याघातः; सगुणनिर्गुणभेदेन तदुपपत्तेः । हरिशब्दः परमात्मानं कपिं च बोधयतीति भावः । पुरा पूर्वं, सुग्रीवमैत्रीपात्रतया सुग्रीवस्नेहभाजनत्वेन, श्रीरामस्य द्विविदस्य च सुग्रीवसुहृदेवेत्यर्थः । वनवासरसिकतया काननिवासलोलुपत्वेन च कपीनां स्वतः काननसञ्चारोऽस्त्येव; रामस्य पित्राज्ञया दण्डकारण्यसञ्चार इति भावः । एवं चतुर्भि स्समानधर्मैः स्वस्य रामसाम्ये सत्यपि, श्रीरामतौल्ये सत्यपि, स्वस्येति काकाक्षिन्यायेन उभयत्र सम्बध्यते । च्युताग्रजतया च्युतः त्यक्तः अग्रजः मैन्दाख्यः भ्राता यस्य तस्य भाव स्तत्ता तया, भ्रातर मपहायेत्यर्थः । रिपू नभिधावमानस्य शत्रू नभिगच्छतः स्वस्य असहायशूरतया निस्सहायशूरत्वेन हेतुना च; यद्वा रिपू नभिधावमानस्य स्वस्य च्युताग्रजतया हेतुभूतया असहायशूरतया रिप्वभिधावनसमये स्वस्य च्युताग्रजत्वेन असहायशूरत्वा दित्यर्थः । अच्युताग्रजं अत्यक्तभ्रातृकम्, अग्रजेन सहैव युद्धे प्रवर्तमान मित्यर्थः । अच्युतस्य कृष्णस्य अग्रजमिति च — तमेनं बल मात्मनः — स्वस्मान्निकृष्ट मपकृष्टं मन्वानः — चिन्तयन्निव अच्युताग्रजत्वेन रामस्य ससहायशूरत्वादिति भावः । परिकरालङ्कारः । इवेति सम्भावनायां; तत उत्प्रेक्षालङ्कारः । निश्शङ्कं निस्सन्देहं यथा तथा जिघांसुः हन्तु मिच्छु स्सन्, उपससर्प समीपं ययौ बलस्येति भावः ॥ ७०

**ग॥ रामोऽपि तमेनं वानरं पुरा प्रियानयनसाहाय्यकारिणं साम्प्रतमपि प्रियानयनानुकूलव्यापारत्वे नोपकारिणं वारुणीमदा दजानान इव विधाय विविध मायोधनं शमनभवन मनयत् ॥** **७१**

राम इति॥ रामोऽपि बलश्च, पुरा रामावतारे प्रियानयनसाहाय्यकारिणं प्रियाया स्सीतायाः, आनयने आहरणे विषये, साहाय्यं सहायकृत्यं, करोतीति कारी तं, यद्यपि कृष्णस्यैव श्रीरामावतारभाक्त्वं; न तु बलस्य शेषावतारत्वा दस्य; तथापि 'राम श्च रामश्च बौद्धः कल्किरेव' चेति अवतारेष्वस्य परिगणितत्वा न्नदोषः । साम्प्रत मधुना, बलरामावतारेऽपीत्यर्थः । प्रियानयनानुकूलव्यापारत्वेन प्रियानयनानां प्रेयसीनयनानां, अनुकूलः अनुगुणः, प्रिय इत्यर्थः । व्यापारः नर्तनादि र्यस्य तत्त्वेन प्रियाया आनयनानुकूलो व्यापारो यस्य तत्त्वेनेति च व्यज्यते । कपे र्नर्तनादिव्यापारः प्रेयसीनयनानां परमानन्दकरोऽभूदिति भावः । उपकारिणं कृतोपकारं तमेनं वानरं पूर्वोक्तं द्विविदं, वारुणीमदात् मदिरास्वादजन्यमदात् । पञ्चमीसमासोऽयं; वारुण्याः यो मदस्तस्मादिति । अजानान इति अजानन्निवेत्युत्प्रेक्षा । वस्तुतो न तथा; किन्तु कृतापकारत्वा द्वानरस्येति भावः । विविधं बहुविध, मायोधनं युद्धं, विधाय कृत्वा, शमनभवनं यमसदनं, अनयत् गमयामास ॥ ७१

ततः॥ द्विविदहननान्तरं ।

**श्लो ॥ सुयोधनात्मजां जातु साम्बो जाम्बवती सुतः**
**प्रसह्य लक्ष्मणां नाम जहारैक स्स्वयंवरे ॥** ७२

सुयोधनेति॥ जाम्बवतीसुतः जाम्बवत्याः कृष्णमहिष्याः, सुतः पुत्रः, साम्बः एकः असहाय स्सन्नेव– जातु कदाचित् , सुयोधनात्मजां दुर्योधनतनयां, लक्ष्मणां, नामेति प्रसिद्धौ, स्वयंवरे 'यत्र कन्या स्वाभीष्टं पतिं स्वयमेव वृणोति स स्वयंवर' इत्युच्यते – तस्मिन् महोत्सवे प्रसह्य हठात् , जहार अपहृतवान् ॥ ७२

**ग॥ कौरवा अपि तेन सुतापहारिणा संवर्धिततापा स्तमेन मनुजिघृक्षव स्सन्तो गत्वापि तत्र सक्रोधाः कृपणा इव मार्गणव्यथिताः कथमपि विरथं तमेनं बध्वा स्वनगर मनयन् ॥** ७३

कौरवा इति॥ सुतापहारिणा सुतायाः लक्ष्मणाया, अपहारिणा अपहर्त्रा, तेन साम्बेन, संवर्धिततापाः वृद्धिं प्रापितसन्तापाः, कौरवाः दुर्योधनादय, स्ततं त मेनं कन्यापहारिणं साम्ब, मनु उद्दिश्य, जिघृक्षवः गृहीतु मिच्छव स्सन्तो. गत्वा अत्र सुतापहारिणा सुष्ठुतापहारिणा अपि तेन संवर्धिततापाः कौरवाः तमेनं साम्बं अनुजिघृक्षवः अनुगृहीतु मिच्छन्त स्सन्तो गत्वापीति विरोधप्रतीतिः । अतो विरोधाभासालङ्कारः । तत्र साम्बे सक्रोधाः सकोपाः भूत्वा कृपणाः लुब्धा इव मार्गणव्यथिता स्सन्तः बाणपीडिताः याचकपीडिता इति च । साम्बेन बाणै र्हता इत्यर्थः । कथमपि कृच्छ्रेण साम्बस्यातिबलवत्त्वादिति भावः । विरथं नष्टरथं तमेनं साम्बं बध्द्वा प्रग्रहैरिति शेषः । स्वनगरं स्वपुर मनयन् प्रापयामासुः ॥ ७३

**ग॥ अथ नारदवचनेन विदितोदन्ता नमर्षप्रकर्षरूषिता नशेषा नपिवार्ष्णेया नुपलालयन् बलदेव स्स्वयमेव हस्तिनापुर मुपसृत्य प्रत्युद्गतान् सुयोधनादी ननामयप्रश्नपूर्वक मेव मवोचत् ॥** ७४

अथेति॥ अथ साम्बबन्धप्राप्त्यनन्तरं, नारदवचनेन नारदस्य वाक्येन, विदितोदन्तान्, ज्ञातवृत्तान्तान् , नारदमुखा त्साम्बवृत्तान्तं श्रुत्वेत्यर्थः । अमर्षप्रकर्षरूषितान् कोपातिशयदन्तुरितान् , अशेषान् सर्वानपि , वार्ष्णेयान् यादवान् , उपलालयन् अनुनयन् , स्वस्य कौरवपक्षपातित्वादिति भावः । बलदेवः बलरामः, स्वयमेव हस्तिनापुरं कौरवनगर, मुपसृत्य प्राप्य, प्रत्युद्गतान् स्वाभिमुख मागतान् , सुयोधनादीन् दुर्योधनप्रमुखान् , कौरवान् अनामय प्रश्नपूर्वकं 'क्षत्रबन्धु मनामय' मिति न्यायादिति भावः । अनामयप्रश्नः भव्यानुयोगः पूर्वः प्रथमो यस्मिं स्तद्यथा तथा एवं वक्ष्यमाणरीत्या अवोचत् उवाच ॥ ७४

श्लो ॥ आज्ञापय त्यनिशनम्रनृपालपाली
मौळीनिलीनपदपङ्कज उग्रसेनः
निर्भर्त्सनं हरिशिशो रबलावशस्य
किं सार्वभौम ! परिवृद्धमद ! क्षमं ते ॥ ७५

आज्ञापयतीति॥ अनिशं सदा नम्राणां प्रणतानां, नृपालपाळीनां राजपङ्क्तीनां, मौळीषु मुकुटेषु, निलीनं लग्नं, पदपङ्कजं पङ्कजमिव पद मित्युपमितसमानः। पादारविन्द मित्यर्थः। यस्य सः तथोक्तः। यथा मौळ्यांभूषणभूतं पद्मं निलीयते तद्वदिति भावः। उग्रसेनः यदुराजः, आज्ञापयति युष्मानिति शेषः। आज्ञप्तान् करोति मन्मुखेनेति भावः। कि माज्ञापयतीत्यत आह – हे सार्वभौम सर्वभूमेरीश्वर ! अत एव परिवृद्धमद प्रवृद्धगर्व ! ते अबलावशस्य स्त्रीवशस्य, स्त्रीलौल्या दक्षत्ये प्रवृत्तस्येत्यर्थः। हरिशिशोः कृष्णपुत्रस्य, साम्बस्य निर्भर्त्सनं तिरस्करणं, क्षमं युक्तं किम् ? न युक्तमेव। शिशुचापलं सोढव्यमिति मधुरोऽर्थः। परिवृद्धमद समृद्धदान हेसार्वभौम दिग्गज ! 'सार्वभौम स्सर्वपृथ्वीपालके दिग्गजान्तरे' इति भास्करः। अबलानां दुर्बलाना, मवशस्य अजयस्य, हरिशिशोः सिंहशिशोः, निर्भर्त्सनं ते न क्षमं बालस्यापि सिंहस्य करिकुम्भपाटनचणत्वात् स्वशिशो र्निर्भर्त्सनं विदित्वा स्वयमेव तरुण सिंहः मदगजं विपाटयेदिति वा भावः॥ ७५

ग॥ एत दाकर्ण्य कर्णपरुष मनतिक्रमणीयं हि शासन मन्धकवृष्णिनायकस्य विशेषतो वर्षीयस इति परिवादजल्पितै स्सम ममर्षज्वलितहृदये ष्वपुरस्कृतबलदेवेषु कुरुवीरेषु ॥ ७६

एतदिति॥ कर्णपरुषं श्रुतिकठोर, मेतद्वचन माकर्ण्य श्रुत्वा, अन्धकवृष्णिनायकस्य अन्धकानां वृष्णीनां च नायकस्य प्रभोः – तत्रापि विशेषतोऽतिशयेन, वर्षीयसः वृद्धस्य; अन्यत्र अन्धा एवान्धकाः काणाः; ज्ञानचक्षूरहिता इत्यर्थः। ते च ते वृष्णयो यादवा स्तेषां नायकस्य, विशेषतः वर्षीयसः अतिस्थविरतया ज्ञानशैथिल्या द्यत्किञ्चित्प्रलपत इत्यर्थः। इति व्याजस्तुतिः। एवं विधस्य उग्रसेनस्य शासन माज्ञा, अनतिक्रमणीयं अतिरस्करणीयं, हि इत्येवं परिवादजल्पितैः उपालम्भभाषितै, स्समं सहितेष्वित्यर्थः। अमर्षज्वलितहृदयेषु कोपोद्दीप्तमनस्सु, अत एव अपुरस्कृतबलदेवेषु अनादृतबलभद्रेषु, कुरुवीरेषु कौरवेषु, प्रतिनिवर्तमानेषु प्रतियातेषु सत्सु॥ ७६

श्लो ॥ गर्जन्नसौ भुवनभृद्गतधार्तराष्ट्रां
धात्रीं विधातु मयस च्चपलान्तरङ्गः
क्षोभा त्तदा हलधरस्य मही चकम्पे
तस्यापि हा निरतिवेलजलाशयानाम् ॥ ७७

गर्जन्निति ॥ भुवनभृत् लोकपालकः, असौ बलः, चपलान्तरङ्गः चञ्चलमनाः – अत एव गर्जन् नदन्, कोपादिति भावः । धात्रीं भुवं, गतधार्तराष्ट्रां गताः नष्टाः धार्तराष्ट्राः धृतराष्ट्रपुत्राः यस्यां तां विधातुं कर्तुं, अयसत् यततेस्म – तदा तदानीं, हलधरस्य बलस्य, क्षोभात् मनःक्षोभात् कोपाटोपादित्यर्थः । मही भूः, चकम्पे कम्पितवती–अतिवेलजडाशयानां अत्यन्तमूढहृदयानां, कौरवादीनां हानिः क्षयोऽपि, तर्क्या चिन्त्या, आसीदिति शेषः । व्यङ्ग्यार्थस्तु । चपलान्तरङ्गः चपलानां विद्युता, मन्तरङ्गः प्रियः – चपला अन्तरङ्गे यस्य स इति वा – असौ भुवनभृत् पयोधरः, गर्जन् धात्रीं गतधार्तराष्ट्रां नष्टहंसां, विधातु मयसत् । तदा वर्षाकाले हलधरस्य कृषीवलस्य, क्षोभात् कर्षणरूपयत्नविशेषात्, मही चकम्पे उच्छ्रू नेत्यर्थः । अतिवेलानां जडाशयानां लडयो रभेदः – जलाशयानां तटाकादीनां, हानिः सेतुभङ्गः, तर्क्या आसीत् । अतिवृष्टे रिति भावः । अत्र बलभद्रनिष्ठः क्रोधाख्यः स्थायीभावो रौद्ररसता मापद्यते ॥ ७७

**ग॥ समनन्तरं त्रिपथगापाथःपथेन निजभवनीभूतरसातलप्रापणायेव सलीलं लाङ्गलाग्रेण हस्तिननगर मुन्मूलयन्त मपरमिव कालाग्निरुद्रं बलभद्रं सुयोधनपुरस्सरा स्ससम्भ्रम मुपसृत्य सलक्ष्मणं साम्ब मुपहारीकुर्वाणा नानाविधप्रस्तुतस्तुतयः कथमपि सङ्क्रान्तशान्ति मातेनुः ॥ ७८**

समनन्तरमिति॥ हलधरस्य कोपोदयानन्तर मित्यर्थः । त्रिपथगापाथःपथेन गङ्गाजल–मार्गेण, ‘ ऋक्पूरब्धूः पथा ’ मिति समासान्तोऽप्रत्ययः । निजभवनीभूतस्य निजस्य शेषावतारस्य स्वस्य भवनीभूतस्य गृहीभूतस्य रसातलस्य पाताळलोकस्य, प्रापणायेव रसातलं प्रापयितु मेवेत्यर्थः । उत्प्रेक्षा–सलीलं सविलासं यथा तथा, लाङ्गलाग्रेण हलाग्रेण, करणेन–हस्तिननगरं हस्तिनापुर, मुन्मूलयन्तं उत्पाटयन्तं, अत एव अपर मन्यं, कालाग्निरुद्रं प्रळयाग्निरुद्र मिव स्थितं, बलभद्रं ससम्भ्रमं द्रुतं, उपसृत्य प्राप्य, शरणागत्येत्यर्थः । सुयोधनपुरस्सराः दुर्योधना–दयः, सलक्ष्मणं लक्ष्मणया सहितं, साम्ब, मुपहारीकुर्वाणा स्सन्तः बलित्वेन ददानास्सन्तः नानाविधप्रस्तुतस्तुतयः नानाविधाः बहुविधाः, प्रस्तुताः कृताः, स्तुतयो यै स्ते तथोक्ता श्च सन्तः, तं बहुधा स्तुत्वेत्यर्थः । कथ मपि कृच्छ्रेण, सङ्क्रान्तशान्तिं, प्राप्तशान्तिं, शान्त मित्यर्थः । आतेनुः चक्रुः बलभद्र मित्येव ॥ ७८

**श्लो ॥ न कथन्नु विधौ सलक्ष्मणे विधुपुत्रोऽपि तथाविधो भवेत्**
**कलुष स्स पुरा तदाश्रितो विमलोऽभू दिति किन्तु विस्मयः ॥ ७९**

नेति॥ विधौ विष्णौ, सलक्ष्मणे लक्ष्मणया महिष्या सहिते सति, विधुपुत्रः विष्णुपुत्र स्साम्बोऽपि, तथाविधः सलक्ष्मणः, कथं न भवेत् ? भवेदेव । लक्ष्मणाख्यभार्यासहितत्वा

त्साम्बस्यापीत्यर्थः । 'अवश्यं पितुराचारं पुत्र स्समनुवर्तते' इति न्यायादिति भावः । विधौ चन्द्रे, सलक्षणे सकळङ्के सति, विधुपुत्र श्चन्द्रपुत्रोऽपि, तथाविधः, सकळङ्कः, कथं न भवेत्? अपि तु भवेदेवेति च अन्यार्थो व्यज्यते । अमुमेव ध्वन्यर्थ माश्रित्य उत्तरार्धेन कवि विंस्मयं प्रतिपादयति । किन्तु पुरा लक्ष्मणाख्यकन्यालाभा त्पूर्वं, कलुषः अस्वस्थः, सः विधुपुत्र स्साम्बः, तदाप्तितः लक्ष्मणायाः लाभात्, विमलः स्वस्थचित्तः, अभूत्; इति तु विस्मयः चित्रम् । पुरा कळङ्का त्पूर्वं, कलुषः आविलः, सः विधुपुत्र श्चन्द्रसुतः, तदाप्तितः कळङ्क-प्राप्तितः हेतोः, विमलः स्वच्छः, अभूत् इति तु विस्मय इत्यन्योऽर्थः । अत्र पूर्वार्धे प्रस्तुता-प्रस्तुतश्लेषालङ्कारः । नच ध्वनिरेवेति वाच्यम् । उत्तरार्धेन विस्मयं प्रतिपादयता कविना स्वत एव व्यङ्ग्यस्य स्फुटीकृतत्वात् – तस्माद्गुणीभूतं स दिदं व्यङ्ग्यं श्लेषालङ्कारतां भजते – न च उत्तरार्धेऽपि ध्वनिरेवेति वाच्यम् । प्रकृतार्थे विस्मयासम्भवात्; तस्मात् उत्तरार्धे विरोधाभासालङ्कारः । कळङ्कप्राप्तेः प्रागेव कलुषः; पश्चात्तु विमल इति प्रतीतस्य विरोधस्य विस्मयावहस्य लक्ष्मणायाः प्राप्तेः प्रा क्कलुषः, पश्चात्तु विमल इति परिहारवर्णनात्– किं च– समवायिकारणगुणा रूपादय एव कार्ये सङ्क्रामन्ति न तु धर्मादय इति सिद्धान्तात् चन्द्रगत-नीलश्वेतोभयवर्णसङ्क्रान्त्या चन्द्रपुत्रोऽपि साङ्को भवेदेव । विष्णुगतलक्ष्मणाख्यमहिषीवत्त्व धर्मस्तु साम्बे सङ्क्रमितु मन्याय्य इति स्थिते तत्सिद्धान्तविरोधेन प्रतिपादनात् । तत्रापि वाच्यार्थप्रतीतस्य विरोधस्य अप्रस्तुतार्थेन परिहारा द्विरोधाभासालङ्कारः प्रतीयते ॥ ७९

श्लो ॥ अथ मित्रै रनुज्ञातः पुरीं द्वारवतीं बलः
ससुत स्सस्नुषः प्राया त्परिपूर्णमनोरथः ॥ ८०

अथेति॥ अथ सलक्ष्मणसाम्बप्रत्यर्पणानन्तरं, मित्रैः कौरवैः, अनुज्ञातः अङ्गीकृतगमन इत्यर्थः । ससुतः स्वानुजकृष्णसुतोऽपि साम्ब उपचारा त्स्वसुतः । सुतेन साम्बेन सहितः, सस्नुषः स्नुषया लक्ष्मणया सहितः, अत एव परिपूर्ण मनोरथः सम्पूर्णकामः, बलः रामः, द्वारवतीं पुरीं नगरं, प्रायात् प्राप ॥ ८०

**ग॥ अथ कदाचन नारद स्सकौतुक मेक एव केशवः कथमिव भूयसीः प्रेयसी रेककालं रमयतीति निर्वर्णयितुकामः कमनीयरूपां द्वारका मासाद्य, तत्र मूर्तमिव शिल्पकौशलं विश्वकर्मणो नवलक्षप्रासादमण्डितं, पीतामृतमिव प्रकटितसौध-रुचिविशेषं, चन्द्रमण्डलमिव सुधाधवळितं, सेवितदिव्यौषधमिव मुक्तामयं, षोडश-सहस्रान्तःपुरगर्भं, यदुनन्दनसदन मासाद्य तत्र च कस्मिश्चि दन्तःपुरे दुर्वर्णभित्ति-बहुळेऽपि मनोज्ञभित्तिबहुळे क्वचन दिव्यभवने प्रियया सह पर्यङ्क मधिशयानं, कल्पतरुमिव सुवर्णलोभनीयं, वसन्तमिव श्रीवत्सानपायिनं, कामधेनुमिव वृषानुरक्तं, भद्रानुरागिणं च, चिन्तामणिमिव भुवनैकयोनिं, सकलरुचिविषयं च, सिद्धरसमिव**

रुक्मिपरिभवानुकूलं, सुकृतसञ्चयमिव नरकध्वंसिनं, विद्युत्पुञ्जमिव घनागमलभ्यं, ज्वलनमिव समित्प्रचण्डं, सुधाकरमिव रौहिणेयानुरागिणं, सुकुमारभावा दसह्यकुशेष-भाव, मपहाय विदर्भभुवः पीताम्बरावृतकोमलोत्सङ्ग माश्रयतेव कमलयुगळेन निरवधिकरुचिसम्पादनाय मुहु र्मुहुः कमलाराधितेन कमलाकरनिरतसेव्यतया अर्थसिद्धकमलसेव्यभावेन सारसप्रतिमल्लतया लक्ष्मणाशयसंस्पर्शभाजा पुनर्भवरुचि-प्रकाशत स्सकलजगन्मोहनेनापि संसारभेषजेन पदयुगळेन लोभनीयं, सकलोरुसेव्य-तया प्रकटितनिरुपमभावेन हरिप्रतीकभावलब्धप्रसिद्धतया हरिभीरुकवेतण्डशुण्डादण्ड मगणयता च सक्थियुगले नोपशोभितं, सर्गोपसंहारयो श्चतुर्दशभुवननिर्गमद्वारेणेव नाभीकुहरेण शोभमानं, तत्तदपदानसञ्जातयशोमण्डलमालाभि रिव मुक्ताहारै रालिङ्गितेन नीरसभद्राश्लिष्टेनापि सरसभद्रालिङ्गितेन श्रीनिकेतनेनापि विशालेन वक्षस्स्थलेन रोचमानं, निरन्तरपलाशाक्रान्तिखेदापनोदाय पलाशशङ्कानास्पदं, सकलागमशिरोमणि रिति समाश्रयता कल्पतरुशाखायुगळेनेव बाहुयुगळेन विद्योत-मानं, सकलोत्तरतया परिणयसमय मिन्दिराकराधरीकरण मसहमानेनेव तत्क्षणमेव तत्पीडनाभिनिवेशिना करयुगळेन विराजमानं, द्विजराजलङ्घनजङ्घाले नानधरप्रभाश्रिते नातिशुचिना मन्दस्मितेन स्पृहणीयं, स्वस्य सदादर्शपरिभावितया सदादर्शाभिभूतं कुमुदबन्धुरं तृणाय मन्यमानेन वदनारविन्देन लोभनीयं, वस्तुतः कमलौज्ज्वल्य-निरन्तरग्राहितया समारोपितकमलकान्तिस्तेया दखिलसुन्दरपुरुषनयनयुगळमात्रा दुत्कृष्टेन नयनयुगळेन दीप्यमान, मुदासितकर्णतया प्रसिद्धस्यापि निरवधिकरुचि-सम्पादन मवलोक्य, समुपजातानन्देन सहजरुचिशालिना नयनयुगळे नालिङ्ग्य-मानकर्णयुगळं बिभ्राणं प्राचीनजन्मनि विष्वग्वेष्टमानहिमकरकरपरिभवरोषेण साम्प्रत माननात्मनाऽवस्थितं चन्द्रमसं विष्व गाक्रमता कळङ्केनेव श्मश्रुमण्डलेन मण्डितं, सकलसुमनोविलक्षणमधुहरविरोधिताकृतायशःप्रमार्जनकामनया तपोबलेन सकल सुमनोभिमतमधुहरमुखचुम्बनानुकूलया चम्पककलिकयेव नासिकया विराजमान, मवचनीयवर्णाश्रयतया वचनीयवर्णाश्रया ह्लाटमाला दुत्कृष्टेन फालफलकेन विल-सन्तं भगवन्तं मुकुन्दं सविग्रहमिव निजतपःफल मद्राक्षीत् ॥ ८१

अथेति॥ अथ ततः, कदाचन कदाचि त्समये, एक एव केशवः कृष्णः, एककालं समकालं, भूयसीः अमिताः प्रेयसीः प्रियाः, रमयति क्रीडयति, इत्येत त्कौतुक मद्भुतं निर्वर्णयितुकामः द्रष्टुमनाः, सः नारदः । यद्वा इत्येतत् सकौतुकं सकुतूहलं यथा तथा

निर्वर्णयितुकाम इत्यन्वयः। कमनीयरूपां सुन्दराकृतिं, द्वारकां पुरी, मासाद्य प्राप्य, तत्र पुरि, मूर्तं मूर्तिमत् , विश्वकर्मणो देवशिल्पिनः, शिल्पकौशलं निर्माणचातुर्यमिव स्थित मित्युत्प्रेक्षा। नवलक्षप्रासादमण्डितं नवलक्षसङ्ख्याकप्रासादालङ्कृतं, पीतामृतमिव पीत ममृतं सुधा, येन तमिव देव मिवेत्यर्थः। प्रकटितः प्रकटीभूतः, सौधरुचिविशेषः प्रासादकान्त्यतिशयो यस्य तत् – अन्यत्र प्रकटितः परेभ्यो निवेदितः सौधः सुधासम्बन्धिरुचिविशेषः स्वादातिशयो येन त तथोक्तम्। चन्द्रमण्डलमिव शीतांशुबिम्बमिव, सुधाधवळितं सुधया लेपनद्रवेण, (आन्ध्रे సున్నము) अमृतेन च, धवळितं सञ्जातधवळवर्णं; तारकादित्वा दितच्; श्वेत मित्यर्थः। सेवितदिव्यौषधं सेवितं पीतं, दिव्य मौषधं रसायनं येन तं; पुरुषमिव मुक्तामयं मौक्तिक प्रचुरं, त्यक्तरोगं च। षोडशसहस्रान्तःपुरगर्भं षोडशसहस्राणि अन्तःपुराणि शयनगृहाणि यस्मिं स्त् , यदुनन्दनस्य कृष्णस्य, सदनं सद्म, आसाद्य प्राप्य, तत्र च सदने, कस्याश्चि न्नायिकायाः अन्तःपुरे अवरोधने, 'स्त्र्यगारं भूभुजा मन्तःपुरं स्या दवरोधन' मित्यमरः। दुर्वर्णभित्तिबहुळेऽपि दुर्वर्णं रजतं, तद्विकारा भित्तयो दुर्वर्णभित्तयः, शाकपार्थिवादित्वा त्समासः। ताभि र्बहुळं व्याप्तं, तस्मिन् – अन्यत्र दुष्टः वर्णः यासां ताः दुर्वर्णाः, भित्तयः ताभि र्बहुळे इति। एवम्भूतेऽपि मनोज्ञभित्तिबहुळे मनोहरकुड्यव्याप्ते, 'भित्तिः स्त्री कुड्य मेडूक' मित्यमरः। दुर्वर्णभित्तीनां मनोज्ञभित्तित्वं विरुद्धमिति विरोधाभासालङ्कारः। क्वचन कस्मिंश्चि, द्दिव्यभवने अवरोधनान्तस्थगृहे; यद्वा कस्याश्चि दन्तःपुरभूते क्वचन दिव्यभवने इत्यन्वयः। प्रियया कयाचि न्नायिकया, सह समं, पर्यङ्के शय्या, मधिशयान मधिष्ठित्य वर्तमानं, भगवन्तं मुकुन्दं कृष्ण मद्राक्षी दित्यन्वयः। नारद इति कर्ता प्रागेवोक्तः। मुकुन्दमेव विशिनष्टि। कल्पतरुमिव सुरतरुमिव, सुपर्णलोभनीयं सुपर्णेन गरुडेन, लोभनीय माशास्यं, सुपर्णैः शोभनपत्रैः, लोभनीयं सुन्दरमिति च – वसन्तमिव वसन्ताख्यऋत्वधिदैव मिवेत्यर्थः। श्रीवत्सानपायिनं श्रीवत्सः चिह्नं, श्रियो लक्ष्म्याः, वत्सः पुत्रः, श्रीवत्सो मन्मथ श्च, तेन सह अपायो विश्लेषः, नास्त्यस्येति श्रीवत्सानपायी, तं 'श्रीवत्सो लाञ्छनं मत' मित्यमरः। कामधेनुं सुरगवीमिव, वृषानुरक्तं वृषो धर्मः, इन्द्रश्च, तस्मि न्ननुरक्तं भद्रानुरागिणं च; भद्रा महिषी, तस्यां। भद्रो वृषभ स्तस्मिन्निति च; अनुरागवन्तं, चिन्तामणिमिव भुवनैकयोनिं भुवनस्य जगतः, एकयोनि मादिकारणं, 'यतो वा इमानि भूतानी'ति श्रुतेः। भुवनं जलं, एका मुख्या, योनि रुत्पत्तिस्थानं यस्य तमिति च; उदका दुत्पन्न मित्यर्थः। 'जीवनं भुवनं वन' मित्यमरः। सकलरुचिविषयं च सकलानां प्राणिना मपि रुचेः प्रीते, र्विषयं गोचरं, परप्रेमास्पद मित्यर्थः। परमानन्दरूपत्वा दिति भावः। समस्तकान्तिविषय मिति च – सिद्धरसं पारदमिव, रुक्मिपरिभवानुकूलं रुक्मी रुक्मिण्यग्रजः, धनिक श्च, तस्य परिभवः तिरस्कारः, तत्रानुकूलं इष्टं, साधनं च। सिद्धरसेन अधिकधनं लब्ध्वा धनिकान् तिरस्कुर्वन्ति सिद्धा इत्यर्थः। सुकृतसञ्चयमिव पुण्यबृन्दमिव, नरकध्वंसिनं नरकस्य भौम स्यासुरस्य

दुर्गतेश्च, ध्वंसिंन नाशकं, विद्युत्पुञ्जमिव तटिद्वृन्दमिव, घनागमलभ्यं घनै स्सान्द्रैः, आगम वेदै, र्लभ्यं प्राप्यं, वेदप्रतिपादित मित्यर्थः । घनागमः प्रावृट्, तत्र लभ्यं दृश्यमिति च – ज्वलन मग्निमिव, समित्प्रचण्डं समिति युद्धे प्रचण्डं वीरं, समिद्भिः काष्ठैः, प्रचण्डं वर्द्धित मिति च । सुधाकरं चन्द्रमिव, रौहिणेयानुरागिणं रौहिणेयो बलः, बुधश्च – तत्रानुरागवन्तं, एकत्राग्रजत्वा दन्यत्र पुत्रत्वादिति भावः । अथ पादादिकेशान्तं वर्णयति – सुकुमारीभावात् सौकुमार्या द्धेतोः, असह्यकुशेशयभावं असह्यं सोढु मशक्यं, अप्रिय मित्यर्थः । कुशेशयभावं उदकशायित्वं, " जीवनीयं कुशं विष " मित्यभिधानात् । दर्भशायित्वं च, ' तत्पुरुषे कृति बहुळ ' मिति सप्तम्या अलुक् । अपहाय त्यक्त्वा, नहि सुकुमारं पद्मं दर्भशयनं सहते इत्येको भावः । सुकुमारत्वेन अतिश्लाघ्यस्य मम सर्वदा जलाधिवासः प्रियो न भवती त्यन्यो भावः । विदर्भभुवः रुक्मिण्याः, पीताम्बरावृतं पीतवस्त्रच्छन्नं, कोमलं मृदुल, मुत्सङ्गं अङ्कं, माश्रयता प्राप्तवता, अङ्के संस्थाप्य रुक्मिण्या सेव्यमानेनेत्यर्थः । यथा सुकुमारो राजादिः स्वशरीरापेक्षया अतिमृदुलां सुमशय्या माश्रयते तद्व त्सुकुमारं कमलयुगळं कोमलं रुक्मिण्युत्सङ्गं प्रियं मत्वा आश्रयतीति भावः । अन्यत्र विदर्भभुवः दर्भरहितस्थानस्य पीताम्बरावृतः; अत एव कोमलः य उत्सङ्गः उपरिप्रदेशः, त माश्रयतेत्यर्थः । दर्भशयनं त्यक्त्वा निर्दर्भं तत्रापि वस्त्र वेष्टनेन मृदूकृतं स्थल मधिष्ठितवते ति भावः । कमलयुगळेन पद्मद्वयेनेव स्थितेने त्युत्प्रेक्षा । निरवधिकरुचिसम्पादनाय अधिकप्रीतिजननार्थं, अतिशयकान्तिसम्पादनार्थ मिति च – मुहुर्मुहुः अतिशयेन, कमलाराधितेन कमलयां लक्ष्म्या, रुक्मिण्येत्यर्थः । कमलेनेति च–आराधितेन पूजितेन, भगवत्पादकमलापेक्षया न्यूनं सत् कमलं तादृशाधिककान्तिलाभार्थं भगवत्पादारविन्दं सेवते इत्येको भावः । स्वस्मिन् भगवतः प्रीति र्यथा स्या त्तदर्थं भगवत्पादौ संवाहयति रुक्मिणी त्यन्यो भावः । कमलाकरनिरतसेव्यतया कमलाकरः लक्ष्मीहस्तः, सरश्च– तेन निरत मविरतं, यथा तथा सेव्यम् सेवनीयं, तस्य भाव स्तत्ता तया हेतुना, अर्थसिद्धकमलसेव्यभावेन अर्था त्सिद्धः अर्थसिद्धः, कमलसेव्यभावः पद्मसेव्यत्वं, यस्य तेन सरस्सेव्यत्वा त्तदवयवभूत कमलसेव्यत्व मर्थसिद्ध मिति भावः । सारसप्रतिमल्लतया कमलप्रतिभटत्वेन सारसपक्षिप्रतिभटत्वेनेति च – तत्सादृश्ये नेत्यर्थः । लक्ष्मणाशयसंस्पर्शभाजा लक्ष्मणायाः महिष्याः, सारसवनितायाश्च, शयसंस्पर्शः हस्तस्पर्शः, आशयसंस्पर्शः मनस्सम्पर्क श्च, तं भजतीति तद्भाक्, तेन कमलसदृशत्वा ल्लक्ष्मणया पुनः पुन स्सादरं स्पृश्यमाने नेत्येकोऽर्थः । सारसपक्षितुल्यत्वात् बलाकया स्पृहणीये नेत्यन्योऽर्थः । पुनर्भवरुचिप्रकाशतः पुनर्भवानां नखानां, रुचिः कान्तिः, तस्याः प्रकाशतः प्रकर्षा द्धेतोः, पुन र्भूयः, भवे संसारे, रुचेः प्रीतेः, प्रकाशा त्प्रदर्शनादिति च – सकलजगन्मोहनेन सर्वलोकमोहजनकेन – नखकान्तिप्रकर्षं दृष्ट्वा सर्वे लोका विस्मितवन्त इत्येकोऽर्थः । जीवानां संसारे प्रीत्युत्पादनेन ते मायया मुह्यन्ती त्यन्योऽर्थः । एवंविधेनापि संसारभेषजेन संसारौषधेन, संसाररूपरोगस्य औषधभूतेनेत्यर्थः । निरवयवरूपकालङ्कारः ।

पदयुगळेन चरणद्वंद्वेन, लोभनीयं सुन्दरं, अत्र पादयुगळस्य कमलसादृश्यं बहुधा वर्णितमपि न पुनरुक्तिदोषावहं—भङ्ग्यन्तराश्रयणेन चारुतावहत्वात्। सकलोरुसेव्यतया सकलै रुरुभि महद्भिः, सेव्यं सकलोरुसेव्यं, सकलै रूरुभिः सक्थिभिः, सेव्यमिति च; तस्य भाव स्तत्ता तया हेतुना, प्रकटितनिरुपमभावेन प्रकटीभूतानुपमत्वेन भगवदूर्वो रनुपमत्वादेव सर्वे प्यूरवोऽमुं सेवन्ते यथा पुरुषोत्तमं राजानं तदितरे जना इति भावः। हरिप्रतीकभावलब्धप्रसिद्धतया हरिप्रतीकभावः कृष्णावयवत्वं, सिंहप्रतिकूलत्वं च, तेन लब्धा प्राप्ता, प्रसिद्धिः प्रख्याति, र्यस्य—तस्य भाव स्तत्ता, तया हेतुना, हरिभीरुकवेतण्डशुण्डादण्डं सिंहा द्भीतस्य गजस्य दण्डतुल्यं करं, अगणयता तिरस्कुर्वता च— हरिप्रतीकभूतत्वेन सिंहप्रतिभट महं क सिंहा द्भीतवेतण्डशुण्डादण्डः क इति तत्रानादरं कुर्वतेत्यर्थः। वस्तुतस्तु अप्राकृतदिव्यमङ्गळविग्रहस्य हरे रवयवः क? प्राकृतस्य तत्रा प्यतिमूर्खस्य गज स्यावयवः क? इति तयो र्महदन्तर मस्तीति परमार्थः। काव्यलिङ्ग मलङ्कारः। स च श्लेषोज्जीवितः। सक्थियुगळेन ऊरुद्वयेन, उपशोभितं अलङ्कृतं, शोभमानमिति वा। सर्गोपसंहारयोः सृष्टिप्रळययोः, चतुर्दशभुवनानां पाताळादिसत्यलोकान्तानां चतुर्दशलोकानां, निर्गमद्वारेणेव निष्क्रमणद्वारेणेव स्थितेने त्युत्प्रेक्षा। निर्गम इत्येत दुपलक्षणं प्रवेशस्यापि — भगवत श्चतुर्दशभुवनकुक्षित्वेन जगत्सृष्टिलयकारणत्वेन च सृष्टिसमये भगवदुदरान्तरा ज्जगतां बहि र्निर्गमस्य, प्रळयसमये भगवदुदरान्त र्जगतां प्रवेशस्य च, अनुकूलं द्वारभूत मित्यर्थः। ननु कारणा त्कार्यं निर्गम्य पुनः कारणमेव प्रविशति यथा मृदो घटं निर्गम्य पुन र्मृद मेवोपैति तद्वदिति स्वतस्सिद्धत्वे नास्य नेय मुत्प्रेक्षा किन्तूपमैव। स्वतस्सिद्धेन भिन्नेनेत्युपमालक्षणवाक्ये स्वतस्सिद्धे नेत्यनेन उत्प्रेक्षाव्यावृत्तिरिति विद्यानाथेन कथितत्वादिति चे द्भवतु नाम—भगवतो वदनद्वारेणैव लोकानां निर्गमप्रवेशोपलम्भः। ननु नाभिद्वारेणेति कृत्वा नाभेः निर्गमप्रवेशद्वारत्वं नैव स्वतस्सिद्धं किन्तु कवि नोत्प्रेक्षितमेवे त्युत्प्रेक्षैवेय मित्यविवादम्। नाभिकुहरेण नाभिबिलेन, शोभमानं तत्तदपदानसञ्जाताभिः गोवर्धनोद्धरणादिरूपतत्तदद्भुतकर्मभ्यः प्रभूताभिः, यशोमण्डलमालाभिः कीर्तिमण्डलस्रग्भिरिव स्थितैः — उत्प्रेक्षा — मुक्ताहारैः मौक्तिकस्रग्भिः आलिङ्गितेन अलङ्कृते नेत्यर्थः। नीरसभद्राश्लिष्टेनापि नीरसेन शुष्केन, भद्रेण चन्दनेन, आश्लिष्टेन लिप्तेनापि, लेपनसमये सरसमपि समनन्तरं शुष्कं भवति चन्दनमिति बोध्यम्। अत्र नीरसया अनुरागरहितया, भद्रया महिष्या, श्लिष्टेन आलिङ्गितेनापीत्यर्थो व्यज्यते। सरसभद्रालिङ्गितेन सरसया सानुरागया भद्रया महिष्या आलिङ्गितेन आश्लिष्टेन, विरोधाभासालङ्कारः। श्रीनिकेतनेनापि कान्त्याश्रयेण लक्ष्मीगृहेणापीति च— विशालेन विस्तीर्णेन, विगता शालागृहं यस्य तेनेति च— वक्षःस्थलेन उरोदेशेन, रोचमानं शोभमानं, निरन्तरपलाशाक्रान्तिखेदापनोदाय निरन्तर मविरतं, यथा तथा यः पलाशाक्रान्तिः पर्णसम्बन्धः, रक्षोभि राक्रमणं च— तस्मा द्यः खेदः दुःखं, तस्य अपनोदाय निवारणार्थमिवेति गम्योत्प्रेक्षा। अयं भगवान् पलाशशङ्कानास्पदं राक्षसशङ्काया अविषयः दानवान्तकत्वा दिति

भावः । सकलागमशिरोमणिः सकलेषु आगमशिरस्सु वेदान्तेषु, मणिः रत्नभूतः, वेदान्तवेद्य इत्यर्थः । सकलाना मगमानां वृक्षाणां, शिरोमणि रुत्तम इति च– भवतीति शेषः । इति मत्वा गम्यमानार्थकत्वा दप्रयोगः । समाश्रयता स्वं भजता कल्पतरुशाखायुगळेन कल्पवृक्षशाखा-द्वयेनेव स्थितेन, भक्ताभयप्रदानक्षमत्वव्यञ्जनाय कल्पतरुग्रहणं कल्पतरुशाखायुगळं भगवन्तं प्राप्य पलाशाकान्तिखेदं जहौ इति मुख्यार्थः । बाहुयुगलेन भुजद्वयेन, विद्योतमानं भासमानं, सकलोत्तरतया सर्वोत्कृष्टत्वेन, सर्वापेक्षया ऊर्ध्वभागवर्तित्वेनेति च; परिणयसमयं विवाहसमये; अत्यन्तसंयोगे द्वितीया । इन्दिराकराधरीकरणं इन्दिराकरस्य रुक्मिणीहस्तस्येति कर्तरि षष्ठी, अधरीकरणं अधःकरणं, रुक्मिणीकरकर्तृकं निजाधःकरण मित्यर्थः । कन्यादानसमये कन्या-हस्तस्य वरहस्ते स्थापनादिति भावः । असहमानेनेव अमर्षणेनेव, अधःकरणस्यासहनेनैवेत्यर्थः; हेतूत्प्रेक्षा । तत्क्षणमेव तदैव, तत्पीडनाभिनिवेशिना पाणिपीडनेच्छुना, पाणिबाधनेच्छुनेति च; सापराधत्वादिति भावः । वस्तुतस्तु नायं विवाहो ब्राह्मयः किन्तु राक्षस एव । अत्र तु न कन्यादानं किन्तु बला त्कन्याया अपहरणमेवेति नात्र करस्य तद्दोषलेश इति बोध्यम् । करयुगळेन हस्तद्वन्द्वेन, विराजमानं एनेन लोकोत्तरेन्दिराकरपरिभवमेव यो न सहते तस्य करस्य पद्मपल्लवसादृश्यकळङ्कलेशावकाशो नेति व्यज्यते । द्विजराजानां प्रधानदन्तानां, लङ्घने अतिक्रमणे, विषये जङ्घालेन वेगवता, प्रधानदन्ता नतिक्रम्य बहि र्निस्सृते नेत्यर्थः । द्विज-राजस्य चन्द्रस्येति च; चन्द्रातिशायि नेत्यर्थः । अनघरप्रभाश्रितेन अधरकान्ति मनाश्रितेन, उत्कृष्टकान्त्याश्रयेणेति च; अतिशुचिना अतिशुभ्रेण, अतिपवित्रेण च; मन्दस्मितेन मन्द-हासेन, स्पृहणीयं श्लाघ्यं, प्रकृतश्लेषालङ्कारः । उभयो रर्थयोः प्रकृतत्वात् । स्वस्य निजस्य, सदादर्शपरिभावितया प्रशस्तदर्पणातिशायितया, सर्वदा अमावास्यां तिरस्कुर्वाणत्वेनेति च । हेतुना सदा सर्वदा, दर्शाभिभूतं अमावास्याया मभिभूतं अप्रकाशं, कुमुदबन्धुं चन्द्रं, तृणाय मन्यमानेन तृणप्रायं मन्वानेन, वदनारविन्देन मुखकमलेन, लोभनीयं सुन्दरं, गम्योत्प्रेक्षेयं । अनया च प्रतीपालङ्कारो व्यज्यते । वस्तुतः कमलौज्ज्वल्यं लक्ष्मीसौन्दर्यं कमलकान्ति श्च, तस्य निरन्तरग्राहितया अनवरतग्रहणेन हेतुना, समारोपितकमलकान्तिस्तेयात् समारोपितः कविभि स्सम्य गारोपितः, कमलकान्तिस्तेयः पद्मशोभापहरणं, यस्मिं स्तस्मात् । अखिल-सुन्दरपुरुषाः स्मरवसन्तजयन्तादय स्सर्वे सुन्दरपुरुषाः, तेषां नयनयुगळमात्रात् नेत्रद्वन्द्वात् , मात्रशब्दोऽत्र कार्त्स्न्यपरः । उत्कृष्टेन अधिकेन, कमलौज्ज्वल्यहरणं स्मरादिनयनाना मवास्तव मारोपितत्वात् ; भगवन्नयनयो स्तु स्वाभाविकं निरन्तरकमलासौन्दर्यद्रष्टृत्वेन कमलौज्ज्वल्यहरत्वा दित्यर्थः । श्लेषोज्जीवितं सपरिकरं काव्यलिङ्गम् । नयनयुगळेन नेत्रद्वयेन, दीप्यमानं भासमानं, उदासितकर्णतया तिरस्कृतराधेयतया; प्रथितस्यापि स्वसुहृद्भूतार्जुनद्वारा कर्णं तिरस्कृतवत इत्यर्थः । उपेक्षितश्रोत्रतयेति च– प्रसिद्धस्यापि प्रथितस्यापि, श्रोत्रप्रीति मकुर्वाणस्येत्यर्थः । कृष्णस्येति शेषः । अर्था दिसद्ध्यतीति वा निरवधिकरुचिसम्पादनं निरवधिकायाः अपारायाः,

रुचेः कान्तेः, प्रीतेश्च, सम्पादनं उत्पादनं, अवलोक्य दृष्ट्वा, उदासितश्रोत्रस्यापि भगवतः कान्तिं सम्पादयति सति श्रोत्रे तद्दृष्ट्वेत्यर्थः। कर्णहीनो न शोभते इति भावः। अन्यत्र राधेयं द्विषत्यपि कृष्णे राधेयस्य प्रेमसम्पत्तिं दृष्ट्वेत्यर्थः। समुपजातानन्देन उत्पन्नमोदेन, अत एव सहजरुचिशालिना स्वाभाविककान्तिमता, भ्रातृस्नेहवतेति च– नेत्रश्रोत्रयो रेककालजन्यत्वाद् भ्रातृत्वव्यपदेशः। नयनयुगळेन आलिङ्ग्यमानकर्णयुगळं आश्लिष्यमाणं श्रोत्रद्वयं– नयनयोः कर्णान्तविश्रान्तत्वा दिति भावः। मद्भ्रातृभूत मिदं कर्णयुगळं स्वस्मिन् सापेक्षस्यापि कृष्णस्य तदुपेक्षारूपं दोष मविगणय्य कान्तिं जनयतीति अहो मद्भ्रात्रो स्सौजन्यमिति सानन्दं नेत्रद्वयी श्रोत्रद्वय मालिङ्गती त्येको भावः। अर्जुनमित्रत्वेन स्वद्वेषिण्यपि कृष्णे राधेयस्य प्रीति रपारेति कृष्णाऽयं परमात्मैव परप्रेमास्पदत्वा दित्यनुमाय स्वस्य तादृशकृष्णावयवत्वलाभा न्नेत्रद्वयं सानन्दं सत् स्वानन्द मेकान्ते कर्णद्वया योपदेष्टु मिव कर्णयुगळ मालिङ्गती त्यन्यो भावो व्यज्यते। यद्वा – यः स्वद्वेषिणोऽपि राधेयस्य स्वविषयकं प्रेम सम्पादयति स कृष्णः परमात्मैवे त्यनुमायेति वा– अत्र उदासितकर्णतया प्रसिद्धस्यापि निरवधिकरुचिसम्पादकं कर्णयुगळ मासीदिति वर्णनेन विरोधो व्यज्यते। स्वोपेक्षिणि स्वस्य प्रीत्युदयासम्भवात्। तस्य च तिरस्कृतराधेयस्य भगवतः कान्तिं जनयति कर्णयुगळमिति वर्णना त्परिहारः। तेन विरोधाभासालङ्कारः। एवंविधं कर्णयुगळं बिभ्राणं धृतवन्तं, प्राचीनजन्मनि पूर्वजन्मनि, कळङ्कत्वावस्थाया मित्यर्थः। विष्व गभितो, वेष्टमानानां आवृण्वतां, हिमकरकराणां चन्द्रकिरणानां; कर्तरि षष्ठी– करै रिति तृतीया समासो वा– यः परिभवः तिरस्कारः, तस्मा द्यः रोषः कोपः, तेन हेतुना, कळङ्कस्य चन्द्रमण्डलमध्यवर्तित्वादिति भावः। मध्यवर्तिनं कळङ्क मभितो वेष्टयित्वा हिमकरकरा बाधन्ते इति भावः। साम्प्रत मधुना, आननात्मनावस्थितं मुखरूपेण वर्तमानं, चन्द्रमसं चन्द्रं, विष्व गभितः, आक्रमता आवृण्वता, कळङ्केनेव स्थितेन इत्युत्प्रेक्षा। इदं मुखं पूर्वजन्मनि चन्द्रीभूय वर्तमानं स त्तदानीं कळङ्कात्मना वर्तमानं मां पर्यवेष्टय दिति पूर्वजन्मवैरं स्मृत्वा रोषेण मुखचन्द्रं श्मश्रुमण्डल माचक्रामेत्यर्थः। श्मश्रुमण्डलेन श्मश्रुसङ्घेन, मण्डितं भूषितं, अनेन च कळङ्ककृतशोभालोपशालिन श्चन्द्रात् श्मश्रुमण्डलकृतशोभाशाली मुखचन्द्र श्श्रेष्ठ इति व्यज्यते। सकलमनोविलक्षणाया मधुहरविरोधिता भृङ्गविरोधिता– 'चर न्वनान्ते नवमञ्जरीषु न षट्पदो गन्धफली मजिघ्र' दिति प्रसिद्धः। तया कृतं जातं, य दयशः अपकीर्तिः, तस्य प्रमार्जनकामनया मार्जनवाञ्छया, तपोबलेन तपस्सामर्थ्येन, सकलसुमनोभिमतस्य सर्वपुष्पसम्मतस्य, मधुहरमुखचुम्बनस्य भृङ्गकर्तृकमुखकरणक चुम्बनस्य, अनुकूलया भृङ्गास्वादनयोग्ययेत्यर्थः। प्रकृते तु सकलानां सुमनसां देवाना, मभिमतः प्रियः, मधुहरः मधुसूदनः, तस्य मुखचुम्बनं मुखस्पर्शः। मुखे वर्तनमिति यावत्। तदनुकूलया तद्योग्यया, चम्पककलिकयेव स्थितया चाम्पेयकोरकव त्स्थितया, नासिकया नासया, विराजमानं विशेषेण भासमानं, चम्पकपुष्पं मधुहरविरोधित्वजन्यस्वापयशः परिमार्ष्टुं तपः कृत्वा, नासिकारूपे णावतीर्य,

मधुहरमुखचुम्बनानुकूलं भूत्वा, तदपयशो जहाविति निर्गळितार्थः । अवचनीयवर्णाश्रयतया अनिन्द्यशोभाश्रयत्वेन हेतुना वचनीयवर्णाश्रयात् निन्द्यशोभाश्रयात् वचनीयानां वक्तुं शक्यानां, वर्णानां कादीना मक्षराणा, माश्रयभूतादिति च ललाटफालादिशब्दप्रतिपाद्या दित्यर्थः । ललाटमालात् सर्वेभ्यो ललाटेभ्यः उत्कृष्टेन उत्तमेन फालफलकेन फलकतुल्येन फालेन, विलसन्तं भासमानं — सपरिकरं काव्यलिङ्गमलङ्कारः । सविग्रहं सशरीरं, निजतपःफलं स्वतपःफलमिव स्थित मित्युत्प्रेक्षा ॥ ८१

श्लो ॥ सत्वरं हरि रुत्थाय निवेश्य स्वासने मुनिम्
आदाय विधिव न्मूर्ध्ना पादोदक मदीधरत् ॥ ८२

सत्वरमिति ॥ हरिः सत्वरं द्रुत, मुत्थाय उत्थितो भूत्वा, मुनिं नारदं, स्वासने स्वस्य विष्टरे, यत्र स्वय मुपविष्ट स्तत्रेत्यर्थः — यद्वा स्वशब्दोऽत्र स्वीयपरः । स्वीयस्य भक्तादे र्यदासनं तत्रेत्यर्थः । निवेश्य उपवेशयित्वा, विधिवत् विधियुक्तं यथा तथा, यथाशास्त्र मित्यर्थः । पादोदकं पादजल, मादाय गृहीत्वा, मूर्ध्ना शिरसा, अदीधरत् दधार । यथाविधि तत्पादं प्रक्षाळ्य तदम्बु मूर्ध्ना दधा रेत्यर्थः ॥ ८२

श्लो ॥ शान्तकामो भवा नीदृ क्सुलभ स्संयमी कथम् ?
तथापि गृहसक्ति र्नो गोत्रजैकतपःफलम् ॥ ८३

शान्तेति ॥ शान्तकामः कामरहितः, विरक्त इत्यर्थः । अत एव संयमी चित्तनिग्रह-वान् , ईदृ गेवंविधः, भवान् त्वं, अस्माकमिति शेषः । कथं केन प्रकारेण, सुलभः सुप्रापः, भवतीति शेषः — सकाम एव प्रभू नुपसर्पति न तु निष्कामः । ‘ निस्पृहस्य तृणं जग’दिति न्यायादिति भावः । तथापि तव दुर्लभत्वेऽपि, नः अस्माकं, गृहसक्तिः गृहसम्बन्धः, मद्गृहोद्देशेन तवागमन मित्यर्थः । गोत्रजैकतपःफलं गोत्रजानां वंश्याना, मेकं मुख्यं, तपसः फलं परिपाकः— भवतीति शेषः । नतु ममैकस्यैवेति भावः । व्यङ्ग्यार्थस्तु — शान्तकामः नाशितमन्मथः, संयमी तपस्वी शिव इत्यर्थः । भवानीदृक्सुलभः भवान्याः पार्वत्याः, दृशोः नेत्रयोः, सुलभः सुप्रापः, कथं भवेत् ? — स्मरदाहानन्तरं क्रोधेन शुश्रूषमाणां पार्वतीं परित्यज्य देशान्तरे तपोऽर्थं गत शिवः कथं भवान्या स्सुदर्श इत्यर्थः । यद्वा भवानीदृक्सुलभः पार्वतीकटाक्षवश्यः कथं भवे दित्यर्थः । सति मन्मथे तदधिष्ठितकामिनीकटाक्षपातः पुमांस मावर्जयेत् । मन्मथनाशे तु कथं तदावर्जन मिति भावः । तथापि मन्मथदाहेऽपि, गृहसक्तिः दारानुरागः, शिवस्येति शेषः — गोत्रजायाः पर्वतसुतायाः भवान्या, एकस्या एव तपःफलं नो न भवतीति काकुः । भवत्येव — पार्वतीकृततपोमहिम्नैव स्मरदाहकस्यापि दारानुराग इत्यर्थः ॥ ८३

**ग ॥ त दनुगृहीतव्योऽहं विधेयविषयनियोगेने त्यमृतासारसरसां गिर मुदीरयन्तं भगवन्तं नारदः प्रत्यवादीत् ॥** ८४

तदिति ॥ त त्तस्मात्, विधेयविषयनियोगेन विधेयविषये कर्तव्यार्थे, नियोगेन आज्ञापनेन, तद्द्वारेत्यर्थः । अह मनुगृहीतव्यः दयनीयः, इत्येव ममृतासारसरसां सुधाधारासम्पातसमानरसां, गिरं वाच, मुदीरयन्तं ब्रुवाणं, भगवन्तं कृष्णं, नारदः प्रत्यवादीत् प्रत्युवाच ॥ ८४

**श्लो ॥ विधेय मपरं नैव पश्याम स्त्वां विना हरे !**
**य त्सम्प्रति कृतार्थोऽहं जातो लाभा त्तवाद्भुतात् ॥** ८५

विधेयेति ॥ हेहरे भगवन्! त्वां विना अपरं अन्य, द्विधेयं विधातुं योग्यं फल मित्यर्थः । न पश्यामः न जानीमः – त्वमेव फलं नतु त्वद्द्वारा साधनीयं फल मन्य दस्तीत्यर्थः । तत्र हेतु माह—य द्यस्मा द्धेतोः, सम्प्रति अधुना, अद्भुता दतिविस्मयनीया, तव लाभात् प्राप्तेः, अहं कृतार्थः सफलः, जातः अभवम् । त्वद्व्यतिरिक्तफलसत्त्वे त्वल्लाभादेव मम कृतार्थत्वं न युज्यत इत्यर्थः । यद्वा – हरे! त्वां विना अपरं विधेयं विनयसम्पन्नं, न पश्यामः 'विधेयो विनयग्राही' त्यमरः । य द्यस्मात्, अद्भुतात् तव एवंविधविनयसम्पन्नस्य ते लाभात् दर्शनादेव, कृतार्थो लब्धधनः जातः, त्वदीयविनयेनैव परितुष्टोऽस्मि – नतु त्वत्तः किञ्चिदपि फलं काङ्क्षामीत्यर्थः । अथवा हरे! त्वां विना अपरं विधेयं कृत्यं नैव पश्यामः । 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रुतेः । त्वच्छ्रवणादिकमेव अस्माकं कृत्यमिति भावः । तत्र हेतु माह – य द्यस्मात् सम्प्रति अद्भुता त्तव लाभा दहं कृतार्थः कृतकृत्यो जातः – श्रवणादिक्रियाफलीभूतत्वल्लाभात् । मामका श्श्रवणादिक्रिया स्सफला जाता इत्यर्थः । त्वद्दर्शना दन्य त्फलं न किम प्यस्तीति भावः ॥ ८५

**ग ॥ एव मभिधाय पुन रन्यस्या स्सदन मासेदुषि तपस्विनि ॥** ८६

एवमिति ॥ एव मभिधाय उक्त्वा, तपस्विनि नारदे, पुन र्भूयः, अन्यस्याः कृष्णमहिष्या, स्सदन मन्तःपुर, मासेदुषि प्राप्तवति सति ॥ ८६

**श्लो ॥ अयि प्रिये पद्मिनि ! कीदृशोऽयं हरे स्तवापि प्रणयानुबन्धः**
**नश्य त्यमर्ष स्तव पादघाता दमुं प्रियानुग्रह मेष वेत्ति ॥** ८७

अयीति ॥ पद्मिनि पद्मिनीजात्युत्पन्ने, अयि प्रिये प्रेयसि! हरेः ममेत्यर्थः – तवापि आवयो र्द्वयोः, अयं प्रणयानुबन्धः परस्परं स्नेहानुबन्धः, कीदृशः विलक्षण इत्यर्थः । वैलक्षण्य मेवाह – तव ते, पादघातात् चरणताडनात्, अमर्षः कोपः, नश्यति । मय्यन्यासङ्ग

माशङ्क्य यो मान स्त्वया धृत स्स तु मयि चरणेन आहते सति नश्यतीत्यर्थः । यथा राजादि स्सापराधं भृत्यं भृशं ताडयित्वा कोपं जहाति तद्वदिति भावः । यद्वा – अस्मत्कर्तृकबहुविध-लालनवशादपि अप्रसन्नायां त्वयि विषये यो ममामर्षः स तावकपादघाता न्नश्यती त्यर्थः । तत्र हेतु माह – एष कृष्णः अमुं त्वत्कृतपादघातं, प्रियानुग्रहं प्रियाया स्तवानुग्रहं, वेत्ति जानाति, प्रिययाऽनुगृहीतोऽस्मीति मन्यते इत्यर्थः । स्वपादघातेन मा मनुगृह्य प्रसादं भजे देवेति मत्वा पादघाता दह ममर्षं त्यजामीति भावः । व्यङ्ग्यार्थस्तु – अयि प्रिये पद्मिनि नळिनि ! हरे स्सूर्यस्य, तव च प्रणयानुबन्धः कीदृशः ! यत् पादघाता द्धरेः किरणघाता द्धेतोः, तव अमर्षः मुकुळीभावरूपः नश्यति – एष रविः अमुं पादघातं प्रियानुग्रहं– प्रियाया इति कर्मणि षष्ठी – नळिन्या अनुग्रहं वेत्ति । मत्पादघातः मत्प्रियायाः महा ननुग्रह इति मन्यते इत्यर्थः । एतेन रविपादघाता त्पद्मस्येव त्वत्पादघाता न्मन्मनःपद्मस्य महान् विकासो भवतीति श्रीकृष्णाशयो व्यज्यते ॥ ८७

**श्लो ॥ एव माश्वासयन् कान्तां केळीकलहकोपनाम्**
**अजानान इवापृच्छ त्स्वागतं नारदं हरिः ॥** ८८

एवमिति ॥ एवंरीत्या केळीकलहकोपनां क्रीडाकलहकुपितां, कान्तां प्रियां, आश्वासयन् अनुनयन्, हरिः अजानान इव नारदागमन मविदन्निव, नतु वस्तुत इति भावः । नारदं स्वागतं कुशलं, अपृच्छत् पप्रच्छ ॥ ८८

**ग ॥ नारदस्तु तूष्णीकः पुन रन्यस्या स्सदन मासेदिवान् ॥** ८९

नारद इति ॥ नारदस्तु – तु शब्दो वैलक्षण्यद्योतनार्थः । वैलक्षण्य मेवाह – तूष्णीक इति मौनवान् भूत्वेति शेषः – वदतः कृष्णा न्नारदस्य वैलक्षण्यं मौनमेवेति भावः । पुन र्भूयः अन्यस्या स्तृतीयाया इत्यर्थः । श्रीकृष्णप्रेयस्या इति शेषः । सदनं गृह, मासेदिवान् प्राप ॥ ८९

**ग ॥ तत्र च । व्या ॥ तस्या स्सदने ॥**

**श्लो ॥ ताताम्ब ! दुर्लभ मिदं फल मन्यबालै**
**स्सङ्गोप्य दत्त ममृतप्रतिमं तवैव**
**धाव द्रुतं न परिपश्यतु बालकोऽन्यो**
**धानाः पुन र्गुडयुता यदि ते प्रदेयाः ॥** ९०

तातेति ॥ हेतात हे अम्ब इति स्नेहातिशयात्पुत्रेषु जनकत्वजननीत्वारोपः । अन्यबालै रितरशिशुभि, र्दुर्लभं दुष्प्रापं, तत्र हेतु माह – अमृतप्रतिमं सुधातुल्यं, तद्व द्रुचिर मित्यर्थः ।

इदं फलं सङ्गोप्य रक्षयित्वा, तवैव दत्तं वितीर्णं मयेति शेषः – त्वयि मम अतिप्रीतत्वा दिति भावः – द्रुतं शीघ्रं, धाव गच्छ – तत्र हेतु माह – अन्य स्त्वदितरः, बालकः बालः, न परिपश्यतु न पश्यतु – यद्यन्यः पश्येत् तर्हि तस्य त्वत्फले भागो देय स्स्यात् । न ह्येतत्तुल्य मन्य त्फल मस्तीति भावः । ननु अन्येषां सुतानां त्वं किं दास्यसी त्यत आह – ते पुनः त्वदन्यबालास्तु याचेयु रिति शेषः – यदि मां किमपि प्रार्थयेर न्निति चे दित्यर्थः । गुडयुताः सगुडाः, धानाः पृथुकाः, प्रदेयाः दातुं योग्याः भवन्तीति शेषः । त्वदन्येषां तु धाना एव; तवैवेदं फल मित्यर्थः । यद्वा अन्यो बालको मां पश्यतु नाम; किं तावता मम क्षति ? रित्यत आह – यदि फलसहितं त्वां बालकोऽन्यः पश्ये च्चे दित्यर्थः । ते तव, तद्बालापहृतफलस्येति भावः । पुन र्भूयः गुडयुता धानाः प्रदेया स्स्युः – तादृशफलान्तराभावादिति भावः ॥ ९०

**श्लो ॥ लालयन्तं शिशू नेवं वचनै र्वञ्चनापरैः**
**दृष्ट्वा हरि मथान्यस्या स्सदनं मुनि रभ्ययात् ॥ ९१**

लालयन्त मिति ॥ एवं वञ्चनापरैः प्रतारणार्थकैः, वचनैः वाक्यैः, शिशून् बालान्, लालयन्तं क्रीडयन्त, माश्वासयन्त मिति वा – हरिं दृष्ट्वा मुनि र्नारदः, अथ अन्यस्या स्सदनं गृह, मभ्यायत् ययौ ॥ ९१

**ग ॥ एवं प्रतिनिकेतनं विलक्षणव्यापारानुषङ्गिण मदृष्टपूर्व मिव स्वागतकुशलानुयोगादिभि रभिनन्दयन्तं मुकुन्द मन्तिमान्तःपुरप्रदेशे नारदः प्रहस न्नवादीत् ॥ ९२**

एवमिति ॥ एवं पूर्वोक्तरीत्या, प्रतिनिकेतनं निकेतनं गृहं – निकेतने निकेतने प्रतिनिकेतनं – वीप्साया मव्ययीभावः – विलक्षणव्यापारानुषङ्गिणं भिन्नव्यापारासक्तं, अदृष्टपूर्वमिव अनवलोकितचर मिव, आत्मान मिति शेषः । स्वागतकुशलानुयोगादिभिः शोभन मागतं स्वागतं, तस्य कुशलस्य क्षेमस्य, च अनुयोगः प्रश्नः, स आदि र्येषां तैः तथोक्तैः । अभिनन्दयन्तं आनन्दयन्तं, मुकुन्दं उद्दिश्येति शेषः । अन्तिमान्तःपुरप्रदेशे अन्तिमायाः चरमायाः, अन्तःपुरभागे षोडशसहस्रतमेऽन्तःपुरे इत्यर्थः । प्रहसन् स्मयमानस्सन्, नारदः अवादीत् जगाद ॥ ९२

**श्लो ॥ विश्वेन्द्रजालै र्जनमोहनं न तवाद्भुतं किन्तु विशेष एषः**
**मायाभिधानं तु यदत्र पिञ्छं तदर्धचन्द्रा विषयं प्रतीमः ॥ ९३**

विश्वेति ॥ तव परमेश्वरस्ये त्यर्थः – विश्वेन्द्रजालैः – विश्वानि जाग्रदादिप्रपञ्चाः – इन्द्रजालानीव तैः विप्रविनोदिकृतगन्धर्वनगरादिक मिन्द्रजाल मित्युच्यते । जनमोहनं जनानां मोहजननं, नाद्भुतं न चित्रं – ऐन्द्रजालिकव त्तवेदं स्वाभाविक मेवेत्यर्थः – किन्तु एष

विशेषः इदं वक्ष्यमाणं चित्र मित्यर्थः — किं तदित्यत आह — अत्र विश्वेन्द्रजालनिर्माणविषये, मायाभिधानं मायाख्यं, य त्तव पिञ्छं बर्हं मस्ति, तत्पिञ्छं, अर्धचन्द्राविषयं अर्धचन्द्रो गळहस्तः तस्याविषयं अनिवार्यमिति यावत्। अर्धचन्द्राकाररेखानास्पदमिति च प्रतीमः जानीमः — पिञ्छ स्यार्धचन्द्राकाररेखानास्पदत्वं विचित्र मित्यर्थः। यथा राजादिना गळहस्तप्रयोगेन भृत्यादि निष्कास्यते तथा तव माया त्वां ऋते येन केनापि निष्कासयितुं न शक्यते इति परमार्थः — अत्र अर्धचन्द्रविषया त्पिञ्छात् तदविषयभूताया मायाया व्यतिरेकस्य फलितत्वा द्व्यतिरेकालङ्कारः — अत्र अर्धं चन्द्रो यस्य सः अर्धचन्द्र शिवः — तस्य अविषय मिति व्यज्यते — शिवकेशवयोः परमात्मत्वाविशेषेऽपि मोहिन्यादिरूपया विष्णुमायया शिवोऽप्य-मुह्यतेति विष्णुमायाया शिवविषयत्वे सिद्धे तदविषयत्वकथन मद्भुतमिति भावः। एतेन श्रीकृष्णमायया शिवोऽपि मोहितः। — कोऽहमिति नारदस्य पश्चात्तापो व्यज्यते ॥ ९३

**श्लो ॥ नारदः प्रणिग द्यैवं मुकुन्दे नानुमोदितः**
**प्रययौ विस्मित स्तस्य योगमायानुभावतः ॥ ९४**

नारद इति ॥ नारदः एवं प्रणिगद्य उक्त्वा, मुकुन्देन अनुमोदितः अनुज्ञातस्सन्, तस्य कृष्णस्य, योगमायानुभावतः — कायव्यूहरूपयोगमायाप्रभावा, द्विस्मितः विस्मयं प्राप्तस्सन्, प्रययौ जगाम ॥ ९४

**ग ॥ अथ कदाचन नारदवचना दजातशत्रु मियक्षमाण मुपलभ्य मधुसूदन स्सावरोधवधूजनः कतिपयै रहोभि रिन्द्रप्रस्थ मुपस्थित स्सकौतुकः प्रातिष्ठत ॥ ९५**

अथेति ॥ ततः कदाचन नारदवचनात् नारदवाक्यात्, अजातशत्रुं युधिष्ठिरं, इयक्षमाणं यष्टु मिच्छुं, उपलभ्य विदित्वा, मधुसूदनः — मधुनामकरक्षोहन्ता कृष्णः, साव-रोधवधूजनः अन्तःपुरस्त्रीजनसहितस्सन्, कतिपयैः कतिचिद्भिः, अहोभि र्दिनैः, इन्द्रप्रस्थं युधिष्ठिरराजधानीं, उपस्थितः प्राप्तो भूत्वा, सकौतुकः सकुतूहलः, प्रातिष्ठत अवर्तत — इन्द्र-प्रस्थपुरे इत्यर्थः। यद्वा— मधुसूदन स्सावरोधवधूजनः सकौतुकश्च सन् इन्द्रप्रस्थं प्रातिष्ठत प्रतस्थे — इन्द्रप्रस्थं प्रययावित्यर्थः। कतिपयै रहोभि रुपस्थितः इन्द्रप्रस्थमित्येव — प्राप्तश्च बभूवेति शेषः ॥ ९५

**ग ॥ पाण्डवा अपि सहमहिषीभि रुपस्थानीयं प्राणमिव षष्ठ मात्मीय मक्षय्य मिव कुलधन, मङ्गदेवतासहिता मिव चिकीर्षितयागप्रधानदेवता, मणिमाद्यष्टविभूति-परिवृतमिव धनदं, पृथिव्याद्यष्टमूर्तिवेष्टितमिव शशिशेखरं लोकपालमालाष्टकवलयित मिव राजन्यतेजःपुञ्ज, मष्टमहासिद्धिपरिवृतामिव सिद्धमन्त्राधिदेवतां, पद्माद्यष्टविध-**

**सौन्दर्यनिधिसहितं नवममिव मुकुन्दाभिधलावण्यनिधिं, नवरत्नमालामध्यगत मिवेन्द्र नीलनायकमणिं, माधवं प्रत्युद्गम्य परिरम्भकुशलानुयोगादिभि रभिनन्द्य च तेन सह स्वभवन मभजन् ॥** ९६

पाण्डवा इति ॥ पाण्डवाः धर्मराजादय श्च, महिषीभि रष्टाभि र्भार्याभि स्सह, उपस्थानीयं उपागतं, षष्ठं स्वपञ्चप्राणातिरिक्तं, आत्मीयं स्वीयं प्राणमिव स्थितं, तद्व त्प्रेमास्पदमित्यर्थः – उत्प्रेक्षा– अक्षय्यं शाश्वतं, कुलधनं वंशपरम्परागतं धनमिव स्थितं, कुलदेवतात्वादिति भावः । आत्मीयमिति पदं काकाक्षिन्याये नात्राप्यन्वेतव्यम् । उक्तं च प्रागेव "तनूजानां पाण्डोः किमपि कुलदैव" मित्यत्रैव । अङ्गदेवसहितां अप्रधानदेवताभि र्युक्तां, चिकीर्षितस्य कर्तु मिच्छाविषयीभूतस्य, यागस्य राजसूयस्य, प्रधानदेवतामिव उद्दिश्य दैवमिव स्थितं, उत्प्रेक्षापीयं वस्तुत स्सती भावे पर्यवस्यति – भगवतः परमेश्वरत्वेन तन्महिषीणां लक्ष्म्यादित्वेन च तथात्वात् । अणिमाद्यष्टविभूतिभिः 'अणिमा महिमाचैव गरिमा लघिमा तथा प्राप्तिः प्राकाम्य मीशित्वं वशित्वं चाष्ट भूतय' इति अणिमाद्यष्टैश्वर्यैः, परिवृतं परीतं, धनदं कुबेरमिव, पृथिव्यादिभि रष्टमूर्तिभिः पृथिव्यादयः पञ्च सूर्यचन्द्रौ यजमानश्चेत्यष्टाभि र्मूर्तिभि रित्यर्थः । परिवेष्टितं व्याप्तं, शशिशेखरं चन्द्रमिव, लोकपालानां इन्द्रादीना मष्टदिक्पालानां, मालाष्टकेन अष्टाभि र्मालाभिः, वलयितं व्याप्तं, राजन्यतेजःपुञ्जमिव राजन्यानां क्षत्रियकुमाराणां, तेजसां पुञ्ज स्सङ्घ, स्तमिव 'अष्टाभि र्लोकपालानां मालाभि र्निर्मितो नृप' इति स्मरणात् लोकपालांशजन्यानां राजन्यानां सम्बन्धि य त्तेजः तदेव पुञ्जीभूय कृष्णात्मना वर्तते इति भावः। अष्टमहासिद्धिपरिवृतां अष्टौ महासिद्धयो योगजन्याः तत्परिवृतां, सिद्धमन्त्राधिदेवतामिव सिद्धानां मन्त्रस्य अधिष्ठानदेवतामिव, स्थितं नवमं मुकुन्दाभिधलावण्यनिधिमिव मुकुन्द–नामकसौवर्णनिधिमिव, पद्माद्यष्टविधसौन्दर्यनिधिसहितं पद्मा रुक्मिणी आदि र्येषां तैः पद्मादिभिः, अष्टविधैः सौन्दर्यनिधिभिः सौन्दर्यशेवधिभिः, सौन्दर्यालयरुक्मिण्याद्यष्टमहिषीभि रित्यर्थः । सहितं पद्मप्रमुखाष्टविधस्वर्णनिधिसहितं च – यद्वा पद्माष्टविधसौन्दर्यनिधिसहितं नवममिव मुकुन्दाभिधलावण्यनिधिं, मुकुन्दनामकच्छायानिधिं मुकुन्दनामकस्वर्णनिधिं च – पद्मप्रमुखा मुकुन्दान्ता यथा नवसुवर्णनिधयः तथा रुक्मिण्यादयः मुकुन्दान्ता नव सौन्दर्यनिधय इत्यर्थः । नवरत्नमालायाः नवभिः रत्नैः कृतायाः मालायाः, मध्यगतं मध्यदेशस्थं, इन्द्रनील-नायकमणिमिव इन्द्रनीलाख्यनायकरत्नमिव, स्थितं मध्ये इन्द्रनीलमणिः इत स्ततः पद्मराग-वज्रवैडूर्यादयोऽष्टौ मणयः हारे यथा भान्ति तद्वत् मध्ये कृष्णः इत स्ततो रुक्मिण्यादयोऽष्टभार्या इत्यर्थः । माधवः कृष्णः, प्रत्युद्गम्य अभिमुख मागत्य, परिरम्भः आलिङ्गनं, कुशलानुयोगः कुशलप्रश्नः, तौ आदी येषां तैः, अभिनन्द्य श्लाघयित्वा च, तेन कृष्णेन सह, स्वभवनं निजगृह, मभजन् प्रापुः ॥ ९६

श्लो ॥ पृथा सदारभ्रात्रीयसमागमनहर्षिता
यथार्हे मुपचारै स्तं गेहे सुख मवासयत् ॥ ९७

पृथेति ॥ पृथा कुन्ती, सदारभ्रात्रीयस्य सभार्यस्य भ्रातृपुत्रस्य कृष्णस्येत्यर्थः । समागमनेन आगत्या, हर्षिता सञ्जातहर्षा सती, यथार्हैं यथायोग्यं, उपचारै राशीर्वादादिभिः, उपलक्षितेति शेषः । तं भगवन्तं, गेहे गृहे, सुखं यथा तथा, अवासयत् स्थापयामास ॥ ९७

श्लो ॥ आवसन् संसदं जातु मयमायाविनिर्मिताम्
युधिष्ठिरः प्रार्थयत प्रश्रयावनतो हरिम् ॥ ९८

आवसन्निति ॥ जातु कदाचित्, मयमायाविनिर्मितां मयस्य शिल्पिनो मायया विनिर्मितां कृतां, संसदं सभा, मावसन् अधिष्ठितः, युधिष्ठिरः धर्मराजः, 'गवि युधिभ्यां स्थिर' इति षत्वम् । प्रश्रयावनतः प्रश्रयेण विनयेन, अवनतः नम्रस्सन्, हरिं कृष्णं, प्रार्थयत अयाचत ॥ ९८

श्लो ॥ राजसूयेन यक्ष्ये त्वां क्रतुराजेन माधव !
अनुजानीहि मा मर्हो यदि स्या मस्य कर्मणः ॥ ९९

राजसूयेनेति ॥ हेमाधव ! क्रतुराजेन क्रतूत्तमेन, राजसूयेन राजसूयाभिधक्रतुराजेनेत्यर्थः । त्वां परमात्मानं त्वा मित्यर्थः । यक्ष्ये पूजयिष्यामि – यजतेः लृट् । त्वत्प्रीत्यर्थं राजसूयं कर्तु मिच्छामीत्यर्थः । अस्य कर्मणः राजसूयाख्यक्रतेः, अर्हः योग्यः, स्यां यदि अस्मिन्चे दित्यर्थः । मा मनुजानीहि अनुज्ञातं कुरु – तद्यागे ममानुज्ञां दिशेत्यर्थः ॥ ९९

ग ॥ एवं वादिन मजातशत्रुं भगवा नवादीत् ॥

एवमिति ॥ एव मुक्तविधया, वादिनं ब्रुवाणं, अजातशत्रुं अनुत्पन्नकामाद्यन्तश्शत्रुकम्, युधिष्ठिर मित्यर्थः । प्रति भगवान् कृष्णः, अवादी दुवाच ॥

अव ॥ वचनप्रकारमेव वर्णयति ॥

श्लो ॥ वीर स्त्व मस्य हि बुधः पद मुच्चमेव
प्राप्तस्थिरो भवसि सोमरसस्य पात्रम्
षण्ड श्चलो नियतनीचपदाधिवासो
दुष्टग्रहाक्रमखलो न भवादृशोऽन्यः ॥ १००

वीर इति ॥ उच्च मुत्कृष्टं, पदं स्थानं, प्राप्तः – सार्वभौम इत्यर्थः । वीरः पराक्रमशाली, बुधो विद्वान्; अनेन विशेषणत्रयेण अर्थी समर्थो विद्वा नित्येवंरूप मधिकारत्रयं क्रमेणोक्तं

भवति । स्थिरः अचपलः – अनेन अतुर्तं श्रावये त्पतिमिति श्रुत्युक्तं स्वराराहित्य मुक्तं भवति । ईदृश स्त्वमे वास्य सोमरसस्य राजसूययागसंस्कृतसोमं तादृशसोमलताद्रवस्येत्यर्थः । – पात्रं भाजन मर्ह इति यावत् – भवसि हि भवस्येव । 'हि हेता ववधारणे' इत्यमरः । षण्डः असमर्थः – 'षण्ड ष्षण्डे वर्षधरे गोपतौ वन्ध्यपूरुषे' इति भास्करः । चलः अविमृश्यकारी, नियतनीचपदाभिवासः नियतः नित्यः, नीचपदाधिवासः अल्पस्थानवृत्तिः यस्य सः सार्वभौम इत्यर्थः । दुष्टग्रहाक्रमखलः दुष्टः ग्रहः अभिनिवेशो येषां ते दुष्टग्रहाः दुर्बुद्धय श्शकुन्यादयः, तै राक्रमणेन हेतुना–खलः दुर्जनः, दुर्जनसान्निध्या त्प्राप्तदुर्विनय इत्यर्थः । अन्यः त्वद्भिन्नो दुर्योधनादि रित्यर्थः – भवादृशः त्वादृशः त्वमिव सोमरसस्य पात्रमित्यर्थः – न न भवति । त्वमेव राजसूये अधिकारी नतु दुर्योधनादय इति परमार्थः – अत्र युधिष्ठिरस्य सोमरसपात्रत्वे अन्यस्य तदपात्रत्वे च हेतुभूतत्वेन साभिप्रायविशेषणविन्यासा त्परिकरालङ्कारः । अनेक-पदार्थहेतुकं काव्यलिङ्गं वा – व्यङ्ग्यार्थस्तु – वीरः क्लैब्यरहित इत्यर्थः – उच्चं पद मुच्चस्थानं, उच्चराशिं च प्राप्तः, स्थिरः भ्रमणरहितः बुधः विद्वान्, त्वमेव सोमरसस्य चन्द्रानुरागस्य, पात्रं भवसि – यद्वा सोमरसस्य पात्रं बुध स्त्वं हि भवसि – चन्द्रप्रेमास्पदत्वेन लोकै र्व्यवह्रियमाणो बुध स्त्वमेव भवसीत्यर्थः – कुत इत्याह वीर इत्यादिविशेषणत्रयम् – यत स्त्वं वीरत्वादिगुणत्रयविशिष्टः तत स्त्वमेव चन्द्रस्य प्रेमास्पदभूतो बुध इत्यर्थः – षण्डः क्लीबः बुधसूर्यसुतौ नपुंसकाख्याविति वराहमिहिरोक्तेः । चलः परिभ्रमणशीलः नियतनीचपदाधिवासः नित्यनीचराश्याश्रयणः वर्षे वर्षे नीचराशिं मीनं भुञ्जान इत्यर्थः – दुष्टग्रहाक्रमः पापग्रहयोगः तेन खलः पापः, 'बुधः पापयुतः पाप' इति वचनात् – अन्यो बुधः रौहिणेयः भवादृशः चन्द्रानुरागपात्र मित्यर्थः – न न भवति नु । भवादृश इतिपाठे तु भवादृशोनु भवादृशः कि मित्यर्थः – कूटस्थ श्चन्द्रः वीरत्वादिगुणविशिष्टत्वेन स्ववंशभूषणे त्वय्येवानुरज्यते नतु क्लैब्यादिदोषविशिष्टे साक्षा त्पुत्रेऽपि बुधे इति तात्पर्यार्थः । अत्र युधिष्ठिरस्य बुधव्यतिरेकोक्तेः व्यतिरेकालङ्कारो व्यङ्ग्यः – बुधो नैव बुधः किन्तु त्वमेव बुध इति वचनात् – सापह्नवो रूपकालङ्कारः ॥ १००

**श्लो ॥ जग त्कबळय त्युच्चै र्भवत्सहजतेजसि**
**कल्याण ममितं य त्स्या त्त त्पश्या मीष्टसाधनम् ॥** १०१

जगदिति ॥ भवत्सहजतेजसि भवत स्तव सहजानां सोदराणां भीमादीनां, तेजसि प्रतापे, उच्चै रतिशयेन, जगत् प्रपञ्चं, कबळयति आक्रमति सति, अमित मधिकं, य त्कल्याणं सुवर्णं स्यात्, त त्सुवर्णं – इष्टसाधनं यागस्य साधनं, पश्यामि तर्कयामीति; धनमूलत्वा द्यागस्येति भावः – व्यङ्ग्यार्थस्तु – भवत्सहजतेजसि तव स्वरूपभूतप्रकाशे जगत् कबळयति स्वान्तर्गतत्वेन भावयति सतीत्यर्थः – स्वप्ने स्वान्तर्गतं विश्वं यथा पृथगि वेक्ष्यते तथैव

जाग्रत्समये प्रपञ्चोऽयं विविच्यतामिति वचनात्। यद्वा – जगत्कबळनं नाम जगतो ब्रह्मात्मकत्वानुसन्धानपूर्वकमिथ्यात्वानुसन्धानमेव – अमितं य त्कळ्याणं अप्रतिबद्धापरोक्षज्ञानं, 'न हि कल्याणकृ त्कश्चि द्दुर्गतिं तात गच्छती'ति गीतावचने कल्याणशब्दस्य ज्ञानार्थकत्वं शङ्करभाष्ये वर्णितं – स्या द्भवेत्। तद्ब्रह्मापरोक्षानुभवः इष्टस्य अभीष्टस्य मोक्षस्य, साधनं पश्यामि आलोचयामि – ज्ञानमेव मोक्षसाधन मित्यर्थः ॥ १०१

**ग ॥ युधिष्ठिरोऽपि चतुर श्चतुर स्सहोदरान् मधुसूदनवचनेन दिशां प्रस्थापयामास ॥ १०२**

युधिष्ठिर इति ॥ चतुरो निपुणो, युधिष्ठिरोऽपि धर्मराजश्च, मधुसूदनवचनेन श्रीकृष्ण-निदेशेन, चतुर स्सहोदरान् सोदरान्, भीमाद्यनुजचतुष्टय मित्यर्थः। दिशां आशानां, प्रस्थापयामास विजयार्थं प्रेषयामासेत्यर्थः ॥ १०२

**ग ॥ तेऽपि कियतापि कालेन योगिन इव वशीकृताशा अनतिचिरोज्झिता ध्ययना इव गुरवे कनकोच्चयं समर्प्य प्रमदाश्रिता बभूवुः ॥ १०३**

तेऽपीति ॥ तेच भीमादयः, कियतापि स्वल्पेनेत्यर्थः। कालेन समयेन, योगिन इव योगशालिन इव, वशीकृताशाः स्वाधीनकृतदिश स्सन्तः, नियमितकामा स्सन्त इति च – अनतिचिरोज्झिताध्ययनाः अनतिचिरं ईषच्चिरकाले, उज्झितं त्यक्तं, अध्ययनं विद्याभ्यासो यै स्ते इव शिष्या इवेत्यर्थः। गुरवे पितृसमो ज्येष्ठ इति न्यायात् – पितृवाची गुरुवाची गुरुशब्दो ज्येष्ठमपि लक्षणया बोधयति – अग्रजायेत्यर्थः। अन्यत्र उपदेष्ट्रे; कनकोच्चयं स्वर्णराशिं, समर्प्य अर्पयित्वा, यज्ञार्थं गुरुदक्षिणार्थमिति च – यथा शिष्याः विद्याभ्यासपरिसमाप्त्यनन्तरं गुरुदक्षिणारूपत्वेन गुरवे स्वर्णराशिं समर्पयन्ति तद्व दित्यर्थः। प्रमदाश्रिताः सन्तोषभाजः प्रमदां कन्या माश्रिता इति च – गुरुदक्षिणादानानन्तरभावित्वा त्कन्यापरिग्रहस्येति भावः ॥ १०३

**श्लो ॥ पाण्डवै र्न पराभूति र्मागधा यार्पिते त्यथ**
**खिन्नो हरि र्व्यधा च्चित्तं तत्प्राणहरणे मतिम् ॥ १०४**

पाण्डवैरिति ॥ अथ ततः, पाण्डवै र्भीमादिभिः, मागधाय जरासन्धाय, पराभूतिः पराभवः, नार्पिता न समर्पिता, इति हेतोः – खिन्नः खेदं प्राप्तः, जरासन्धस्तु न जित इति पर्यालोच्येत्यर्थः। हरिः तत्प्राणहरणे जरासन्धमारणे, मतिं धियं, व्यधा च्चकार – जरासन्धं हन्तु मैच्छदित्यर्थः। अन्यार्थस्तु – मागधाय स्तुतिपाठकाय, पाण्डवैः परा उत्कृष्टा, भूति रैश्वर्यं, नार्पितेति खिन्नः हरिः तत्प्राणहरणे मागधनाशने, मतिं व्यधात् – चित्तं अत्र यस्मै भूति र्नार्पितेति खिन्न स्तमेव हन्तु मैच्छदिति प्रतीतस्य विरोधस्य अर्थान्तरवर्णनेन आभासी-करणा द्विरोधाभासालङ्कारः ॥ १०४

श्लो ॥ बाडबाकृति मास्थाय भीमार्जुनजनार्दनाः
ग्रसना याभ्ययु स्तस्य गिळतः परवाहिनीः ॥ १०५

बाडबेति ॥ भीमार्जुनजनार्दनाः अल्पाच्कत्वा द्भीमस्य पूर्वनिपातः — अर्जुनापेक्षया अभ्यर्हितत्वा दिति वा — भीमो भीमसेनः, अर्जुनः पार्थः, जनार्दनः कृष्णः, एते त्रयः, बाडबाकृतिं ब्राह्मणवेषं, और्वानलरूपमिति च गम्यते — आस्थाय धृत्वा, परवाहिनीः शत्रुसेनाः, गिळतः नाशयतः, परा उत्कृष्टाः, वाहिनी नदी, गिळतः स्वान्तर्गताः कुर्वत इति च — तस्य मागधस्य समुद्रस्येति च — ग्रसनाय मारणाय, शोषणाय च, अभ्ययुः तं प्रति ययु रित्यर्थः॥ १०५

ग ॥ उपगम्य जरासन्ध मशनोद्युक्त मित्थ मतिथय इव ननाधुः ॥ १०६

उपगम्येति ॥ उपगम्य समीपं गत्वा, अशनोद्युक्तं अशनं भक्षणं, तत्रोद्युक्तं उद्योगं कुर्वाणं, अन्न मत्तु मुद्युञ्जन्त मित्यर्थः । अतिथय इव नतु वस्तुत इति भावः — इत्थं वक्ष्यमाण-विधया, ननाधुः याचितवन्तः ॥ १०६

श्लो ॥ जराकलितगात्रं त्वां दुर्गता मार्गणा वयम्
सम्प्राप्ता निर्वृति स्स्या न्नो जीवनग्रहणादपि ॥ १०७

जरेति ॥ जराकलितगात्रं जरया तन्नाम्न्या पिशाच्या, आकलितगात्रं सङ्घटितदेहं, लोकोपकारार्थमिति भावः — त्वां दुर्गताः दरिद्राः, अत एव मार्गणा याचकाः, वयं सम्प्राप्ता स्समागताः, बहु दातव्यमिति भीति र्मास्त्वित्याह— नः अस्माकं जीवनग्रहणा दुदकपानादपि, निर्वृति स्सुखं, स्यात् — किमुत यत्किञ्चि दन्नादिनेति भावः — यद्वा जीव न्त्यनेनेति जीवन मन्नं, तस्य ग्रहणा दशनादपि निर्वृति स्स्यात् । यत्किञ्चिदन्नदानेनै वास्माकं तृप्ति र्नतु धनादि-नेति भावः । व्यङ्ग्यार्थस्तु—जरया जरसा, आकलितगात्रं शिथिलीकृततनुं, त्वां दुर्गता दुष्टबुद्धय स्सन्तो, मार्गणा याचका, वयं सम्प्राप्ताः । दुर्गतत्वमे वाह—नः जीवनग्रहणात् त्वत्प्राणग्रहणा न्निर्वृति स्स्यादिति काकुः । त्वया प्राणेषु दत्तेष्वपि परितुष्टि र्न स्यादे वेत्यर्थः । १०७

ग ॥ एवं सकपटं ब्रुवाणा नेता न्कलहलालसा नुपलभ्य मागधः प्रत्यवादीत् ॥

एवमिति ॥ एवं सकपटं सव्याजं, ब्रुवाणा नेतान् भीमादीन् , कलहलालसान् युद्धा-सक्ता, नुपलभ्य विदित्वा, मागधः जरासन्धः, पत्यवादीत् प्रत्युवाच ॥ १०८

श्लो ॥ के यूय मर्जुनदशाननभिक्षुभङ्ग्या
वामार्थिनः कपटभूसुरभावभाजः
आत्मप्रकाशविरहा त्परपुंसि वामा
चाराश्रिता न किमु भीरव एव यूयम् ॥ १०९

क इति ॥ अर्जुनदशाननभिक्षुभङ्ग्या अर्जुनदशाननयो रेव भिक्ष्वो र्भङ्ग्या रीत्या, अर्जुनसन्यासिन्यायेन रावणसन्यासिन्यायेन चेत्यर्थः । कपटभूसुरभावभाजः मायाब्राह्मणत्ववन्तः, यथा मायया अर्जुनो दशानन श्च भिक्षुभूत स्तथा मायया यूयमपि भूसुरभूता इत्यर्थः — तत्र हेतु माह वामार्थिन इति — वामं प्रतिकूलं यथा तथा, अर्थयन्ति याचन्ते इति तथोक्ताः — अभिमततिरोधानेन अन्यवस्तुयाचका इत्यर्थः । अन्यत्र - वामां स्त्रिय मर्थयन्तीति वामार्थिनः; सुभद्रासीतारूपस्त्रीहरणकामा इत्यर्थः । यूयं के किन्नामान ? इत्यर्थः — अयं च प्रयासो विफल इत्याह — परपुंसि शत्रुपुरुषे, आत्मप्रकाशविरहात् अह मीदृश इति स्वस्वरूपकथना-भावात्, वामाचाराश्रिताः वक्रशीलाः, यूयं भीरवः भयशीलाः, नैव किमु ? भयशीला एवेत्यर्थः — नहि स्वयं भीतस्य परान् भीषयितुं युक्तमिति भावः । अन्यत्र — परपुंसि अपरिचित-पुरुषे, आत्मप्रकाशविरहात् शरीरप्रकाशनाभावाद्धेतोः, वामानां स्त्रीणा, माचारो लज्जाभिनयादिः, त माश्रिताः यूयमेव भीरवो न किमु ? स्त्रिय एवेत्यर्थः । अर्जुनदशाननयोः पुरुषत्वेन कपटा त्परनारीहरणेच्छा युक्ता — भवतां तु स्वतः स्त्रीणा मिद मयुक्त मित्यर्थः — अर्जुनरावणयो रिव वामार्थित्वं युष्माक मस्तीत्येत द्युक्तमेव — वामाचाराश्रयणं तु न युक्तम् ; तयोः पुरुषाचारस्यै वाश्रयणादिति भावः — वास्तवार्थस्तु — हे अर्जुन दश इन्द्रियाणि आननानि यस्य त द्दशाननं मनः, तथा चोक्तं वेदान्तदेशिकैः — 'दर्पोदग्रदशेन्द्रियाननमनोनक्तञ्चरा-धिष्ठिते' इति । तेन भिक्षु स्सन्न्यासी, मनसा सन्न्यस्तवा नित्यर्थः —तस्य भङ्ग्या मनस्सन्न्या-सिव दित्यर्थः । अवामार्थिनः ऋजुप्रार्थनाः अन्नमात्रस्यैव प्रार्थनादिति भावः — यद्वा वामं प्रतिकूलं मां अर्थयन्ति युद्धाय याचन्तीति वामार्थिनः — मनसा सर्वं सन्न्यस्तवद्भिरपि भवद्भिः साधूनां रक्षणार्थं दुष्टोऽहं हन्तव्य एवेति भावः । कपटभूसुरभावभाजः न तु यूयं भूसुराः किन्तु नरनारायणवायुदेवावतारभूता इत्यर्थः — यूयं के विलक्षणा इत्यर्थः — आत्मप्रकाश-विरहात् आत्मनां युष्माकं प्रकाशस्य स्वरूपज्ञानस्य, विरहा दभावात्, मम युष्मत्तत्त्वाज्ञानादित्यर्थः सर्वे प्यात्मानः परमात्मनः कृष्ण स्यांशभूता इति आत्मस्वरूपज्ञानाभावादिति वा — परपुंसि शत्रुपुरुषे, परमात्मन्यपि कृष्णे, शत्रुत्वं धृतवति मयीत्यर्थः — वामाचाराश्रिताः मद्धननोद्योग-रूपप्रतिकूलशीलाः, यूयं भीरवः विरुद्धलक्षणया धीराः नकिमु धीरा एवेत्यर्थः । सैन्यसम्पत्ति मपहाय शत्रुपुरे प्रवेशादिति भावः ॥ १०९

**ग ॥ एव मशनिपातकल्पानल्पपरीवादजल्पित माकर्ण्य नितान्तरोषणो भगवा नवादीत् ॥** ११०

एवमिति ॥ एवं पूर्वोक्तविधं, अशनिपातकल्पं वज्रायुधपतनसमं, तद्व दतिकठोर मित्यर्थः अनल्प मधिकं, परिवादजल्पितं उपालम्भभाषणं, आकर्ण्य श्रुत्वा, नितान्तरोषणः अतिकोपनः, भगवान् कृष्णः, अवादीत् उवाच ॥ ११०

श्लो ॥ अहं भुवनयोनि स्स भीम श्चायं धनञ्जयः
तृणतालम्बिनो दग्धुं जाता स्त्रेताग्नितेजसः ॥ १११

अहमिति ॥ अहं भुवनं योनिः जगत्कारणं परमेश्वर इत्यर्थः – सः भीमः भीमसेनः, अयं च अयं तु, धनञ्जयः अर्जुनः, भवतीति शेषः – तृणतालम्बिनः धनुर्धारिणः, दग्धुं मारयितुं, त्रेताग्नितेजसः आहवनीयाद्यग्नित्रयतेजसः, वयमिति शेषः – जाताः उद्भूताः – व्यङ्ग्यार्थस्तु–अहं भुवनयोनिः कृपीटयोनिः 'अग्ने राप' इति श्रुतेः; अग्नि रित्यर्थः – स चाय मित्युभयो र्निर्देशः । सच अयं चेत्येता वुभा वित्यर्थः – भीमः भीषणः, धनञ्जयः वह्निः, 'वीतिहोत्रो धनञ्जय' इति 'कृपीटयोनि र्ज्वलन' इति चामरः – भीषणज्वलनावित्यर्थः । त्रेताग्नितेजसः त्रेताग्न्यंशा वयं त्रयं तृणतालम्बिनः तृणभाववतः, घासान् इत्यर्थः – दग्धुं भस्मीकर्तुं, जाताः अनेन अग्नितुल्याना मस्माकं तृणप्रायो भवानिति भावः व्यज्यते ॥ १११

ग ॥ एत दाकर्ण्य सहस्तास्फालनं विहस्य मागधः प्रत्यवादीत् ॥ ११२

एतदिति ॥ मागधः एत त्कृष्णवचन, माकर्ण्य सहस्तास्फालनं हस्तताडनसहितं यथा तथा विहस्य हासं कृत्वा, प्रत्यवादीत् ॥ ११२

श्लो ॥ आस्तां जातु न दारकद्वय मिदं पुंसा परेणार्दितं
युक्तं वायुसखो भवानिति रिपुप्रध्वंसनोद्यद्यशाः
वारान् षट्त्रिगुणान् हरे ! युधि मम प्रभ्रश्यत स्ते बला
दाशालङ्घनजाङ्घिकत्व मपरः को वाऽनुकर्तुं क्षमः ? ॥ ११३

आस्तामिति ॥ परेण पुंसा शत्रुपुरुषेण, जातु कदाचिदपि, नार्दितं अबाधितं, इदं दारकद्वयं भीमार्जुनाख्यं बालकयुगळं, आस्तां तिष्ठतु । नानयोः प्रशंसा अत्र कर्तु मुचितेत्यर्थः । यद्वा–इदं दारकद्वयं परेण पुंसा कदाचि दर्दितं न न भवति; युद्धकथाऽनभिज्ञ मित्यर्थः; अतः आस्ता मित्यन्वयः – रिपुप्रध्वंसनोद्यद्यशाः शत्रुनाशनजन्यकीर्ति र्भवान्, वायुसखः अग्निरिति यत् त द्युक्तमेव – अहं भुवनयोनिरिति श्लोकेन भवता युष्माकं त्रयाणामपि य दग्नित्वं प्रतिपादितं त न्न तयो रस्ति – बालत्वेन निष्प्रभत्वात् – त्वयि तु अग्नित्व मस्त्येव शत्रु विध्वंसकत्वा दित्यर्थः । व्यङ्ग्यार्थस्तु – रिपुप्रध्वंसनोद्यद्यशा इत्यत्र विपरीतलक्षणया शत्रुभि र्जितत्वेन अकीर्तिशालीत्यर्थः । भवान् वायुसखः वायुतुल्यः – तद्वत्पलायनदक्ष इत्यर्थः । इति युक्तमेव – इदमेव वायुसखत्वं विशदयति । वारानिति – हे हरे कृष्ण ! कपे इति च व्यज्यते – त्रिगुणान् त्रयो गुणा आवृत्तयः, येषां तान् षट् अष्टादशवारान् अष्टादशकृत्व इत्यर्थः – मम युधि युद्धे, बला त्सामर्थ्या, त्प्रभ्रश्यतः पलायमानस्य, यद्वा – युधि मम बला त्प्रभ्रश्यतः धैर्यभ्रंशं प्राप्तस्येति वा – ते तव, आशालङ्घनजाङ्घिकत्वं दिगाक्रमणे जङ्घालत्वं अतिवेगेन

दिशा माक्रमण मित्यर्थः । अपरः त्वदन्यः, को वा पुमा, ननुकर्तुं अनुगन्तुं, क्षम श्शक्तः ? न कोऽपीत्यर्थः । अत्र च वायुवेगतुल्यवेग इति स्तुतिः — पलायनदक्ष इति निन्दा । अत एव व्याजतुल्यालङ्कारः ॥ ११३

ग ॥ एवं व्याजस्तुतिभङ्गी मङ्गीकुर्वाणे भगवा नवादीत् ॥ ११४

एवमिति ॥ एव मित्थं, व्याजस्तुतिभङ्गीं व्याजस्तुतिरीति, मङ्गीकुर्वाणे स्वीकृतवति सति, मागधे इति शेषः — भगवान् अवादीत् उवाच ॥ ११४

श्लो ॥ सकलप्रभुस्तुतिवचोविषयो ननु मागधो भवसि पूर्णगुणः
वचनीय एव तव वाग्विभवो कथ मन्यथा स्तवनरीति रियम् ॥ ११५

सकलेति ॥ ननु अयीति प्रश्ने, पूर्णगुणः सम्पूर्णगुणः, अत एव सकलप्रभुस्तुतिवचोविषयः सकलप्रभूणां सर्वभूपानां, स्तुतिवचसां स्तोत्रवाक्यानां, विषयः गोचरः, सर्वैरपि नृपतिभिःस्तूयमान इत्यर्थः— मागधः जरासन्धः, भवसि असि—सिद्धस्य मागधत्वस्य पुन र्विधानात् विध्यलङ्कारः। 'सिद्धस्यैव विधानं य त्ता माहु र्विध्यलङ्कृति' मिति लक्षणात् — अनेन च शौर्यौदार्यादीना मतिप्रसिद्धि र्व्यज्यते — तव वाग्विभवः वचोवैखरी, वचनीयः अधीन एव; वश्यवा ग्भवसीत्यर्थः । 'गर्ह्या धेनौ तु वक्तव्या' वित्यमरः । अन्यथा वश्यवाक्त्वाभावे इय मतिचतुरा स्तवनरीतिः स्तुतिप्रक्रिया, कथं स्यादिति शेषः — महाकविविषयत्वा दीदृशव्याजस्तुतिप्रक्रियाया इति भावः । अत्र वाग्विभवो कथमिति पाठस्तु प्रामादिकः । वाग्विभवः कथमिति पठनीयः — अः कःपयोः प्राप्तेः — निन्दार्थस्तु — सकलप्रभूणामिति — कर्मणि षष्ठी — स्तुतिवचसां विषयः स्तुतिपाठक इत्यर्थः — अत एव पूर्णगुणः पूर्णाः हृदि नित्यसन्निहिताः, गुणाः स्तोतव्यराज—सम्बन्धिनः यस्य सः मागधः वन्दी, भवसि — अतएव तव वाग्विभवः वचनीयः निन्द्यः भवतीति शेषः — क्वचि त्पुरुषाधमस्तुतिफलकत्वात् — त्व मिन्द्र स्त्वं चन्द्र इत्यादौ । तथा क्वचि त्साधुनिन्दाफलकत्वात् त्वत्तो भियेव शिवो जाया मालिङ्गतीत्यादौ इति भावः — अन्यथा कथ मिय मीदृशी स्तवनरीतिः ॥ ११५

ग ॥ मागधोऽप्यनेन प्रशंसाभासेन दूयमानमानसः पुन रवादीत् ॥ ११६

मागध इति ॥ जरासन्ध श्च, अनेन श्रीकृष्णोक्तेन, प्रशंसाभासेन प्रशंसेव आपाततो भासते इति प्रशंसाभासः तेन, अविचारतः स्तुतिव द्भासमानेनेत्यर्थः — दूयमानमानसः खिन्नहृदय स्सन्, पुन र्भूयः, अवादीत् जगाद ॥ ११६

श्लो ॥ या मार्गणापातभयातुराणां । स्तुतिः प्रणीता रसिकैकवेद्या
सन्मागधे नास्य रहस्यवेत्ता । गोपाल इत्यद्भुत मुद्गतं नः ॥ ११७

येति ॥ सन्मागधेन श्रेष्ठवन्दिना, श्रेष्ठेन जरासन्धेनेति च – मयेति शेषः – रसिकैक-वेद्या सरसैकज्ञेया, मार्गणापातभयातुराणां याचकागमनभीरूणां, शरपतनभयार्तानां च – तत्सम्बन्धिनीत्यर्थः । या स्तुतिः स्तोत्रं, प्रणीता उक्ता, गोपालः गोपः, कृष्ण श्च, अस्य स्तवस्य रहस्यस्य, वेत्ता तत्त्वज्ञः, अभवदिति शेषः – इति हेतोः नः अस्माक, मदद्भुतं विस्मयः, उद्गतं जातं – लुब्धा नधीशं श्च प्रभू नुद्दिश्य कुशलेन वन्दिना कृतायाः स्तुतेः रहस्यं कवयो जानन्तु नाम; मूर्खो गोपस्तु न जानात्येव – इति स्थिते, गोपस्यैव तत्स्तुतिरहस्यज्ञान मासी दित्येत दत्यद्भुत मित्यर्थः । मागधस्य मम स्तुतिकर्तृत्व मुचितमेव – गोपस्य तव तद्रहस्यज्ञत्वं तु विरुद्धमिति निष्कृष्टार्थः । एतेन शरपतनभीरुः गोप स्त्वं न सार्वभौमः । त्वां स्तोतुं सार्वभौमोऽहं न वन्दी इति भावो व्यज्यते ॥ ११७

**ग ॥ एव मुत्तरोत्तरशुभया चतुरोक्तिप्रत्युक्तिकया कश्चित्काल माभाष्य कलहलालसा वयमिति स्वाशयनिवेदिन स्ता नेता नित्थं मगधाधिपति रभिदधे ॥**

एवमिति ॥ एव मुक्तरीत्या, उत्तरोत्तरशुभया उत्तरोत्तरप्रशस्तया, पूर्वपूर्वापेक्षया उत्तरोत्तरं प्रशस्त मित्यर्थः – चतुरोक्तिप्रत्युक्तिकया चतुरया निपुणया, उक्तिप्रत्युक्तिकया उक्तयः वचनानि, प्रत्युक्तयः प्रतिवचनानि, तासां समूह उक्तिप्रत्युक्तिका, तया – वचन-प्रतिवचनपरम्परयेत्यर्थः । कञ्चित्कालं कियत्समयं, आभाष्य भणित्वा, वयं कलहलालसाः युद्धासक्ताः, भवाम इति शेषः । नतु पुन रुक्तिप्रत्युक्तिसरसा इत्यर्थः – इत्येवं स्वाशयनिवेदिनः स्वाभिप्रायप्रकटकान् ता नेतान् भीमादी न्प्रति; इत्थं वक्ष्यमाणरीत्या, मगधाधिपति र्जरासन्धः, अभिदधे उवाच ॥ ११८

**श्लो ॥ न कान्दिशीकस्य मुहु स्तवास्तु । त्रपा क्षमं नाक्षमबाधनं नः**
**धनञ्जय स्तिष्ठतु दुग्धकण्ठो । भीमेन भूया त्कविविभ्रमो नः ॥ ११९**

नेति ॥ मुहु र्बहुवारान् , कान्दिशीकस्य भया त्पलायितस्य, 'कान्दिशीको भयद्रुत' इत्यमरः । तव कृष्णस्येत्यर्थः – त्रपा लज्जा, नास्तु माभूत् – लज्जायां सत्यां एकदा पलायि-तस्य पुनः पलायनप्राप्ति र्नस्यात् । पुनस्तेन युद्धस्यै वानारभ्यमाणत्वा दिति भावः – नः अस्माकं, प्रभूतवीर्याणामित्यर्थः – अक्षमबाधनं अशक्तपीडनं, न क्षमं न युक्तं, सिंहस्य मृगाणा-मिवेति भावः – तव लज्जाभावेऽपि मम लज्जा युक्तेत्यर्थः – दुग्धकण्ठः क्षीरगळः, शिशु रित्यर्थः – धनञ्जयः अर्जुनः, तिष्ठतु आस्ताम् – शिशुत्वा त्स न युद्धार्ह इत्यर्थः – नः अस्माकं भीमेन सह कविविभ्रमः कलहविलासः, 'कलहेऽन्त्ययुगे कवि' रिति वैजयन्ती । भूयात् भवतु – विभ्रम इत्यनेन भीमेनसह कलहोऽपि मम खेलनतुल्य इति तत्राप्यनादरो व्यज्यते । वास्तवार्थस्तु – कान्दिशीको न भवतीति न कान्दिशीकः, तस्य युद्धे क्वापि भयरहितस्येत्यर्थः – सर्वशक्तित्वा दिति भावः – तव मुहुः अतिशयेन, त्रपा अस्तु । सर्वेश्वर

स्सर्वशक्ति रहं कथं तुच्छेन मागधेन युध्येयमिति । त्वं लज्जित एव भवेरित्यर्थः – नः अस्माकं जीवाना मित्यर्थः – अक्षमबाधनं न विद्यन्ते क्षमा शक्ता यस्मात्सः अक्षम स्सर्वशक्ति र्भगवान् तत्कृतं बाधनं, न क्षमं न युक्तं– हे परमेश्वर ! त्वत्कर्तृकबाधनं सोढुं के वय मित्यर्थः । एतेन प्रबलेन त्वया सह विरोधो न ममोचित इति सिद्धम् – अथ दुर्बलेन धनञ्जयेनापि युद्ध मनुचित मित्याह – दुग्धकण्ठः धनञ्जय स्तिष्ठतु इति – किन्तु न प्रबलः नापि दुर्बलः मत्समो भीम एवेत्याह भीमेनेति ॥ ११९

**ग ॥ एव मभिधाय वृकोदराय गदां प्रदाय स्वयमपि गदा मन्यां बिभ्राण स्सकौतुक मुत्खातिनी भूमि रिति नगरपरिसरमेव समीकभुवं मन्वानो जरासन्ध स्तै स्सह नगरा न्निरगात् ॥** १२०

एवमिति ॥ एव मभिधाय उक्त्वा, वृकोदराय भीमाय, गदां आयुधविशेषं, प्रदाय दत्वा, ब्राह्मणवेषेण निरायुधीभूय गतत्वादिति भावः । स्वयमपि अन्यां गदां बिभ्राणः धरन् सन्, जरासन्धः भूमिः इयं भूः, उत्खातिनी निम्नोन्नतस्थलवती, 'उत्खातः प्रतिबन्धे स्या दुत्खातं विषमस्थले' इति निघण्टुसारे । इति हेतोः नगरपरिसरं पत्तनप्रान्तमेव, समीकभुवं युद्धभूमिं, मन्वानः चिन्तयन् सन्, तै र्भीमादिभि स्सह, नगरा त्पुरात्, निरगात् निर्ययौ ॥

**ग ॥ तत्र च ता वेता वामयाविनाविव गदापातकदर्थितशरीरौ पिशुनाविव रन्ध्रान्वेषिणौ शिवाभेदभाजाविव क्ष्वेळानुबद्धकण्ठौ सुभद्राचित्राङ्गदाशयाविव परस्पर-विजयाकाङ्क्षिणौ चतुर्मुखभुजास्तम्भाविव सुरसुन्दरीलोभनीयं कमपि विग्रह मपूर्वं मतनुताम् ॥** १२१

तत्रेति ॥ तत्र च युद्धप्रदेशे, आमयाविनाविव आमयो रोगः, तद्युक्तौ इव, गदापात-कदर्थितशरीरौ गदायाः पातेन पतनेन हेतुना, गदस्य रोगस्य, आसमन्ता त्पातेनेति च – कदर्थितं व्रणितं, तुच्छीकृतं च – शरीरं देहो, ययो स्तौ, पिशुनौ सूचकाविव, रन्ध्रान्वेषिणौ अवकाशगवेषिणौ, छिद्रान्वेषिणाविति च – शिवाभेदभाजाविव साम्बाद्वैतशालिनाविव, क्ष्वेळानुबद्धकण्ठौ गरळव्याप्तकण्ठौ, सिंहनादबद्धकण्ठाविति च 'क्ष्वेळा तु सिंहनाद स्स्या' दित्यमरः । सुभद्राचित्राङ्गदयोः पार्थजाययोः, आशयाविव मनसी इव, परस्परं अन्योन्यं, विजयं जय, मर्जुनं च, आकाङ्क्षिणौ इति तथोक्तौ, परस्परस्य अन्योन्यस्येति कर्मणि षष्ठीवा– त महं जयेयमिति अन्यतराभिभव मन्यतर आशास्ते इत्यर्थः – ता वेतौ भीममागधौ चतुर्मुखभुजास्तम्भौ ब्रह्मणो बाहुदण्डाविव, स्रष्टृत्वा द्ब्रह्मण इति भावः – सुरसुन्दरीलोभनीयं देवतास्त्रीभि रप्याशास्यं, नूतनपतिलाभादिति भावः – अन्यत्र सौन्दर्यातिरेकादिति भावः – अपूर्वं अद्भुतमित्यर्थः – कम प्यनिर्वाच्यं विग्रहं कलहं, शरीरं च – अतनुतां चक्रतुः, सृष्टवन्ताविति च – श्लिष्टसाधर्म्योपमालङ्काराः ॥ १२१

श्लो ॥ अवर्धत ततो भीमः पातयन् मगधाधिपम्
स्थाने वृकोदरोत्कर्ष स्तदुन्मेषविनाशनात् ॥ १२२

अवर्धतेति॥ ततः युद्धप्रवृत्त्यनन्तरं, मगधाधिपं जरासन्धं, पातयन् भ्रंशयन् सन्, अवधत वृधिं प्राप, जहर्षेत्यर्थः। तदुन्मेषविनाशनात् तस्य जरासन्धस्य, उन्मेषो विजृम्भणं, तस्य विनाशनात् त्वया द्धेतोः, वृकोदरोत्कर्षः भीमोत्कर्षः, स्थाने युक्तः – शत्रुं नाशयित्वा जयश्रीसमलङ्कृतत्वादिति भावः – व्यङ्ग्यार्थस्तु – उन्मदो मेषः उन्मेषः, स चासा वुन्मेषः तदुन्मेषः, तस्य विनाशा द्भक्षणा द्धेतोः, उन्नत मजं भक्षयित्वेत्यर्थः। वृकोदरस्य वृकाख्यमुखजठरस्य, उन्मेषः स्थौल्यं, स्थाने युक्तम् – मेषस्यान्तःप्रवेशेन जठरस्य स्थौल्यं युक्तमित्यर्थः। एतेन मेषं भक्षयित्वा वृक इव जरासन्धं मारयित्वा भीमो जहर्षेत्युपमा व्यज्यते ॥ १२२

श्लो ॥ जरासन्धात्यये जाते मन्दे च परतेजसि
सम्प्राप्तो वातभूदोषोत्कर्षः केन निवार्यताम् ॥ १२३

जरासन्धेति॥ जरासन्धात्यये जरासन्धनाशे जाते सति, जरासन्धे मृते सतीत्यर्थः – परतेजसि परेषां जरासन्धानुयायिनां शत्रूणां, तेजसि पराक्रमे, मन्दे स्वल्पे च सति, जरासन्धनाशादेवेति भावः। सम्प्राप्तः सिद्धः, वातभूदोषोत्कर्षः वाता द्वायो र्भवतीति वातभूः भीमः, तस्य दोषाणां बाहूना, मुत्कर्षः प्रशंसा, केन पुंसा निवार्यतां वार्यतां; न केनापीत्यर्थः – यद्वा-वातभूदोषा सम्प्राप्त उत्कर्षः केन वार्यता मित्यन्वयः। 'दो र्दोषा च भुजो बाहु' रिति धनञ्जयः। व्यङ्ग्यार्थस्तु – जरासन्धात्यये जरायाः वार्धक्यस्य सन्धात्यये मर्यादातिक्रमे जाते, 'सन्धा सन्धानसीमयो' रित्यमरः। जराया मभिवृद्धायां सत्यामित्यर्थः। परतेजसि परे उत्कृष्टे, तेजसि अग्नौ, जठराग्नावित्यर्थः। 'अहं वैश्वानरो भूत्वा प्राणिनां देह माश्रितः, प्राणापानसमायुक्तः पचा म्यन्नं चतुर्विध' मिति गीतावचना द्भगवदवतारभूतत्वेन जठराग्ने रुत्कृष्टत्व मिति भावः – मन्दे च सति वृद्ध स्याग्निमान्द्यं प्रसिद्धम् – सम्प्राप्तः वातभूदोषोत्कर्षः वातजन्यशरीरकम्पादिदोषसञ्चयः, केन निवार्यतां अनुल्लङ्घ्यो विधि रिति भावः॥ १२३

ग ॥ तदनु यदुनन्दनः फल्गुनेन सह वृकोदर मालिङ्ग्य जरासन्धात्मजं सहदेव मभिषिच्य तेन बन्दीकृता नशेषानपि भूभुजः कारागारा द्विमोच्य तत्तन्नृपासनेषु यथापुरं प्रतिष्ठाप्य परिपूर्णमनोरथो हरिप्रस्थ मगमत् ॥ १२४

तदन्विति॥ तदनु जरासन्धनाशनानन्तरं, फल्गुनेन सह अर्जुनेन समं, यदुनन्दनः कृष्णः, वृकोदरं भीम, मालिङ्ग्य हर्षातिरेकादिति भावः – कृष्णार्जुना वुभावपि भीम मालिङ्ग्येत्यर्थः। जरासन्धात्मजं जरासन्धसुतं, सहदेवं अभिषिच्य जरासन्धस्थाने अभिषिक्तं कृत्वेत्यर्थः – तेन जरासन्धेन बन्दीकृतान् कारागारे निवेशितान्, अशेषान् सर्वान्,

भूभुजोऽपि राज्ञश्च, कारागारात् विमोच्य मोचयित्वा, तत्तन्नृपासनेषु स्वस्ववंशपरम्परासङ्क्रान्तराजासनेषु, यथापुरं पूर्ववत्, जरासन्धनिर्बन्धा त्पूर्वकाल इवेत्यर्थः – प्रतिष्ठाप्य स्थापयित्वा, परिपूर्णमनोरथः सम्पूर्णकामः, कृतकृत्यत्वादिति भावः – सन् हरिप्रस्थ मिन्द्रप्रस्थपुर, मगम ययौ ॥ १२४

**श्लो ॥ अथ धर्मात्मजं नत्वा भीमार्जुनजनार्दनाः**
**न्यवेदयन् जरासन्धवध मापादमस्तकम् ॥ १२५**

अथेति ॥ अथ इन्द्रप्रस्थप्राप्त्यनन्तरं, भीमार्जुनजनार्दनाः धर्मात्मजं धर्मराजं, नत्वा प्रणिपत्य, ज्येष्ठत्वात् – कृष्णापेक्षया वयसा वृद्धत्वाच्चेति भावः – जरासन्धवधं जरासन्धनाशं, आपादमस्तकं आमूलचूडं, समग्र मित्यर्थः – न्यवेदयन् विज्ञापयामासुः ॥ १२५

**ग ॥ अजातशत्रुरपि तदीयवदनचन्द्रालोकवर्धिततया मध्येशरीर मपरिमाय नयनमार्गनिर्गळितेन प्रमोदसागरस्रोतसेव बाष्पधारया प्रणम्रा नेता नभिषिच्य तत्संसिक्ततयेव द्विगुणितानन्दं मधुसूदनं मधुर मिद मवादीत् ॥ १२६**

अजातेति ॥ अजातशत्रुरपि युधिष्ठिरश्च, तदीयानां भीमादिसम्बन्धिनां, वदनचन्द्राणां मुखचन्द्राणा, मालोकनेन आलोको दर्शनं स एव आलोकः प्रकाश इति श्लिष्टरूपकं – तेन वर्धिततया वृद्धिं प्रापितया, चन्द्रोदये समुद्रो वर्धते इति प्रसिद्धम् – मध्येशरीरं शरीरान्तः, अव्ययीभावसमासः । अपरिमाय अमात्वा, नयनमार्गा न्नेत्रपथा, न्निर्गळितेन निष्क्रान्तेन, प्रमोदसागरस्य आनन्दरूपसमुद्रस्य, स्रोतसा पूरणेव स्थितयेत्युत्प्रेक्षा । बाष्पधारया आनन्दाश्रुप्रवाहेण, प्रणम्रान् प्रणता, नेतान् भीमादीन् , अभिषिच्य सिक्त्वा, तत्संसिक्ततयेव तया आनन्दबाष्पधारया सम्यक् सिक्तत्वेनेवेति हेतूत्प्रेक्षा । द्विगुणितानन्दं द्वौ गुणौ आवृत्ती अस्य सञ्जाताविति द्विगुणितः – तारकादित्वा दितच् – आनन्दः प्रमोदः, यस्य तं शत्रुविजयलब्धस्यानन्दस्य आनन्दाश्रुधारासेकाद् द्वैगुण्यमिति भावः । मधुसूदनं कृष्णं प्रति, मधुरं स्वादु, इदं वक्ष्यमाणं वचनमिति शेषः – अवादीत् मधुरं यथातथेति वा – अत्र आनन्दाश्रुसेकेन आनन्दाश्रूणां द्वैगुण्यं सम्भावितमेव – आनन्दस्य द्वैगुण्योक्तिस्तु असम्भावितेति अतिशयोक्त्युत्थापितेय मुत्प्रेक्षा ॥ १२६

**श्लो ॥ गळ त्यहिभये कृष्णपक्षपाता न्मखार्थिनाम्**
**कथं सुमनसां न स्या त्सोमपानमहोत्सवः? ॥ १२७**

गळतीति ॥ अहिभये शत्रुभये, कृष्णपक्षपातात् श्रीकृष्णस्य तव स्नेहा, द्गळति निवर्तमाने सति, मखार्थिनां यागकाङ्क्षिणां, सुमनसां विदुषा, मस्माकमिति शेषः– सोमपान-

महोत्सवः सोमाख्यलताद्रवपानरूपमहोत्सवः, कथं न स्यात् स्यादेव – अखिलराजविजय-पूर्वकत्वेन राजसूययागस्य त्वदनुग्रहा ज्जरासन्धादिशत्रुविनाशनस्य जातत्वा दिदानीं याग स्सुकरोऽभूदिति भावः – व्यङ्ग्यार्थस्तु – कृष्णपक्षपातात् बहुळपक्षप्रवृत्तिहेतोः, अहिभये राहो स्सकाशा द्भये, गळति सति, शुक्लपक्षे एव राहो श्चन्द्रो भक्ष्यः न तु कृष्णपक्षे इति नियमा त्कृष्णपक्षे तेषां न भीति रिति भावः। मखार्थिनां अग्निहुताज्यरूपामृतपानलालसत्वा-दिति भावः । सुमनसां देवानां, सोमपानमहोत्सवः चन्द्रपानोत्सवः, कथं न स्यात् स्यादेवे-त्यर्थः । प्रथमां पिबते वह्नि रित्याद्यागमा त्कृष्णपक्षे प्रतिदिन मेकैककळाया देवै र्भक्ष्यमाणत्वा देव चन्द्रस्य तदानीं क्रमेण क्षय इति भावः ॥ १२७

**श्लो ॥ अनन्तगुणभारस्य सेवकानां तवापि नः**
**वृषग्रहैषिणां किन्नु सप्ततन्त्वाप्ति रद्भुता ॥ १२८**

अनन्तेति ॥ अनन्तगुणभारस्य आपादगुणसमूहवत, स्तव सेवकानां भृत्यानां, वृष-ग्रहैषिणां सुकृतसञ्चयनकाङ्क्षिणां, च–नः अस्माकं, सप्ततन्त्वाप्तिः यागप्राप्ति, रद्भुता विस्मयनीया, किन्नु किंवा नैवाद्भुतेत्यर्थः । नहि भगवद्भक्तानां दुर्लभं नामेति भावः – व्यङ्ग्यार्थस्तु – अनन्तगुणभारस्य अमिततन्तुजालवत, स्तव सेवकानां वृषग्रहैषिणां वृषभग्रह-काङ्क्षिणां, वृषभबन्धनार्थं सप्ततन्तून् देहीति याचमानाना मित्यर्थः । नः सप्ततन्त्वाप्तिः सप्तानां तन्तूनां प्राप्तिरद् भुता किन्नु – अनन्ततन्तुजालस्वाश्रितेभ्य स्सप्ततन्तू न्दिशतीति नाद्भुत मित्यर्थः ॥ १२८

**ग ॥ एव मुत्तमश्लोक मुपश्लोक्य तदनुज्ञया सम्भृताध्वरसम्भारो धर्मराजः क्रतुराज मुपाक्रमत ॥ १२९**

एवमिति ॥ एव मुक्तरीत्या, उत्तमश्लोकं पुण्यकीर्तिं, कृष्ण मित्यर्थः – उपश्लोक्य कीर्तयित्वा, तदनुज्ञया कृष्णानुग्रहेण, सम्भृताध्वरसम्भारः सम्पादितयागपरिकरः, धर्मराजः क्रतुराजं राजसूय, मुपाक्रमत प्रारब्धवान् ॥ १२९

तत्र च ॥ यागे

**श्लो ॥ नास न्नध्वरभूमयः पर मिह स्वाहारवै राश्रिता**
**श्शक्राद्या मरुतोऽपि सन्ततहविर्ग्रासोद्भवज्जामिताः**
**मन्त्रे प्रेष्यपदं न केवल मभूद् भूपे ष्वधीने ष्वपि**
**प्रायश्चित्तविपन्नकर्मसु परं शून्या दरिद्रे ष्वपि ॥ १३०**

नासन्निति ॥ इह अध्वरभूमयः परं यागदेशा एव, स्वाहारवैः स्वाहाशब्दैः, आश्रिताः व्याप्ताः, नासन् न बभूवुः – किन्तु सन्ततहविर्ग्रासोद्भवज्जामिताः सन्ततहविर्ग्रासैः निरन्तर-

हविर्भक्षणे, हेतुभूतैः, उद्भवन्ती उदिता जामिता अनादरो येषां ते शक्राद्याः इन्द्रादयः, मरुतोऽपि देवाश्च, स्वाहारवै राश्रिता इत्यस्यात्राप्यन्वयः – स्वाहारे स्वभोज्ये, अमृते इत्यर्थः – वैर मरुचि, माश्रिताः प्राप्ताः, आस न्नित्यस्याप्यत्रान्वयः – बभूवुः – 'अमृतं वै घृत ' मिति श्रुतेः । हवि राज्यामृतं, निरन्तर मशित्वा प्रसिद्धामृते अनादरा दरुचिं कृतवन्त इत्यर्थः – अत्र देवानां स्वाहारवैराश्रयणासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः । अध्वर-भूमयो देवाश्च स्वाहारवैराश्रयणासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः । अध्वरभूमयो देवाश्च स्वाहारवै राश्रिता इत्येकक्रियान्वया तुल्ययोगिता श्लेषोज्जीविता । देवानां स्वाहारवै राश्रयणं प्रति सन्ततहविर्ग्रासोद्भवज्जामितत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गं च – मन्त्रे केवलं मन्त्रे एव, प्रेष्यपदं प्रेष्यरूपशब्दः नाभूत् – किन्तु अधीनेषु बशवर्तिषु, भूपेष्वपि राजस्वपि, प्रेष्यपद मभू दित्यन्वयः । प्रेष्यपदं जलकाष्ठाद्याहर्तृत्वरूपं भृत्यत्वं – तुल्ययोगितालङ्कार एव – कर्मसु परः क्रियास्वेव, प्रायश्चित्तविपत् प्रायश्चित्तरूपा विपत्तिः न शून्या – किन्तु दरिद्रेष्वपि कृपणेष्वपि, प्रायश्चित्तविपत् प्रायो भूयशः, चित्तविपत् मनोविपत्तिः, दारिद्र्यकृतचिन्तेत्यर्थः – शून्या अभूदिति शेषः – अलङ्कारः पूर्ववदेव ॥ १३०

**ग ॥ समनन्तर मजातशत्रो रर्थिजनेन सम मिष्टिपरिपूर्तौ कीर्त्या सम ममरेषु परिपूरिताशेषु परिषदाराधनाय सम्भृतसम्भारे युधिष्ठिरे कतमः प्रथमपूजाभाजनमिति संशयाळौ सहदेव स्सकलसभाजनं वचन मिद मवादीत् ॥ १३१**

समनन्तर मिति ॥ ततः अजातशत्रोः युधिष्ठिरस्य, अर्थिजनेन याचकजनेन, सम मिष्टपूर्तौ सत्यां यागपरिसमाप्तौ, अभीष्टसिद्धौ च सत्यां – सहोक्ति रलङ्कारः । दक्षिणाभि र्यथा अर्थिना मिष्टं पूर्णं तथा धर्मराजस्यापि इष्टिः पूर्णेत्यर्थः – कीर्त्या समं यशसा सह, अमरेषु देवेषु, परिपूरिताशेषु सम्पूर्णकाङ्क्षेषु, प्राज्यामृतलाभादिति भावः । व्याप्तदिशेष्विति च – दिगन्तविश्रान्ता कीर्ति रस्योदयासी दित्यर्थः – सहोक्तिरेव – परिषदाराधनाय सभापूजार्थं, सम्भृतसम्भारे धृतगन्धकुसुमादिपूजापरिकरे, युधिष्ठिरे धर्मराजे, कतमः कः, प्रथमपूजाभाजनं अग्रपूजापात्रं, भवतीति शेषः– इति संशयाळौ एवं सन्दिहाने सति, सहदेवः नकुलानुजः, सकलसभाजनस्य सर्वसभ्यानां सभाजनभाजनभूतं आनन्दनयोग्यं, सर्वान् सभ्या नानन्दयितु मनुकूल मित्यर्थः – इदं वक्ष्यमाणं, वचनं वाक्य, मवादीत् उवाच ॥ १३१

**श्लो ॥ दत्तः पुरा क्रतुभुजा मधिप स्समीक्ष्य**
**गोत्रोद्धृतिं च्युतमद श्शरणं यमेव**
**भेजे तमेव पुरुषोत्तम मन्तरेण**
**पूज्यः परोऽस्तु कतमः क्रतुकारिणां नः ? १३२**

दृप्त इति ॥ पुरा पूर्वं, श्रीकृष्णस्य बाल्ये इत्यर्थः । दृप्तः गर्वितः, क्रतुभुजां मखाशिनां, देवाना मित्यर्थः – अधिपः प्रभुः, इन्द्र इत्यर्थः । गोत्रोद्धृतिं गोवर्धनोद्धारं, समीक्ष्य दृष्ट्वा, च्युतमदः भग्नगर्वस्सन्, यमेव शरणं रक्षकं, भेजे प्राप – क्रतुकारिणां यागकर्तॄणां, नः तमेव पुरुषोत्तमं कृष्ण, मन्तरेण विना, परः अन्यः कतमः कः, पुरुषः पूज्यः, अग्रे इति शेषः – अग्रपूजार्हः, अस्तु भवतु – न कोऽपि स्या दित्यर्थः – अत्र क्रतुकारिणामिति साभिप्रायं विशेषणं – क्रतुकारिणां क्रतुभुज स्सुरा उपास्याः; तेषां च प्रभु रिन्द्रः, तस्यापि शरणं कृष्ण इति हेतोः स एव प्रथमपूजार्ह इत्यर्थः । अत एवात्र सारालङ्कारः – 'उत्तरोत्तर मुत्कर्ष स्सार इत्यभिधीयते' इति लक्षणात् – वस्तुतस्तु क्रतुकारिणां नः हरिरेव पूज्य इत्युत्तरवाक्यार्थं प्रति क्रतुभुजा मधिपोऽपि यं शरणं भेजे इति पूर्ववाक्यार्थस्य हेतुत्वा त्काव्यलिङ्गम् – पुरुषोत्तम मित्यत्र परिकराङ्कुरालङ्कारः – परमेश्वरत्वा दयमेव पूज्य इत्यर्थसिद्धेः ॥ १३२

**ग ॥ एवं सोपपत्तिका ममृतधारामधुरां सहदेववाणी माकर्ण्य सर्वे सभास्तारा स्समुद्गतानन्दविस्तारा स्तारं युगप देव मवादिषुः ॥** १३३

एव मिति ॥ एव मुक्तविधां, सोपपत्तिकां सयुक्तिं, क्रतुकारिणां हरिरेव पूज्यः क्रतुभुगधिपेन्द्रशरणत्वादिति युक्तिः – अमृतधारामधुरां सुधाधारासम्पातव त्स्वाद्वीं, सहदेववाणीं सहदेवस्य वचनं, आकर्ण्य श्रुत्वा, सर्वे सकलाः, सभास्ताराः सभ्याः, 'सभासद स्सभास्तारा स्सभ्या स्सामाजिका श्च ते' इत्यमरः । समुद्गतः उत्पन्नः, आनन्दविस्तारः सन्तोषातिशयो, येषां ते तथोक्तास्सन्तः, युगप देककालं, तार मुच्चैः, एवं वक्ष्यमाणरीत्या, अवादिषुः ऊचुः ॥ १३३

**श्लो ॥ वर्धस्व साधु सहदेव ! पुनश्च साधु**
**न त्वं शिशु र्गुरु रुदारधियां बुधानाम्**
**नासत्यता तव भुवि प्रकटीकृताऽद्य**
**सत्योक्तिभिः कृतधिया मपि दुर्वचोभिः ॥** १३४

वर्धस्वेति ॥ हे सहदेव ! साधु योग्यं यथातथा, वर्धस्व वृद्धिं भज; पुन र्भूयश्च, साधु वर्धस्वेत्यन्वयः – आदराद् द्विराशीर्वादः – त्वं शिशुः बालः, न न भवसि, वयसा बालत्वेऽपि ज्ञानेन न बाल इत्यर्थः । तर्हि कोऽह मित्यत आह – उदारधियां निपुणबुद्धीनां, बुधानां विदुषामपि, गुरुः उपदेष्टा, ज्ञानेन वृद्ध इत्यर्थः – अद्य अधुना, कृतधियां शिक्षितबुद्धीनां, विदुषा मित्यर्थः – अपि दुर्वचोभिः वक्तु मशक्याभिः, पण्डिताना मप्यविषयभूताभि रित्यर्थः – सत्योक्तिभिः यथार्थभाषणैः, भुवि तव नासत्यता अनृतराहित्यं अश्वित्वं च–'नासत्या वश्विनौ दस्रा' वित्यमरः । नकुलसहदेवयो रश्विनीदेवांशत्वादिति भावः – प्रकटीकृता स्पष्टीकृता,

अभूदिति शेषः । तव नासत्यत्वादे वैतत्सत्योक्तिलाभ इत्यर्थः – अत्र बाले सहदेवे बालत्व मपह्नत्य गुरुत्वारोपणा त्साापह्नवरूपकालङ्कारः । किञ्च सहदेवे स्वतस्सिद्धस्य नासत्यत्वस्य सत्यवचोभिः प्रकटीकृतत्ववर्णना द्विध्यलङ्कारः – स च श्लेषोज्जीवितः ॥ १३४

**श्लो ॥ युधिष्ठिर स्तमें वार्थं परमार्थं विचिन्तयन्**
**आरराध हरिं गन्धकुसुमाभरणाम्बरैः ॥ १३५**

युधिष्ठिर इति ॥ युधिष्ठिरः तं सहदेवोक्त मर्थ मेव, परमार्थं यथार्थं, विचिन्तयन् मन्वानः सन्, गन्धकुसुमाभरणाम्बरैः चन्दनपुष्पभूषणवस्त्रैः, हरिं कृष्णं, आरराध प्रथमं पूजयामास ॥ १३५

**ग ॥ तदनु शिशुपालः कल्पान्तानल इव वनमालिप्रथमसपर्यापर्याकुलित-हृदय स्सक्रोध मुदतिष्ठत् – अवादीच्च ॥ १३६**

तदन्विति ॥ हरे रग्रपूजानन्तरं, वनमालिनः कृष्णस्य, प्रथमसपर्यया अग्रपूजया, पर्याकुलितं परितो व्याकुलितं, विक्षिप्त मित्यर्थः; हृदयं मनो, यस्य सः, अतएव कल्पान्तानल इव प्रळयाग्निवत् , जाज्वल्यमान इति शेषः । शिशुपालः सक्रोधं सरोषं, मुदतिष्ठत् आसना दुत्तस्थौ – अवादीच्च जगाद च ॥ १३६

**श्लो ॥ पुण्येषु स त्स्वहह ! राजऋषि ष्वमीषु**
**गोपालकः प्रथमपूजनपात्र मासीत् –**
**नैषा किलापचिति रस्य परं खलस्य**
**पूज्यार्हणव्यतिगमादपि यष्टु रेषा ॥ १३७**

पुण्येष्विति ॥ पुण्येषु पुण्य मेषा मस्तीति पुण्याः – आर्श आद्यच् – तेषु भव्यशालि ष्वित्यर्थः । अमीषु, राजऋषिषु राजानश्च ते ऋषयश्च राजऋषयः तेषु सत्सु, गोपालकः गोपः कृष्णः, प्रथमपूजनपात्रं अग्रपूजाभाजन, मासीत् – अहहेति विस्मयातिशये – खेदातिशये वा – राजऋषि ष्वित्यत्र ऋत्यक इति प्रकृतिभावः । एषा प्रथमपूजा, अस्य खलस्य परं अस्य दुष्टस्यैव सार्थ, मुपकृप्त रुक्मिणीरूपकन्यायाः बला दाहरणा त्कृष्णे दुष्टत्वबुद्धि श्शिशुपालस्येति बोध्यम् । अपचितिः क्षयो न भवति – किल प्रसिद्धौ । किन्तु पूज्यार्हणव्यति-गमात् पूज्यस्य अर्हणं पूजा, तस्य व्यतिगमात् व्यतिक्रमा द्धेतोः, पूज्य मपूज्य अपूज्यस्य पूजना दित्यर्थः । एषा गोपालकप्रथमपूजा, यष्टु र्यजमानस्य धर्मराजस्यापि, अपचितिः क्षयो भवतीति शेषः । गोपालकप्रथमपूजारूपापराधात् पूजितपूजकयो रुभयोरपि क्षय एव भवति – न त्वभिवृद्धि रित्यर्थः । अत्र अपचितिहेतौ पूजाया मपचितित्ववचना द्धेत्वलङ्कारः – 'हेतु-

हेतुमतो रैक्यं हेतुं केचि त्प्रचक्षत ' इति लक्षणात् । वास्तवार्थस्तु — पुण्येषु अमीषु राजसु शिशुपालादिषु, ऋषिषु नारदादिषु च सत्स्वपि गोपालकः गो भूदेव्याः स्वर्गस्य वा, गवां वेदवाचां वा, पालकः पतिः, परमात्मा श्रीकृष्णः, प्रथमपूजनपात्र मासीत् परमेश्वरत्वादिति भावः । गोपालक इति साभिप्रायविशेष्यनिर्देशा त्परिकराङ्कुरालङ्कारः । अहहे त्यानन्दातिशये — एषा पूजा अस्य खलस्य रलयोरभेदात् खरस्य उग्रस्य दुष्टेषु विषये इति भावः । यद्वा खानि इन्द्रियाणि, लाति आदत्ते, विषयीकरोतीति खलः — आत्मा — अथवा खानि इन्द्रियाणि, लुनाति छेदयति, तिरस्करोतीति खलः — अथोक्षज इत्यर्थः । तस्य कृष्णस्यैव अपचितिः पूजा न भवति — ' क्षयार्चयो रपचिति ' रित्यमरः । किन्तु पूज्यार्हणस्य व्यतिगमात् अतिगमा-भावात्, अनतिक्रान्ते रित्यर्थः । एषा यष्टुरपि अपचितिः पूजा भवति । अयं पूज्य इति पूज्यं निर्धार्य पूजकोऽपि लोकैः पूज्यत एव — बुद्धिमदग्रेसरत्वादिति भावः ॥ १३७

**ग ॥ एवं श्रुतिकटु पटुतरं रटन्त मेन मतिरोषणः पुरुषोत्तम स्सहसा सुदर्शनेन सलील मपास्तमस्तकं विदधे ॥ १३८**

एवमिति ॥ एव मुक्तविधया, श्रुतिकटु कर्णकठोरं यथा तथा, पटुतरं उच्चैः, रटन्तं सनिन्द मुपालम्भमानं, ' रट परिभाषणे ' इति धातुः — एनं शिशुपालं, अतिरोषणः अतिकोपनः, पुरुषोत्तमः कृष्णः, सहसा हठात्, सद्य एवेत्यर्थः । सुदर्शनेन चक्रायुधेन, सलीलं सविलासं यथा तथा, अपास्तमस्तकं छिन्नशिरसं, विदधे चक्रे — चक्रेण तस्य शिर श्छिच्छेदेत्यर्थः ॥ १३८

**श्लो ॥ सुदर्शनेनापि रिपू न्पिनष्टि । गदावलम्बि स्त्वयमेव भूत्वा**
**च्युतं रिपुं विग्रहतः करोति । मायाधवः केन स जेतु मर्हः ? ॥ १३९**

सुदर्शनेनेति॥ सः कृष्णः, सुदर्शनेनापि योग्यवीक्षणेनापि, सकरुणावलोकनेनापीत्यर्थः— चक्रेणेति च — रिपून् अरीन्, पिनष्टि नाशयति — विरोधाभासालङ्कारः । तथा स्वयं गदावलम्बी रोगधारी, कौमोदकीधारी च — भूत्वैव भूत्वापि, रिपुं शत्रुं, विग्रहतः शरीरात्, युद्धाच्च — च्युतं भ्रष्टं, करोति । अत्र एकत्र व्याध्यवलम्बनं, अन्यत्र शरीरत्याग इत्यसङ्गत्य-लङ्कारः । गदां धृत्वा युधि शत्रून् जयतीति परमार्थः — मायाः लक्ष्म्याः, धवः पतिः, मायायाः धवः, मायावीति च — स कृष्णः, केन पुंसा, जेतु मर्हः योग्यः जय्यः भवेदिति शेषः — न केनापीत्यर्थः — श्लेषालङ्कारः ॥ १३९

**ग ॥ तदनु निर्वर्तितावभृथ मजातशत्रुं पुरं प्रापय्य तत्प्रीतये कतिपयवासरान् सहमहिषीजनेन जनार्दनो हरिप्रस्थ मवतस्थे ॥ १४०**

तदन्विति ॥ तदनु ततः, शिशुपालविध्वंसनानन्तर मित्यर्थः — निर्वर्तितावभृथं कृतावभृथस्नानं, 'दीक्षान्ते कर्तव्यं स्नान मवभृथ' मित्युच्यते । अजातशत्रुं युधिष्ठिरं, पुरं नगरं, प्रापय्य गमयित्वा, तत्प्रीतये युधिष्ठिरप्रीत्यर्थं महिषीजनेन भार्यासङ्घेन, अष्टमहिषीभि रित्यर्थः — सह समं, जनार्दनः कृष्णः, कतिपयवासरान् कतिचिद्दिनानि — अत्यन्तसंयोगे द्वितीया — हरिप्रस्थं इन्द्रप्रस्थपुर, मवतस्थे अधितष्ठौ — अत्राप्यत्यन्तसंयोगे द्वितीया — तत्र उवासेत्यर्थः ॥

अथ ॥ पञ्चमविलासपरिसमाप्तिं कथयति यस्मिन्निति ॥

**श्लो ॥ यस्मिन् शङ्करदारसौरभजरीजृम्भत्कटाक्षच्छटा-**
**पाताः कल्पलतावितानसुमनोगुम्भप्रियम्भावुकाः**
**तस्यासौ नवकालिदासविदुषः काव्यामृते पञ्चम**
**श्चम्पूनामनि धीमतां कृतसमुल्लासो विलासोऽगमत् ॥**

यस्मिन्निति ॥ पञ्चानां पूरणः पञ्चमः तस्य पूरणे इत्यनुवृत्तौ — नान्तादसंख्यादे र्मट् ॥

इति श्रीहयवदनरदनरुचिसदनवदनफेनमधुरतररससमास्वादनित्यतृप्तस्य,
फणितरमापरिणयादिप्रबन्धस्य पुलिवल्ल रामसूरिकरुणासमासादितानवद्यशब्दविद्यस्य,
बेलङ्कोण्डोपनामक मोहनरायतनूभवस्य रामस्य कृतिषु
चम्पूभागवतव्याख्यायां, मन्दरसमाख्यायां

**प ञ्च मो वि ला सः ।**

श्रीहयग्रीवार्पण मस्तु ।



ॐ

श्रीहयवदनपरब्रह्मणे नमः

# श्रीचम्पूभागवतम्

## षष्ठो विलासः



श्लो ॥ निर्व्यूढं मयमायया पशुपते राराधित स्याज्ञया
सौभाख्यं नगरं सुरासुरगणै र्दुर्भेद्य मस्थावरम्
विष्व ग्द्वारवतीं रुरोध सहसा साल्व स्समासाद्य त
न्मत्वा रन्ध्र मुपस्थितं मुररिपो रासन्नतावैधुरीम् ॥ १

निर्व्यूढ मिति ॥ आराधितस्य साल्वेन तपसा तोषितस्य पशुपते श्शिवस्य, आज्ञया निदेशेन, मयमायया मयस्य असुरशिल्पिनः मायया, असाधारणशक्त्या, निर्व्यूढं निर्मितं, सुरासुरगणैः सुराणां देवाना, मसुराणां रक्षसां च, गणैः पूगैः, दुर्भेद्यं भेत्तु मशक्यं, अस्थावरं जङ्गमं, सौभाख्यं सौभनामकं, त त्प्रसिद्धं, नगर मासाद्य अधिष्ठित्य; यद्वा — आराधितस्य पशुपते राज्ञया मयमायया सुरासुरगणैः दुर्भेद्य मस्थावरं सौभाख्यं नगरं निर्व्यूढं आसीदिति शेषः । तत्सौभ मासाद्येति वाक्यभेदे नान्वयः । मध्येसमुद्रं वर्तमानाया द्वारकाया निरोध स्याशक्यत्वा त्सौभ मासाद्येत्युक्तं — साल्वः चैद्यसखः, असुरावतारभूतः कश्चन राजा — मुररिपोः कृष्णस्य, आसन्नतावैधुरीं सन्निहितत्वाभावमेव, रन्ध्रं छिद्रं, मवकाश मित्यर्थः — उपस्थितं प्राप्तं, मत्वा ज्ञात्वा, श्रीकृष्ण इदानी मिन्द्रप्रस्थपुरे वर्तते — अधुनैव मया यादवनाशनं कर्तव्यमिति आलोच्येत्यर्थः — अत्र मुररिपुसान्निध्याभावे रन्ध्रत्वारोपा द्रूपकालङ्कारः । सहसा सद्य एव, द्वारवतीं पुरीं, विष्व गभितः, रुरोध अरुणत् । अत्र भगवन्तं जेतु मशक्तः तत्पक्षीयान् बाधितुं साल्वः प्रवृत्त इति प्रत्यनीकालङ्कारः — 'प्रत्यनीकं बलवत श्शत्रोः पक्षे पराक्रम' इति लक्षणात् ॥ १

ग ॥ त मेनं विमानमिव गगनसञ्चारशीलं, कामुकमन इव सकलाशाजङ्घालंसौभ मधिशयानं, जलधरमिव शिलावर्ष मुपजनयन्तं, मायामिव रजसा तमसा च सकल जना नन्दीकुर्वाणं, कृपणमिव मार्गणा न्निरस्यन्तं साल्व मुपलभ्य नितान्तरोषणः प्रद्युम्न स्सहसा सहसाम्बादिभिः, केसरीव कन्दरान्तरा न्नगरान्तरा न्निरगात् ॥ २

तमिति ॥ विमानमिव देवयानमिव, गगनसञ्चारशीलं आकाशगमनस्वभावं, कामुकमन इव कामिचित्तमिव, सकलाशाजङ्घालं सकलाशासु दिशासु, जङ्घालं वेगयुक्तं, वेगेन सकलाः दिशः आक्रम दित्यर्थः – अन्यत्र सकलासु आशासु कामेषु जङ्घालमिति बहुविध-दुराश मित्यर्थः । सौभं नगर, मधिशयानं अधिष्ठितवन्तं, जलधरमिव मेघमिव, शिलावर्षं करकवर्षं, पाषाणपातं च, उपजनयन्तं उत्पादयन्तं, मायाबलादिति भावः । माया मविद्यामिव, रजसा रजोगुणेन, परागेण च; तमसा तमोगुणेन, अन्धकारेण च; सकलजनान् सर्वजनान्, अन्धीकुर्वाणं अनन्धा नन्धान् करोतीति अन्धीकुर्वाणः तं एकत्र चक्षुःप्रसारण, मन्यत्र ज्ञानप्रसारं च; निरोधयन्त मित्यर्थः । कृपणं लुब्धप्रभुमिव, मार्गणान् बाणान्, याचकांश्च, निरस्यन्तं क्षिपन्तं, निष्कासयन्तं च – त गेनं साल्व, मुपलभ्य ज्ञात्वा, दृष्ट्वेति वा – नितान्तरोषणः, अतिकोपनः, प्रद्युम्नः तस्यैव कृष्णाग्रपुत्रत्वादिति भावः – सहसा द्रुतं, साम्बादिभिस्सह साम्बः जाम्बवतीसुतः, स आदि र्येषान्तै स्समं, कन्दरान्तरात् गुहामध्या, त्केसरी सिंहइव, नगरान्तरात् पत्तनमध्या, न्निरगात् निर्ययौ ॥ २

श्लो ॥ ततः प्रववृते युद्धं साल्वप्रद्युम्न सेनयोः
तथापि समपद्यन्त त्यक्तसङ्ख्या स्तयो र्भटाः ॥ ३

तत इति ॥ प्रद्युम्ननिर्गमनानन्तरं, साल्वप्रद्युम्न सेनयोः – अल्पाच्तरत्वा त्साल्वस्य पूर्वनिपातः – साल्वसेनायाः प्रद्युम्नसेनाया श्चेत्यर्थः । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यते' इति न्यायात् । युद्धं सङ्गरं, प्रववृते प्रवृत्त मभूत् – तथापि युद्धे प्रवृत्तेऽपि, तयो स्सेनयो, र्भटाः योधाः, त्यक्तसङ्ख्याः त्यक्तयुद्धाः, निर्विचाराश्च; समपद्यन्त जाताः – 'एकत्वादौविचारे च सङ्ख्या सङ्ख्यं तु संयुगे' इति भास्करः । विरोधाभासालङ्कारः ॥ ३

तत्र च ॥ युद्धे ॥

श्लो ॥ मार्गे साल्वपुरस्कृतान् फलभृत श्छित्वा द्रुतं मार्गणा
नादा वादित भूरिलाभजमुदं प्रद्युम्नबाण स्ततः
आः कष्टं गुरुवंशजेन हि परप्राणप्रदानत्यजा
दौरात्म्यं विहितं मयेति शरधौ लज्जां मम ज्जाश्रितः ॥ ४

मार्गेइति ॥ प्रद्युम्न बाणः प्रद्युम्नप्रयुक्तश्शरः, साल्वपुरस्कृतान् साल्वेन पुरतः प्रयुक्तान्, फलभृतः लोहशङ्कुधारिणः, 'फल मिष्वग्रे सस्ये फलके जातीफलेधने पाले' इति भास्करः । मार्गणान् बाणान्, मार्गे पथि, मध्येमार्ग मित्यर्थः–छित्वा खण्डयित्वा, आदौ तावत् भूरिलाभ-जमुदं महालाभजन्यसन्तोष, मादित स्वीचकार । ततः अनन्तरं, गुरुवंशजेन स्थूलवेणुजन्येन, अत एव परप्राणप्रदानत्यजा परेषां शत्रूणां, प्राणप्रदानं प्राणच्छेदनं–'दो अवखण्डने' इतिधातो

लुट् – त स्यजा तत्त्यक्तवता, मया दौरात्म्यं दुष्टत्वं, कृतम् इति मत्वा, लज्जामाश्रितस्सन् इतिहेतो र्लज्जा माश्रित स्स त्रितिवा, त्रीडित इत्यर्थः – उत्प्रेक्षा व्यञ्जकाप्रयोगा द्गम्या। शरधौ तूणीरे ममज्ज लीनः यादृशेन साक्षा च्छत्रव एव च्छेत्तव्याः; ता न्विहाय तदीयबाणानां छेदन मयुक्तमिति लज्जयेव निषङ्गे ममज्जेत्यर्थः। अमोघत्वा त्प्रद्युम्नबाणः स्वाभिपत त्साल्वबाणा न्मध्येमार्गं छित्वा पुन स्तूणीरं प्रापेति निर्गळितार्थः। आः कष्टमिति सन्तापातिशये – हि निश्चये। अत्र अचेतनस्य प्रद्युम्नबाणस्य लज्जासम्बन्धाभावेऽपि तत्सम्बधोक्ते रतिशयोक्तिः। शरधौ लीन इत्यनेन यथा कश्चि दकृतकृत्यो लज्जया गुहादिषु लीयते तद्वदिति भावो व्यज्यते। मध्येमार्गं परबाणच्छेदनरूपं दुर्भरं कृत्यं कृत्वापि. परप्राणच्छेदनस्य अकृतत्वा त्प्रद्युम्नबाणो लज्जित इत्यनेन बाणस्य अत्यद्भुतं सामर्थ्यं व्यज्यते। व्यङ्ग्यार्थस्तु – प्रद्युम्नबाणः प्रकृष्टं द्युम्नं स्वर्णं यस्य सः प्रद्युम्नः – सचासौ बाणः बाणव त्परेषां हृदयशल्यायितः कश्चन पुरुषः, साल्वेन पुरस्कृतान् सम्भावितान्, अत एव फलभृतः सफलान्, सालवदत्तं वस्त्राभरणादिक मर्थजातं, धृतवत इत्यर्थः। मार्गणान् याचकान्, मार्गे छित्वा आदौ भूरिलाभजमुदं स्वर्गलाभजन्यमोदं आदित प्राप। ततः गुरुवंशजेन महाकुलोत्पन्नेन अत एव परप्राणप्रदानत्यजा परेषां प्राणरक्षणमकुर्वाणेन मया दौरात्म्यं चोरसाधारणं परहिंसनं कृतमिति लज्जां व्रीडा माश्रितः प्राप्तस्सन्, शरधौ समुद्रे, ममज्ज पपातेत्यर्थः। प्राणां स्तत्याजेति यावत्। यद्वा ममज्ज स्नातः। कुलीना हि प्रमादा दकृत्ये प्रवर्तमाना अपि पश्चात्तप्ताः प्रायश्चित्त मनुतिष्ठन्तीति भावः॥ ४

**ग॥ तदनु विदितोदन्तं हरिमपि हरिप्रस्था दागत मभ्यमित्रीण स्साल्व एव मभिदधे॥** ५

तदन्विति॥ ततः विदितोदन्तं विदितः ज्ञातः, उदन्तः साल्वयुद्धरूपवृत्तान्तः, येन तं अत एव हरिप्रस्था दिन्द्रप्रस्था दागतं हरिं कृष्णं अभ्यमित्रीणः शत्रो रभिमुखं गतः साल्वः एवं वक्ष्यमाणरीत्या अभिदधे जगाद – 'योगच्छ त्यलं विद्विषतः प्रति 'सोभ्यमित्र्योऽभ्यमित्रीयोऽ प्यभ्यमित्रीण इत्यपी' त्यमरः॥ ५

**ग॥ अये किमिय मनात्मवेदिता यदुकुलकळङ्कस्य कलहकातरस्यभवतः॥** ६

अये इति॥ अये इति सासूयं सम्बोधनम् – यदुकुलकळङ्कस्य यदुवंशकळङ्कस्य, यथा कळङ्क श्चन्द्रं दूषयति; तथा त्वमपि यदुवंशेऽवतीर्य तं दूषयसीत्यर्थः। वास्तवार्थस्तु – कळङ्कोऽस्यास्तीति कळङ्कः चन्द्रः – 'अर्श आद्यजन्तः' – यदुवंशस्य चन्द्र इत्यर्थः – एकदेशवर्तिरूपक मिदम्। यदुकुलपयःपारावारराकासुधाकर इति यावत् – तस्य कलहकातरस्य, कलहा द्भीरोः; कालयवनादिनिरोधसमये पलायितत्वादिति भावः। अन्यत्र कलहः

कलिः पाप- मित्यर्थः — तस्मा द्वीरोः वृषैकलालसस्येत्यर्थः — भवतः तव, इय मनात्मवेदिता, स्वबलानभिज्ञता — अन्यत्र आत्मवेदिनो न सन्ति यस्मा त्सः अनात्मवेदी ब्रह्मवित्तमः, तस्य भावः तत्ता — 'ब्रह्मविद् ब्रह्मैव भवती'ति श्रुतेः — ब्रह्मत्व मित्यर्थः । किं कुत इत्यर्थः — किमर्थेति वा — अन्यत्र अद्भुतेत्यर्थः ॥ ६

**श्लो ॥ युध्वा पलायितु मये किमु मागधोऽय**
**माचार्यकं किमपि मे युधि साल्वकस्य**
**सन्न्यास मर्हतितरां शरणं प्रयातः**
**कार्पण्यपात्र मसुसन्न्यसनं परस्य ॥** ७

युध्द्वेति ॥ अये कृष्ण ! युध्द्वा मया सह युद्धं कृत्वा, पलायिंतु पलायनं कर्तुं, अयं साल्वः मागधः जरासन्धः किमु ? नेत्यर्थः — यद्यहं जरासन्ध स्स्यां; तर्हि मया सह युध्द्वा त्वं पलायनं कुर्याः; नत्वहं जरासन्धः; किन्तु अतिप्रचण्डः साल्वः — अतस्तव पलायितुमपि मत्पुरतो नास्ति शक्ति रिति भावः । युधि युद्धे, साल्व एव साल्वकः, तस्य मे मम, किम प्यनिर्वचनीय माचार्यकं आचार्यस्य भावः कर्मवा आचार्यकं — 'मनोज्ञादे राकृतिगणत्वात् वुञ्' — अस्तीति शेषः । युद्धे अतिनिष्णातोऽह मित्यर्थः — तदेवाह — शरणं प्रयातः शरणागतः, अतएव कार्पण्यपात्रं दीनः, सन्न्यासं परित्याग, मर्हतितरां अतिशये नार्हति; शरणागतं जीवन्तमेव परित्यजामीत्यर्थः — परस्य अशरणागतस्य, असुसन्न्यसनं प्राणत्याग एव भवेदिति शेषः — पलायनंतु दुष्करमिति भावः — अत्र साल्वे मागधत्वप्रतिषेधस्य सिद्धस्यानुकीर्तना त्प्रतिषेधालङ्कारः । 'प्रतिषेधः प्रसिद्धस्य निषेध स्यानुकीर्तन' मिति लक्षणात् । एतेन च जरासन्धादपि साल्वस्य अतिक्रुद्धत्वं व्यज्यते । वास्तवार्थस्तु — अये ! युध्द्वा त्वया सह युध्द्वा, पलायिंतु अयं मागधः किमु ? अतिबलत्वा ज्जरासन्धस्य पलायने शक्ति रस्ति; मम तु न तत्रापीत्यर्थः — एतेन पलायनस्या प्यनर्होऽहं किं त्वया योद्धुं शक्तः ? अपितु न शक्त एवेति व्यज्यते । साल्वकस्य निन्दायां कप्रत्ययः — तुच्छसाल्वस्येत्यर्थः । मे मम, युधि किम प्याचार्यक मुपदेष्टृत्व मस्ति — अस्मिन् युद्धे त्वां प्रति मया किंञ्चि दुपदेष्टव्य मस्तीत्यर्थः । उपदेश मेवाह — अन्य त्सर्वं समानम् । यद्यहं शरणागत स्स्यां; तर्हि मां त्यज, नोचे ज्जहीत्यर्थः — व्यङ्ग्यार्थस्तु — शरणं गृहं, प्रयातः अनुज्झितगृह इत्यर्थः । अत एव कार्पण्यपात्रं विषयलोलः, सन्न्यास मर्हतितरां सन्न्यासाश्रमस्य मुख्याधिकारीत्यर्थः । परस्य गृहं त्यक्त्वा बनं गतस्य विरक्तस्येत्यर्थः । असुसन्न्यसनं सुसन्न्यासो नास्ति सन्न्यासार्हता नास्तीत्यर्थः — अत एव किम प्याचार्यकं मन्त्रव्याख्यानकौशलं, मे अस्तीत्यन्वयः — निष्कामस्यैव सन्न्यासो न तु सकामस्येति स्थिते तद्वैपरीत्येन कथना दिद मत्यद्भुतं मन्त्रकौशलमिति भावः ॥ ७

ग ॥ एवंवादिनं साल्वं भगवा नवादीत् – श्रुणु रे ! मूर्ख ! ८

एवमिति ॥ एव मुक्तरीत्या, वादिनं ब्रुवाणं, साल्वं भगवान् कृष्णः, अवादीत् प्रत्युवाच । रे मूर्ख बालिश ! श्रुणु वक्ष्यमाणं मद्वाक्य माकर्णयेत्यर्थः ॥ ८

श्लो ॥ भवादृक्चपलोन्मेषः प्रकृत्या क्षणनश्वरः
समूलविलयोऽप्यस्य प्रबलाशुगघट्टनात् ॥ ९

भवादृगिति ॥ भवादृक्चपलोन्मेषः भवन्तमिव पश्यन्ति यं स भवादृक्, त्वादृशः स चासौ चपलः अव्यवस्थितचित्तः, तस्य उन्मेषः विजृम्भः, प्रकृत्या स्वभावतः, क्षणनश्वरः क्षणेन नाशशीलः – न तु चिरकालस्थायीत्यर्थः – अस्य चपलोन्मेषस्य, प्रबलाशुगघट्टनात् प्रबलस्य पुंसः, आशुगै र्बाणैः, घट्टनात् सङ्घर्षाद्धेतोः, समूलविलयः समूलध्वंसः भवतीति शेषः– व्यङ्ग्यार्थस्तु – भवादृशां चपलानां विद्युता, मुन्मेषः प्रकाशः, प्रकृत्या क्षणनश्वरः क्षणिकत्वा द्विद्युता मिति भावः – अस्य विद्युत्प्रकाशस्य, प्रबलाशुगघट्टनात् चण्डमारुतघाता द्धेतोः 'आशुगौ वायुविशिखा' वित्यमरः । समूलविलयः मूलभूतैर्मेघैस्सह नाशोऽपि भवति – एतेन विद्युदुन्मेषतुल्य स्साल्वविजृम्भ इति, प्रबलवायुतुल्या स्स्वबाणा इति च उपमाद्वयं व्यज्यते ॥ ९

ग ॥ एवं परस्परपरीवादिनो रनयो र्भवति महति संप्रहारे साल्वमाया-विनिर्मितः कोऽपि सन्देशहरो देवकतनयया प्रहितोऽहमिति प्रणम्य मुररिपु मवादीत् ॥ १०

एवमिति ॥ एवं परस्परपरीवादिनोः अन्योऽन्यपरिभाषिणोः अनयोः कृष्णसाल्वयोः, महति अधिके, संप्रहारे युद्धे, भवति सति, साल्वेन मायया विनिर्मितः साल्वस्य माययेति वा – कोऽपि कश्चि, त्सन्देशहरः दूतः, देवकतनयया देवकीदेव्या, अहं प्रहितः त्वां प्रति प्रेषित इति वदन्निति शेषः – प्रणम्य नमस्कृत्य, मुररिपुं कृष्णं, प्रति अवादीत् – मुररिपुं प्रणम्य अवादीदिति वा ॥ १०

अव ॥ वचनरीतिमेव दर्शयति ॥

श्लो ॥ साल्वेन वसुदेव स्ते पिता कृपण मुच्छ्वसन्
क्वासि हा कृष्ण कृष्णेति बध्द्वा पशुरिवाहृतः ॥ ११

साल्वेनेति ॥ हाकृष्ण हाकृष्ण इत्येवं हा इति खेदे – कृपण मतिदीनं, यथा तथा उच्छ्वसन् उच्चैः रुदन् , यद्वा इत्युक्त्वेति शेषः – उच्छ्वसन् उच्चैः श्वसन् निश्श्वसन् , ते पिता जनको, वसुदेवः पशुरिव साल्वेन बध्द्वा सन्धाय, आहृतः नीतः – यथा पशुं बध्द्वा नयति; तद्व त्त्वत्पितरं बध्द्वा साल्वो निन्य इत्यर्थः – उपमालङ्कारः ॥ ११

**ग ॥ एवं वादिनि दूते यदुपति रतिदूनमानस स्स्वगत मेव मवादीत् ॥ १२**

एव मिति ॥ एवं दूते वादिनि वदति सति, अतिदूनमानसः पितृवधश्रवणा दति-खिन्नहृदयः, यदुपतिः स्वगतं मनसि, एवं वक्ष्यमाणरीत्या – अवादीत् । यद्यपि स्वगत-जनान्तिकप्रकाशभाषणानि नाटक एव प्रसिद्धानि; तथापि क्वचि त्काव्येऽपि दर्शना देवं प्रयोगः – यथा नैषधे नवमसर्गे 'इदं निगद्य क्षितिभर्तरि स्थिते तयाऽभ्यधायि स्वगतं विदग्धये ति ॥ १२

**श्लो ॥ सति रामे कथं तातविपत्ति र्यदि वा यतः**
**अलङ्घ्या जानकीपीडा तत स्स्या त्सोऽपि दूरतः ॥ १३**

सतीति ॥ रामे बलभद्रे सति, सन्निहिते सतीत्यर्थः । तातविपत्तिः तातस्य वसुदेवस्य, विपत्तिः आपत्, कथं स्यात् न कथमपीत्यर्थः । महाबलपराक्रमशालित्वा द्रामस्येति भावः । यदिवा यद्वा, तातविपत्ति स्स्या दित्यन्वयः । कुत स्स्या दत आह – यतो यस्मात्, जानकी जनकस्य पितु स्सम्बन्धिनी, पीडा व्यथा, अलङ्घ्या अनिवार्या, 'भवितव्यं भवत्ये' वेति न्यायादिति भावः । ततः तस्मात्, सः रामोऽपि, दूरतः दूरे, स्यात् प्रतिकूलविधिवशात् रामसान्निध्याभावे तातविपत्ति स्स्या देवेत्यर्थः। व्यङ्ग्यार्थस्तु रामे सति तातस्य दशरथस्य विपत्ति र्मृतिः कथं स्यात् ? – रामवियोगादेव हि दशरथस्य मरण मित्यर्थः – ननु मास्तु रामवियोग इत्यत आह – यतः जानकीपीडा जानक्या स्सीतायाः, पीडा वनवासादिलक्षणा, जनकस्य दशरथस्य, सम्बन्धिनी जानकीपीडा, मुनिशापप्राप्तपुत्रशोकादिरूपा च, अलङ्घ्या – ततः सोऽपि दूरत स्स्यात् । तस्मात् यदि वा रामवियोगे तातविपत्ति स्स्यादेवेत्यर्थः । १३

**ग ॥ प्रकाशम् ॥**

प्रकाशमिति ॥ अवादी दित्यने नान्वयः – ननु यथा पितृविपत्त्यनुमेयस्य बलभद्र-सान्निध्याभावस्य रन्ध्रत्वेन गोप्यत्वा त्स्वगतभाषणं, तथा रामप्रमादोक्तिरपि गोप्यैवेति कथं तदंशे प्रकाशभाषणमिति चे त्सत्यं पितृनाशजन्य शोकावेशकृतमोहादिति ध्येयम् ॥

**ग ॥ अयि त्रिजगन्मोहनीयपराक्रम, नयनाभिराम, राम ! कथ मीदृशंप्रमाद मासादयः ॥ १४**

अयीति ॥ अयीति प्रेम्णा सम्बुद्धिः – त्रिजगन्मोहनीयपराक्रम लोकत्रय श्लाङ्घ्य-प्रताप ! नयनाभिराम नयनयोः नेत्रयोः, अभिरामः मनोज्ञः, तस्य सम्बुद्धिः । हेराम ! ईदृशं प्रमादं अनवधानतां, कथ मासादयः कुतः प्राप्तवा नसि ? १४

श्लो ॥ रामः पुरा पितृवचः परिपालनेन
भेजे यश स्त्रिजगति त्रिदशै र्दुरापम्
राम श्चकार तनुपालनम प्ययं तु
तातस्य नेत्यहह केय मकीर्तिजार्तिः ? १५

राम इति ॥ पुरा पूर्वजन्मनि, पूर्वयुगे इति वा – रामः श्रीरामः, पितृवचः परिपालनेन पितु र्दशरथस्य, वचसः स्ववनवासनिदेशरूपस्य स्वावरजस्य राज्यप्रदानरूपस्य च वाक्यस्य, परिपालनेव रक्षणेन हेतुना, पितृत्काश्रकारित्वेनेत्यर्थः – त्रिजगति लोकत्रये, त्रिदशै र्देवैरपि, दुरापं प्राप्तु मशक्यं, अधिक मित्यर्थः – यशः कीर्तिं, भेजे प्राप । अयं तु रामः एष बलराम स्तु, तातस्य पितु र्वसुदेवस्य, तनुपालनं शरीररक्षणमपि, किमुत वचःपरिपालन मित्य पेरर्थः । न चकार नाकरोत – इत्येवं रूपा इय मकीर्तिजा अयशस्सम्भूता, आर्तिः पीडा, का दुस्सहेत्यर्थः – अहहेति खेदातिशये – अयशोभरणान्मरणं वरमिति भावः ॥ १५

ग ॥ एवं वादिनि वासुदेवे साल्वोऽपि वसुदेव मग्रतः प्रदर्श्य विकृत्य च मूर्धानं सौभ मविशत् ॥ १६

एवमिति ॥ एवं वासुदेवे कृष्णे, वादिनि वदति सति, साल्वोऽपि साल्वश्च, वसुदेव मग्रतः पुरः, प्रदर्श्य दर्शयित्वा, मूर्धानं वसुदेवस्य शिरः, निकृत्य छित्वा, च सौभं अविशत् प्रविवेश ॥ १६

श्लो ॥ आलोक्यैव मनार्यकार्यसरणिं यासी त्कृशा दुर्दशा
दाशार्हस्य न तादृशी क्वचिदपि प्राप्ता पुरा जन्मसु
प्राप्ता कृत्रिमजानकीलवनत स्सौमित्रिमूर्छोदया
त्प्रागास्वादिकनिष्ठशु ग्गुरुविप न्नासौ तुला मर्हति ॥ १७

आलोक्येति ॥ एव मनार्यकार्यसरणिं दुष्टकार्यसङ्घं, पितृबन्धनानयनच्छेदनादिक मित्यर्थः – आलोक्य दृष्ट्वा, दृष्टवत इत्यर्थः – दाशार्हस्य यादवस्य, कृष्णस्येत्यर्थः – दशा मर्हतीति दशार्हः स एव दाशार्हः तस्येति च व्यज्यते – या कृशा तन्वी, ननु गुर्वी – ब्रह्म वित्त्वादिति भावः - यद्वा विरुद्धलक्षणया अधिका दुर्दशा दुरवस्था, आसीत् - तादृशी दुर्दशा, पुराजन्मसु पूर्वावतारेषु, क्वचिदपि कुत्रचिदवतारेऽपीत्यर्थः । न प्राप्ता नानुभूता, कृष्णेनेति शेषः - न प्राप्तान सम्प्राप्तेति वा - दाशार्हस्येत्येव- ननु श्रीरामावतारे प्राप्तैवेत्यत आह । प्राप्तेति-कृत्रिमजानकीलवनतः कपटसीताभेदात्, सौमित्रिमूर्छोदयात् लक्ष्मणमूर्छा- विर्भावाच्च, प्राप्ता उद्भूता, कनिष्ठशुक् कनिष्ठविषय श्शोकः, स्वल्पशोक श्च-सीतालक्ष्मणयोः

रामापेक्षया कनिष्ठत्वादिति भावः । प्राग् रामावतारे आस्वादि अनुभूता, कृष्णेनेति शेषः । असौ गुरु विपत् पितृनाशः, अधिकापदिति च- तुलां प्राग्भवानुभूतकनिष्ठशुगुपमां नार्हति - तदपेक्षया अधिकत्वादित्यर्थः । अत्र गुरुविषयकशोका द्भार्यानुजविषयक श्शोक एव दुर्भर इति तद्वैपरीत्येन वर्णना द्विरोधः; तस्य च कनिष्ठगुरुपदयो स्स्वल्पाधिकरूपार्थान्तरवर्णनेन परिहारः । तेन विरोधाभासालङ्कारः । अयं च न वाच्यः व्यञ्जकाप्रयोगात् । किन्तु गम्य एव - गुरुविपत् कनिष्ठशुक्तुलां नार्हति । विशेष्ययोरेव साभिप्रायात् - परिकराङ्कुरः। १७

**श्लो ॥ शार्ङ्गं हस्ता, ल्लोचना दश्रु धैर्यं**
**चित्ताच्चापि प्रच्युतं यौगपद्यात्**
**ज्ञात्वा मिथ्यां ध्यायतां दुर्दशां तां**
**क्षोभो य न्न श्शार्ङ्गिणः कीदृ गस्तु ?** १८

शार्ङ्गमिति ॥ शार्ङ्गिण इति उत्तरार्धस्य पदस्यात्रा प्यन्वयः – कृष्णस्येत्यर्थः – हस्ता त्करात्, शार्ङ्गं शृङ्गविकारं धनुः; लोचना न्नेत्रा, दश्रु बाष्पं – स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणेति प्रायग्रहणात् जात्येकत्वं – नेत्राभ्यामित्यर्थः । चित्ता द्धृदयात्, धैर्यं धीरता, च यौगपद्यात् युगपत्, एककालमित्यर्थः । प्रच्युतं भ्रष्टं, स्खलितमित्यर्थः । अत्र यद्यपि शार्ङ्गभ्रंशादीनां नैककालत्वं युज्यते; तथापि शतपलपत्रशतच्छेदनन्यायेन असंलक्ष्यविशेषत्वा द्यौगपद्यव्यपदेशः – अत एव समुच्चयालङ्कारः । वस्तुतस्तु – प्रच्युतिरूपैकक्रियान्वया त्प्रस्तुत-तुल्ययोगितालङ्कारः । तां दुर्दशां वसुदेवविपत्ति मित्यर्थः – मिथ्या मसत्यां, ज्ञात्वा मत्वा, ध्यायतां स्मरतां, नतु पश्यतामिति भावः । नः अस्माकं, तटस्थानामिति भावः – अयं क्षोभः चित्तविकारः, भवतीति शेषः – शार्ङ्गिणः कृष्णस्य, कीदृक् कीदृशः क्षोभः अस्तु ? यद्वा – शार्ङ्गिणः क्षोभः कीदृगस्तु ! अनिर्वाच्य इत्यर्थः । सत्यां पितृविपत्तिं पश्यतः कृष्णस्य क्षोभो निर्वेल इति भावः । १८

**ग ॥ तदनु योगबलेन त दिद मशेषं मृषा मन्वानो वृषावरजो विषाद मपहाय, रोषभीषणो विद्वेषिकषणाय सुदर्शनं प्राहिणोत् ॥** १९

तदन्विति ॥ ततः योगबलेन योगसामर्थ्येन, त दिद मशेषं पूर्वोक्तमेत त्सर्वं, वसुदेव-बन्धनादिक मित्यर्थः । मृषा मिथ्या, मन्वानः चिन्तयन्, वृषावरजः इन्द्रानुजः, उपेन्द्र इत्यर्थः – विषादं खेद, मपहाय त्यक्त्वा, रोषभीषणः रोषेण कोपेन, भीषणः भयङ्कर, स्सन् विद्वेषिकषणाय शत्रुनाशनार्थं, सुदर्शनं चक्रं, प्राहिणोत् प्रेषयामास; प्रयुयोजेत्यर्थः ॥ १९

श्लो ॥ ज्वालामालावलयित मिदं चक्र माक्रम्य सौभं
क्षोभं नीत्वा सरय मनय द्बन्धुरं सिन्धुरङ्गम्
सत्या स त्याजितोऽस्त्र्या रिपुरपि वपुषा शीर्यता शौर्यतापै
श्शूरे शौरौ गणेया गुणगणशरणे वारणा वैरिणां नु ॥ २०

ज्वालेति ॥ ज्वालामालावलयिंत शिखावलीपरिवेष्टितं, अग्निवत् ज्वालामाला उद्गम दित्यर्थः । इदं कृष्णप्रयुक्तं, चक्रं सुदर्शनायुधं, सौभ माक्रम्य व्याप्य, क्षोभं नीत्वा झर्झरीकृत्य, बन्धुर मगाधं, सिन्धुरङ्गं समुद्रदेश, मनयत् प्रापयामास । समुद्रे पातयामासेत्यर्थः— बन्धुर मुन्नतमिति सौभविशेषणं वा – सः रिपुरपि साल्वोऽपि, सत्या श्रेष्ठया, अस्त्र्या स्वल्पेनास्त्रेण, साधनेन – अस्त्रशब्दा दल्पत्वविवक्षायां ङीष् । शौर्यतापैः कृष्णप्रतापोष्मभिः, शीर्यता क्षुभ्यता, वपुषा शरीरेण, त्याजितः मोचितः, साल्वं प्रथमत एव स्वप्रतापोष्मशीर्णं मस्त्रेण जघानेत्यर्थः । नैत दाश्चर्य मित्याह – गुणगणशरणे सकलगुणाश्रये, शूरे शौर्यस्य गुणान्त-र्भावेऽपि पृथग्ग्रहण मुत्कर्षार्थम् – शौरौ कृष्णे, वैरिणां शत्रूणां, वारणाः हननानीति, यावत्– गणेया नु गणयितुं शक्याः किम् ? असङ्ख्यातान् रावणादीन् रिपून् हतवतः कृष्णस्य वराकसाल्वहननं न चित्र मित्यर्थः – अत्र स्रग्धरामन्दाक्रान्तयो र्वृत्तयो स्सङ्करः । वृत्तरत्नाकर कारादिभि रभ्युपगत एवायम् । 'शौर्योष्माभिर्द्रुततनु ररि र्बाणपाता द्गतासु र्गण्यौ शूरे भगवति हरौ वारणा वैरिणां नु' इति पाठे न काप्यनुपपत्तिः ॥ २०

ग ॥ तदनु तदनुधाविनौ दन्तवक्त्रविडूरथावपि साल्व मनुगमय्य दिविषत्सु कुसुमवर्षिषु, नृत्यंतीषु सुरसुन्दरीषु, सानन्दो मुकुन्द स्स्वमन्दिर मविन्दत ॥ २१

तदन्विति ॥ तदनु साल्वनाशनानन्तरं, तदनुधाविनौ साल्वानुसारिणौ, दन्तवक्त्र-विडूरथावपि साल्व मनुगमय्य अनुसृत्य गमयित्वा; नाशयित्वेत्यर्थः – दिविषत्सु देवेषु, कुसुमवर्षिषु पुष्पवृष्टिं कुर्वाणेषु सत्सु; सुरसुन्दरीषु देवाङ्गनासु, नृत्यन्तीषु नाट्यं कुर्वन्तीषु सतीषु; सानन्दः आनन्दसहितः, रिपुविजयादिति भावः – मुकुन्दः स्वमन्दिरं निजभवन, मविन्दत प्राप ॥ २१

॥ अथ कुचेलोपाख्यानं वर्णयति ॥

श्लो ॥ मित्रं हरेः कोऽपि सतीर्थ्यभावा । द्दारिद्र्यसार्थीकृतनामधेयः
कुचेल इत्यागमपारगोऽभू । त्स्वरूपलाभोपचितप्रमोदः ॥ २२

मित्रमिति ॥ हरेः श्रीकृष्णस्य, सतीर्थ्यभावात् अभिन्नगुरुकत्वात्, 'सतीर्थ्या स्त्वेकगुरव' इत्यमरः । समाने तीर्थे गुरौ वसतीति सतीर्थ्यः – तस्य भाव स्तस्मादिति समासः – समान-

तीर्थेवासीति यत् । मित्रं सुहृत्, एकस्मिन्नेव गुरा वुभयो रध्ययानार्थं निवासात् हरिकुचेलयो-मैत्रीत्यर्थः । दारिद्र्यसार्थीकृतनामधेयः दारिद्र्येण रिक्तत्वेन, सार्थीकृत मन्वर्थीकृतं, नामधेयं कुचेल इति नाम, यस्य सः; कुत्सितं जीर्णं मलदूषितं च चेलं वासो यस्य स इति व्युत्पत्ते रिति भावः । आगमपारगः आगमानां वेदानां, पार मन्तं, गच्छतीति तथोक्तः । निखिलवेदा भिज्ञ इत्यर्थः । यद्वा वेदान्तशास्त्राभिज्ञ इत्यर्थः; उपनिषदा मागमशिरस्त्वेन प्रतिपादितत्वात्, अत एव स्वरूपलाभोपचितप्रमोदः स्वस्वरूपप्राप्तिजन्यपरमानन्द इत्यर्थः – उपनिषदर्थं ज्ञात्वा अपरोक्षात्मसाक्षात्कारं प्राप्तवानिति भावः । इदमेव हरे र्मित्रत्वस्य फलमिति बोध्यम् – हरिभक्तस्यैव स्वरूपलाभे सति, हरिमित्रस्य किं पुनरिति कैमुतिकन्यायेन अर्थापत्ति रत्र व्यज्यते । एवंविधः कुचेल इति कोऽपि कश्चि, द्ब्राह्मण इति शेषः । अभूत् आसीत् । एतेन स्वचिकिर्षितकुचेलोपाख्यानरूपावान्तरग्रन्थस्यादौ वस्तुनिर्देशरूपं मङ्गळं कृतमिति ज्ञेयम् । न चात्र अभूदिति क्रियान्वयेन सह वाक्यार्थे समाप्ते सति, स्वरूपलाभोपचितप्रमोद इति पुनर्वि-शेषणान्तरग्रथना त्समाप्तपुनराख्यातदोष इति वाच्यम् ; अनाकाङ्क्षितविशेषणान्तरादानमेव तद्दोषस्य बीजभूतमिति सिद्धान्तात् । प्रकृते तु साकाङ्क्ष मेवेदं विशेषणम् , आगमपारगत्वं प्रति फलभूतत्वा दस्येति संक्षेपः – अत्र निरुक्ति रलङ्कार स्स्फष्ट एव ॥ २२

**ग ॥ कदाचन तस्य सहधर्मचारिणी दारिद्र्यनितान्ततान्तहृदयतया सविनयं दयित मिद मवादीत् ॥ २३**

कदाचनेति ॥ कदाचन कस्मिंश्चित्समये तस्य कुचेलस्य सहधर्मचारिणी कुलवधूः दारिद्र्येण नितान्त मधिकं यथातथा तान्तं खिन्नं हृदयं चित्तं यस्या स्तस्याः भाव स्तत्ता तया हेतुना दयितं भर्तारम्प्रति सविनयं यथातथा पातिव्रत्यलोपभियेति भावः इदं वक्ष्यमाणवचन मवादीत् जगाद ॥ २३

**ग ॥ अये ! भगवन् ! अगणितदारिद्र्यसमुद्र ! विद्रावितविषयाभिलाष ! किमपि विज्ञापयितुकामां मां प्रतीपदर्शिनीति नोपेक्षथाः ॥ २४**

अये इति ॥ अये! इति सम्बुद्धिः – भगवन् तपोविशेषजन्यषड्गुणपरिपूर्ण ! वासुदेव स्यैकस्यैव स्वाभाविकभगवत्त्वादिति भावः – अतएव भागवते वासुदेवात् को नाम लोके भगवत्पदार्थ इत्युक्तम् । अतएव विद्रावितविषयाभिलाषः विद्रावितः दूरा त्त्याजितः, विषयाभिलाषः विषयेषु स्पृहा, येन सः – तस्य सम्बुद्धिः – षड्गुणेषु ज्ञानवैराग्ययो रघ्यन्तःपातित्वात् ज्ञानवैराग्यनिधे स्तस्य विषयाभिलाषः कथं स्यादिति भावः – अत एव अगणितदारिद्र्यसमुद्र ! तिरस्कृतदारिद्र्यरूपसागर ! भाग्यदारिद्र्यादिकं मनोधर्म एव; नत्वात्मन इति दारिद्र्ये निश्चिन्तस्येत्यर्थः । किमपि यत्किञ्चि, द्विज्ञापयितुकामां विज्ञापयितुं कामो

यस्या स्तां, विज्ञा पनै वेयं; नत्वाज्ञापनेति भावः। मां प्रतीपदर्शिनी वनिता, प्रतिकूलबुद्धिरिति च, इति हेतोः नोपेक्षथाः नोपेक्षस्व। बालादपि सुभाषितमिति न्यायात् – स्त्रियापि मयोक्तं वचनं गृहाणे त्येको भावः। आत्मरसतृप्तस्य मम प्रतिकूलं बोधयतीय मिति स्वदृष्ट्या मयि न कोपं कृथाः; किन्तु बालिशेय मनात्मज्ञा किमपि याचते मामिति भगवानिव भक्तेषु मयि करुणां कुर्वित्यन्यो भावः ॥ २४

**श्लो ॥ मित्रे तव श्रीदयितेऽपि कस्मा द्दशा कृशानां भगव न्नशान्ता**
**सामीप्यमुक्तौ जगतीपते स्स्या त्कथन्नु लाभ स्सुहृदोऽपि लक्ष्म्याः ॥ २५**

मित्र इति ॥ हे भगवन् ! पतिव्रतानां भर्तुरेव दैवत्वा दियं सम्बुद्धिः – तव श्रीदयिते लक्ष्मीपतौ, कृष्णे श्रियः सम्पदो दयितः पतिः स्वामीत्यर्थः। तस्मिन् धनाढ्ये इति च। मित्रे सुहृदि, सत्यपि कृशानां दीनानां, दशा अवस्था, दारिद्र्यमित्यर्थः। कस्मा त्कुतः? अशान्ता अनष्टा। न हि धनिकस्य मित्रं दरिद्रो भवे दित्यर्थः। जगतीपतेः भुवनाधिपस्य, कृष्णस्य भूपतेश्च, सामीप्यमुक्तौ सन्निधिपरित्यागे सति, सुहृदः मित्रस्यापि, लक्ष्म्या स्सम्पदः लाभः प्राप्तिः, कथन्नु कथं वा स्यात् ? न कथमपीत्यर्थः। 'दूरस्था त्तनयादपि समीपस्थो भृत्य एव राज्ञां प्रिय' इति न्याया दिति भावः। अत्र महैश्वर्यशालिनं त्वन्मित्रं कृष्ण मेत्य, किञ्चिद्धनं याचस्वे त्यनुक्त्वा, अर्था त्तत्सूचनेन पातिव्रत्याधिक्यं व्यज्यते। पतिव्रता हि भर्तारं न शास्ति किञ्च कामिनीना मिदं प्रायिकमेव – येन केनापि व्याजे नाभिप्रायाविष्कार इति। व्यङ्ग्यार्थस्तु–हे भगवन् शिव ! तव श्रीदयिते सम्पत्पतौ कुबेरे, मित्रे सत्यपि कृशानां दशा कुतो न शान्ता इति– पूर्वार्धे जगतीपतेः परमात्मनः सामीप्यमुक्तौ सालोक्यसारूप्यसामीप्य-सायुज्यरूपचतुर्विध मुक्त्यन्तर्गतमोक्षविशेषे, सुहृदः शोभनं हृत् ज्ञानं यस्य तस्य ज्ञानिनोऽपि, लक्ष्म्याः लाभः कथं स्यात् ? न कथमपीत्यर्थः। लक्ष्मीलाभस्तु सायुज्यमुक्तावेवेति भावः। इत्युत्तरार्धे ॥ २५

**श्लो ॥ मित्रश्रिय स्सङ्क्रमणं विहाय भवे न्न जातु द्विजराज ! पुष्टिः**
**इमानि सिद्धान्तवचांसि किन्तु परिस्फुटा दर्शनलाभतात ॥ २६**

मित्रेति ॥ हे द्विजराज ब्राह्मणोत्तम ! मित्रश्रियः सुहृत्सम्पदः, सङ्क्रमणं सम्बन्धं, विहाय त्यक्त्वा तद्विनेत्यर्थः। जातु कदाचिदपि, पुष्टिः पोषणं, दारापत्यादीनामिति भावः– न भवेत् न स्यात्। श्रीकृष्णं प्रार्थयित्वा यत्किञ्चिद्धनं त्वया आनीयते चेत् तर्हि तेन कुटुम्बपोषणं भवेत्; नोचेत् न भवेदेवेत्यर्थः। इमानि मदुक्तानि वचांसीति शेषः – सिद्धान्त-वचांसि सिद्धान्तवाक्यानि, भवन्तीति शेषः। त्वया पुनः युक्त्या न पूर्वपक्षीकर्तव्यानी त्यर्थः। ननु मित्रसम्प न्मयि न सङ्क्रान्ता; किं महं कुर्या मित्यत आह – अत्र मित्र

श्रीसङ्क्रमणे दर्शनलभ्यत्वं परिस्फुटा व्यक्ता । मित्रे दृष्टे सति, तत्सम्पत्सङ्क्रान्ति स्स्यात् । मित्रे अदृष्टे सति, कथं तत्सम्पत्सङ्क्रान्त्यवकाश इत्यर्थः । व्यङ्ग्यार्थस्तु – मित्रश्रियः सूर्यरुचेः, 'शोभा सम्पत्तिपद्मासु लक्ष्मी श्श्रीरपि कथ्यते' इत्यभिधानात् । सङ्क्रमणं सम्पर्कं, विहाय जातु द्विजराजपुष्टिः चन्द्रमण्डलवृद्धिः, न भवेत् 'पाथोमये शीतकरेऽर्करश्मयो विमूर्छिता घ्नन्ति तमस्विनीतम' इति ज्योतिश्शास्त्रादिति भावः । इमानि सिद्धान्तवचांसि सौरसिद्धान्त-वचनानीत्यर्थः । तत्र युक्ति माह – किन्त्विति । अत्र सूर्यकिरणसङ्क्रमणे दर्शनलभ्यता नलभ्यं नलभ्यम् । नञर्थस्य नशब्दस्य 'सुप्सुपेति' समासः । दर्शे अमायां नलभ्यं दर्शनलभ्यं तस्य भाव स्तत्ता । अमायां दुर्लभत्व मित्यर्थः । परिस्फुटा 'दर्शस्सूर्येन्दुसङ्गम' इति कोशात् । अमायां सूर्येन्दुसङ्गमस्य जातत्वेन सूर्यकिरणसङ्क्रमण मिन्दुमण्डलस्य दुर्लभम् । अत एव तदानीं न चन्द्रस्य दर्शनमिति भावः । अत्रेदं तत्त्वम्– यदा सूर्यचन्द्रमण्डलयोः चारवशा दभिमुखस्थितिः तदा पूर्णिमा सम्पूर्णचन्द्रमण्डलदर्शनात् – यदातु क्रमेण अभिमुखत्यागः तदा क्रमेण ह्रासवृद्ध्यादिक मिति ॥ २६

**ग ॥ तदवश्यं दृश्य एव दारिद्र्यविद्रावणाय दामोदर इति वादिन्यां दयितायाम् ॥** २७

तदिति ॥ त त्तस्मात् दारिद्र्यविद्रावणाय दैन्यविध्वंसनाय, दामोदरः कृष्णः, अवश्यं मुख्यं, दृश्यएव द्रष्टु मर्हएव; त्वयेतिशेषः – दामोदरदर्शन मवश्यकर्तव्यमित्यर्थः – इत्येवं दयितायां प्रेयस्यां, वादिन्यां ब्रुवन्त्यां सत्याम् ॥ २७

**श्लो ॥ याच्ञापराङ्मुखतया कलहो मिथोऽस्य**
**प्राणप्रियावचनमान्यतया च तेने**
**मध्यस्थया व्यरचि शौरिदिदृक्षया तु**
**तस्याशयानुसरणेन सती द्वितीया ॥** २८

याच्ञेति ॥ अस्य कुचेलस्य सम्बन्धिन्या याच्ञापराङ्मुखतया याच्ञावैमुख्येन, प्राण-प्रियावचनमान्यतया प्राणप्रियायाः दयितायाः, वचनं उक्तिः, मान्यं पूज्यं, अनुलङ्घनीय मित्यर्थः – यस्य तत्त्वेन च मिथः परस्परं, कलहो विवादः, तेने चक्रे । कुचेलनिष्ठौ याच्ञा पराङ्मुखता प्राणप्रियावचनमान्यता चे त्युभौ धर्मौ परस्पर विजयाय कलहं कुर्वाते इत्यर्थः । याच्ञावैमुख्यात् प्रेयसीवचन स्यानुलङ्घनीयत्वाच्च कुचेलो डोलायितमना बभूवेति निर्गळितार्थः । अत्र पराङ्मुखता मान्यता शब्दगतस्त्रीलिङ्गाभ्यां स्त्रीद्वयं; कलह इत्यनेन तयो स्सपत्नीत्वं च व्यज्यते – तत्रापि प्रथमोक्तत्वा त्पराङ्मुखता ज्येष्ठभार्येति व्यज्यते – एतेन यथा कस्यचित्पुंस उभे जाये भर्तृवाल्लभ्यविषये परस्परं कलहायेते तद्व दिति भावः फलितः । मध्यस्थया मध्ये

सञ्जातया, शौरिदिदृक्षया तु श्रीकृष्णकर्मकदर्शनेच्छया तु तस्य कुचेलस्य आशयानुसरणेन चित्ताश्रिततया हेतुना इच्छायाः मनोधर्मत्वादिति भावः। मनस्युत्पन्नया श्रीकृष्णदर्शनोत्कण्ठयेत्यर्थः। द्वितीया प्राणप्रियावचनमान्यता, सती योग्या, अरचि कृता। याञ्चापराङ्मुखोऽहं कथं कृष्णं याचेयं? कथं वा प्राणप्रियायाः प्रार्थना मया निराकरणीया? इति संशयाळुः कुचेलः बहुकाला दृष्टं मित्रं कृष्णं द्रष्टु मुत्कण्ठितस्सन् याञ्चावैमुख्यव्रतमपि परित्यज्य, प्रेयसीप्रार्थनामेव योग्यां मे ने इत्यर्थः। अन्यत्र मध्यस्थया अपक्षपातया शौरिदिदृक्षया तन्नाम्न्या काचनस्त्रिया तस्य पत्यु राशयानुसरणेन भाव मनुसृत्येत्यर्थः। सर्वस्यापि द्वितीयपत्न्यां प्रीतियुक्तत्वादितिभावः। द्वितीयाभार्या, सती साध्वी, निरपराधेति यावत् – अरचि कृता। उभयोस्सपत्न्योः कलहायमानयो स्सत्योः काचि न्मध्यस्था ज्येष्ठाया एवायं दोषो न तु द्वितीयाया इति भर्त्राशयानुगुण्येन निष्कृष्टवतीत्यर्थः। २८

**श्लो॥ समनन्तर मकुण्ठवैकुण्ठदर्शनोत्कण्ठया प्रियया प्रचोदितः, कुचेल श्चेलाञ्चलेन भगवदुपहाराय मुष्टिचतुष्टयपरिमितान् पृथुका नुपवेष्ट्य वनमालिविलोकनलालसतया द्वारकानगर मगमत्॥ २९**

समनन्तर मिति॥ समनन्तरं श्रीकृष्णदिदृक्षोदयानन्तर मित्यर्थः। अकुण्ठया अनर्गळया, वैकुण्ठदर्शनोत्कण्ठया श्रीकृष्णदिदृक्षया, प्रियया दयितया, च प्रचोदितः प्रेरितः, कुचेलः भगवदुपहाराय श्रीकृष्णबल्यर्थं, श्रीकृष्णाख्यप्रभवे बलिं समर्पयितु मित्यर्थः। मुष्टिचतुष्टयपरिमितान् मुष्टीनां चतुष्टयं मुष्टिचतुष्टयं, चतस्रो मुष्टय इत्यर्थः। तेन परिमितान् कृतमानान्, तावत्परिमाणा नित्यर्थः – मुष्टिना चतुर्वार ग्राह्यानिति यावत्। पृथुकान् धानाः, चेलाञ्चलेन उत्तरीयान्तभागेन उपवेष्ट्य वेष्टयित्वा धृत्वेत्यर्थः। वनमालिविलोकनलालसया श्रीकृष्णदर्शनासक्तत्वेन हेतुना, अकुण्ठवैकुण्ठदर्शनोत्कण्ठया प्रचोदित इत्यनेन पुनरुक्तं तदिदं प्रियाचोदनापेक्षया श्रीकृष्णदिदृक्षाचोदन स्याधिक्यं गमयति – तेन च नायं श्रीकृष्णं याचितुं ययौ; न च प्रियया प्रार्थितः कृष्णं प्रति ययौ – किन्तु कृष्णं केवलं द्रष्टुमेवेति सिद्धम् – द्वारकानगर मगमत् ययौ॥ २९

**ग॥ प्रविश्य च नगर मिद मचिन्तयत् – क्वेय ममरावती मप्यतिशयाना द्वारवती! क्व चेदं हरिगर्भतया सार्वभौमेनापि दुष्प्रवेश मन्तःपुरम्! क्व च मे चतुरानन मप्यर्थचन्द्रदानशान्तदर्पकं कुर्वाणा दौवारिकाः! क्व चेदं साम्राज्य मुज्जृम्भमाणं त्रिजगन्नायकस्य यदुनायकस्य! क्वचाहं साच्छादितकच्चरपटच्चरः प्रलम्बकूर्चो दरिद्र श्श्रोत्रियः! कथश्चन प्रविष्टमपि मां प्रत्यभिजानातु कथमिव लक्ष्मीविलासपरवशसर्वेन्द्रियग्रामो दामोदरः? सर्वथा वितथमनोरथोऽह मिति॥ ३०**

प्रविश्येति ॥ नगरं पत्तनं, प्रविश्य इदं वक्ष्यमाण मचिन्तयत् चिन्तितवांश्च । चिन्ताप्रकारमेवाह – अमरावतीं इन्द्रनगरमपि, अतिशयाना तिरस्कुर्वन्ती, इयं द्वारका क्व ! हरिगर्भतया हरिः कृष्ण स्सिंहश्च, गर्भे अन्तः, यस्य तत्त्वेन हेतुना सार्वभौमेन सर्वभूमिपालकेन दिग्गजेन च – तेनापि दुष्प्रवेशं प्रवेष्टु मशक्यं, इदं श्रीकृष्णसम्बन्धि, अन्तःपुरं अवरोधनं, क्व ! क्वा चतुराननं ब्रह्माणमपि, अर्धचन्द्रदानेन गळहस्तदानेन, शान्तदर्पकं निवृत्तगर्वं – स्वार्थे क प्रत्ययः – यद्वा शेषा द्विभाषेति बहुव्रीहेः कप् – अत्र अर्धचन्द्रदानेन अर्धचन्द्ररूपभूषणदानेन, शान्तदर्पकं शान्तो नाशितः, दर्पकः अनङ्गः, येन तं शिव मित्यर्थः इति च व्यज्यते – कुर्वाणाः कुर्वन्तः, इमे एते, दौवारिकाः द्वारपालाः, क्व ! त्रिजगन्नायकस्य त्रिलोकाधिपतेः, यदुनायकस्य यदुपतेः, कृष्णस्येत्यर्थः – उज्जृम्भमाणं प्रवर्धमानं, इदं साम्राज्यं, सम्राजो भावः – महैश्वर्य मित्यर्थः – क्व ! अच्छादितकच्चरपटच्चरः धृतमलदूषितजीर्णवस्त्रः, प्रलम्बकूर्चः लम्बमानश्मश्रुजातः, 'श्मश्रुण्यपि च कूर्च स्स्या 'दि त्यजयः । दरिद्रः दीनः, श्रोत्रियः वेदाध्येता, 'श्रोत्रिय च्छन्दोऽधीते' इति निपातित मिदम् । अनेन च लौकिकज्ञानाभावो व्यज्यते – एवंविधः अहं क्व च ! विषमालङ्कारः । लक्ष्मीविलासपरवशसर्वेन्द्रियग्रामः लक्ष्म्या रुक्मिण्या स्सम्पदो वा विलासेन हेतुना, परवशः परतन्त्रः, सर्वेन्द्रियग्रामः समस्तविधेन्द्रियजालं, यस्य सः – स्त्रीपरतन्त्रः धनमदान्धश्चेत्यर्थः – दामोदरः कृष्णः, कथञ्चन कथमपि, प्रविष्टं गृहे इति शेषः – मां दरिद्र मित्यर्थः – कथमिव केन प्रकारेण वा, प्रत्यभिजानातु स्मरतु ? सर्वथा मां विस्मृतवानेवेत्यर्थः । सर्वथा सर्वप्रकारेणापि, अहं वितथमनोरथ एव व्यर्थकाम एव भवेय मिति शेषः – इत्यचिन्तय दिति पूर्वेणान्वयः ॥ ३०

**श्लो ॥ सञ्चिन्तय न्निद मवाप महीसुरोऽय**
**मावास मप्रतिनिवर्तित एव शौरेः**
**नैवाद्भुतं हरिकृपाविषये कथन्नु**
**जायेत वारणकृतव्यसनप्रकर्षः ?** ३१

सञ्चिन्तय न्निति ॥ इद मेत, त्सञ्चिन्तयन् एवं विचारयन्नित्यर्थः – अयं महीसुरः ब्राह्मणः, अप्रतिनिवर्तितएव अनिवारितस्सन्नेव, शौरेः कृष्णस्य आवासं गृह, मवाप भेजे – ननु चतुराननमपि गळहस्तदानेन शान्तदर्पं कुर्वन्तिदौवारिका इत्युक्तं हि – कथं तादृशदौवारिककृतनिवारणव्यसन मस्य नासी दित्यत आह । नैवेति – अद्भुत माश्चर्यं, नैव नास्त्येव । दीनस्यापि कुचेलस्य महेश्वर श्रीकृष्णसदनप्राप्ति निरान्तका बभूवे तीदं न चित्र मित्यर्थः । तत्र हेतु माह – हरिकृपाविषये श्रीकृष्णकरुणायाः पात्रे पुंसीति शेषः – सिंहकृपापात्रे इति च व्यज्यते । वारणकृतव्यसनप्रकर्षः नवारणजन्य दुःखातिशयः, गजकृतपीडातिशयश्च; कथं नु कथं वा, जायेत उत्पद्येत न कथमपीत्यर्थः काव्यलिङ्ग मलङ्कारः ३१

ग ॥ तदैव रुक्मिणीसदनवास्तव्यो भगवानपि मित्रालोकविकसितमुखपुण्डरीकः प्रियया सह सत्वर मवतीर्य पर्यङ्कतः परिरभ्य कुचेलं पर्यङ्के न्यवेशयत् ॥ ३२

तदेति ॥ तदैव कुचेलागमनसमये एव, रुक्मिणीसदनवास्तव्यः रुक्मिणीगृहनिवासी भगवानपि श्रीकृष्णश्च, मित्रालोकविकसितमुखपुण्डरीकः मित्रमेव मित्र स्सूर्य इति श्लिष्टरूपकं— तस्य आलोका द्दर्शनात् – यद्वा मित्रालोक स्सुहृद्दर्शनमेव, मित्रालोक स्सूर्यप्रकाश इति श्लिष्टरूपकम् । तस्मात् हेतोः, विकसितं सञ्जातविकासं, हर्षातिरेकादिति भावः । मुखमेव पुण्डरीकं सिताम्भोजं, यस्य स तथोक्तः सन्, हर्षजन्यस्मितरुचिव्यासङ्गा न्मुखस्य धवळितत्वेन पुण्डरीकत्वरूपणं – तेन च तद्गुणालङ्कारो व्यज्यते । प्रियया सह रुक्मिण्यास्समं, सत्वरं द्रुतं, पर्यङ्कत श्शय्यातला, दवतीर्य अवरुह्य, कुचेलं मित्रं, परिरभ्यआलिङ्ग्य, पर्यङ्का दवतारणांशे एव प्रियासाहित्यं नत्वालिङ्गांशे – अनुचितत्वादिति ज्ञेयम् । पर्यङ्के शय्यायां, न्यवेशयत् प्रवेशयामास ॥ ३२

श्लो ॥ वैदेहीपरिरम्भ भङ्गविरस स्संश्लेषकामा न्मुनी
नस्मिन्नेव भवे भवे दिति पुरा यो वा निराचीकरत्
सद्य स्तेन विदर्भजाकुचभरं सन्त्यज्य लोभास्पदं
संश्लिष्टस्य कुचेलकस्य कृतिनो गण्या नु पुण्यावळिः ॥ ३३

वैदेहीति ॥ यः कृष्णः, पुरा रामावतारे, वैदेहीपरिरम्भभङ्गविरसः सीतालिङ्गनभङ्गभीरुः, ऋषीणा मालिङ्गने सीतालिङ्गनभङ्गाऽऽपत्ते रितिभावः – अत एव संश्लेषकामान् स्वालिङ्गनाभिलाषान्, मुनीन् ऋषीन्, न तु विषयैषिणि इति भावः – एतेन श्रीरामस्य सौन्दर्य मपारमिति व्यज्यते – अस्मिन् भवे एव श्रीकृष्णजन्मन्येव भवेत् मदालिङ्गनं भवतां स्यादिति उक्त्वा इति शेषः । निराचीकरोत् निराकृतवान् । पुराकिल रामावतारे रामसौन्दर्यमोहिताः दण्डकारण्यवासिनो मुनयः रामालिङ्गनं प्रार्थयित्वा कृष्णावतारे युष्माकं मत्संश्लेषो भविष्यति; नेदानीमिति रामेण प्रत्याख्याता इति पौराणिकी कथात्रानुसन्धेया । पुरुषयोः परस्परालिङ्गनं न रसावह मिति श्रीरामेण मुनिकांक्षिते स्वालिङ्गने प्रत्याख्याते सति तस्य वैदेहीपरिरम्भभङ्गविरसत्वकृतत्वोत्प्रेक्षणात् हेतूत्प्रेक्षालङ्कारः – स च व्यञ्जकाप्रयोगा द्गम्यः । तेन ऋषिप्रार्थना मप्यविगणय्य वैदेहीपरिरम्भ मत्यक्तवतेत्यर्थः – सद्यः तदैव, न तु भोगानन्तरमिति भावः – लोभास्पदं अतिस्पृहाविषयं, कुचभरस्यातिसुन्दरत्वात् स्वस्य च अतिकामुकत्वादिति भावः । विदर्भजाकुचभरं रुक्मिणीस्तनभारं, न तु पुनरालिङ्गनमात्रमिति भावः – सन्त्यज्य त्यक्त्वा, संश्लिष्टस्य आलिङ्गितस्य, कृतिनः सुकृतशालिनः कुचेलकस्य – निन्दायां कप्रत्ययः – अत्यल्पस्य कुचेलस्येत्यर्थः । यद्वा प्रशंसायामेव क प्रत्ययः – प्रशस्तकुचेलस्येत्यर्थः – पुण्यावळिः सुकृतपरम्परा, गण्या नु गणयितुं शक्या किमु

अगण्यैवेत्यर्थः । परमेश्वरः कृष्णः अनपायिन्या स्वप्रेयस्या लक्ष्म्या अपि कुचभर मुत्सृज्य कुचेल मालिलिङ्ग त्यहो कुचेलस्य सुकृतपरिपाक इति निर्गळितार्थः ॥ ३३

**श्लो ॥ द्विजराजं कृशं गाढ मालिङ्ग्य रुचिनिर्भरम्**
**कुर्वाण स्यास्य मित्रत्व मनन्यसदृशं हरेः ॥** ३४

द्विजेति ॥ कृशं दरिद्रं, द्विजराजं ब्राह्मणोत्तमं, कुचेल मित्यर्थः । गाढं दृढं यथातथा, आलिङ्ग्य उपगूह्य, रुचिनिर्भरं रुचिभिः स्वकान्तिभिः, निर्भरं पूर्णं, स्वकीयकृष्णवर्णच्छायया अभितोव्याप्त मित्यर्थः । यद्वा रुचिः प्रीतिः, तया निर्भरं सानुराग मित्यर्थः । अथवा रुचि-रानन्दः तन्निर्भरं तत्परिपूर्णं, आनन्दसान्द्र मित्यर्थः – यद्वारुचिनिर्भरं पूर्णकान्ति, भगव-दालिङ्गनप्रभावा च्छरीरं कार्श्यप्रयुक्तनिस्तेजस्कत्वं विहाय रुचितुन्दिल मभव दिति भावः । कुर्वाणस्य कुर्वतोऽस्य हरेः कृष्णस्य, मित्रत्वं सौहार्दं, अनन्यसदृशं अन्यसदृशं नभवती त्यनन्य-सदृशं, विलक्षण मित्यर्थः – भवतीति शेषः – आलिङ्गनमात्रादेव कृशं मित्रं रुचितुन्दिलं कुर्वाणं सुहृल्लोके क्वापि न दृष्टश्रुतचर इत्यर्थः । अत्र रुचिनिर्भरं द्विजराजं गाढ मालिङ्ग्य कृशं कुर्वाणस्य अस्य हरे मित्रत्वं विरुद्धलक्षणया शत्रुत्व मनन्यसदृशं अयोमयभीम मालिङ्गनेन चूर्णीकृतवतो धृतराष्ट्रस्येवेति भावः इति व्यज्यते – अन्योऽप्यर्थः प्रतीयते – कृशं नष्टकळ ममाया मिति भावः । द्विजानां ब्राह्मणानां, राजा द्विजराजः – 'राजहस्सखिभ्य' इति टच्– तं चन्द्र मित्यर्थः । 'सोमोऽस्माकं ब्राह्मणानाग्ं राजे' ति श्रुतेः । गाढ मालिङ्ग्य जलमये चन्द्रे स्वकिरणा न्प्रवेशयित्वेत्यर्थः । रुचिनिर्भरं प्रतिदिन मभिवर्धमानकान्ति मित्यर्थः – कुर्वाणस्य अस्य हरे स्सूर्यस्य, मित्रत्वं मैत्री, रवित्वं च, अनन्यसदृश मद्भुत मित्यर्थः । अपरोऽप्यर्थः प्रतिभाति – रुचिनिर्भरं अतितेजस्विनं द्विजराजं गरुडं, गाढ मालिङ्ग्य परिवेष्ट्येत्यर्थः – कृशं दुर्बलं, नष्टगात्रं वा कुर्वाणस्य अस्य हरे स्सर्पस्य – 'शुकाहिकपि-भेकेषु हरि र्ना' त्यमरः । मित्रत्वं निगीर्णाध्यवसानलक्षणया अतिशयोक्त्या तेजस्वित्वं सूर्यस्य प्रतापोपमात्वादिति भावः । अनन्यसदृशं अन्यसर्पाणां गरुडनिर्मथितत्वा दिति भावः ॥ ३४

**श्लो ॥ पङ्कं हरिप्रमदबाष्पजलाप्लुतस्य**
**तस्याखिलं चिरधृतं विलयं प्रपेदे**
**चित्रं यदुत्तर ममुष्य न पङ्कलेप**
**स्स्थानेऽथवा कुपदयोगकथापि नास्य ॥** ३५

पङ्कमिति ॥ हरिप्रमदबाष्पजलाप्लुतस्य श्रीकृष्णानन्दबाष्पधारासंसिक्तस्य, तस्य कुचे-लस्य, सम्बन्धि चिरधृतं चिरात्सञ्चितं, बहुजन्मार्जित मित्यर्थः । अखिलं सर्वं, पङ्कं कलुषम्, 'अस्त्री पङ्कं पुमा न्पाप्मे' त्यमरः । दारिद्र्यहेतुभूत मिति भावः । कर्दम इति च प्रतीयते – 'पङ्कोऽस्त्री शादकर्दमा' वित्यमरः । विलयं नाशं, प्रपेदे प्राप – जलाप्लवना त्कर्दम इव

भगवदानन्दबाष्पसेका त्पापं निरस्त मित्यर्थः । उत्तरं जलाप्लवनानन्तरं, अमुष्य कुचेलस्य, पङ्कलेपः पापसम्बन्धः कर्दमलेपनं च – नेति य त्त चित्रं – जलाप्लवनस्य प्राचीनपङ्कलेप-मालनिवर्तकत्वं दृष्टं न तूत्तरत पङ्कसम्बन्धाजनकत्वम् – अतो विचित्र मित्यर्थः । विरोधा-भासालङ्कारः । यदुक्तं चित्रमिति तत्पुनर्विचार्य प्रतिषेधति । स्थाने इति – अथवा स्थाने पक्षान्तरेण, युक्तमेवेद मित्यर्थः । तत्र हेतु माह–अस्य कुचेलस्य कुपदयोगकथापि कुत्सितं पदं कुपदं, दुष्टोद्योग इत्यर्थः । 'पदं व्यवसित त्राणेति' कोशात् । (व्यवसितं व्यवसाय' उद्योग-इत्यर्थः) तस्य योग स्सम्बन्ध, स्तस्य कथा वार्तापि, न नास्ति । कुत्सितव्यवसाया त्खलु पापसम्बन्ध इति भावः । अन्यत्र कु भूमिः, पदं चरणं, तयो र्योग स्सम्बन्ध, स्तस्य कथापि नास्ति । पदभूमिसम्बन्धः खलु पङ्कलेपकर इति भावः । आक्षेपालङ्कारः – स च श्लेषोज्जीवितः ॥ ३५

ततश्च ॥ आनन्दबाष्पधारासेकानन्तर मित्यर्थः । आलिङ्गनानन्तर मिति वा ॥

**श्लो ॥ त्रिविक्रमोऽयं विधिधौतपादपद्मः पुरा सम्मदपारवश्यात्**
**द्राग्ब्रह्मणोऽमुष्य गृहाश्रितस्य न्यषिञ्च दंघ्री विधि रित्यवेत्य ॥ ३६**

त्रिविक्रम इति ॥ अयं त्रिविक्रमः कृष्णः, पुरा त्रिविक्रमावतारे, विधिधौतपादपद्मः विधिना ब्रह्मणा, धौतं क्षाळितं, पादपद्मं पादारविन्दं, यस्य स तथोक्तः–अतएव गृहाश्रितस्य स्वसदनं प्राप्तस्य, अमुष्य ब्रह्मणः ब्राह्मणस्य प्रजापतेश्च, अंघ्री पादौ, द्राक् शीघ्रं, विधि रित्यवेत्य अतिथिसत्कारो विधिचोदित इति ज्ञात्वेत्यर्थः । ब्रह्मेति ज्ञात्वेति च – सम्मद-पारवश्यात् हर्षपरवशत्वं प्राप्य – ल्यब्लोपे पञ्चमी – सन्निमत्रातिथिलाभात् उपकृतवतः प्रत्युपकारेण आनृण्यलाभाच्चेति भावः । न्यषिञ्चत् नितरां सिक्तवान् प्रक्षाळितवा नित्यर्थः । यथा स्वलोकगतमच्चरणं ब्रह्मा प्रक्षाळयामास तथा मयापि मद्गृहगतब्राह्मणचरणमपि प्रक्षाळ-नीयमेव – ब्राह्मणस्य मम दैवतत्वात् । 'यद्य दाचरति श्रेष्ठस्तत्तदे वेतरे जना' इति आदिक वेर्ब्रह्मण आचारस्य अवश्यानुसरणीयत्वाच्चे त्येकोभावः । मत्पादप्रक्षाळनद्वारा मा मुपकृत-वतोऽस्य ब्रह्मणः तत्पादप्रक्षाळनद्वारैव मया प्रत्युपकारः कर्तव्यः – अन्यथा ऋणग्रस्तत्वापत्ते रित्यन्यो भावः । अत्र सम्मदपारवश्या द्विधि र्ब्रह्मे त्यवेत्य प्रमोदपारवश्या दयमेव ब्रह्मेति भ्रान्त्या इत्यपि द्वितीयार्थं केचि द्ब्रुवन्ति । तन्मते भ्रान्तिमदलङ्कारो व्यङ्ग्यः । श्रीकृष्णकृत विप्रपादप्रक्षाळनस्य त्रिविक्रमावतारी ब्रस्वपादप्रक्षाळनस्मरणजन्यत्वोत्प्रेक्षणा द्गम्योत्प्रेक्षा । ब्रह्मणा विष्णुः तेन ब्रह्मच परस्परं प्रक्षाळितपादाविति वर्णना दन्योन्यालङ्कारः । 'अन्योन्यं नाम यत्र स्या दुपकारः परस्पर' मिति लक्षणात् ॥ ३६

**श्लो ॥ नतेन शिरसा शौरि स्सलिलं य दुपादित**
**मूर्धाभिषिक्तता रूढा तथाप्यस्य न यौगिकी ॥ ३७**

नतेनेति ॥ य यस्मात्, शौरिः कृष्णः, नतेन नम्रेण, शिरसा शीर्षेण, सलिलं कुचेलपादोदकं, उपादित अधृत – तस्मात्, यत्तदो र्नित्यसम्बन्धात्त दित्यस्य लाभः । अस्य कृष्णस्य, मूर्धाभिषिक्तता मूर्ध्नि शिरसि, अभिषिक्तः अभित स्सिक्तः मूर्धाभिषिक्तः, तस्य भाव स्तत्ता; क्षत्रियत्वं च; रूढा स्पष्टा, रूढितस्सिद्धेतिच – 'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रिय' इत्यमरः । तथापि एवमपि, विप्रपादोदकेन मूर्धाभिषिक्तत्वेपीत्यर्थः । अस्य कृष्णस्य, यौगिकी योगत स्सिद्धा, मूर्धाभिषिक्त तेत्यस्यात्राप्यन्वयः । पट्टाभिषिक्तत्व मित्यर्थः । शिरोभिषिक्तत्व मिति च–न नासीत् – ययातिशापा दिति भावः । विरोधाभासालङ्कारः । अयं भावः – असा त्पदा दय मर्थो बोद्धव्य इतीश्वरनङ्केत श्शक्ति रभिधेत्युच्यते । तस्याः योग इति रूढि रिति योगरूढि रिति च व्यापारत्रय मस्ति । तेनैव व्यापारत्रयेण यौगिकं रूढं योगरूढं चेति शब्दजातं त्रिविधं । अवयवार्थपुरस्कारेण अर्थे शब्दप्रवृत्ति र्यत्र तद्यौगिकं; यथा औपगवः । संज्ञाशब्दो रूढः डित्थादिः । यत्र संज्ञा अवयवार्थश्च अस्ति तद्योगरूढं यथा पङ्कजम् । एवं स्थिते मूर्धाभिषिक्त इति पदं रूढ्या क्षत्रिय मभिधत्ते – योगेन तु पट्टाभिषिक्तं शिर स्यभिषिक्तं च बोधयति । श्रीकृष्णे रूढ्या वर्तमानोऽयं मूर्धाभिषिक्तशब्दः विप्रपादसलिलाभिषेका च्छिरोभिषिक्तत्वरूप मवयवार्थं पुरस्कृत्य योगेनापि वर्तते एवेति कृत्वा, विप्रपादसलिलाभिषेका न्मूर्धाभिषिक्ततायाः यौगिकत्वे वक्तव्ये रूढत्वोक्ति रित्येको विरोधः । एवं यौगिकत्वे सत्यपि यौगिकत्वाभावोक्ति रित्यपरो विरोधः । कृष्णे रूढ्या वर्तमानं मूर्धाभिषिक्तत्वं विप्रपादसलिलसेका द्योगेनापि सिद्धत्वेन स्पष्टमिति प्रथमस्य परिहारः । अतएव निरुक्ति रलङ्कारः । 'निरुक्ति र्योगतो नाम्ना मन्यार्थत्वप्रकल्पन' मिति लक्षणात् । सिद्धस्यैव विधाना द्विध्यलङ्कारश्च । विरोधाभासालङ्कार स्तु स्पष्ट एव । शिरोभिषिक्तत्वरूप मूर्धाभिषिक्तत्वस्य सत्त्वेऽपि पट्टाभिषिक्तत्वरूप न्तन्ना स्तीति यौगिकमूर्धाभिषिक्तत्वाभावोऽपि कृष्णे सुलभ एवेति द्वितीयविरोधस्य परिहारः ॥ ३७

अनन्तरं च ॥ विप्रपादं प्रक्षाळ्य तज्जलस्य मूर्ध्नि धारणानन्तर मित्यर्थः ॥

**श्लो ॥ तस्य चक्रधर श्चक्रे दिव्यचन्दनचर्चनम्**
**तेन सामोदता युक्ता त्रिचित्रो वासनाक्षयः ॥** ३८

तस्येति ॥ चक्रधरः कृष्णः, तस्य कुचेलस्य, दिव्यचन्दनचर्चनं सुगन्धिचन्दनलेपनं, चक्रे चकार । चवर्णावृत्तिरूपवृत्त्यनुप्रासालङ्कारलाभार्थं चक्रधर इत्युक्तम् । यद्वा – चक्रं राष्ट्रं धरति पालयतीति चक्रधरः चक्रवर्तीत्यर्थः प्रतीयते – तेन च चक्रवर्तित्वा देवास्य दिव्यचन्दनपरिकरसिद्धिरिति सिद्धम् । तेन श्रीकृष्णकृतदिव्यचन्दनलेपनेन सामोदता सानन्दता, सुरभित्वं च युक्ता क्षमा - परमेश्वरकर्तृकपूजालाभात् । मिलो तमक र्तृकपूजालाभादिति वा– परमानन्दः दिव्यचन्दनसम्बन्धा त्परिमळातिशयश्च कुचेलस्यासीदिति युक्तमे वेत्यर्थः । किं

त्विद मयुक्त मित्याह — वासनाक्षयः संस्कारनाशः, परिमळनाशश्च, विचित्रः अद्भुतः, श्रीकृष्णकरस्पर्शा न्मनोनिर्वासनं सत् विगळितवेद्यान्तरं सुख मन्वभू दिति परमार्थः । चन्दन-लेपा त्सपरिमळस्यापि परिमळक्षय आसीदि त्यद्भुतमि त्यन्यार्थः । विरोधाभासालङ्कारः ॥ ३८

**ग ॥ तदनु विविधोपचारै रभ्यर्च्य मधुसूदन श्श्रमापनयनाय भीष्मतनयां व्यजनवीजने न्ययुङ्क्त; कुशल मन्वयुङ्क्त च ॥** ३९

तदन्विति ॥ तदनु चन्दनलेपनानन्तरं, विविधोपचारैः बहुविधपूजाभिः, कुसुमाम्बर-भोजनादिदानै रित्यर्थः । अभ्यर्च्य अर्चयित्वा, मधुसूदनः कृष्णः, श्रमापनोदनाय मार्गायास-निरासाय, व्यजनवीजने व्यजनेन चामरेण, वीजने व्यजनस्य वीजने चालने इति वा — भीष्मतनयां रुक्मिणीं, न्ययुङ्क्त नियोजितवान् कुशलं 'ब्राह्मणं कुशलं पृच्छे'दिति शास्त्रादिति भावः । अन्वयुङ्क्त पप्रच्छ च ॥ ३९

अव ॥ ननुबाल्यमित्रत्वा च्छ्रीकृष्णः कुचेलं पूजयतु नाम — कथं पुना रुक्मिणी तस्य व्यजनवीजनं चकारेत्यत आह ॥

**श्लो ॥ व्यजनानिलेन सहजानुकम्पया । समपूजयद् द्विज मसौ विदर्भजा**
**कथ मेतदस्तु यदि वा न विस्मयो । द्विजराज एष सदया च सा रमा ॥४०**

व्यजनेति ॥ असौ विदर्भजा एषा रुक्मिणी, सहजानुकम्पया नैसर्गिककरुणया, निर्हेतुकजायमानदययेत्यर्थः । द्विजं कुचेलं, व्यजनानिलेन चामरवायुना, समपूजयत् पूजितवती-निर्हेतुकजायमानकरुणैवात्र प्रेरिकेति भावः — अन्यथेति शेषः — निर्हेतुकदयाऽनङ्गीकारे इत्यर्थः । एतत् रुक्मिण्याः कुचेलपूजकत्वं कथमस्तु ? रुक्मिण्याः कुचेलपूजने दयां विना परं युक्तं हेतुं न पश्याम इत्यर्थः । यदि वा यद्वा, विस्मयो न — नात्र विस्मयः कार्य इत्यर्थः — तत्र हेतु माह — एष कुचेलः, द्विजराजः ब्राह्मणोत्तमः, भवतीति शेषः — सा रमा रुक्मिणी, सदया सकृपा च भवतीति शेषः — तादृशी महेश्वरी रुक्मिणी, कथं कुचेल मपूजयदिति विस्मयस्य नात्रावकाशः — कुचेलस्य ब्रह्मविदुत्तमत्वेन पूज्यत्वा द्रुक्मिण्या दयार्द्रहृदयत्वा च्चेत्यर्थः — एतेन रुक्मिण्याः कुचेलपूजने न केवलं दयैव प्रेरिका, किन्तु कुचेलस्य ब्रह्मवित्त-मत्वमपीति फलितम् — यद्वा असौ विदर्भजा सहजानुकम्पया भ्रातृस्नेहेन, द्विजं व्यजनानिलेन समपूजयत् — एतत् रुक्मिणीकुचेलयो स्सोदरत्वं कथमस्तु ? नात्र हेतुं पश्याम इत्यर्थः — यदिवा यद्वा, विस्मयो न एष कुचेलः द्विजराजः चन्द्रः, ब्राह्मणोत्तमश्च, भवति । सदया सा रमा लक्ष्मी भवति — 'राघवत्वेऽभव त्सीता रुक्मिणी कृष्णजन्मनीति' विष्णुपुराणवचनात्— लक्ष्मीचन्द्रयो स्सोदरत्वं युक्त मित्यर्थः । स्वभर्तु र्मित्रत्वेन कुचेले भ्रातृवात्सल्यं रुक्मिणी चकारेति परमार्थः — आक्षेपालङ्कारः ॥ ४०

श्लो ॥ प्रत्यागतो गुरुकुला त्किमु पर्यणैषीः
कान्तां सखे ! सुसदृशीं प्रसमीक्ष्य नो वा ?
आदौ वधू मसदृशी मुपयम्य मोहा
द्बह्वी र्यथारुचि ततः कलयन्ति केऽपि ॥ ४१

प्रत्यागत इति ॥ हेसखे मित्र ? कुचेल ? गुरुकुलात् गुरुगृहात्, प्रत्यागतः पुनरायातः, गुरुकुलवासं सन्त्यज्य स्वगृहं प्राप्त इत्यर्थः – गुरुकुलत्यागानन्तर मावयो र्वियोगादिति भावः – त्व मित्याक्षेपः – सुसदृशी मत्यन्त मनुरूपां, कान्तां स्त्रियं, प्रसमीक्ष्य सम्यग्विचार्य, कान्ता-निष्ठरूपशीलादिकं परिशोध्येत्यर्थः – पर्यणैषीः किमु परिणीतवान् किम्; नो वा यद्वा तथा न पर्यणैषीः किमित्यर्थः – यज्ञोपवीतै रेव विवाहसंशयो निवृत्तः – परन्तु योग्या कन्या लब्धा वा नवेति पृच्छामीति भावः – केऽपिकेचित्, आदौ असदृशी मननुरूपां, वधूं कन्यां, मोहा द्भ्रमात्, उपयम्य परिणीय, चिरं ब्रह्मचर्यक्लेश मनुभूतवतः यत्किञ्चि द्रूपवत्या मपि सुन्दरीत्वभ्रमसम्भवादिति भावः – ततः तत्परिणयानन्तरं यथारुचि यथाभिलाषं, बह्वी रनेकाः, वधूः कन्याः, कलयन्ति परिणयन्ति । यथाऽह मादा वसदृशीं रुक्मिणी मुपयम्य ततो जाम्बवत्यादी र्बह्वी र्महिषी स्सुसदृशीः परिणीतवां स्तद्वदिति भावः ॥ ४१

ग ॥ एव मन्यापदेशेन परिहसति भगवति रुक्मिणी कुचेल मिद मवादीत्– अयि द्विजराज ! नितान्त मननुरूपघटनाधुरन्धरस्य विधिहतकस्य स्वभाव मवबुध्यमानेन युक्त मेवानुयुक्त मार्यपुत्रेण ॥ ४२

एव मिति ॥ एव मुक्तविधया, भगवति कृष्णे, अन्यापदेशेन इतरव्याजेन, कुचेल-कुशलप्रश्नव्याजेनेत्यर्थः । परिहसति परिहासं कुर्वति सति, रुक्मिणी ममासदृशीति भाव-प्रकटनादिति भावः । रुक्मिणी कुचेलं प्रतीदं वक्ष्यमाणं वचन मवादीत्; श्रीकृष्णाभि-प्रायज्ञत्वादिति भावः – अयि द्विजराज ब्राह्मणोत्तम! नितान्त मत्यन्तं, अननुरूपघटना धुरन्धरस्य अननुरूपयोः अन्योन्य मननुगुणयोः, दम्पत्यो रित्यर्थः – घटनायां सङ्घटने, धुरन्धरस्य अतिचतुरस्य, सर्वथा प्यननुरूपावेव वधूवरौ घटयत इत्यर्थः – एतेन रुक्मिणी-कृष्णयो र्ब्रह्मसृष्ट्यविषयत्वेन तादृशाननुरूपघटनाशङ्का नास्तीति गम्यते – विधिहतकस्य नीचस्य ब्रह्मणः स्वभावं प्रकृतिं, मननुरूपघटकत्वात्मक मित्यर्थः – अवबुध्यमानेन जानता, आर्यपुत्रेण श्रीकृष्णेन – नाटकेषु जाया भर्तार मार्यपुत्र इति ब्रूते – स न्याय इहापि काव्ये आश्रितः – युक्तं समीचीनमेव, अनुयुक्तं पृष्टं – एवकारेण काका नायं प्रश्नः युक्त इत्यर्थः । विधेरे वाननुरूपघटनापरत्वे अनुरूपामिळिता नवेति प्रश्न एव न सङ्गच्छत इति भावः ॥ ४२

तथाहि ॥ विधे स्ताव दननुरूपघटनामेव दर्शयामीत्यर्थः ॥

श्लो ॥ उत्कण्ठितै र्भूमिभृतां सहस्रैः
काङ्क्ष्या महंपूर्विकया प्रवृत्तैः
गोपेन राज्ञ स्तनयां कदाचि
च्चोरेण दैवं घटये त्प्रतीपम् ॥ ४३

उत्कण्ठितैरिति ॥ भूमिभृतां राज्ञां, नतु क्षुद्राणामिति भावः — सहस्रैः न तु द्वित्रैरिति भावः — अमितै र्भूपै रित्यर्थः — काङ्क्ष्यां काङ्क्षितुं योग्यां न तु लभ्यामिति भावः - ते च भूमिभृतो नोदासीना इत्याह उत्कण्ठितैरिति — सोत्कण्ठै रित्यर्थः — अतएव अहंपूर्विकया अहंप्रथमिकया, प्रवृत्तैः कन्यावरणार्थ मिति भावः — अहं प्रथमं गत्वा एनां परिणयेयं अहं प्रथम मित्येवं सोत्कण्ठै रित्यर्थः — एतेन कन्याया लोकोत्तरलावण्यं व्यज्यते— उत्कण्ठितैः अहं पूर्विकया प्रवृत्तैः भूमिभृतां सहस्रैः काङ्क्ष्या मित्यन्वयः। राज्ञः भूपस्य, तनयां कन्यां, प्रतीपं दैवं, प्रतिकूलो विधिः, कदाचित्समये, चोरेण स्तेयकर्त्रा, एतेन वर स्याधमत्वं व्यक्तम् — गोपेन गोपालेन, एतेन कुरूपता अकुलीनत्वञ्च व्यक्तम् — घटयेत् योजयेत्। अत्र च शिशुपालाद्यनेकनृपकाङ्क्षितत्वस्य गोपालचोरितत्वस्य च स्वस्मिन्नेव सम्भवात् स्वयमेव दृष्टान्त इति भावः। एतेन श्रीकृष्णेन स्वस्मि न्नापादित मसुन्दरीत्वरूपं दोषं निराकृत्य कृष्णे चोरगोपत्वदोष मनिवार्यं रुक्मिणी स्थापयामासेति सिद्धम्। वास्त-वार्थस्तु — राज्ञो भीष्मस्य तनयां मां कदाचि त्प्रतीपं न तु सर्वथेत्यर्थः — अनुकूलमिति यावत् — दैवं चोरेण चोरय त्याश्रितपाप मिति चोरः तेन गोपेन भूदेवीनाथेन विष्णुनेत्यर्थः — घटयेत् — अहो मम भागधेय मित्यर्थः ॥ ४३

ग ॥ एवं वादिन्यां दयितायां दामोदरः पुनरपि सकपट मिद मवादीत्॥ ४४

एव मिति ॥ एवं दयितायां प्रियायां, वादिन्यां ब्रुवन्त्यां, सत्यां दामोदरः पुनरपि सकपटं सव्याज, मिद मवादीत् ॥ ४४

ग ॥ अयि भो तपस्विपुरस्सर! लोकस्वभाव ममु मप्यवधारयतु भवान् ॥ ४५

अयीति ॥ अयि भो तपस्विपुरस्सर तापसोत्तम! अमुं मया वक्ष्यमाणं, लोकस्वभावमपि लोकप्रकृतिमपि, भवा नवधारयतु शृणोतु, त्वं शृण्वित्यर्थः ॥ ४५

श्लो ॥ कन्या मसुन्दरतनूमपि रुक्मिमुख्या
स्सम्बन्धिन स्त्विति परे तु भजन्ति लोभात्
प्रद्युम्नलाभ मपहाय न कश्चि दस्या
स्सम्पर्कत स्सुखविशेष इति प्रतीमः ॥ ४६

कन्यामिति ॥ परे तु केचि, तुकारः पूर्ववैलक्षण्यार्थः – तेन न पूर्वव देते भ्रान्ताः किन्तु युक्तायुक्तविवेकचतुरा अपीति व्यज्यते – सम्बन्धिनः श्वशुर साल्वादयस्तु, रुक्मिमुख्याः अतिधनिका इति लोभात् धनलोभा दित्यर्थः । असुन्दरतनुं असुन्दराङ्गीमपि कन्यां, भजन्ति परिणयन्ति – अस्याः धनिकसम्बन्धिन्याः कन्याया स्सम्पर्कतः सम्बन्धात्, प्रद्युम्नलाभं प्रकृष्टस्वर्णलाभ, मपहाय त्यक्त्वा, तं विनेत्यर्थः – कश्चिदपि सुखविशेषः सुखातिशयः, न नभवति, इति प्रतीमः जानीमः – सौन्दर्याभावा त्तत्सम्बन्धो न चित्तानुरञ्जनः किन्तु धनमात्रसम्पादक इत्यर्थः । व्यङ्ग्यार्थस्तु – असुन्दरतनूमपि कन्यां रुक्मिणी मिति भावः । सम्बन्धिनः रुक्मिमुख्याः रुक्मिप्रभृतय, इति लोभा द्भजन्ति । अस्याः रुक्मिण्याः सम्पर्कतः संयोगा द्धेतोः, प्रद्युम्नलाभं प्रद्युम्नाख्यपुत्रलाभ, मपहाय कश्चिदपि सुखविशेषो नेति प्रतीमः । आलम्बनविभावस्य नायिकाया स्सौन्दर्याभावे सम्भोगशृङ्गाररसपरिस्फूर्त्यभावा न्न सम्भोगसौख्यं किन्तु पुत्रसौख्य मेवेत्यर्थः । ४६

**ग ॥ एवं वादिनि वासुदेवे भगवती पुन रवादीत् – अयि भो तपस्वि शिरोरत्न ! न केवल मिदं पुरुषाणां योषिता म प्ययमेव स्वभावः ॥ ४७**

एव मिति ॥ भगवति वासुदेवे, एवं वादिनि सति भगवती रुक्मिणी, पुन रवादीत् । अयीति – अयि भो तपस्विशिरोरत्न तापसचूडामणे ! इदं सामान्ये नपुंसकम् । अयं स्वभाव इत्यर्थः । यद्वा – इदं धनलोभा दसुन्दरीभजनं पुरुषाणां केवलं पुरुषाणा मेव, न । किन्तु योषितां स्त्रीणामपि, अयमेव स्वभावः – एषैव प्रकृतिः । धनादिलोभा दसुन्दरपुरुषभजनस्वभाव स्स्त्रीणां चास्तीत्यर्थः ॥ ४७

**श्लो ॥ जगतीविभुतातृषा भजन्ते । पुरुषं काश्चन वस्तुतो विरूपम्**
**विषयोपनतं हि नात्र सौख्यं । फल मस्योत्तमभक्तमात्रतुष्टिः ॥ ४८**

जगतीति ॥ काश्चन स्त्रियः अस्मत्प्रभृतय इति भावः । वस्तुतः स्वतः, विरूपं असुन्दरं, भूषणादिभिः कल्पितसौन्दर्य मित्यर्थः – पुरुषं पुमांसं, जगतीविभुतातृषा भूपतित्वलोभात्, कुरूपस्या प्यस्य भूपते र्यद्यहं भार्या स्यां तर्हि मम राज्ञीत्वं स्या दित्याशये नेत्यर्थः । भजन्ते परिणयन्ति – अत्र भूपतिपाणिग्रहे विषयोपनतं विषयभोगजनितं, सौख्यं आनन्दः, नहि नास्ति खलु । पत्यु रसुन्दरत्वादिति भावः । अस्य परिणयस्य फलं उत्तमभक्तमात्रतुष्टिः मृष्टान्नभक्षणमात्रजन्यसन्तोषः – यद्वा उत्तमभक्तमात्रतुष्टि रस्य फलं भवतीत्यन्वयः । वास्तवार्थस्तु – काश्चन महासुकृतपरिपाकभूताः योगिन्य इत्यर्थः । वस्तुतः परमार्थतः, विरूपं रूपरहितं, रूपस्य मिथ्यात्वादिति भावः । उपलक्षण मिदं निर्गुणत्वादीनां – पुरुषं परमात्मानं, पुरि शरीरभूते आत्मनि शेते इति पुरुषः अन्तरात्मेति व्युत्पत्तेः । जगतीविभुता-

तृषा लोकेश्वरत्वलोभात्, परमेश्वरोऽय मस्माक मभिलषितं दास्यती त्याशयेनेत्यर्थः। भजन्ते सेवन्ते — अत्र भगवद्भजने विषयोपनतं शब्दादिजन्यं, सौख्यं सुखं, न स्वरूपानन्दभरितत्वादिति भावः। अस्य भगवद्भजनस्य फलं उत्तमभक्तमात्रतुष्टिः उत्तमभक्तमात्रस्य प्रह्लादनारदादिभक्तजातस्येव तुष्टि रानन्दः, प्रह्लादादयो यथा भगवन्तं भजमाना स्स्वरूपानन्दभरिता मोदन्ते तद्व द्योगिनीना मपीत्यर्थः। जगतीविभुतातृषेत्यत्र जगतीविभुः परमेश्वरः, तद्भावे तृषा आशया, परमेश्वरसायुज्यलोभादिति च प्रतीयते। अन्योऽप्यर्थः प्रतीयते — काश्चन सीतारुक्मिण्यादयः, वस्तुतो विरूपमपि पुरुषं विष्णुं, जगतीविभुतातृषा श्रीकृष्णसायुज्यार्थमित्यर्थः। इदं च सायुज्यं विशिष्टाद्वैतिमताभिमतं संयोगात्मकमेव — भगवता संयुज्य वर्तनार्थमिति यावत्। भजन्ते परिणयन्ति। अत्र विष्णुसम्बन्धे विषयोपनतं सम्भोगजन्यं सौख्यं न, स्वरूपानन्दभरितत्वा द्विष्णो रिति भावः। अस्य परिणयस्य फलं उत्तमभक्तमात्रतुष्टिः प्रह्लादादि भक्तजातानुग्रह एव। भक्तानुग्रहार्थमेव भगवत स्सीतापरिणयादिनटनं नतु विषयलौल्यादिति भावः॥ ४८

ग॥ **तदनु यदुनन्दनः पुनरपि वस्तुगति मुपपादयन्निव विलोक्य रुक्मिणीवदनं सकपट मिद मवादीत्॥** ४९

तदन्विति॥ तदनु रुक्मिणीवचनानन्तरं, यदुनन्दनः कृष्णः, पुन र्भूयोऽपि, वस्तुगतिं लोकस्थिति, मुपपादयन् प्रदर्शयन्निव, नतु वस्तुत इत्यर्थः। रुक्मिणीवदनं विलोक्य त्वा मुद्दिश्यैवेदं वचनं प्रवृत्तमिति ज्ञापयितु मिति भावः। अस्मत्कृतपरिहासवचनश्रवणेन हृष्टा वा रुष्टावेति तन्मुखप्रसादेन निश्चेतु मिति वा — सकपटं सव्याजं, यथा तथा इद मवादीत्॥ ४९

**श्लो॥ बालिशाऽनन्यजन्मानं या न संवर्धयेद् वधूः**
**भोगलौल्य मळीकं तां सुन्दरस्य प्रतीच्छतः॥** ५०

बालिशेति॥ बालिशा मूढा अचतु रेत्यर्थः। या वधूः स्त्री, अनन्यजन्मानं मन्मथं, न संवर्धयेत् न प्रवर्धयेत्, सौन्दर्याभावादिति भावः। पुरुषस्य मन्मथोद्रेकं जनयितुं न शक्नुया दित्यर्थः। तां वधूं प्रतीच्छतः स्वीकुर्वतः परिणयत इति यावत् — सुन्दरस्य सुभगस्य पुंसः, भोगलौल्यं भोगासक्तिः, अळीक मनृतं व्यर्थ मित्यर्थः। व्यङ्ग्यार्थस्तु — या वधूः रुक्मिणीति भावः। बालिशानन्यजन्मानं बालमन्मथं प्रद्युम्नमिति यावत्। न संवर्धयेत् न परिपुष्येत् — सूतकमध्य एव शम्बरासुरेण हरणात् यौवनानन्तरं पुनरागमनाच्चेति भावः। तां प्रतीच्छतः सुन्दरस्य स्वस्येत्यर्थः। भोगलौल्य मळीकं मृषा अवाप्तसमस्तकामत्वादिति भावः॥ ५०

ग ॥ एवं वादिनि दयिते रुक्मिणी सव्याजं प्रत्यवादीत् ॥ ५१

एवमिति ॥ एवं दयिते प्रिये कृष्णे, वादिनि सति रुक्मिणी सव्याजं सकपटं यथा तथा, प्रत्यवादीत् प्रत्युवाच – स्वमुखं विलोक्य कृष्णेन उक्तत्वा तत्कृष्णं प्रत्येव रुक्मिण्युवा चेत्यर्थः ॥ ५१

ग ॥ आर्यपुत्र! युक्त मुक्तं भवता । न केवलं कमनीयपुरुषस्य विषमयोषिता-विषादः किन्तु कामिनीनामपि सुरूपाणा मननुरूपवल्लभलाभेन सांप्रत मनुतापः ॥५२

आर्यपुत्रेति ॥ हे आर्यपुत्र नायक ! भवता त्वया, युक्तं समीचीनं, उक्तं त्वयोक्तं युक्त मिति वा – कमनीयपुरुषस्य केवलं सुन्दरस्यैव विषमयोषिता असुन्दरस्त्रिया, तल्लाभे-नेत्यर्थः । विषादः खेद इति न – किन्तु सुरूपाणां सुन्दरीणां कामिनीनां स्त्रीणामपि, अननुरूपवल्लभलाभेन विषमपतिप्राप्त्या, अनुताप स्सन्तापः भवेदिति शेषः । इति सांप्रतं युक्तम् ॥ ५२

श्लो ॥ शमितोऽपि दृशा कामः पुन रुत्पद्यते यतः
सा चेद् वृषविवर्तस्य कीदृशी जन्मसाफली ॥ ५३

शमित इति ॥ दृशा ज्ञानेन, 'दृक् ज्ञाने ज्ञातरि त्रि' ष्वित्यमरः । शमितः नाशितोऽपि, कामः कामिनीविषयानुरागः, यतः यस्यां सुन्दर्यां विषये – सार्वविभक्तिक स्तसिः – पुन र्भूयः, उत्पद्यते जायते – यद्दर्शनेन विरक्तस्यापि मनः क्षुभ्यतीत्यर्थः । सा अतिसुन्दरीत्यर्थः । वृषविवर्तस्य वृषभरूपान्तरस्य, अविदग्धतया पशुप्रायस्येत्यर्थः । चेत् स्याद्यदि, तद्भार्या स्याच्चे दित्यर्थः । जन्मसाफली जन्मसाफल्यं कीदृशी अनिर्वाच्येत्यर्थः । विरुद्धलक्षणया काक्वा वा तस्या जन्म विफल मित्यर्थः । व्यङ्ग्यार्थस्तु – दृशा हरनेत्रेण, शमितः दग्धोऽपि, कामः स्मरः, यतः यस्या स्सकाशात्, पुन रुत्पद्यते, प्रद्युम्नरूपेणेति भावः । सा रुक्मिणीति भावः । वृषविवर्तस्य सुकृतपरिपाकस्य कृष्णस्येत्यर्थः । चेत् कृष्णमहिषी स्याद्यदी त्यर्थः । जन्मसाफली कीदृशी इतोऽपि मम किं जन्मसाफल्य मित्यर्थः ॥ ५३

श्लो ॥ परस्परपरीहासस्मेराननसरोजयोः
स तयोः कलयन् लीलां श्रेयसां भूयसां निधिः ॥ ५४

परस्परेति ॥ परस्परपरीहासस्मेराननसरोजयोः परस्परस्य अन्योन्यस्य, परीहासः परिहासः, तेन यः स्मेरः, स्मितविकासः, सः आननसरोजे मुखकमले, ययो स्तयोः तत्स्मेरयुक्त माननसरोजं ययो रिति वा–तयोः लीलां विलासं, कलयन् अनुभवन्, स कुचेलः, भूयसां

अधिकानां, श्रेयसां कल्याणानां, निधिः शेवधिः, अभूदिति शेषः – तादृशलीलाजालानुभवा त्कुचेलस्य मह च्छ्रेयो जात मित्यर्थः – तत्स्मरणादेव निश्श्रेयसलाभादिति भावः ॥ ५४

**ग ॥ एव मरविन्दलोचनः कञ्चि त्कालं प्रेयसीपरिहाससुख मनुभूय कुचेलं पुन रपृच्छत् ॥ ५५**

एवमिति ॥ अरविन्दलोचनः पुण्डरीकाक्षः, एवं कञ्चित्कालं कञ्चि त्समयं, कालाध्वनो रत्यन्तसंयोगे द्वितीया – प्रेयसीपरिहाससुखं प्रियापरिहासजन्य मानन्द मनुभूय, कुचेलं पुन रपृच्छत् भूयः पप्रच्छ – युक्ता कन्या त्वया परिणीता वा नवेति पूर्वं पृष्टत्वा त्पुन रित्युक्तम् ॥ ५५

**श्लो ॥ आलो क्याङ्गणचारिणो मृगशिशून् रोमन्थ मभ्यस्यतो**
**मादृक्षै रनवेक्ष्य मम्ब ! मधुरं किं भक्ष्य मश्नन्त्यमी**
**इत्येवं परिपृच्छतोऽतिकृपणं भक्ष्याशया बालकान्**
**साकांक्षं परिचुम्ब्य भूसुरमणे ! कच्चि त्सुखं प्राप्यते ॥ ५६**

आलोक्येति ॥ रोमन्थं चर्वित स्याकृष्य पुन श्चर्वणं– अभ्यस्यतः आवर्तयतः, कुर्वत इत्यर्थः । पशवो हि तृणपुञ्जं खादित्वा गर्भान्तरा त्तत्तृणपिष्टं पुन र्वदनान्तरं प्रापय्य लाला-जलेन आर्द्रीकृत्य पुनः खादन्तीति प्रसिद्धम् – अङ्गणचारिणः अङ्गणे चत्वरे, गृहपुरोदेशे इत्यर्थः – चरन्तीति अङ्गणचारिणः, तान् मृगशिशून् हरिणपोतान्, आलोक्य तापसानां वनवासित्वादिति भावः – हे अम्ब जननि ! जनन्या एव भक्ष्यादिदानेन पुत्रपोषकत्वादिति भावः । मादृक्षैः मादृशै र्बालै रित्यर्थः – अनवेक्ष्यं द्रष्टु मशक्यं, मधुरं स्वादु, किं भक्ष्यं भक्षितुं योग्यं आहारविशेष मित्यर्थः । अमी मृगशिशवः, अश्नन्ति भक्षयन्ति, इत्येवं भक्ष्याशया भक्ष्यकामनया, अतिकृपणं अतिदीनं यथा तथा, परिपृच्छतः विशेषेण पृच्छतः, बालकान् शिशून्, सांकाक्षं सप्रेम यथा तथा, परिचुम्ब्य चुम्बित्वा, लालनार्थ मितिभावः । हे भूसुरमणे बाडबोत्तम ! सुखं सौख्यं, प्राप्यते कच्चित् प्राप्यते किं ? त्वयेति शेषः – गृहस्थाश्रमस्वीकारस्य पुत्रसौख्यमेव फलमिति भावः । अत्र रोमन्थ मभ्यस्यतो मृगान् मधुरं भक्ष्य मशित्वा स्वादप्रकाशकान् मत्वा बालकाः पप्रच्छुरिति वर्णनात् भ्रान्तिमदलङ्कारः भगवत स्सर्वज्ञत्वेन कुटुम्बपोषणाक्षम स्यातिदरिद्रस्य कुचेलस्य कुटुम्बस्थितिः हार्दो भाव श्च विशद एवेति अनेन प्रश्नेन व्यज्यते ॥ ५६

**ग ॥ स्मरसि कुचेल ! गुरुकुले वत्स्याम स्तत्र च यामुनपुलिनेषु मुष्टामुष्टि-लीलां विधास्यामः । ५७**

स्मरसीति ॥ हे कुचेल ! गुरुकुले गुरुगृहे, वत्स्यामः अवसाम इति स्मरसि कच्चि दिति पूर्वश्लोकस्थपद स्यात्राप्यन्वयः – स्मरसि किं मित्यर्थः – तत्र च गुरुकुले गुरुकुलवाससमये इत्यर्थः–यामुनेषु पुलिनेषु यमुनासम्बन्धिषु तोयोद्धितप्रदेशेषु, मुष्टीमुष्टिलीलां मुष्टीमुष्टिविहारं, विधास्याम अकरवाम, इति स्मरसि कच्चि दित्यन्वयः – अभिज्ञावचने लृडिति भूतार्थे लृट्– यद्वा कच्चि दित्यस्यात्रान्वयो मास्तु – इति स्मरस्येवेत्यर्थः ।. दीर्घकालपरिचयात् गुरुकुले अस्माकं सह वासः प्रबलै रस्माभि र्मुष्टिभि र्दृढं ताडितत्वेन मुष्टीमुष्टिविहार श्चेत्येतद्द्वयं तव स्मृत्यारूढमेवेति भावः ॥ ५७

**ग ॥ अपितु विस्मृत मिदं भवता ॥** ५८

अपीति ॥ अपितु किन्तु, इदं वक्ष्यमाणं, भवता त्वया, विस्मृता स्मृतिपथात् भ्रंशित मित्यर्थः – क्षणकालपरिचयादिति भावः – किंतदित्यत अह ॥ ५८

**श्लो ॥ फलस्यन्तो वयं जातु याता श्चूतं तदाऽवदत्**
**रामः परभृतं पश्य त्वावां च त्वादृशाविति ॥** ५९

फलस्यन्त इति॥ जातु कदाचित्, फलस्यन्तः फलमिच्छन्तः –सुप आत्मनः क्यचि–सर्व प्रातिपदिकानां क्यचि लालसायां सुगसुका विति वार्तिकात् सुगागमः –वयं चूतं रसालतरुं, प्रति याताः गताः, चूतं याताः प्राप्ता इति वा – तदा चूतसन्निधौ परभृतं परेण काकेन भृतः पोषितः परभृतः कोकिलः, तं – काका हि कृष्णगुणसाम्यात् कोकिलशिशुं स्वशिशुं मत्वा पुष्णन्तीति प्रसिद्धम् – पश्यन् अवलोकयन्, रामः बलरामः, आवां च आवामपि, रामकृष्णा वित्यर्थः –त्वादृशौ त्वत्तुल्यौ त्वमिव परभृता वित्यर्थः – रामकृष्णयोरपि परेण नन्देन पुष्टत्वादिति भावः – इत्येव मवदत् उक्तवान् – अत्र स्मरणार्थधातुयोगाभावा न्न लृट् ॥ ५९

**श्लो (५)॥ इदं किं मध्येति भवा न्वनान्ते गा श्चारयिष्याम उदीतहर्षाः ॥**६०

इद मिति ॥ वनान्ते वनमध्ये, उदीतहर्षाः उत्पन्नसन्तोषाः, वय मित्यस्याक्षेपः; गाः धेनूः, चारयिष्यामः अचारयाम, इतीदं भवान् त्व, मध्येति स्मरति, किं – अधिपूर्वका दिक्स्मरणे इति धातो र्लृट् ॥ ६०

**ग ॥ [सस्मितां रुक्मिणी मवलोक्य सशङ्कम् ॥]**

सस्मिता मिति ॥ सस्मितां सहासां, श्रीकृष्णेनापि गाव श्चारिता इति गाः चारयन्न प्ययं न भिन्नः किन्तु हृष्ट इति वा – बाल्ये नन्दव्रजे यदभ्यस्तं गोपालनं तत्कैशोरावस्थायां विद्याभ्यासकालेऽपि न विस्मृतमिति वा रुक्मिण्या हास स्सञ्जात इति भावः । रुक्मिणी मवलोक्य दृष्ट्वा, सशङ्कं ससन्देहं यथा तथा अहो गोपालकत्वरूपं मदीय मधमकृत्यं मयैव

प्रकटीकृतं राजकन्यायाः रुक्मिण्याः पुरत इति शङ्कित्वेति भावः – अथ इदं किमिति श्लोकस्योत्तरार्धं पूरयति ॥

**श्लो (५)॥ शुश्रूषमाणस्य गुरू ननार्यकार्यावलम्बोऽपि न दूषणाय ॥** ६०

शुश्रूषमाणस्येति ॥ श्रोतु मिच्छति शुश्रूषते 'ज्ञाश्रुस्मृदृशां सन' इति तङ् – तत श्शानचि रूपम् – 'वरिवस्या तु शुश्रूषा परिचर्या प्युपासन' मिति अमरात् । इयं च शुश्रूषा उपासनारूप मर्थं बोधयति – तत श्च गुरून् उपाध्यायान्, शुश्रूषमाणस्य उपासतः अनार्यकार्यावलम्बोऽपि अधमकार्यस्वीकारोऽपि, दूषणाय दोषाय, न नभवति – गुरुशुश्रूषाव्यग्रस्य गुरुगोपरिपालनं न दूषण मित्यर्थः । गुरुशुश्रूषाव्यग्रेण मया गाव श्चारिताः नतु मौढ्यात् नापि दारिद्र्यादिति रुक्मिणीं कृष्ण स्समादधे इति परमार्थः ॥ ६०

**ग ॥ एवं वादिनि वासुदेवे लोकस्थिति मभिदधानेव रुक्मिणी सकपट मिद मवादीत् ॥** ६१

एव मिति ॥ वासुदेवे एवं वादिनि सति, लोकस्थितिं लोकमर्यादा, मभिदधाना ब्रुवाणेव, रुक्मिणी सकपटं सव्याज, मिद मवादीत् ॥ ६१

**श्लो ॥ गुरुधेनो स्स्वधेनो र्वा पोषणं नैव दूषणम्**
**वस्तुतः परधेनूनां रक्षणं नार्यलक्षणम् ॥** ६२

गुर्विति ॥ गुरुधेनोः जात्येकवचनं, गुरो र्गवा मित्यर्थः – स्वधेनोः स्वीयानां गवां वा स्वस्य गवामिति वा 'स्वो ज्ञाता वात्मनि स्वं त्रिष्वात्मीये' इति कोशात् । पोषणं परिपालनं, दूषणं निन्द्यं, नैव न भवत्येव, पुरुषस्येति शेषः । गुर्वर्थं स्वार्थं च अनार्यकार्येऽपि पुंसः प्रवृत्ति र्न दूष्येत्यर्थः । वस्तुतः वस्तुगत्या, परधेनूनां परस्य सम्बन्धिनीनां गवां, रक्षणं आर्यलक्षणं सज्जनचिह्नं, सत्कृत्य मित्यर्थः – न न भवति – परधेनुरक्षण मसत्कृत्यत्वेन निन्द्य मित्यर्थः । नन्दस्य वस्तुतः परत्वात् तद्धेनूनां श्रीकृष्णेन बाल्ये रक्षितत्वाच्चेति भावः – यद्वा न आर्यलक्षणमिति छेदः – आर्यस्य वैश्यस्यापि लक्षणं युक्तं न भवतीत्यर्थः – यद्यपि वैश्यस्य गोरक्षणं स्वधर्मः – तथापि तस्यापि न परधेनुरक्षणं युक्तं – किन्तु स्वगुरुधेनूनामेवेति स्थिते क्षत्रियस्य तव महदिद मकृत्य मिति भावः । वास्तवार्थस्तु – वस्तुतः परमार्थतः – परधेनूनां उत्कृष्टपशूनां सच्चिदानन्दादिलक्षणशालिनां जीवाना मित्यर्थः – पश्यन्तीति पशव इति व्युत्पन्नत्वात् रक्षणं अविद्यावरणं ध्वंसयित्वा सच्चिदानन्दादिलक्षणस्वस्वरूपस्फोरकत्वरूपं पालन मित्यर्थः । नार्यलक्षणं न विद्यन्ते आर्या यस्मा त्सः नार्यः सर्वगुरु र्भगवानित्यर्थः – तस्य तदैव लक्षणं यद्वा – आर्याणां प्राकृतगुरूणां, लक्षणं कृत्यं न भवति – एवं रक्षणे प्राकृता गुरवो न शक्नुवन्त्ये वेत्यर्थः । यद्वा वस्तुतः परकीयगवां रक्षण मार्यलक्षणं नेति

काकुः – आर्यलक्षणमे वेत्यर्थः। परमेश्वरसम्बन्धिषु गवादिषु स्वपरानुग्रहप्रयुक्तभेददृष्टे रज्ञानिलक्षणत्वा दिति भावः॥ ६२

**ग॥ भगवानपि प्रेयसीवचसि प्रतिवचन मनधिगच्छ न्निवानुत्तरयन् वयस्य कुचेल ! कच्चि दुपनीत स्सख्यु रुपहार इति वदन्नेव जीर्णचेलाञ्चलवास्तव्यान् मुष्टिपरिमितान् पृथुका नादाय सत्वर मखादीत्॥ ६३**

भगवा निति॥ भगवानपि श्रीकृष्णश्च, प्रेयसीवचसि प्रियावाक्ये विषये, प्रतिवचनं प्रत्युत्तर, मनधिगच्छ न्नजानन्निव, अनुत्तरयन् उत्तर मवदन्– 'तत्करोति तदाचष्टे' इति आचष्टे इत्यर्थे णिच्। वयस्य स्निग्ध कुचेल! सख्यु र्मित्रस्य, ममेत्यर्थः। उपहारः बलिः, उपनीतः कच्चित् आनीतः किम्? इत्येवं वदन् ब्रुवन्नेव, महैश्वर्यशालिने कृष्णाय कथं पृथुका स्समर्प्या इति कुचेलो लज्जित इति ज्ञात्वेति भावः। जीर्णचेलाञ्चलवास्तव्यान् जीर्ण-वस्त्राञ्चलपरिवेष्टितान्, मुष्टिपरिमितान् मुष्टिग्राह्यान्, पृथुकान् धाना, आदाय सत्वरं द्रुतं, रुक्मिणीप्रार्थनाभियेति भावः – अखादीत् भक्षितवान्– एतेन अहो श्रीकृष्णस्य तादृशनित्य-लक्ष्मीवतोऽपि दीनवत्सलत्व मिति व्यज्यते॥ ६३

**श्लो॥ अमृतादपि तेषु माधुरी। पृथुके ष्वित्यवगम्यते यतः**
**अमृतं लभतेऽस्य किङ्करः। पृथुकास्तु प्रिययापि दुर्लभाः॥ ६४**

अमृतादिति॥ तेषु पृथुकेषु कुचेलानीतचिपिटेष्वित्यर्थः। अमृतादपि सुधाया अपि, माधुरी अधिकं माधुर्यं अस्तीति शेषः – इति अवगम्य ते ज्ञायते। तत्र हेतु माह - यतः यस्मा त्कारणात्, अस्य कृष्णस्य, किङ्करः भृत्यः, अमृतं मोक्षं सुधां च, लभते प्राप्नोति– पृथुका स्तु प्रिययापि अस्य प्रेयस्या रुक्मिण्यापीत्यर्थः। दुर्लभाः लब्धु मशक्याः, अभवन्निति शेषः। अनुमानाख्यप्रमाणालङ्कारः– काव्यलिङ्गं वा– ६४

**श्लो॥ पुन र्जिघृक्षुं पृथुका न्मुरारिं। विदर्भजा प्राह निवारयन्ती**
**देया सतेऽस्मै यदि सर्वसम्प। द्गति र्भवे दुग्रसखस्य कीदृक्?॥ ६५**

पुनरिति॥ विदर्भजा रुक्मिणी, पुन र्भूयः, पृथुकान् धानाः, जिघृक्षुं गृहीतु मिच्छुं, कुचेलचेलान्तरादिति भावः। मुरारिं कृष्णं, निवारयन्ती सती प्राह उवाच- लकारो न विवक्षितः यद्वा–प्राहेति लट्येव– कविबुद्धिसन्निहितायाः रुक्मिण्या स्तत्कालिकत्वा त्तदुपपत्तिः- रुक्मिणीवचनं दर्शयति सते इति- सते साधवे, अस्मै कुचेलाय, सर्वसम्पत् समस्तापि सम्पत्तिः, देया यदि दातुं योग्या चेत्, मुष्टिमात्रपृथुकानामेव सर्वसम्पन्मूल्यत्वा दिति भावः- उग्रसखस्य शिवमित्रस्य कुबेरस्येति यावत्- कीदृक् कीदृशी, गतिः भवेत् स्यात्? न कापि तस्य गतिरित्यर्थः। इतःप्रा क्कुबेरस्य त्वया सर्वसम्प द्दत्ता। सा चे दधुना कुचेलाय दीयेत

तर्हि कुबेरो निर्धन स्स्या दिति भावः । अत्र सर्वसम्पत् कुबेरपत्नी सतेऽस्मै देया यदि उग्रसखस्य कीदृग्गति र्भवेदिति ध्वन्यते- किञ्च सते विनीतायास्मै, सर्वसम्प द्देया यदि उग्रश्चासौ सखा उग्रसखः, तस्य कीदृग्गति र्भवेत् ?– विनीतायैव मित्राय सर्वामपि सम्पदं दास्यसि चे दत्यन्तकोपनाय मित्राय किं दास्यसीत्यर्थः – विनीतस्तु स्वल्पेनापि परितुष्येत्; नतूग्र इति भावः । इत्यपि ध्वन्यते ॥ ६५

**ग ॥ कुचेलोऽपि पुरन्दरमन्दिर इव मुकुन्दसद्मनि तामेव यामिनी मपनीय परेद्यु रुद्यति प्रद्योतने मित्रधन मनधिगच्छन्नपि तत्समागममेव भूरिलाभं मन्वान स्तदनुज्ञया निजकेतनाभिमुख मयासीत् ॥** ६६

कुचेल इति ॥ कुचेलोऽपि कुचेलश्च, पुरन्दरमन्दिरे इव इन्द्रनगरवत्, उपमालङ्कारः – मुकुन्दसद्मनि श्रीकृष्णान्तःपुरे, तामेव एकामेवेत्यर्थः – यामिनीं रात्रिं, मपनीय गमयित्वा, परेद्युः परस्मिन् दिने- निपातितोऽयं शब्दः- प्रद्योतने सूर्ये, उद्यति आविर्भवति सति, सूर्योदय-समकाल मित्यर्थः । मित्रधनं मित्रा द्धनं मित्रसम्बन्धि धनमिति वा, सुहृद्दत्तधन मित्यर्थः । अनधिगच्छन्नपि अभजन्नपि, सम्मुखे कियतोऽप्यर्थस्य श्रीकृष्णे नावतीर्णत्वा दिति भावः । तत्समागमं श्रीकृष्णसम्पर्कमेव, भूरिलाभं अमितलाभं, स्वर्गलाभमिति च, मन्वानः चिन्तयन्, राजाधिराजदुर्लभस्य कृष्णसमागमस्य लब्धत्वादिति भावः – तदनुज्ञया श्रीकृष्णानुज्ञया, निजकेतनाभिमुखं स्वगृहं प्रति, अयासीत् ययौ –

**अचिन्तयच्च** ॥ वक्ष्यमाणविधया चिन्तितवांश्च – चिन्तामेव दर्शयति –

**श्लो ॥ असौ न दीनो मदभा गिति स । स जीवनं भूरि दुराप माधात्**
**सती गति स्स्या त्कथ मन्यथा तु । निर्वर्तिता चासुरसम्प दुच्चा॥** ६७

असा विति ॥ दीनः कृपणः, असौ कुचेलः, मदभाक् मदं भजतीति मदभाक् मत्तः, न स्यात् माभू दित्यर्थः – इति मत्वेति शेषः – सः प्रसिद्धौ – यद्ययं धनिक स्स्या त्तर्हि मत्त स्स्यादिति ज्ञात्वेत्यर्थः – यद्वा दीनोऽसौ मदभाक् न भवतीति अनुमायेति शेषः – अयं न मदभाक् दीनत्वात् धनिकवदिति व्यतिरेकदृष्टान्तेन प्रयोगः – दैन्यादे वास्य मदो नासीत्, धनिकत्वं स्या च्चेत् मदोऽपि स्यादेव – धनमदयो स्सामानाधिकरण्या दित्यालोच्येति यावत् – सः सर्वज्ञः कृष्णः जीवनं जीवनसाधनं, भूरि सुवर्णं, दुरापं दुर्लभ,माधात् चकार । न दत्तवा नित्यर्थः । एतेन कुचेलस्य गुणज्ञत्वा च्छ्रीकृष्णे लुब्धत्वबुद्धि र्नासीदिति व्यक्तम् – युक्तं चैत दित्याह – अन्यथातु धनमदान्धत्वे इत्यर्थः । सती श्रेष्ठा, गतिः प्राप्यं मोक्ष इत्यर्थः – गतिः स्थानं वैकुण्ठमिति वा – कथं स्यात् नकथ मपीत्यर्थः – 'आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः' इति भगवता धनमदान्वितस्य मुक्त्यनर्हत्वकथना दिति भावः । उच्चा अधिका,असुरसम्पत् असुरसम्बन्धिनी कामक्रोधादिसम्पत्तिः'दैवी सम्प द्विमोक्षाय

निबन्धा यासुरी मतेति' भगवता सप्तदशाध्याये कथ्यमाना नरकसामग्रीत्यर्थः । निवर्तिता नाशिता च, कथं स्यात् धनिक स्यासुरसंपत्सम्भवा दिति भावः – व्यङ्ग्यार्थस्तु – असौ नदीनः नदीना मिनः प्रभुः, अब्धि रित्यर्थः । 'इन स्सूर्ये प्रभौ पत्या' विति विश्वप्रकाशः । मदभागिति हेतोः स रामः भूरि बहुळं, जीवन मुदकं, दुराप माधात् – आग्नेयास्त्रेण शोषयामासेत्यर्थः । अन्यथा तु समुद्र स्याशोषणे इत्यर्थः – सतीगति गमनं, समुद्रमध्ये सञ्चार इत्यर्थः – कथं स्यात् – यद्वा – सत्या स्साध्व्याः सीतायाः, गतिः प्राप्तिः, कथं स्यात् ? उच्चा असुरसम्पत् रावणादिराक्षससम्पत्तिः, निवारिता च कथं स्यात्? – इति॥६७

**ग ॥ एवं विचिन्तयन्नेव निजसदनसदेश मासाद्य तत्र च किमिदं कस्येद मित्यपरमिव पुरन्दरमन्दिरमिति तत्त्व ममत्वा परिभ्रम न्कुचेल स्सहसखीभिः प्रत्युद्गतया सकरुणहरिवितीर्णया मूर्तयेव लक्ष्म्या प्रियया प्रवेशित स्सद्म सकलभोगा ननुभव न्ननुभवन मानन्दबन्धुर स्सुख मुवास ॥ ६८**

एवमिति ॥ एवं विचिन्तयन् विशेषेण चिन्तयन्नेव, निजसदनसदेशं स्वगृहसमीप, मासाद्य प्राप्य, तत्र च स्वग्रामे, अपर मन्यत्, पुरन्दरमन्दिरं इन्द्रगृहमिव स्थितं, इत्युत्प्रेक्षा। इदं सदनं किमिति– सौधचन्द्रशालादिगृहविशेषेषु किन्नामक मित्यर्थः– किं सौधं यद्वा चन्द्रशाला इत्यादि संशयगोचरमिति यावत् – इदं कस्य वा कस्य राज्ञः सम्बन्धि इति च, तत्त्व ममत्वा याथार्थ्य मज्ञाय, सन्दिह्येत्यर्थः– परिभ्रमन् परितो भ्रमन् , कुचेलः सखीभिस्सह सखीजनेन समं, प्रत्युद्गतया भर्तु रभिमुख मागतया, सकरुणहरिवितीर्णया सदयेन श्रीकृष्णेन दत्तया, मूर्तया मूर्तिमत्या, लक्ष्म्या सम्पदेव स्थितयेत्युत्प्रेक्षा । प्रियया स्वभार्यया, सद्म स्वगृहं, प्रवेशितः प्रापितस्सन् , अनुभवनं गृहे, सकलभोगान् सर्वविधभोगा, ननुभवन् प्राप्नुवन्, अतएव आनन्दबन्धुरः सुखोन्नतः सन् , सुखं यथा तथा उवास निवासं चक्रे । कुचेलोपाख्यानान्ते मङ्गळार्थं सुखानन्दपदयोः प्रयोग इति न पौनरुक्त्यकृतास्वारस्य मिति ज्ञेयम्– यद्वा स्वय मानन्दबन्धुरः परेषां च सुखं यथा तथा सुखकर इत्यर्थः । इति व्याख्येयम्–६८

अव ॥ एवं भागवतप्रसिद्धां कुचेलोपाख्यानपर्यन्तां कथां वर्णयित्वा सम्प्रति स्वकल्पितां राधामाधवविवाहादिकथां वर्णयिष्यन् उपोद्घातत्वेन तदुत्पत्तिप्रकारं प्रस्तौति–

**श्लो ॥ वत्सापहारविधया विहितापराधो**
**राधाभिधां व्यधित जातु वधूं विधाता**
**पुत्रीयते वर मदा दपि सिंहळाख्य**
**द्वीपाधिपाय पणितो रमणीमणीं ताम् ॥ ६९**

वत्सेति ॥ वत्सापहारविधया वत्सानां तर्णकाना, मपहारः अपहरणं, तदेव विधा रीतिः, तया तस्य विधयेति वा—विहितापराधः कृतापराधः, बाल्ये श्रीकृष्णसम्बन्धिनो वत्सा नपहृत्य द्रोहं कृतवा नित्यर्थः। विधाता सृष्टिकर्ता ब्रह्मा, जातु कदाचित्, अत्यन्तबुद्धि-विलासवति पुण्ये समये इत्यर्थः। राधाभिधां राधानाम्नीं, वधूं स्त्रियं, व्यधित चकार ससर्जे-त्यर्थः। स्वापराधक्षमापणार्थं श्रीकृष्णाय उपहारत्वेन दत्तमिति भावः— यद्यपि सर्वाः स्त्रियो ब्रह्मणा सृष्टा एव— तथापि न ता स्सापराधब्रह्मणा सृष्टाः- नतु कदाचि त्सृष्टाः इति सर्वाभ्य इयं विलक्षणेति व्यक्तम्। सापराधाहि भृत्याः प्रभवे श्लाघ्यं वस्तु उपहारीकृत्य प्रसादयन्तीति प्रसिद्धम्। अत्र स्वतो रेतःपरिणामभूते शरीरे सापराधविधिसृष्टत्वोत्प्रेक्षणा द्गम्योत्प्रेक्षा-यद्वा सृज्यत्वेन विधिसृष्ट्यधिकारविषये सापराधविधिसृष्टत्ववर्णना दुत्प्रेक्षा— विधातेति विशेष्यस्य विचित्रसृष्टिकर्तृत्वाभिप्रायगर्भत्वा त्परिकराङ्कुरः—वध इति वर्णद्वयावृत्तिश्रवणा द्वृत्त्यनुप्रास स्स्पष्ट एव। ननु विधिः तां सृष्ट्वा किञ्चकारे त्यत आह पुत्रीयते इति— पणितः स्तुतः, विजय-वर्मणेत्यर्थः— विधातेति पद स्यात्राप्यन्वयः— पुत्रीयते पुत्र मात्मन इच्छते न तु भार्याकामा-येति भावः— सुप आत्मनः क्यच्- सिंहळाख्यस्य द्वीपस्य जलमध्यस्थभूखण्डस्य अधिपः प्रभुः, विजयवर्मेति यावत्— तस्मै तां रमणीमणीं नारीरत्नं, वर मदात् वरत्वेन प्रादा दित्यर्थः। विजयवर्माख्यः कश्चन राजा पुत्रार्थं ब्रह्माण मुद्दिश्य तप श्चकार— स तु तेन तुष्टः न तेऽस्ति पुत्रलाभः किन्तु पुत्री काचि द्भविष्यतीति तस्मै वर मदात्। ततः राधा तस्मात् जातेति प्राचीनकथाऽत्रानुसन्धेया। अत्र वरदानानन्तरभाविनो रमण्युदयस्य रमणीं सृष्ट्वा वर मदा दिति तत्प्राक्कालिकत्ववर्णना दतिशयोक्तिभेदः— यद्वा- अयोनिजैवेयं राधा। तथा च विधि स्स्वसङ्कल्पतोऽमूं सृष्ट्वा विजयवर्मणे पालनार्थं प्रादादिति ज्ञेयम्। राधा या अयोनिजत्वं तु मृग्यम् ॥ ६९

**ग ॥ अनन्तरं च त मेनं सिंहळद्वीपाधिपं विजयवर्माणं समुपजातयौवनायाः दुहितु रनुरूपवल्लभ मनुपलभ्य दूयमानमानसं कमलासन स्स्वप्नदशाया मेव मुपदिष्टवान् ॥ ७०**

अनन्तरमिति ॥ अनन्तरं च रमणीवरदानानन्तरं, समुपजातयौवनायाः उत्पन्नयौवन-दशायाः, दुहितु स्सुतायाः, अनुरूपवल्लभं अनुगुणं भर्तारं, मनुपलभ्य अप्राप्य, अदृष्ट्वेत्यर्थः— एतेन राधाया लोकोत्तरसौन्दर्यं व्यज्यते। दूयमानमानसं खिन्नहृदयं, सिंहळद्वीपाधिपं त मेनं विजयवर्माणं कमलासनः ब्रह्मा, स्वप्नदशायां स्वप्नावस्थाया, मेवं वक्ष्यमाणरीत्या, उपदिष्टवान् उपदिदेश ॥ ७०

**श्लो ॥ राज न्नाराधिकां कृत्वा। राधिकां मुरवैरिणः**
**निर्माणचातुरीं कुर्याः। मामिकां फलिना मिति ॥ ७१**

राजन्निति ॥ हेराजन् भूप !, राधिकां राधैव राधिका तां– स्वार्थे कप्रत्ययः– प्रत्ययस्था त्कादिति आत इत्वं– अजाद्यत इति टाप्– मुरवैरिणः कृष्णस्य, आराधिकां आराधनकारिणीं, भार्या मित्यर्थः । 'कार्येषु मन्त्री करणेषु दासी' इति न्यायेन भार्यायाः दासीव द्भर्तु राराधकत्वादिति भावः । कृत्वा विधाय श्रीकृष्णा येना मर्पयित्वेत्यर्थः । मामिकां मदीयां, 'मामकनरकयो रुपसंख्यान मिति वार्तिका' दात इत्वं–निर्माणचातुरीं सृष्टिनैपुण्यं, फलिनां सफलां 'फलबर्हाभ्या मिन न्वक्तव्य' इतीनन्– कुर्याः कुरु, विधौ लिङ् - इत्युपदिष्टवा निति पूर्वेणान्वयः ॥ ७१

**ग ॥ विजयवर्मापि तदेव सम्पदां निदानं मन्वानो दामोदर माहूय महोत्सव मापाद्य राधां व्यतरत् ॥** ७२

विजयवर्मेति ॥ स च तदेव श्रीकृष्णाय राधासमर्पणमेव, सम्पदां श्रेयसां, निदानं कारणं, मन्वानः चिन्तयन्, मुष्टिपरिमितपृथुकार्पणादेव कुचेल स्तादृशश्रेयो लेभे; किमुत एवंविधरमणीमणीसमर्पणा न्मम श्रेयो देवाना मपि दुर्लभमिति मत्वेत्यर्थः । दामोदरं कृष्णं, माहूय शुभलेखाप्रेषणद्वारा आकारयित्वा, महोत्सवं विवाहोत्सवं, मापाद्य रचयित्वा, राधां व्यतरत् ददौ– कृष्णायेति शेषः ॥ ७२

**ग ॥ भगवानपि ता मेतां सापराधविधिवितीर्णपूर्णपात्रभूता मधिदेवता मिव सौन्दर्यनिधे रिन्दुकलामिव वृषाकपिशिरश्लाघनयोग्यां स्वरुचिप्रतिबन्धकतया कमलानभिमतां च देवसेनामिव सुकुमारभावलोभनीयां राधिकां विश्वकर्मनिर्मितं किमपि परिहसितकैलासविलास मन्तःपुरं प्रवेश्य तया सम मरमत् ॥** ७३

भगवानिति ॥ श्रीकृष्णश्च सापराधविधिवितीर्णपूर्णपात्रभूतां सापराधेन वत्सापहाररूप मपराधं कृतवतेत्यर्थः– विधिना ब्रह्मणा, वितीर्णं दत्तं, पूर्णपात्रं अतिश्लाघ्य मुपायनं, तेन तुल्या मित्यर्थः– औपम्यबोधकोऽयं भूतशब्दः– अभूततद्भाववाचकत्वे तु पूर्णपात्रीभूता मिति स्यात्– सौन्दर्यनिधे र्मन्मथस्य, अधिदेवतां यद्वा– सौन्दर्यस्य निधिः स्वर्णनिधिव त्कश्चन सौन्दर्यनिधि रित्यर्थः । तस्य अधिदेवता अधिष्ठानदेवता मिव स्थिता मित्युत्प्रेक्षा । इन्दुकलां चन्द्ररेखा मिव, वृषाकपि र्विष्णु श्शिव श्च, तस्य शिरसा श्लाघेन अभिनन्दने धारणे च योग्या मर्हां, शिवशिरसा धृता मित्येकोऽर्थः । कृष्णेन सशिरःकम्पं श्लाघ्यमाना मित्यन्योऽर्थः । स्वरुचिप्रतिबन्धकतया स्वस्य रुचिः कान्ति रिच्छा च, तत्प्रतिबन्धकतया तन्निरोधकत्वेन हेतुना, कमलानभिमतां कमलानां कमलायाः रुक्मिण्या श्च, अनभिमतां अनिष्टां च, इन्दुकला हि कमलाना मनभिमता स्वविकासप्रतिबन्धकत्वात्– राधा तु रुक्मिण्या अनभिमता स्वकीय-कृष्णसम्पर्काभिलाषनिरोधकत्वा दित्यर्थः । श्लिष्टसाधर्म्यद्वयेय मुपमा- देवसेनां कुमारपत्नीमिव

सुकुमारभावेन सौकुमार्येण, लोभनीयां सुभगां- अन्यत्र लोभनीयः कुमारभावः स्कन्दहृदयं तस्य लोभनीयां स्पृहाजनकाम्– यद्वा- शोभने कुमारे सुकुमारे स्कन्दे यो भावः अभिलाषः तेन लोभनीयां सुभगाम्– भार्यायाः भर्तरि साभिलाषत्वं हि सौभाग्यावहमिति भावः– ता मेतां विजयवर्मदत्तां राधिकां विश्वकर्मनिर्मितं विश्वकर्मणा देवशिल्पिना, निर्मितं रचितं, अतएव परिहसितकैलासविलासं तिरस्कृतकैलासशोभं, किमप्यनिर्वाच्य मन्तःपुर मवरोधनं, प्रवेश्य सखीभि र्वेला त्प्रवेशयित्वेत्यर्थः । तया समं राधया साकं, अरमत् क्रीडितवान् ॥७३

**श्लो ॥ कल्याणे विनिवेश्य जातु समये सख्य स्समुत्कण्ठितं**
**केळीसद्मनि पञ्चसायककलातन्त्रस्वतन्त्रं हरिम्**
**द्वारोपान्त मनीनय न्नववधूं राधां कथञ्चि द्गिरां**
**वारै र्वञ्चनचातुरीपरिणतै र्मुग्धां विदग्धाङ्गनाः ॥ ७४**

कल्याणेति ॥ जातु कस्मिंश्चित्, कल्याणे शुभग्रहाढ्यत्वेन शुभे, समये मुहूर्ते, सख्यः विदग्धाङ्गनाः चतुरस्त्रियः, समुत्कण्ठितं सम्यक् सोत्कण्ठं, पञ्चसायककलातन्त्रस्वतन्त्रं मदनशास्त्रतन्त्रसर्वज्ञं, वात्स्यायनतन्त्रपारीण मित्यर्थः । हरिं श्रीकृष्णं, केळीसद्मनि क्रीडामन्दिरे, विनिवेश्य स्थापयित्वा, यद्वा सख्यै इति पाठः– सख्यै प्रेयस्यै, समुत्कण्ठितं तादृशं हरि मित्यन्वयः– नववधूं नवोढा, मत एव मुग्धां- मुग्धा मध्या प्रौढेति नायिकात्रये प्राथमिकां, राधां वञ्चनचातुरीपरिणतैः वञ्चनचातुर्या प्रतारणवैखर्या, परिणतैः परिनिष्ठितै रित्यर्थः । गिरां वाचां, वारैः समूहैः, कथञ्चि त्कृच्छ्रेण, द्वारोपान्तं क्रीडागृहद्वारप्रान्तदेशं, अनीनयन् प्रापयामासुः ॥ ७४

अथ ॥ गिरां वारानेव दर्शयति विनिर्ममे इत्यादिभि स्त्रिभिः ॥

**श्लो ॥ विनिर्ममे य त्तव विश्वकर्मा । लीलागृहं त त्कमलाक्षि ! राधे !**
**प्रयाम तत्रेष्टवरप्रदाता । देवो मनोभू रपि सन्निधत्ते ॥ ७५**

विनिर्ममेति ॥ हेराधे ! विश्वकर्मा देवशिल्पी, तव त्वदर्थं, यल्लीलागृहं क्रीडामन्दिरं, विनिर्ममे निर्मितवान्, तद्गृहं अलक्षि किं त्वया दृष्टं किम्? प्रयाम तत् द्रष्टुं वयं यामेत्यर्थः । विधौ लोट्– तत्र गृहे इष्टवरप्रदाता ईप्सितवरदाता, हृद्यपतिप्रदाता च, देवः– दीव्यति स्त्रीपुंयुगळं संयोजनादिभिः क्रीडतीति देवः– मनोभूरपि मन्मथश्च, सन्निधत्ते सन्निहितो भवति – मन्मथदेवसाक्षात्कारोऽपि तत्र तव भवेत् । तत्साक्षात्कारा दभिलषितवरप्राप्तिश्च भवेदित्यर्थः ॥ ७५

**श्लो ॥ खेला मलीलासदनेऽत्र मुग्धे ! न शङ्कयतां नास्ति हरिः किलाति**
**किम प्यपूर्वं सुख मत्र लब्ध्वा स्मरिष्यसि त्वं हितसूचिकां माम् ॥७६**

खेलामिति ॥ हेमुग्धे मूढे ! भवतीति शेषः-त्वं अत्र अस्मिन् अलीलासदने अक्रीडा-गृहे, खेलां क्रीडां, सम्भोगमिति यावत्- न शङ्कयतां माशङ्कस्व- भवच्छब्दसामानाधिकरण्या त्प्रथमपुरुषः- 'खेला नलीलासदनेऽत्र मुग्धे न शङ्कयता' मिति पाठे तु- हेमुग्धे ! अत्र नलीलासदने- नञर्थकोऽयं नशब्दः-तेनसह सुप्समासः-खेला न शङ्कयतां त्वयेति शेषः-अत्र गृहे, हरिः कृष्णः, नास्तिकिल नास्त्येव- वस्तुतस्तु- किलेत्यळीके हरिर्नास्तीति मृषा किन्तु हरिरस्त्येवेति व्यज्यते- अत्र गृहे अपूर्वं नूतनं, सुखं आनन्दं, सुरतजन्यं गृहरामणीयकदर्शनजन्यं च, लब्ध्वा प्राप्य, त्वं हितसूचिकां हिंत प्रियं सूचयति बोधयतीति हितसूचिका तां, मां स्मरिष्यसि अध्येष्यसि- सख्युपदेशानुष्ठाना न्मयेदं सुखं लब्धमिति सुखप्राप्तिसमये मां स्मरिष्यसीत्यर्थः ॥ ७६

श्लो ॥ किं वर्ण्यते सौरभ मस्य मन्ये । हरे र्निवास स्त्रिदिवो हि साक्षात्
यत स्त देत त्सुरतार्थ मिष्टिं । सुदृग्जने नाचरतैव लब्धम् ॥ ७७

किमिति ॥ अस्य गृहस्य, सौरभं सौन्दर्यं, किं वर्ण्यते वर्णितु मशक्य मित्यर्थः - इदमिति शेषः- इदं गृहं, साक्षात् प्रत्यक्षः, हरे रिन्द्रस्य कृष्णस्य च, निवासः निलयः, त्रिदिवः स्वर्गो हि- अभेदरूपकालङ्कारः । आनुमानिकस्वर्गलोक स्तथा आस्तां- प्रत्युत इदमेव प्रत्यक्षस्वर्गः- तत्र हेतु स्तु- हरे र्निवास इति वास्तवार्थः- इन्द्रनिवासतया प्रसिद्धो य स्स्वर्गोऽस्ति स इदमेवेति वञ्चनार्थः-तत्र हेतु माह- यतो यस्माद्धेतोः तदेतद्गृहं सुरतार्थं रत्यर्थं देवत्वार्थं च, इष्टं इच्छां यागं च, आचरता कुर्वता, सुदृग्जनेनैव स्त्रीजनेनैव विबुधजनेनैवेतिच, लभ्यं लब्धु मर्हं लब्धुं शक्यं च, न त्वन्यजनेनेत्यर्थः । 'ज्योतिष्टोमेन स्वर्गकामो यजे' तेति श्रुत्या ज्योतिष्टोमयागजन्यत्वं प्रसिद्धम्- काव्यलिङ्ग मलङ्कारः- अनुमानालङ्कारो वा । इदं स्वर्गः इष्टकृत्सुदृग्जनलभ्यत्वात् प्रसिद्धस्वर्गव दिति प्रयोगः- रतिकामनया स्त्रियः क्रीडागृहं गच्छन्तीत्येको भावः । देवत्वार्थं विबुधाः इष्टिं कृत्वा स्वर्गं गच्छन्ती त्यन्यो भावः ॥ ७७.

ग॥ एवमादिवचनवञ्चनवशेन कथञ्चन केळीमन्दिराळिन्द मानीयताम् ॥७८

एवमिति ॥ राधायां एवमादिभि र्वचनै र्वञ्चनं प्रतारणं, तद्वशेन तद्बलेन, कथञ्चन कृच्छ्रेण, केळीमन्दिराळिन्दं क्रीडागृहाङ्गणं, मानीयतां प्रापितायां सत्याम् ॥ ७८

श्लो ॥ सख्या स्या दतिसंहिता किमु हिता बुद्ध्येत वा वञ्चनां
तर्हि प्रत्यय एव जातु न भवे द्यद्वा प्रवीणा सखी
मुग्धेयं यदि वा विधि र्हि बलवा नित्यादिशङ्काङ्कुराः
मञ्जीरोज्ज्वलमञ्जुशिञ्जितरवै रस्ता स्समस्ता हरेः ॥ ७९

सख्येति ॥ हिता प्रिया राधेति यावत्— सख्या अतिसंहिता वञ्चिता स्या त्किमुवा, यद्वा हिता वञ्चनां सखीकृतप्रतारणां, बुद्धयेत जानीया त्किमु ? इति संशयः— तर्हि वञ्चनां जानीयाच्चे दित्यर्थः । जातु कदाचिदपि, प्रत्ययः विश्वास एव; सख्या मित्यर्थः । न भवेत्— इतःपरं कदाचिदपि वञ्चयितु मशक्येत्यर्थः । अतएव अनर्थाशङ्कनात्मिका उत्प्रेक्षा । यद्वा अथवा सखी प्रवीणा विदग्धा भवतीति शेषः— इयं राधातु, मुग्धा मूढा भवति—अतः सर्वथा वञ्चिता स्यादेवे त्यवधारणात्मिका मतिः— यदिवा यद्वा— विधि र्दैवं, बलवान् प्रबलो हि अलङ्घ्योहीत्यर्थः । दैवानुकूल्याभावे प्रवीणयापि सख्या प्रिया न प्रतार्येतैवेति भावः— इति कार्पण्योक्त्या दैन्यं हरेः कृष्णस्य सम्बन्धिनः, समस्ता स्सर्वे, इत्यादिशङ्काङ्कुराः, एवमादि-शङ्काङ्कुराः, मञ्जीरोज्ज्वलमञ्जुशिञ्जितरवैः मञ्जीराणां नूपुराणां, सम्बन्धिभिः उज्ज्वलैः प्रबलैः, मञ्जुभि र्मनोज्ञैः, शिञ्जितरवैः शिञ्जितध्वनिभिः, 'भूषणानां तु शिञ्जित' मित्यमरः । प्रेयसीसम्बन्धिभि रित्यर्थः । अस्ताः निरस्ताः— नूपुरघलङ्घलध्वनिं श्रुत्वा नायिका मा मायातीति निश्शङ्कोऽभूदित्यर्थः । अत्र भावशबलतालङ्कारः ॥ ७९

**श्लो ॥ अत्रान्तरे किल बुधस्य मनोभवस्य**
**पाण्डित्य मुज्ज्वल मखण्डित मुज्जजृम्भे**
**सार्वज्ञ माकलयतः पुरुषोत्तमस्य**
**मोहो महा न्निजगुरोरपि येन तेने ॥** ८०

अत्रान्तरे इति ॥ अस्मिन् समये, बुधस्य देवस्य, विदुषश्च, मनोभवस्य मन्मथस्य, उज्ज्वलं भासमानं, अखण्डितं अप्रतिहतं, पाण्डित्यं वैदग्ध्यं, उज्जजृम्भे विजृम्भित मभूत्— किल प्रसिद्धौ— मदनः स्वपाण्डित्यं प्रकटयामासेत्यर्थः । सार्वज्ञं सर्वज्ञत्व, माकलयतः भजतः, सर्वज्ञ स्येत्यर्थः । निजगुरोः स्वजनकस्य, स्वविद्योपदेष्टुश्च, पुरुषोत्तमस्य, परमेश्वरस्य, कृष्णस्यापि, येन पाण्डित्येन महा नधिकः, मोहः विभ्रमः, तेने चक्रे— गुरो र्मोहजनकं शिष्यपाण्डित्य मद्भुत मित्येको भावः— परमेश्वरमपि मोहयतो मन्मथस्य वैदग्ध्य मद्भुत मित्यन्यो भावः ॥ ८०

**तथा हि** ॥ तदेव पाण्डित्य मष्टभि श्श्लोकै र्वर्णयतीत्यर्थः ॥

**श्लो ॥ स्तम्भे पुरा यो हरि राविरासीत् । स्तम्भोऽधुना तत्र हरौ चकास्ते**
**कृतावतारा न्नृहरे रितः प्रा । ग्विलक्षणोऽयं नृहरि स्तदेव ॥** ८१

स्तम्भे इति ॥ पुरा नरसिंहावतारे, यः हरिः विष्णुः, स्तम्भे स्थूणाया, माविरासीत् आविरभवत्— अधुना कृष्णावतारे, तत्र तस्मिन्, हरौ स्तम्भः तन्नामा सात्त्विकभावः— स्थूणा च, चकास्ते भासते, आविर्भवतीत्यर्थः । 'स्तम्भप्रळयरोमाञ्चा स्स्वेदो वैवर्ण्यवेपथू अश्रुवैस्वर्य मित्यष्टौ सात्त्विकाः परिकीर्तिता' इति वचनात्-विरोधाभासालङ्कारः । स च

वाचकाप्रयोगा द्गम्यः– स्तम्भे आविर्भूतेऽपि हरौ स्तम्भ आविर्भूत इति विरोधप्रतीतेः– तदेव तस्मात्कारणादेव, हरावेव स्तम्भ स्याविर्भावा दित्यर्थः– इतः प्राक् अस्मात् पूर्वं, कृतावताराात् अवतीर्णात् , नृहरेः नरसिंहात् ,अयं नृहरिः, मानुषविष्णुः नरसिंहश्च, विलक्षणः उत्तम इत्यर्थः । स्तम्भजन्यात् स्तम्भजनको गरीयानिति भावः– यद्वा स्तम्भाधेयात् स्तम्भाधारो महानिति भावः– अत्र उत्तरार्थेऽस्य पूर्वार्थहेतुकत्वा त्काव्यलिङ्गम् ॥ ८१

श्लो ॥ यदाज्ञया स्या त्प्रळय स्त मीशं माकस्मिकः क्षोभ मनीनय त्सः
स्थाने यतो यो हरिणा प्यलङ्घ्य। स्स्मरप्रपञ्चप्रळयो हि भिन्नः ॥ ८२

यदिति ॥ यदाज्ञया यस्य विष्णो राज्ञया, सङ्कल्पेनेत्यर्थः– प्रळयः क्षयः, स्यात् आकस्मिकः अकस्मात्प्रवृत्तः, भगवदाज्ञां विना प्रवृत्त इत्यर्थः– सः मन्मथं त मीशं परमेश्वरं कृष्णं, क्षोभं प्रळय मनीनयत् प्रापयामास– क्षोभयामासेत्यर्थः– स्थाने युक्त मिदम्– कुतः ? यतो हेतोः भिन्नः प्रसिद्धप्रळयविलक्षणः, अयं स्मरप्रपञ्चप्रळयः स्मरो मन्मथः, प्रपञ्चयति विस्तरीकरोतीति प्रपञ्चः, स्मरस्य प्रपञ्चः स्मरप्रपञ्चः, शृङ्गाररस इति यावत्– तस्य सम्बन्धी प्रळयः नष्टचेष्टताख्यः सात्त्विकभावः लयश्च– हरिणा विष्णुनापि अपिना प्रसिद्धप्रळयहेतुनापीत्यर्थः । अलङ्घ्यः अनतिक्रमणीयो हि– अत्र प्रसिद्धप्रळयात् स्मरप्रपञ्चप्रळयस्य व्यतिरेकवर्णना द्व्यतिरेकालङ्कारः ॥ ८२

श्लो ॥ विजृम्भितोऽभू त्प्रतिलोमहर्षे। स्तदा मुरारे रिति नैव चित्रम्
यदीदृशो जातुचि दङ्गनानां। सङ्गेषु हर्षोऽननुभूतपूर्वः ॥ ८३

विजृम्भित इति ॥ तदा तदानीं, मुरारेः कृष्णस्य, प्रतिलोमहर्षः लोम्निलोम्नि उद्बोधः रोमाञ्च इति यावत्– वीप्सायां मव्ययीभावः– प्रतिलोमः विपरीतः, हर्षः प्रमोद इति च व्यज्यते । विजृम्भितः प्रवृद्धः, अभूत् इति न चित्रमेव नैवाद्भुतम्– तत्र हेतु माह यदिति– यद्यस्मात् जातुचि त्कदाचिदपि, अङ्गनानां, गोप्यादीनां सङ्गेषु संयोगेषु, ईदृशः एवंविधः, हर्षः सन्तोषः, अननुभूतपूर्वः पूर्व मननुभूतः– पूर्वानुभूतनारीणां राधातुल्यसौन्दर्याभावेन तत्संयोगजन्यहर्षा देतत्संयोगजन्यहर्षो विलक्षणत्वेन विपरीत एवेति नात्र विस्मयावकाश इत्यर्थः ॥ ८३

श्लो ॥ स्वेदाम्बुपूरः प्रससार शौरे। रनर्गळ स्त न्न विचित्रपात्रम्
सार्द्रो विधु र्निर्व्यवधानमेत्र। राधापरीरम्भ मियेष चित्रम् ॥ ८४

स्वेदेति ॥ शौरेः कृष्णस्य, अनर्गळः अप्रतिबन्धः, स्वेदाम्बुपूरः घर्मबिन्दुप्रवाहः, प्रससार प्रसृतोऽभूत्– तत् स्वेदश्रवणं, विचित्रपात्रं विस्मयभाजनं, न न भवति– किन्त्विदं चित्र मित्याह सार्द्र इति– सार्द्रः स्वेदाम्बुसिक्तः आर्द्रानक्षत्रसहितश्च, विधुः कृष्णः चन्द्रश्च,

निर्व्यवधानमेव स्वेदोत्तरक्षणमेव, आर्द्रानक्षत्रभोगोत्तरकालमेवेति च— राधापरीरम्भं राधालिङ्गनम्, विशाखासम्पर्कं च, इयेष कांक्षितवान्— इतीदं चित्रं— 'राधा विशाखा पुष्ये' त्वित्यमरः। आर्द्राविशाखयो र्नक्षत्रनवकव्यवधानात् आर्द्राभोगोत्तरकालमेव चन्द्रस्य विशाखाभोगो न घटत इति भावः— विरोधाभासालङ्कारः— ८४

श्लो ॥ समग्रवेदिन्यपि तत्र कृष्णे। विवर्णिता प्रादुरभू त्तदानीम्
न ग्राम्यधर्मप्रवणः कथन्नु। भजेत वैवर्ण्य मनुत्तमोऽपि ॥ ८५

समग्रेति ॥ तदानीं समग्रवेदिनि सर्वज्ञेऽपि, तत्र तस्मिन् कृष्णे, विवर्णिता वैवर्ण्यं पामरत्वं च, निरक्षरकुक्षित्वमिति वा— 'विवर्णः पामरो नीच' इत्यमरः। प्रादुरभूत् प्रादुर्भूता— विरोधाभासालङ्कारः। आपाततः प्रतीतमपि विरोधं समाधत्ते— नेति— अनुत्तमः श्रेष्ठोऽपि, ग्राम्यधर्मप्रवणः ग्राम्याणां प्राकृतानां धर्मे आचारे, ग्राम्यधर्मे स्सुरतं तत्र च 'व्यवायो ग्राम्यधर्मो मैथुन' मित्यमरः। प्रवण आसक्तः पुमानिति शेषः— वैवर्ण्यं पामरत्वं, विच्छायत्वं च, कथन्नु कथं वा, न भजेत न प्राप्नुयात्? भजेतैवेत्यर्थः। सर्वज्ञोऽपि सुरतासक्तश्चे द्वैवर्ण्याख्यं सात्त्विकभावं भजेतैवेत्येकोऽर्थः। सर्वज्ञोऽपि पामराचारसक्तश्चे त्पामर स्स्यादेवे त्यन्योऽर्थः ॥ ८५

श्लो ॥ अचल स्स्थितितः प्रचाल्यते। न मया किन्तु हरेः कथं यशः
इति तं जगतीधरं स्मर। स्त्रिजगद्व्यापिन म प्यकम्पयत् ॥ ८६

अचलेति ॥ मया अचलः धीरः पर्वतश्च, स्थितितः मर्यादायाः स्थानाच्च, 'स्थानमर्यादयो स्स्थिति' रिति भास्करः। न प्रचाल्यते किं न कम्प्यते किं? हरेः कृष्णस्य कथं यशः कीर्ति र्जात मिति शेषः — इत्येव मालोच्येति शेषः— स्मरः मन्मथः, त्रिजगद्व्यापिनं लोकत्रयं व्याप्य स्थितमपि, तं जगतीधरं परमात्मानं, कृष्णं पर्वतं च, अकम्पयत् क्षोभयामास— गोवर्धनाख्यक्षुद्रजगतीधरोद्धारादेव श्रीकृष्णस्य तादृशं यश आसीत्— त्रिजगद्व्यापिनो महतो जगतीधरस्य उद्धारे तु मम महती प्रतिष्ठा स्यादिति मत्वा त मुद्धर्तुमिव कम्पयामास। यथा लोके स्थूणा मुद्धर्तु मादौ कम्पयन्ति तद्वदिति भावः— श्लेषोज्जीवितगम्योत्प्रेक्षालङ्कारः॥

श्लो ॥ अनर्गळं नेत्रपथा त्प्रवृत्ता। यतो मुकुन्दस्य तदास्रधारा
अनङ्गबाणै रतिरक्ततान्तः। कृतेति तेन ह्यनुमीयते स्म ॥ ८७

अनर्गळमिति ॥ यतो यस्मात्कारणात्, तदा तदानीं, मुकुन्दस्य कृष्णस्य नेत्रपथात् दृङ्मार्गात्, अनर्गळं अप्रतिबन्धं यथातथा, अस्रधारा बाष्पप्रवाहः शोणितप्रवाहश्च, प्रवृत्ता प्रसृता— तेन हेतुना अस्रधाराप्रवृत्ते र्हेतो रित्यर्थः। अन्तः हृदये, अनङ्गबाणैः मन्मथशरैः, अतिरक्तता अत्यासक्तता अत्यन्तशोणितवत्ता च, अन्तरेव बाणप्रयोगादिति भावः— कृतेति अनुमीयते स्म हि तर्क्यते स्म— हिः प्रसिद्धौ— मुकुन्दहृदयं मनोभवबाणै र्निर्भिन्नं स दधिक-

शोणितमण्डलं भवति । अन्यथा हृदयगतरक्तधारा नेत्रपथा द्बहि र्न प्रसरे दित्येको भावः । अन्तर्मन्दशरप्रयोगा च्छ्रीकृष्णमनः अतीव राधासङ्गमे सोत्कण्ठं, अतएव वियोगासहनेन- हेतुना नेत्रपथा द्बाष्पधारा प्रसरती त्यन्यो भावः – अनुमानाख्यप्रमाणालङ्कारः । व्यञ्जना- व्यापारेणै वात्रान्यार्थप्रतीतिः– अतो न श्लेषस्यावकाशः ॥ ८७

**श्लो ॥ वैस्वर्य मप्यस्य तदाऽऽविरासी । द्विलोकितं क्वापि न त च्छ्रुतं वा**
**य श्शैशवे सुष्ठु परेण पुष्ट । स्स किन्नु राधागमकाल ईदृक् ॥** ८८

वैस्वर्यमिति ॥ तथा अस्य कृष्णस्य, वैस्वर्यमपि तदाख्य स्सात्त्विकभावश्च, स्वररा- हित्यं च, विरुद्धस्वरत्वमिति वा, आविरासीत् जातम्– तत् वैस्वर्यं क्वापि न विलोकितं न दृष्टं न श्रुतं वा नाकर्णितं च– कुत इत्यत आह य इति– यः कृष्णः कोकिलश्च, शैशवे बाल्ये, सुष्ठु यथा तथा परेण नन्देन काकेन च, पुष्टः रक्षितः, सः तरभृतः राधागमकाले राधायाः आगमनकाले राधस्य वैशाखस्य आगमनकाले इति च– चैत्रान्तरे इत्यर्थः । ' वैशाखो माधवो राध ' इत्यमरः । ईदृग्वैस्वर्यवान् किन्नु स्या त्किं ? न स्यादेवेत्यर्थः । वसन्ते कोकिलस्य प्रत्युत सौस्वर्यादिति भावः–परभृतस्यास्य राधागमकाले वैस्वर्यं चित्र मिति निष्कृष्टार्थः । अत्रापि विरोधाभासएव – यद्वा विरूपकार्यस्योत्पत्तिरूपो विषमालङ्कारः । इत्यष्टभि श्श्लोकैः क्रमेण स्तम्भ प्रळय रोमाञ्च स्वेद वैवर्ण्य वेपथु अश्रु वैस्वर्य नामकाः अष्टौ सात्त्विकभावा वर्णिताः ॥ ८८

**ग ॥ एव मुद्भूतप्रभूतसात्त्विकविकारे सति मुरारौ सर्वङ्कषामिव विषम- सायकशक्तिं विरहतापनिवर्तिका ममृतवर्तिकां ता मेता माळीजनः केळीसदन मादितः प्रवेश्य स्वय मप्रविष्ट एव सङ्घटितकवाटा स्सत्वर मपससार ॥** ८९

एवमिति ॥ मुरारौ श्रीकृष्णे, एवं उद्भूतप्रभूतसात्त्विकविकारे उत्पन्नातिशयसात्त्विक- भावे सति, विरहतापादिति भावः– सर्वङ्कषां सर्वविध्वंसिनीं, विषमसायकशक्तिं मन्मथशक्ति- मिव स्थितां, यद्वा–विषमसायकशक्तिमिव सर्वङ्कषां सर्वसात्त्विकभावविध्वंसिनीं सर्वतपोगर्व- विध्वंसिनीं च, अमृतवर्तिकामिव अमृतस्राविणीमिव विरहतापनिवर्तिकां अयोगजन्यसन्ताप- विध्वंसिनीं, अन्यत्र विरहयति वियोजयति प्राणै र्जनमिति विरहः– सचासौ तापः ज्वरजन्यः तस्य निवर्तिकां– अमृतं पिबतो न हि मृत्यु रिति भावः– यद्वा विरहतापनिवर्तिकामिति पृथगेव विशेषणं–तथा च अमृतवर्तिकां सुधामयवर्तिमिव स्थिता मिति गम्योत्प्रेक्षा–तामेतां राधिकां, आदितः प्रथमत , केळीसदनं क्रीडागृहं, प्रवेश्य प्रवेशयित्वा, आळीजनः सखीजनः, स्वय मप्रविष्ट एव गृहे अप्रविश्यैवेत्यर्थः । सङ्घटितकवाटः घटितारर: कवाटं सङ्घटयित्वे- त्यर्थः– सत्वरं द्रुतं, विलम्बेसति मुग्धा पुनरायातीति भियेति भावः – अपससार अपजगाम ॥ ८९

श्लो ॥ दृष्ट्वा तत्र हरिं पुर स्स्मरगुरुं वेगा द्विवृत्तानना
साटोपापि कवाटबन्धनविधौ मोघीभवत्प्रोद्यमा
राधा तत्र यथा यथा भजत सा निर्बन्ध माशा तथा
गोविन्दस्य विशृङ्खला समभव चित्रं स्मरप्रक्रमः ॥ ९०

दृष्ट्वेति ॥ सा राधा, तत्र तस्मिन् गृहे, तत्र तदानीं, पुरः अग्रे, स्मरगुरुं मारजनकं, मारस्या प्युपदेष्टार मिति च व्यज्यते । हरिं दृष्ट्वा वेगा त्त्वरायाः, विवृत्तानना पराङ्मुखी सती, पश्चाद्गन्तु मिति भावः— कवाटपाटनविधौ अररविघटनकृत्ये विषये साटोपापि ससम्भ्रमापि, मोघीभवत्प्रोद्यमा व्यर्थव्यापारा, कवाटस्य बहिर्बन्धनादिति भावः— यथा यथा निर्बन्धं नितरां बन्धं बहिर्गमनासम्भवादिति भावः— अभजत प्राप, गोविन्दस्य श्रीकृष्णस्य, आशापि तथा विशृङ्खला निरर्गळा, समभवत् जाता— स्मरप्रक्रमः माररीतिः, चित्र मद्भुतं आश्चर्यकर इत्यर्थः— राधानिर्बन्धगोविन्दाशाविशृङ्खलत्वरूपविरुद्धकार्यद्वयहेतुत्वादिति भावः — विभावनालङ्कारभेदः—यथा राधाया निर्बन्धः तथा गोविन्दाशा विशृङ्खलत्वमिति वैधर्म्योपमालङ्कारश्च ॥

श्लो ॥ अपि प्रदा यान्तर मर्गळं स । धृत्वापि पाणिं बलव त्प्रियायाः
लाभं हरि र्विश्वसितिस्म नास्या । स्सम्पातसम्पादितकम्पसम्पत् ॥९१

अपीति ॥ सः हरिः, आन्तरं अन्तस्थ, मर्गळं कवाटबन्धनं, प्रदायापि दत्त्वापि, सखीभि रेव बहिः कवाटबन्धनं कृतं, अन्तस्तु स्वयमेव कवाटबन्धनं, चकारेत्यर्थः । बलवद् दृढं यथा तथा, प्रियायाः राधायाः, पाणिं करं, धृत्वापि तस्याः बहिर्गमनं निरोद्धुमिति भावः— अस्याः प्रेयस्याः, सम्पातसम्पादितकम्पसम्पत् सम्पातेन संयोगेन, सम्पादिता जाता, कम्पसम्पत् वेपथुसम्पत्तिः अतिशयकम्पन मित्यर्थः— यस्य सः अतएव लाभ मस्याः प्राप्तिं न विश्वसितिस्म लाभे विश्वासं न प्रापे त्यर्थः । सकम्पमामककरबन्धनं लाघवा दिय मुन्मोच्य कवाटं विघटय्य सर्वथा यास्यत्येवेय मिति कृत्वा राधासम्भोगलाभो मम दुर्लभ इति मेने इति भावः— अतए वोदाहृतं रसमञ्जरीकारेण ' हस्ते धृतापि शयने विनिवेशितापि । क्रोडीकृतापि यतते बहिरेव गन्तुम् । जानीमहे नववधू रथ तस्य वश्या । यः पारदं स्थिरयितुं क्षमते करेण ' — इति । अत्र नायिकालाभ विश्वासकारणयोः अर्गळदानपाणिबन्धनयो स्सत्त्वेऽपि तल्लाभविश्वासानुदया द्विशेषोक्तिः — किञ्च हरे र्लाभविश्वासानुदयरूपवाक्यार्थस्य सम्पातसम्पादितकम्पसम्पत्त्वरूपपदार्थहेतुकत्वा त्काव्यलिङ्गम् ॥ ९१

श्लो ॥ क्रीडामन्दिर मादरा दुपगता माळीजनप्रार्थनै
स्तत्रातर्कितसम्भवं यदुपतिं दृष्ट्वा विमोहाकुलाम्
अङ्के सस्पृह माकलय्य मधुरै रानन्दय न्भाषितैः
प्रेम्णा नूतनसङ्गमे नववधूं राधां हरिः पातु नः ॥ ९२

क्रीडेति ॥ आळीजनप्रार्थनैः सखीजनप्रार्थनाभिः, आदरा त्प्रीत्या, क्रीडामन्दिर मुपगतां प्राप्तां, तत्र मन्दिरे, अतर्कितसम्भवं अतर्कितः अनूहितः, सम्भवः सम्प्राप्ति र्यस्य तं, काकताळीयवदिति भावः– यदुपतिं श्रीकृष्णं, दृष्ट्वा अवलोक्य, विमोहाकुलां विशेषेण मोहो विमोहः, तेन आकुलां व्याकुलां, नववधूं नवोढां राधां, नूतनसङ्गमे नवसंयोगे, सस्पृहं स्पृहासहितं यथा तथा, अङ्क मुत्सङ्गं, माकलय्य प्रापय्य, प्रेम्णा स्नेहेन, मधुरैः मनोज्ञैः, र्भाषितै रानन्दयन् सुखयन्, हरिः नः अस्मान्, पातु रक्षतात्–इति प्रार्थनायां लोट् ॥ ९२

तथा हि ॥ मधुरभाषितान्येव वर्णयतीत्यर्थः ।

**श्लो ॥ किं मेन माळीविरहेण बाले! । लोलालके ! लुम्पसि तोषपोषम्**
**दासोऽह माज्ञावशगः कथं नु । सख्या न निर्वर्तयिता स्मि कृत्यम् ॥**

किमिति ॥ लोलालके लोला श्चञ्चलाः, अलका श्चूर्णकुन्तलाः यस्याः तस्यास्सम्बुद्धिः अनेन बहिर्गमनार्थं सख्या बहुधा सम्भ्रान्तत्वं व्यज्यते– हेबाले बालत्वा त्सखी स्त्यक्त्वा एकाकिनीयं वर्तितु मक्षमेति व्यज्यते– अतएव आळीविरहेण सखीवियोगेन हेतुना, एवं तोषपोषं सन्तोषाभिवृद्धिं, लुम्पसि हरसि किं खिद्यसि कि मित्यर्थः । सख्याः तव आज्ञावशगः आज्ञापरतन्त्रः, अतएव दासः भृत्यः, अहं कृत्यं कार्यं, कथंनु कथंवा, न निर्वर्तयितास्मि न कर्तास्मि– यथा आळीजन स्त्वत्कृत्यं निर्वर्तयति तथा अहमपि दासत्वा दवश्यं त्वत्कार्यं कर्तास्म्येवेत्यर्थः । चरणसंवाहनताम्बूलवीटीदानादिके कृत्ये दासं मां यद्याज्ञापयसि तर्हि स मम महान् प्रसाद इति भावः ॥ ९३

**श्लो ॥ अक्षक्रीडनतत्परा यदि भवे स्सख्या समं प्रेयसि!**
**द्यूतं गुह्यतमं पुन स्त्रिजगति श्लाघ्यं समाकर्णय**
**क्रीडासाधन मक्षषट्क मतनु स्साक्षी तु सोत्कण्ठता**
**स्तोतव्या अबलाश्च यत्र त दिदं मन्ये परानन्ददम् ॥** ९४

अक्षेति ॥ हेप्रेयसि प्रिये ! एतेन तव मत्प्रेयसीत्वा त्र मत्त स्तव कापि पीडा प्रत्युत सुखातिशयलाभ एवेति व्यज्यते– लोके हि प्रियं वस्तु प्राणैरपि तोषयन्तीति भावः– सख्यासमं वयस्यया साकं, अक्षक्रीडनतत्परा द्यूतासक्ता, भवेः स्याः यदि, त्रिजगति लोकत्रये, श्लाघ्यं श्लाघितु मर्हं, मतएव गुह्यतमं अतिरहस्यं, सुरतस्य रहस्यत्वादिति भावः– द्यूतं पुनः द्यूतन्तु, समाकर्णय सम्यक् शृणु– गदतो मत्त इत्यर्थः । मयोपदेक्ष्यमाणं द्यूतं न त्वदनुभूतचरं– किन्तु विलक्षणमेवेति पुनश्शब्दप्रयोगाभिप्रायः– वैलक्षण्यमे वाह– यत्र सुरताख्यद्यूते अक्षषट्कं अक्षाणां षट्कं षण्णां समूहष्षट्कं शिवभागवतवत्समासः– षडक्षाणीत्यर्थः । अक्षशब्दः द्यूताङ्गे इन्द्रियेषु च वर्तते– ततश्च इन्द्रियषट्कं– मनष्षष्ठानीन्द्रियाणीति वचनात्

द्यूताङ्गषट्कंचेति अर्थद्वयलाभः– क्रीडासाधनं क्रीडायाः साधनं अङ्गमित्यर्थः । भवतीति शेषः – त्वदनुभूतद्यूते तु अक्षद्वयमेव क्रीडासाधनमिति भावः– साक्षी साक्षाद्द्रष्टा तु– साक्षाद्द्रष्टरि 'संज्ञाया मिति' निपातितोऽयं– अतनुः मन्मथः, अनुपलभ्यमानतनुर्देव इति च भवति– अन्यत्र तु शरीरिणो मनुष्याएव साक्षिण इति भावः– सोत्कण्ठता उत्कण्ठा-साहित्य मुन्नमितकण्ठत्वं च अस्तीति शेषः– अन्यत्र तु पाचिकावलोकनार्थ मवनतकण्ठत्व-मेवेति भावः । अबलाः स्त्रियः दुर्बलाश्च, अक्षक्रीडनकौशलानभिज्ञा इत्यर्थः । स्तोतव्याः स्तोतुं योग्याः, भवन्तीति शेषः– अन्यत्र तु जैत्राणा मेव स्तुतिरिति भावः । तदिदं सुरत-द्यूतं परानन्ददं परस्य परमात्मनो मम आनन्दप्रदं, परमानन्दसम्पादकं च, मन्ये तर्कयामि– अन्यत्तु अस्मादपकृष्टत्वा न्न परानन्ददमिति भावः– व्यतिरेकालङ्कारः ॥ ९४

अव ॥ आळीजनव दहं न साधारणो दासजनः किन्तु विलक्षण इति कृत्यद्वारा स्ववैलक्षण्यं दर्शयति ।

**श्लो ॥ दुष्प्रापोऽपि विधोः करः कुचयुगे तप्ते किमु स्थाप्यतां**
**किंवा शीतल मातनोमि सकले ष्वङ्गेषु ते स्पर्शनम्**
**आकर्षा म्यथवाम्बरं ग्रहयुतं धन्यं त मीशं कुरु**
**स्पृष्ट्वोरुद्युतिचुम्बिनं वद मुदा का वाऽत्र सेवाऽस्तु ते ॥** ९५

दुष्प्रापोऽपीति ॥ तप्ते सन्तप्ते, आतपेनेति भावः– विरहाग्निनेति च व्यज्यते– कुचयुगे तावकस्तनयुगळे, दुष्प्रापः दुर्लभोऽपि, विधो श्चन्द्रस्य, विष्णो श्च, करः किरणः हस्त श्च, स्थाप्यतां निधीयतां किमु– यदि मा माज्ञापयसि तर्हि आतपतप्ततावकस्तनयुगळ-तापनिरासाय चन्द्रकिरण मप्यानीय अत्र स्थापयामीत्येको भावः– यतोऽयं तापः कुचयो रेवोपलभ्यते नत्वन्यत्र– अतोऽयं नातपजन्यः किन्तु विरहाग्निजन्य एव । स च न चन्द्र-किरणसम्पर्कादिना निवार्यते– अपितु त्वत्प्रियस्य मम करतलग्रहणेनैवेति त्वत्कुचयुगळं करतलेन गृह्णामी त्यन्यो भावः– वा यद्वा ते सकलेषु सर्वेषु, अङ्गेषु अवयवेषु, शीतलं शीतं, स्पर्शनं वातं, आतनोमि, विस्तारयामि, किं वीजयामि किमित्यर्थः । ते अखिले ष्वङ्गेषु शीतलं यथा तथा स्पर्शन मालिङ्गन मातनोमि करोमि किमिति च व्यज्यते–शीतवात-स्पर्शेन बाह्यतापो निवार्येत न तु आन्तरः– स तु अतिशीतलमदालिङ्गनेनैवेति भावः– अथवा ग्रहयुतं चन्द्रादिग्रहसंयुक्तं, निशि सूर्यस्याभावादिति भावः – अम्बरं आकाशं, माकर्षामि आनयामि, ततः किं मत आह– उरुद्युतिचुम्बिनं अधिककान्तिभाजं, त मीशं निशानाथं, 'रजनी यामिनी तमी' त्यमरः । स्पृष्ट्वा तापापनोदार्थमिति भावः– धन्यं कृतार्थं, कुरु– त्वत्करस्पर्शेन चन्द्रोऽपि धन्यो भवत्वित्यर्थः– अत्र अन्योन्यालङ्कारः । चन्द्र-स्पर्शेन तव तापशान्तिः त्वत्करस्पर्शेन तस्य धन्यतेति परस्परोपकारसद्भावात्– चन्द्रकिरणा-

नयें सचन्द्रगगनानये वा तव सख्यः नैव शक्नुवन्तीति कृत्वा श्रीरामस्य हनूमानिव तव महा नहं दासस्सम्प्राप्त इति भावः । अन्यत्र अथवा ग्रहयुतं नीवीबन्धयुक्तं, अम्बरं तावकवसन, माकर्षामि अपहरामि— वस्त्रापहारस्य फल माह - ऊरुद्युतिचुम्बिनं वस्त्ररहितत्वात् सक्थि-कान्तिदर्शिनं, तं प्रसिद्धं, ईशं पतिं, मा मिति भावः । स्पृष्ट्वा धन्यं कुरु—अत्र एतासु सेवासु मध्ये, ते तव, का वा सेवा अस्तु मुदा सन्तोषेण, वद ब्रूहि, न तु मनसि केवलं कामनया खिद्यस्वेति भावः ॥ ९५

अव ॥ एवं स्वाङ्गतदासत्वं प्रकटय्य अथ स्वाङ्गतहितोपदेशित्वं प्रकटयति (हितोपदेशस्यापि सखीजनलक्षणत्वात् )

**श्लो ॥ गुह्यं तव प्रकटया म्यधुना सुखार्थं**
**कोऽप्यस्ति काम इति दैवतसार्वभौमः**
**धीरोऽपि भीरुवशगो ललनापि याति**
**पुम्भाव मीदृशफलं तदुपासनस्य ॥** ९६

गुह्य मिति ॥ अधुना तव सुखार्थं गुह्यं रहस्यं, प्रकाशयामि उपदिशामि—एतद्रहस्योप-देशस्य सुखं फल मित्यर्थः— अन्यत्र सुखार्थं तव गुह्य मुपस्थं, प्रकाशयामि वस्त्रापहरणेन स्फुटयामीत्यर्थः । त्वद्गुह्यप्रकटनेन मम मह त्सुखं भवेदिति भावः— रहस्यमे वाह कोऽपि अनिर्वाच्यः काम इति मन्मथोनाम, दैवतसार्वभौमः निखिलदेवपरिबृढः, ब्रह्मादीनामपि कामविकारपरवशत्वादिति भावः— अस्ति। अन्यत्र तव गुह्ये कोऽपि काम इति दैवतसार्वभौ-मोऽस्ति— गुह्यस्य मदनगृहत्वप्रसिद्धेरिति भावः— धीरोऽपि धैर्यवानपि, भीरुवशगः भयशीला-धीनः भवतीति शेषः— अशक्तेनापि कामदेवोपासकेन धीरा अपि जीयन्ते इति भावः । ललनापि स्त्रीच तदुपासिकेत्यर्थः— पुम्भावं पुञ्जन्म, याति प्राप्नोति— स्त्रीणां पुञ्जन्म सुकृत-लभ्यमिति भावः । अन्यत्र धीरो विद्वानपि, भीरुवशगः स्त्रीपरतन्त्रः भवति-ललनापि पुम्भावं उपरिसुरतं याति— तदुपासनस्य मन्मथदेवतोपासनस्य ईदृशफलं पूर्वोक्तविधं फलं अस्तीति शेषः ॥ ९६

**ग ॥ अपि च तदीय मघटितघटनाकौशल मसाधारण मवधारयतु भवती ॥**

अपिचेति ॥ अपिच किञ्च, असाधारण मनन्यसुलभं, तदीयं कामदेवसम्बन्धि, अघ-टितघटनाकौशलं अघटितानामपि घटनायां योजने कौशलं नैपुण्यं, वक्ष्यमाणविरुद्धधर्माणां सहावस्थानसम्पादनरूप मित्यर्थः । भवती त्वं, अवधारयतु शृणोतु— अन्यदैवाना मेवंविध-पाण्डित्यं नास्तीति भावः ॥ ९७

ग ॥ त मेनं मीनकेतनं त्रिदशमपि प्रकाशितदशविधदशं, मनङ्गमपि सुतनुलोभनीयं, भवविरोधिनमपि संसारसारं, परित्यक्तक्षेत्रमपि सरतिं, स्थाणुविरोधिनमपि तरुणोपास्यं, मधुप्रणयिनमपि कृतसुरावर्जनं, वसन्तमित्रमपि पुष्पसमये शरप्रहारं कुर्वाणं, मनन्यजमपि मनोभवं, रतिभाजमपि विरतिभाजं, कुसुमैकसायकमपि पल्लवेषु पक्षपातिनं, सुमनोबाणमपि सुरतात्रिरोधिबाणं, शम्बरविरुद्धमपि दानवारितया प्रसिद्धं, नष्टमूर्तिम प्यनष्टमूर्तिप्रणयिनं, निर्वाणकारणीभूतयोगाभिलाषजनकमपि मोक्षपरिपन्थिन, मपवर्गमिव भवविरोधिनं, हंसमिव मानसावासिनं, शिल्पकमिव शूर्पकारितया प्रसिद्धं, वैनतेयमिव सुमनसां दुर्लभ ममृत मातन्वानं, कृतान्तमिवायोगावलम्बिजनयातनोत्सुकं, मान्त्रिकमिव कामिनीग्रहव्याकुलितपुरुषोपास्यं, दिवाकरमि वातिरक्तरुचिविषयं, हरमि वोन्मत्तप्रियं, जीवन्मुक्तमिव निरन्तरप्रमदाश्रितं, पवनमिव भोगिजीवातुं, कृपणस्येव विधेरपि स्वजाताभिलाष मापादयन्तं, बहुप्रजस्येव शशिनोऽपि गुरुगृहस्पृहा मातन्वानं, यातुधानस्यैव पुरन्दरस्य तापसक्षेत्रदूषणधिय मापादयन्तं, वात्स्यायनतन्त्रसारं भगवन्तं मकरध्वज मुपासीना स्सम्पन्नप्रियावाप्तय स्सकलभोगा ननुभवन्ति ॥ ९८

तमिति ॥ त मेनं भगवन्तं, मकरध्वजं मत्स्यलाञ्छनं, मीनकेतनं मन्मथं, 'मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः' इति कोशा न्मीनकेतनशब्दो योगरूढ्या मन्मथ मभिदधानोऽपीह केवलरूढ्यैव प्रयुक्तः— अन्यथा मकरध्वजपदेन पौनरुक्त्यापत्तेः— उपासीनाः भजमानाः, जना इति शेषः— सम्पन्नप्रियावाप्तयः प्राप्ताभीष्टवस्तुलाभाः— अन्यत्र प्राप्तप्रेयसीलाभाः प्राप्तप्रियतमलाभा इति च— पुमांसः प्रेयसीं प्राप्य स्त्रियः प्रियतमं प्राप्यचेत्यर्थः— अतएव सकलभोगा ननुभवन्ति प्राप्नुवन्ति इत्यन्वयः। मीनकेतनमेव विशिनष्टि— त्रिदशमपि त्रिदशपरिमाणं वयोऽस्य त्रिदशः, देवः 'अमरा निर्जरा देवा स्त्रिदशा' इत्यमरः। मन्मथस्य देवविग्रहत्वादिति भावः। तिस्रो दशाः यस्य त मिति च गम्यते— प्रकाशितदशविधदशं प्रकाशिताः प्रकटीकृताः, दशविधा दशेत्यर्थः— दशाः अवस्थाः येन तं 'दृङ्मनस्सङ्गसङ्कल्पजागराः कृशताऽरतिः। ह्रीत्यागोन्मादमूर्छान्ता इत्यनङ्गदशा दशेति' वचना दिति भावः। त्रिदशे दशविधदशत्व मनुपपन्नमिति भावः— विरोधाभासालङ्कारः— एव मुत्तरत्रापि अनङ्गं मन्मथ मशरीरं च— सुतनुलोभनीयं स्त्रीभि स्स्पृहणीयं शोभनया तन्व्या लोभनीयं सुन्दरमिति च— भवविरोधिनमपि शिवशत्रुमपि, संसारद्वेषिण मपीति च— संसारसारं संसारस्य सारभूतं, मैथुनस्यैव संसारसारत्वादिति भावः। परित्यक्तक्षेत्रमपि त्यक्तशरीरमपि त्यक्तभार्यामपीति च— सरतिं रतिनामकभार्यया सहितं—स्थाणुविरोधिनमपि स्थाणुः शिवः'स्थाणू रुद्र उमापति'रित्यमरः।

स्थूणा च–तस्य विरोधिनं शत्रुमपि, तरुणोपास्यं तरुणैः युवभिः, उपास्यं सेव्यं, बालवृद्धयो र्मन्मथकथाया मनधिकारादिति भावः—तरुणा वृक्षेण, उपास्यं सेव्यमिति च–स्थूणाविरोधिनः तरुसेव्यत्वं विरुद्ध मित्यर्थः– मधु वसन्तः, मधु मद्यं च– तस्मिन् प्रणयः स्नेहः यस्य तमपि, कृतसुरावर्जनं कृतं निर्वर्तितं, सुराणां देवाना, मावर्जनं वशीकरणं, सुराया मदिराया, वर्जनं त्यागश्च येन तं– वसन्तमित्रं वसन्तऋत्वधिदेवता वसन्तः तस्य मित्रं सखायमपि, पुष्पसमये आर्तवसमये, वसन्ते च– शरप्रहारं बाणप्रयोगं कुर्वाणं, तदानीमेव मनोविक्षेप-लाभादिति भावः। वसन्तमित्रस्य वसन्तप्रहरण मयुक्तमि त्यन्यो भावः– अनन्यजं मन्मथ मपि ‘ शम्बरारि र्मनसिजः कुसुमेषु रनन्यज ’ इत्यमरः। अन्यस्मा न्न जायते इत्यनन्यजः तमिति च– जन्मरहित मित्यर्थः। मनोभवं मनोभवपदाभिधेयं, मनसः प्रादुर्भूतमिति च– यद्वा मनसि भवति प्रकाशते इति मनोभवः तमिति परिहारार्थः। रतिभाजममि रतिः स्वपत्नीसंयोगाश्च तां भजति प्राप्नोतीति तद्भाक् तमपि, विरतिभाजं वियोगभाजमिति विरोधः— वौ पक्षिणि, शुके, रतिं प्रीतिं, भजतीति तमिति परिहारः— मारस्य शुकवाहनत्वादिति भावः। यद्वा विरति विरामः, मृतिरिति यावत्– तद्भाजं मृत मित्यर्थः। शिवलोचनाग्निना दग्धतनुत्वादिति भावः– कुसुमैकसायकमपि पुष्पप्रधानबाणमपि, पल्लवेषु विटेषु किसलयेषु च– पक्षपातिनं स्निग्धं, पुष्पबाणस्य पल्लवबाणानुरक्तिर्विरुद्धेति भावः। सुमनोबाणमपि कुसुमेषु मपि, सुमनसो देवा एव बाणा यस्य तमपीति च– सुरताविरोधिबाणं सुरतस्य रतेः, अविरोधी अनुकूलः, बाणः शरः यस्य तं, सुरतायाः देवत्वस्य विरोधिनः बाणा यस्य तमिति च– यस्य देवा एव बाणाः तद्बाणानां देवत्वविरोधो विरुद्ध इति भावः। शम्बरविरुद्धमपि शम्बरो राक्षसः, उदकं च– ‘ नीरक्षीराम्बुशम्बर ’ मित्यमरः। तस्य विरुद्धं शत्रुमपि, दानवारितया दानवशत्रुतया, दानोदकत्वेन च– प्रसिद्धं प्रथितं, नष्टमूर्तिमपि दग्धतनुमपि, अनष्टमूर्तिप्रणयिनं अदग्धतनुशालिनमिति विरोधः– अष्टमूर्ति शिवः, तस्य प्रणयी स्निग्धो न भवती त्यनष्टमूर्तिप्रणयी शिवशत्रु रित्यर्थः। तमिति च, ‘अष्टमूर्ति रहिर्बुध्न्य’इत्यमरः–निर्वाण स्सुखं, मोक्षश्च। तस्य कारणीभूतः हेतुभूतः, योगः संयोगः सुरतमिति यावत्– चित्तैकाग्र्य-लक्षणश्च– तस्मि न्नभिलाषं वाञ्छां, जनयति उत्पादयतीति अभिलाषस्य जन उत्पादक इति वा तं वा– सुखहेतुसुरतकामजनक मित्येकोऽर्थः। मोक्षहेतुध्यानकामजनक मित्यन्योऽर्थः– मोक्षपरिपन्थिनं अपवर्गविरोधिनं, महामोहभटत्वा त्कामस्येति भावः– एवं विरोधाभासा न्वर्णयित्वा अथ श्लिष्टसाधर्म्योपमालङ्कारा नाह– अपवर्गं मोक्षमिव, भवविरोधिनं शिवद्वेषिणं संसारद्वेषिणं च– हंसं पक्षिविशेषमिव, मानसावासिनं हृदयगतं मानससरोनिलयञ्च–शिल्पकं शिल्पकर्तारमिव, शूर्पकारितया शूर्पकासुरशत्रुतया प्रस्फोटनकर्तृत्वेन च– ‘ प्रस्फोटनं शूर्प मस्त्री ’ इत्यमरः। (आन्ध्रे चेट) प्रसिद्धं प्रख्यातं– वैनतेयं गरुडमिव, अमृतं सुधां, सुमनसां देवानां,दुर्लभं लब्धुं अशक्यं, आतन्वानं कुर्वाणं; गरुडस्य अमृतापहारित्वादिति भावः–प्रकृते

तु अमृतं मोक्षं, सुमनसां बुधानां, दुर्लभ मातन्वानं मोक्षविरोधिमोहजनकत्वादिति भावः– कृतान्तं यममिव, अयोगावलम्बिजनस्य केवलविषयासक्तस्येत्यर्थः। विरहिजनस्य च– यातने पीडने, उत्सुकं उत्कं– योगेन पापनिवृत्तिसम्भवादिति भावः–मान्त्रिकं मन्त्रज्ञ मिव, कामिनी ग्रहव्याकुलितैः यः पिशाचः कामिनीरूपेण स्वप्नदशाया मागत्य पुरुषं रमयति स कामिनी-ग्रहः तेन- प्रकृतेतु कामिन्यां नार्यां यः ग्रहः आसक्तिः अभिनिवेश इति यावत्– तेन च व्याकुलितैः क्षोभितैःपुरुषैः उपास्यं सेव्यं, एकत्र कामिनीपिशाचनिर्हरणार्थं;अन्यत्र विरहताप-निवृत्त्यर्थं चेति भावः– दिवाकरं सूर्यमिव, अतिरक्तरुचिविषयं अत्यरुणकान्तिशालिनं, अत्यासक्तानां प्रीतिजनकं च– विरक्तस्य काम स्तृणप्राय इति भावः– हरं शिवमिव, उन्मत्त-प्रियं दुत्तूरप्रीतिशालिनं, उन्मत्तानां पुष्पाणि उन्मत्तानि प्रियाणि यस्य यस्मैवा तमिति समासः। प्रकृते उच्चै र्मत्तानां प्रियं हितं, मदिरादिमदः कामं वर्धयतीति भावः– जीवन्मुक्तं जीवन्नपि मुक्तव द्वर्तते यः स जीवन्मुक्तः निरन्तरब्रह्मात्मानुसन्धानशालितया प्रपञ्चे निस्पृह मित्यर्थः। निरन्तरप्रमदाश्रितं अविरत मानन्द परिपूर्णं, अविरतं प्रमदया स्त्रिया रत्येति भावः–आश्रितं युक्तमिति च– पवनं वायुमिव, भोगिजीवातुं भोगिनां सर्पाणां भोगवतां च, जीवातुं जीवनौ-षधं सर्पाणां वाताशनत्वादिति भावः। कृपणस्य दरिद्रस्येव, लुब्धस्येवेति वा– विधे र्ब्रह्मणोऽपि, अपिना किमुत तत्स्रष्टाना मस्मादृशामिति भावः। स्वजाताभिलाषं धनसमूह-कांक्षां स्वसुताकामुकत्वं च आपादयन्तं जनयन्तं, बहुप्रजस्येन अधिकसन्ततिशालिन इव शशिनः चन्द्रस्यापि, गुरुगृहस्पृहां विस्तृतसद्माभिलाषं– गुरुपत्नीस्पृहां च– आतन्वानं जनयन्तं, बहुकुटुम्बो हि पुमान् पुत्रपौत्रतज्जायापत्यवध्वादिबहुजननिवासोचितं विस्तीर्णं गृह मभिलषतीत्यप्राकरणिकार्थः– यातुधानस्य राक्षसस्येव, पुरन्दरस्य इन्द्रस्य, तापसक्षेत्रदूषणधियं ऋष्याश्रमभञ्जनबुद्धिं, तापसस्य गौतमस्य, क्षेत्रं भार्या अहल्येत्यर्थः– तस्य दूषणे दोषजनने, धियमिति च– इन्द्रोऽहल्यां गौतमवेषे णोपभुज्य पातिव्रत्या द्भ्रंशयामासेति श्रूयते –आपाद-यन्तं जनयन्तं, एवं विधिचन्द्रेन्द्राणामेव कामपरतन्त्रत्वे किमु तास्माकमिति व्यज्यते। तेन च कामस्य सर्वदेवपरिवृढत्वं व्यज्यते– वात्स्यायनतन्त्रसारं वात्स्यायनोनाम कश्चन स्मरशास्त्रो-पदेष्टा ऋषिः, तस्य तन्त्रं शास्त्रं, तस्य सारं स्थिरांशं तदेकप्रतिपाद्यमित्यर्थः ॥ ९८

**ग ॥ तथा च तदीयं मन्त्र मस्मिन्नेव माङ्गळिकमुहूर्ते तुभ्य मुपदेष्टुकामस्य किमपि वचनं प्रमाणयतु भवती ॥ ९९**

तथाचेति ॥ तथा च एवं काम स्यातिप्रसिद्धत्वेनेत्यर्थः। तदीयं कामदेवताकं, मन्त्रं मनुं अस्मिन्नेव माङ्गळिके मुहूर्ते मङ्गळकरे अस्मिन् मुहूर्तेएव, तुभ्य मुपदेष्टुकामस्य वक्तु-मनसः मम, किमपि किञ्चि द्वचनं वाक्यं,भवती त्वं,प्रमाणयतु प्रमाणत्वे नाङ्गीकरो त्वित्यर्थः। मन्त्रोपदेशकाले गुरुवाक्यस्य प्रमाणीकर्तव्यत्वादिति भावः ॥ ९९

श्लो॥ वामाचारैकगम्यो हि मन्त्रोऽयं तस्य साधनम्
नग्नता मधुनः पानं प्रियोच्छिष्टस्य च ग्रहः ॥ १००

वामेति॥ अयं मन्त्रः मन्मथदेवताको मनुः, वामाचारैकगम्यः वामाचारेणैकेनैव लभ्यः- हिः प्रसिद्धौ - यथा शाक्तेयानां वामाचारो दक्षिणाचारश्चेति आचारद्वयं प्रसिद्धं; तथा एतदुपासकानां वामाचार एकएव प्रसिद्ध इत्यर्थः। वामाचारमेवाह - नग्नता विवस्त्रत्वं, मधुनः मद्यस्य, पानं; प्रियोच्छिष्टस्य प्रियभुक्तशेषस्य, ग्रहः ग्रहणं भक्षण मित्यर्थः — इत्येतत्त्रयमति शेषः। तस्य साध्यमन्त्रस्य साधनं साधकं भवतीति शेषः- अयमेव हि वामाचारो नाम लोकसिद्ध इति भावः। १००

श्लो॥ इत्यादिचाटुवचनै र्मधुरै र्मुरारि
स्स्मेरानना मधिगतार्थतया प्रियां ताम्
दृष्ट्वैव नामृत मसौ पिबति स्म किं नु
मोहा दकामयत किं त्वधरामृतं सः ॥ १०१

इत्यादीति॥ मुरारेः कृष्णस्य, मधुरैः सरसैः, इत्यादिचाटुवचनैः एवमादिप्रियवाक्यैः, अधिगतार्थतया अर्थज्ञत्वेन हेतुना, स्मेराननां सस्मितमुखीं, मुरारिमधुरवचनकदम्बं श्रुत्वा अहो अस्य वञ्चनाचातुरीति स्मयमानाऽभू द्राधेत्यर्थः। तां प्रियां राधां दृष्ट्वैवेत्युत्प्रेक्षा— असौ कृष्णः, अमृतं सुधां, न पिबतिस्म किन्तु न पपौ किं- पुरा खलु समुद्रा दुत्पन्न ममृतं देवगणा नेवापाययत्। नतु स्वयं पपौ। तत्र राधादर्शनमेव हेतुः किमिति हेतूत्प्रेक्षेयं अतिशयोक्ति समुत्थापिता। अमृतविभाजनस्य कृतयुगकालिकत्वात् राधामुखदर्शनस्य द्वापरयुगकालिकत्वाच्च पूर्वं ममृतपानाभावं प्रति परस्य राधामुखदर्शनस्य हेतुत्वायोगात्। अनया चोत्प्रेक्षया दृश्यैव पेया द्राधामुखचन्द्रामृता त्सागरजामृतस्य भगवन्निराकृतत्वेन हैन्यं व्यज्यते इति परिकरालङ्कारो गम्यः। किन्तु स कृष्णः मोहा त्कामात्, अधरामृतं राधाया अधरसुधां, अकामयत आचकांक्ष। राधामुखचन्द्राधरगतामृतमेव अत्यासक्त्या पातु मैच्छत् समुद्रजामृता दधिकत्वा दिति भावः। मोहाद्भ्रमा, दधरामृतं अपकृष्टसुधा मकामयतेति च व्यज्यते। उत्कृष्टसुधा मुत्सृज्य अपकृष्टसुधां वाञ्छ न्पुरुषो मूढ एवेति भावः। अत्र राधां दृष्ट्वा अमृतं न पपौ किन्तु तदधरामृतमेव अकामयतेत्यनेन राधायाः मोहिनीसाम्यं कृष्णस्य च राक्षससाम्यं व्यज्यते। तेन च सर्वजगन्मोहनमपि कृष्णं मोहयन्त्या अहो राधाया लावण्यातिशय इति व्यज्यते -

श्लो॥ चुचुम्ब शौरि र्वदनं प्रियाया। ध्रुवं सुधादीधितिबिम्ब मेतत्
प्रोवाह मन्दं करधूननेन। यदुज्ज्वलः कोऽपि रसो मनोज्ञः॥ १०२

चुचुम्बेति॥ शौरिः प्रियायाः राधायाः, वदनं मुखं, चुचुम्ब चुम्बितवान्, 'चुबि वक्त्र संयोगे'- एतन्मुखं सुधादीधितिबिम्बं चन्द्रबिम्बं भवतीति शेषः - ध्रुवं नून मित्युत्प्रेक्षा - तत्र

हेतु माह प्रोवाहेति- य यस्मा त्कारणात्, मन्दं शनैः, करधूननेन हस्तचालनेन, निषेधार्थमिति भावः। अन्यत्र किरणकम्पनेन, उज्ज्वलः अतिशयः, कोऽपि अनिर्वचनीयः, मनोज्ञः मनोहरः, रसः, प्रीतिः, सुधाद्रव श्च, प्रोवाह प्रवहति स्म- सर्वमपि दुर्लभं वस्तु प्रियमिति न्यायात् करधूननेन स्पृहातिशय स्सञ्जात इत्येको भावः। किरणचलनवशा त्सुधापात स्सञ्जात इत्यन्यो भावः। अत्र मुखे उत्प्रेक्षितं चन्द्रबिम्बत्व मुत्तरवाक्यार्थेन सहेतुक मिति काव्यलिङ्गा लङ्कारः- यद्वा-अनुमानालङ्कारः। तथा चायं प्रयोगः-इदं चन्द्रबिम्बं भवितु मर्हति करधूननेन उज्ज्वलरसप्रवाहजनकत्वा चन्द्रव दिति - १०२

ग॥ तदनु यदुपतिः प्रेयसीबिम्बाधरपानलोलुपः कमपि चाटुवचननिचय मरचयत्। १०३

तदन्विति॥ तदनु ततः, मुखचुम्बनानन्तर मित्यर्थः। प्रेयस्याः राधायाः, बिम्बाधरस्य बिम्बतुल्य स्याधरस्य, पाने लक्षणया तद्रसपाने इत्यर्थः। लोलुपः आसक्तः, यदुपतिः, कृष्णः, कमपि अन्यकामुकदुर्वच मित्यर्थः। चाटुवचननिचयं प्रियवाक्यपरम्परां, अरचयत् निर्मितवान्-

तथाहि॥ एकोनविंशतिश्लोकैः अधरं वर्णयति त्वदधर इत्यादिभिः -

श्लो॥ त्वदधरः परिभूतसुधारसः। प्रियतमे! कतमेन न बुध्यते
विदधति द्विजराजरुचे स्तिर। स्करण मस्तु सुधाधिकता न किम्?

त्वदधर इति॥ हे प्रियतमे प्रेयसि! त्वदधरः तवाधरोष्ठः, परिभूतसुधारसः तिरस्कृता मृतस्वादः, अमृताद प्यधिकास्वाद इत्यर्थः। इति एवं कतमेन केन, न बुध्यते न ज्ञायते- सर्वेऽपि त्वदधरं सुधारसाधिकरसशालिनं जानन्त्येवेत्यर्थः। ननु मत्कामुकस्य तव तथा प्रतीति रस्तु नाम- कथं पुन स्सर्वेषा मत आह-विदधतीति-द्विजराजरुचेः द्विजराज श्चन्द्रः तस्य रुचेः स्वादस्य, तिरस्करणं परिभवं विदधति कुर्वाणे त्वदधरे इति शेषः। सुधाधिकता अमृता दाधिक्यं नास्ति किम् स्यादेवेत्यर्थः। चन्द्रस्य सुधामयत्वादिति भावः। प्रकृते तु द्विज राजाः दन्तश्रेष्ठाः, मध्यमदन्ता इति यावत्- 'राजदन्ता मध्यदन्ता दंष्ट्रादन्ता श्च पार्श्वयो रिति वैजयन्ती। तेषां रुचेः कान्तेः, तिरस्करण माच्छादनं, विदधति त्वदधरे अधरस्य दन्तवासस्त्वादिति भावः। अत्र त्वदधरः परिभूतसुधारस इति पूर्ववाक्यार्थस्य उत्तरवाक्यार्थेन समर्थना त्काव्यलिङ्गम्। 'समर्थनीयस्यार्थस्य काव्यलिङ्ग समर्थन'मिति लक्षणात् - स च श्लेषोज्जीवितः- १०४

श्लो॥ आदौ य दब्धि ममृतं मथने बभूव
गुप्त्या तदेव विधिना निहितं त्वदोष्ठे
ख्यातं तदेत दधरामृत मुत्तरं तु
कालुष्यभागधिगतं त्रिदशैर्धृताशैः॥ १०५

आदाविति।। मथने क्षीरसागरमथने, आदौ प्रथमतः, अच्छं स्वच्छं, यदमृतं सुधा, बभूव उत्पन्नं, तदेवामृतं गुप्त्या सङ्गोपनेन सङ्गोप्येत्यर्थः। विधिना ब्रह्मणा, त्वदोष्ठे तावकाधरे, निहितं स्थापितं, निर्माणसमये इति भावः। तत्तस्मा त्कारणादेव एतत्त्वदधरगतं अधरामृतं प्रागुत्पन्नसुधा अधरगतामृतमिति च ख्यातं प्रथितम्। कालुष्यभाक् मलिनम् उत्तरं पश्चादुदितन्तु अमृतमिति शेषः। धृताशैः धृतकांक्षैः, त्रिदशै र्देवैः, रधिगतं प्राप्तं, देवाना ममृते अतिदुराशत्वा त्कलुष मप्यमृत मुत्तमं मत्वा ननन्दुरिति भावः। अत्र अधरगतामृतत्वरूपाव यवार्थपुरस्कारेण ओष्ठसुधायां प्रयुक्तस्य अधरामृतपदस्य पूर्वसुधात्वरूपान्यार्थत्वकल्पना न्निरुक्त्यलङ्कारः। पूर्वार्धे तु असम्बन्धे सम्बन्धरूपातिशयोक्तिः। अनया निरुक्ति रुद्घापितेति विवेकः - १०५

श्लो।। बाले! तवाखिलमुखेऽपि विधो र्विवर्ते
रेखाधरस्य परमस्य कुतोऽतिमृष्टा
इत्थं विशङ्क्य चिर मस्स्यधुना विशङ्कः
स्मृत्वा शिवं धृतरुचिं शशिरेखयैव ॥ १०६

बाले इति।। हेबाले सुन्दरि! तव अखिलमुखेऽपि समग्रवदनेऽपि, विधोश्चन्द्रस्य, विवर्ते परिणामे सति चन्द्रे एव सर्वावयवावच्छेदेन त्वन्मुखात्मना परिणतत्वेऽपीत्यर्थः। अतिशयोक्ति रलङ्कारः। कुतः कस्माद्धेतोः अस्य अधरस्य रेखापरं रेखैव अतिमृष्टा अतिमधुरा सर्वावयवावच्छेदेन चन्द्रपरिणामभूते मुखे अधरावयवस्ये वातिमृष्टत्व मन्यस्य तु मृष्टत्व मिति विशेषस्य हेतु र्नोपलभ्यते इत्यर्थः। इत्थ मेवं, चिरं, चिरकालं, विशङ्क्य तर्कित्वा, शशिरेखयैव चन्द्रकळयैव, धृतरुचिं कृतकान्तिं, शिवं, स्मृत्वा अधुना अद्य विशङ्कः निस्संशयः, अस्मि-चन्द्र स्सर्वोऽप्यमृतमयत्वात् मृष्टः तत्रैका रेखा त्वतिमृष्टा अन्यथा सर्वा रेखाः उत्सृज्य ता मेकामेव सर्वज्ञ शिवः कथं बिभृयात् - अय मधरस्तु तयैव निर्मितः - अतएव मुखं सर्वं मृष्ट मधर स्त्वतिमृष्ट इति विरचि नव मित्यर्थः। अत्र अधरं सृष्ट्वा शिवशिरोगतचन्द्ररेखास्मरणात् स्मृतिमदलङ्कारः। 'स्यात्स्मृतिभ्रान्तिसन्देहै स्तदङ्कालङ्कृतित्रय' मिति लक्षणात्- १०६

श्लो।। सुपर्णमात्रेण जगद्दुराप। कल्याणपात्रेण च यद्गृहीतुम्
अर्हं किय त्प्रेयसि! तेऽधरस्य। तस्यामृतस्यापि च तारतम्यम् ॥ १०७

सुपर्णेति।। य दमृतं सुपर्णमात्रेण गरुडेन, शोभनपर्णमात्रेण च - गृहीतुं स्वीकर्तुं, मर्हं योग्यं— अमृतस्य गरुडापहृतत्वा दित्येकोऽर्थः। कदळ्यादिपर्णमात्रग्राह्यत्वा दित्यन्योऽर्थः। यत् सामान्ये नपुंसकम्। यद्वा लिङ्गविपरिणामेन य इति योज्यम्। यः त्वदधरः, जगद्दुरापकल्याणपात्रेण जगतो लक्षणया तत्स्थजनानां, दुरापानि दुर्लभानि, कल्याणानि श्रेयांसि—यद्वा जगति लोके दुरापानि कल्याणानि परमात्मनि विद्यमानानां कल्याणानां जगति दुर्लभत्वा

दिति भावः । तेषां पात्रं भाजनं निलय इत्यर्थः । तेन अनन्तकल्याणगुणपरिपूर्णेन परमात्मनेत्यर्थः । मयेति यावत्—अन्यत्र जगद्गुरापेण बहुमूल्यत्वा त्सर्वजनदुर्लभेनेत्यर्थः । कल्याणपात्रेण स्वर्णभाजनेन, गृहीतु मर्हः अतिश्लाघ्यवस्तुत्वा त्सुवर्णपात्रेणास्य ग्रहणम् । एतत् दृष्ट्वा अपकृष्टत्वा त्स्वर्णमात्रेणैव अमृतस्य ग्रहणमिति हेतो रुभयो र्मह दन्तरमस्तीत्याह— हे प्रेयसि ! ते अधरस्य जगद्गुरापकल्याणपात्रग्राह्यत्वदधरोष्ठस्य तस्य सुपर्णमात्रग्राह्यस्यामृतस्य च कियत् तारतम्यं न्यूनाधिकभावोऽस्ति— महत्तारतम्य मस्तीत्यर्थः । एतेन अमृत मिवाधरः अधरामृत मित्युपमितसमासशङ्का दूरतः परास्ता । अधरदृष्ट्या अमृतस्यापकृष्टत्वेन सामर्थ्याभावात् - तस्मात् अधर मपकृष्ट ममृतं यस्मा त्तदधरामृत मिति व्युत्पत्त्या अधरामृतशब्दोऽधर मभिदत्ते इति व्युत्पत्त्यनन्तरं च व्यज्यते । अत्र उपमाना दमृता दुपमेय स्याधरस्य व्यतिरेकवर्णना व्यतिरेकालङ्कारः । स च श्लेषानुप्राणितः- किं च अधररसस्यैवामृतव्यतिरेकवर्णनात् रसव्यतिरेकेण अधरो नाम न कश्चित्पदार्थः । किन्तु सर्वोप्यय मधरः रसमय एवेति० यज्यते । वस्तुतस्तु- श्लेषं विनापि अधरे अमृतव्यतिरेको भात्येव । पक्षिमात्रग्राह्यत्वा दमृतस्य परमेश्वरग्राह्यत्वा दधरस्य- यद्वा भगवद्वाहनभूतगरुडग्राह्यत्वा दमृतस्य साक्षा द्भगवद्ग्राह्यत्वा दधरस्य - केचित्तु अमृताधरयो र्महत्तारतम्यवचनेन अधरः क्व अमृतं क्व इति तर्कितविरूपघटनाप्रतिभाना द्विषमालङ्कारः । उदाहृतं च 'स्वं क्व तस्या मुखं क्व' इति – एतन्मते तु व्यतिरेकालङ्कारो व्यङ्ग्यः - १०७

श्लो॥ मनोहरापाङ्गि ! तवाधरोऽयं । क्षौद्रस्य मन्ये पटलं य देषः
चिराय तिर्यग्विहितोऽपि कृच्छ्रं । प्रायः परेणैव नरेण पेयः ॥

मनोहरेति॥ हे मनोहरापाङ्गि ! मनोज्ञकटाक्षशालिनि ! स्वाङ्गाच्चोपसर्जनादिति ङीष् । तवाय मधरः क्षौद्रस्य माक्षिकस्य, पटलं कोशः, भवतीति शेषः - मन्ये इत्युत्प्रेक्षा-वाक्यार्थः कर्म-तवाधरं क्षौद्रपटलं मन्ये इत्यर्थः । य द्यस्मात्, एषः अधरः चिराय चिरात्, तिर्यग्विहितोऽपि लज्जया साचीकृतोऽपि, कृच्छ्रं कथञ्चित्, प्रायः बहुशः, परेण परमात्मना, नरेण मनुष्येणैव मयैवेत्यर्थः, पेयः पातुं शक्यः भवतीति शेषः । सर्वथा पास्याम्येवेत्यर्थः । अन्यत्र एष मधुकोशः चिराय कृच्छ्रं तिर्यग्भिः तिर्यग्जन्तुभिः, मक्षिकाभि रित्यर्थः । विहितोऽपि, निर्मितोऽपि, प्रायः परेण अन्येनैव नरेण मनुष्येण, पेयः पातुं शक्यः योग्य इति वा- मधुकारै श्चिरा त्सञ्चितमपि मधु नरा एव बला दिपबन्तीत्यर्थः, क्वचि न्मानुषसञ्चाररहिते प्रदेशे मक्षिकाभि रेव पीयते इत्यभिप्रायेण प्रायोग्रहणं । श्लेषानुप्राणितोत्प्रेक्षालङ्कारः ॥ १०८

श्लो॥ कमलकुट्मलचारुकुचाङ्कुरे ! । त्वदधरो द्विजवास इति स्फुटम्
अतिसित स्सततामृतसेकतो । भवति रोगविशेषपदं यतः ॥ १०९

कमलेति॥ कमलकुट्मलचारुकुचाङ्कुरे ! कमलकुट्मलौ पद्मकोशाविव, चारू रम्यौ, कुचाङ्कुरौ स्तनाङ्कुरौ, यस्यास्तस्या स्सम्बुद्धिः । स्तनयो रङ्कुरत्वारोपेण यौवनावस्थायाः प्रारम्भा

न्मुग्धात्वं व्यज्यते । त्वदधरः द्विजवासः दन्तवस्त्रं अधरस्य वस्त्रव द्दन्तावरकत्वादिति भावः- 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः । ब्राह्मणवस्त्रं च भवतीति शेषः । इति स्फुटं ध्रुव मित्युत्प्रेक्षा । मन्ये शङ्के, ध्रुव प्राय इत्येवमादीना मुत्प्रेक्षावाचकत्वात् । एवं सम्भावनायां हेतु माह- यतः यस्माद्धेतोः, अतिसितः सितां शर्करा मतिक्रान्तः 'श्विले सितं भार्गवे ना शर्करायां सिता स्त्रिया' मित्यमरशेषे । अधरः सततामृतसेकतः निरन्तरसुधासेचनात्, विधिना सततं सुधाभि स्सिच्यमान त्वाद्धेतो रित्यर्थः । रागविशेषपदं अनुरागातिशयास्पदं भवति । प्रथमत एव शर्करातिशायी तदनु सुधाभिरपि सिच्यतेचे त्किमु वक्तव्यमिति भावः- अन्यत्र अतिसितः प्रथम मतिशुभ्रः द्विजपटः सतत ममृतसेकतः जलप्रक्षाळनाद्धेतोः, रागविशेषपद मारुण्यातिशयाश्रयं भवति । सदा प्रक्षाळ्यमानं हि शुभ्रवस्त्रं क्रमेण काषायवर्ण मापद्यत इति प्रसिद्धम्- १०९

श्लो ॥ द्विजच्छदस्तेऽधर इत्यसंशयं
द्विजोऽपि सोऽयं गरुडः परं भवेत्
अनेन सञ्छाद्य यतोऽमृतं नवं
हठेन हार्यं हरिणैव धार्यते ॥ ११०

द्विजेति ॥ ते अधरः द्विजच्छदः रदनच्छदः, पक्षिपत्रम् च भवतीति शेषः— इत्यसंशयं नास्ति संशयोऽत्रेत्यर्थः । अधरस्य रदनच्छदपर्यायद्विजच्छदशब्दवाच्यत्वं निस्संदिग्धम् । 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससीति' कोशा दित्येको भावः । त्वदधरः पक्षिपत्रं भवितु मर्हं इति द्विजच्छदशब्दवाच्य इत्यन्यो भावः । अत एव निरुक्तिरलङ्कारः । पूर्वश्लोके च यद्यपि द्विजवास इत्यत्र निरुक्ति रस्ति तथापि स्फुट मित्यनेन तादृशान्यार्थकल्पनाया उत्प्रेक्षितत्वा दुत्प्रेक्षैव । अधरस्य पक्षिपत्रत्वे हेतु माह द्विजोऽपीति — सोऽयं अधरवाचक द्विजच्छदरूपसमस्तपदावयवभूतः द्विजोऽपि द्विजशब्दोऽपि शब्दधर्मस्य अर्थे उपचारात् तादृशद्विजशब्दवाच्यश्चेत्यर्थः । पक्षीचेति यावत् - गरुडः परं गरुत्मानेव भवेत्- अधरो गरुडच्छदत्वाद् द्विजच्छदशब्दप्रतिपाद्य इत्यर्थः । ततः किं मत आह- यतो हेतोः, हरिणा कृष्णेन, हठेन बलात्कारेण, हार्यं हर्तुं शक्यं, नवं नूतन, ममृतं सुधा, अनेन अधरेण सञ्छाद्य सङ्गोप्य, धार्यते अन्तरेव धार्यत इत्यर्थः । दन्तपक्षे अधरान्तरे एव अमृत स्योपलम्भः नतु बहिः प्रसरण ममृतस्यात्रास्तीति भावः । अन्यत्र अनेन गरुडपक्षेण, हरिणा इन्द्रेण, हठेन हार्यं हर्तुं योग्यं, नव ममुतं सञ्छाद्य धार्यते । पुरा गरुत्मा नमृतघटं पक्षेण सञ्छाद्य निनायेति प्रसिद्धिः । हरिहार्यामृतगोपनत्वा त्वदधरो गरुडपक्ष एवेति निष्कृष्टार्थः । श्लेषानुप्राणितः निरुक्त्यलङ्कारः । असंशयमिति पदस्य उत्प्रेक्षावाचकत्वाङ्गीकारे तु उत्प्रेक्षालङ्कार इत्येव ।

श्लो ॥ मसारसासिक्ष ! तवाधरोष्ठ । फलं त्रिशङ्के पनसद्रुमस्य
प्रकाश्यते कण्टकपाळि रादौ । तत श्च मृष्ट य दमुष्य भोक्तुः

मसारेति ॥ हे मसारसाराक्षि ! मसार इंद्रनीलमणिः, तद्वत् सारे श्रेष्ठे अक्षिणी यस्या स्तस्या स्सम्बुद्धिः—इंद्रनीलनीललोचने! इत्यर्थः। बहुव्रीहौ सक्थ्यक्ष्णो रिति समासान्तः षच्-षित्त्वा त्स्त्रियां ङीष् । तवाधरोऽयं पनसद्रुमस्य पनसाख्यवृक्षस्य, फलं विशङ्के मन्ये इत्युत्प्रेक्षा । तत्र हेतु माह-य यस्माद्धेतोः, अमुष्य अधरस्य भोक्तुः पातुः, आदौ कण्टकपालिः पुलक-पङ्क्तिः, प्रकाशते उत्पद्यते इत्यर्थः। 'वेणौ द्रुमाङ्गे रोमाञ्चे क्षुद्रशत्रौ च कण्टके' इति वैजयन्ती। ततश्च मृष्टं स्वादु वस्तु लभ्यते अधरामृतमाधुर्योपलम्भो जायते इत्यर्थः। अन्यत्र अमुष्य पनसफलस्य भोक्तुः आदौ कण्टकपालिः कण्टकानां पनसफलावयवविशेषाणां, पालिः पङ्क्तिः, प्रकाश्यते दृग्गोचरीभवतीत्यर्थः । तत्फलस्य चर्मणः कण्टकितत्वादिति भावः—तत श्च छेदनानन्तर मित्यर्थः — मृष्टं वस्तु लभ्यते इति शेषः । अन्तरवयवानां मधुरत्वादिति भावः — श्लेषसंकीर्णा सहेतुकोत्प्रेक्षालङ्कारः— १११

श्लो ॥ द्राक्षेत्र साक्षा दधर स्तवायं । नासत्यवाणीप्रवणो यतोऽहम्
तापापनोदाय गदावलम्बी । मुदा तदास्वादनसादरोऽस्मि ॥ ११२

द्राक्षेति ॥ तवाय मधरः साक्षा त्प्रत्यक्षात्, द्राक्षेव मृद्वीकेव, 'मृद्वीका गोस्तनी द्राक्षे' त्यमरः। उत्प्रेक्षा-तत्र हेतु माह-यतो हेतोः गदावलम्बी कौमोदकीधरः, न हि भगवतोऽसत्यवाक्यत्व मिति भावः। रोगी च - अतएव नासत्यवाणीप्रवणः न सत्या असत्या, न असत्या नासत्या सत्येत्यर्थः। असत्यत्वसम्भावनानिरासाय नञ्द्वयप्रयोगः - स चासौ वाणी नासत्यवाणी, सत्यवाक्यं तत्र प्रवणः व्यग्रः, सत्यवाक्य इत्यर्थः। अन्यत्र नासत्यो रश्विनो र्देववैद्ययो रित्यर्थः। वाण्यां वाक्ये प्रवणः तदुक्तार्थानुष्ठानतत्पर इत्यर्थः । अहं तापापनोदाय तापः विरहजन्यः ज्वरादिजन्यश्च सन्तापः - तस्य अपनोदाय निवारणार्थं, मुदा सन्तोषेण, सद्भेषजलाभादिति भावः-प्रकृते सदधरलाभादिति भावः। तदास्वादनसादरः अधरपानासक्तः द्राक्षापानासक्तश्च अस्मि। द्राति हन्ति दाहादिकं द्राक्षा इति व्युत्पत्तेः वैद्यके अश्विभ्यां द्राक्षाया स्तापापहत्वस्योक्तत्वात्। मामकतापनिवारणार्थं त्वदधररूपद्राक्षारसं पातुं सगदोऽह मभिलषामीत्यर्थः। अत्र तापनिवारणानन्तर मधरे सम्भावनीयस्य द्राक्षात्वस्य प्रागेव सम्भावितत्वादतिशयोक्ति श्च । ११२

श्लो ॥ कथं नु साम्यं द्विजगर्हितेन । बिम्बीफले नास्तु तवाधरस्य
द्विजप्रधाना श्शुचयोऽधरे तु । प्रवर्तयन्त्येव रुचिं स्वकीयाम् ॥

कथन्न्विति ॥ तवाधरस्य द्विजगर्हितेन ब्राह्मणनिन्द्येन 'कोशातकी बिम्बफलं मद्य-मांससमं स्मृत'मिति धर्मशास्त्रादिति भावः - बिम्बीफलेन बिम्बेन, साम्यं तौल्यं कथ मस्तु नास्त्ये वेत्यर्थः। अधरे तु शुचय श्शुभ्राः द्विजप्रधानाः प्रधानदन्ताः स्वकीयां रुचिं कान्तिं, प्रवर्तयन्ति प्रसारयन्त्येव-दन्तकान्ति रधरे प्रसरतीति भावः - अनेन मुग्धाया निगूढ स्सन्तोषातिशयो

व्यज्यते, अन्यत्र शुचयः पवित्राः नतु पतिता इत्यर्थः। द्विजप्रधानाः ब्राह्मणोत्तमाः, न तु ब्रह्मबन्धव इति भावः-अधरे स्वकीयां रुचि मभिलाषं प्रवर्तयन्त्येव अभिलषन्तीत्यर्थः। द्विजगर्हितस्य बिम्बस्य द्विजाभिलषित स्याधरस्य च मह तारतम्य मस्तीति निष्कृष्टार्थः। अत्र द्विजगर्हिता द्बिम्बाद् द्विजपूजित स्याधरस्य उत्कृष्टत्वप्रतीते र्व्यतिरेकालङ्कारः। अनेन च अधरो बिम्बमिवे त्युपमितसमासाश्रयेण स्त्यधरे प्रयुक्त मधरबिम्बपदं राधाधर मभिधातुं न क्षमते सामर्थ्याभावादिति व्यज्यते। स्पष्टं चेदं नैषधे 'अधरं किल बिम्बनामकं फलमस्मादिति भव्य मन्वयम् लभतेऽधरबिम्ब मित्यदः पद मस्या रदनच्छदं दधत्-इति। ११३

श्लो॥ न विद्यते यत्र धरेति वृत्त्या। प्रतीयतेऽर्थोऽधरशब्दचुम्बी
प्रत्यक्ष मेतं नवखण्डसार। रसाश्रयत्वं कथ मस्तु मुग्धे!॥ ११४

नेति॥ यत्र धरा भूः, न विद्यते नास्तीति, वृत्त्या विग्रहेण, व्याख्यानेनेति यावत्। अधरशब्दचुम्बी अधराख्यशब्दस्पृक्, अर्थः प्रतीयते गम्यते। न विद्यते धरा यस्मिन् सः अधरः धरारहित इत्यर्थः। इत्यधरशब्दनिरुक्तिः प्रतिभातीत्यर्थः। एवं निर्वचने दोष माह-हे मुग्धे सुन्दरि! प्रत्यक्ष मनुभवसिद्धं, दृग्विषयं च एतत् नवखण्डसाररसाश्रयत्वं नवो नूतनः, खण्ड श्शर्करा 'स्या त्खण्ड श्शकले चेक्षुविकारमणिदोषयो' रिति विश्वः। तस्य य स्सारः श्रेष्ठो रसः स्वादः, तदाश्रयत्वं तन्निलयत्वं, तद्रसतुल्यरसवत्व मित्यर्थः। अतएव निदर्शनालङ्कारः — अन्यत्र नवखण्डैः नवभिः भारतेळावृतादिनामकैः खण्डैः, सारा श्रेष्ठा, या रसा भूमिः, तदाश्रयत्वमिति - कथं केन प्रकारेणास्तु न कथमपीत्यर्थः। धरानाश्रये अधरे धराश्रयत्वं विरुद्धम्। तत्र च प्रत्यक्षोपलब्धत्वा त्प्रबलेन धराश्रयत्वेन धरानाश्रयत्वरूपोऽर्थः बाध्यत एवेति भावः। अत्र स्वयमेव अधरशब्दं निरुच्य पुनस्तत्प्रतिषेधा दाक्षेपालङ्कारः-स च श्लेषो - ज्जीवितः- ११४

अव॥ एवं न विद्यते यत्र धरेति वृत्तिजन्यस्य अधरशब्दार्थस्य धरानाश्रयत्व रूपस्य प्रत्यक्षविरोधाद् दूष्यत्व मुक्त्वा अधरनिर्दोष मधरशब्दार्थं निर्वक्ति-

श्लो॥ विरुद्धता चापि यतो नञर्थ। स्तत्राधर स्तेन घनाघनोऽयम्
य देष वर्षत्यमृतस्य धारा। विश्वम्भराह्लादझरीधुरीणाः॥ ११५

विरुद्धतेति॥ यतो हेतोः, विरुद्धताचापि विरुद्धत्वमपि, नञर्थः नञोऽभिधेयः नञ्प्रतिपाद्येत्यर्थः भवतीति शेषः। असुरा अविद्या अधर्म इत्यादौ विरोधिनो नञर्थत्व-दर्शनादिति भावः। यथाहुः 'तत्सादृश्य मभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोध श्च नञर्था ष्षट् प्रकीर्तिता' इति। तेन हेतुना तवाय मधरः घनाघनः इन्द्रः वार्षिकमेघश्चेति, व्यज्यते भवति। 'शक्रघातुक मत्तेभ वार्षिकाब्दा घनाघना' इत्यमरः - धरः पर्वतः 'आहार्य धर पर्वता' इत्यमरः। तद्विरोधी अधरः इन्द्रस्य पर्वतवैरित्वादिति भावः। नन्वेव मधरशब्दस्य

घनाघनार्थबोधकत्व मस्त्वनाम कथं पुन रधरशब्दप्रतिपाद्ये अधरोष्ठे घनाघनत्व मत आह यदिति- य यस्मा देष त्वाधरः, विश्वम्भराह्लादझरीधुरीणाः श्रीकृष्णसन्तोषातिशयधुरन्धराः श्रीकृष्ण स्याधिकानन्दसम्पादका इत्यर्थः। अमृतस्य सुधायाः, धाराः वर्षति सृजति। अन्यत्र ऐष इन्द्रः विश्वम्भराह्लादझरीधुरीणाः भूमे राह्लादसम्पादकाः ग्रीष्मे तप्तत्वादिति भावः। 'रसा विश्वम्भरा स्थिरा - विश्वम्भरः कैटभजि द्विधु श्रीवत्सलाञ्छन' इतिचामरः। अमृतस्य उदकस्य धाराः वर्षति मेघाधिपतित्वा दिन्द्रस्येति भावः। अत्र विश्वम्भराह्लादकरामृतवर्षणेन हेतुना अधरे इन्द्रत्वस्यारोपणा दभेदरूपकं श्लेषोज्जीवितं निरुक्तिसङ्कीर्णं च। ११५

श्लो ॥ बिम्बाधर स्ते वदनारविन्द । मरन्दसंवासपदं मदाढ्ये!
रदांशुकिञ्जल्कपरीत मेत। मादित्सते य न्मधुहृ त्सतृष्णः ॥ ११६

बिम्बाधरइति॥ हे मदाढ्ये मत्प्रेयसि! यद्वा मदो हर्षः, तेनाढ्ये श्लाघ्ये, अथवा इभ्य आढ्यो धनी स्वामी' इति कोशा दाढ्यशब्दः प्रभुवाची- ततः स्त्रियां टापि-आढ्या ईश्वरी, मम आढ्या मदाढ्या तत्सम्बुद्धिः मदीश्वरि इत्यर्थः। ते तव, बिम्बाधरः बिम्बतुल्योऽधरः, वदनारविन्दमरन्दसंवासपदं मुखकमलसम्बन्धिमकरन्दनिवासस्थानं भवतीति शेषः। वदनस्यारविन्दत्वा न्मकरन्द स्तत्रावश्यं स्यातव्य इति मुखकमलावयवभूते अधरे मकरन्दो वर्तते इति भावः। रूपकालङ्कारः। तत्र हेतु माह-य द्यस्मात्, रदांशुकिञ्जल्कपरीतं रदानां दन्तानां, अंशवः कान्तय, एव किञ्जल्काः केसराः, तैः परीतं व्याप्तं, दन्तकान्तिप्रसृतिशोभिनमित्यर्थः। एत मधरं मधुहृ त्कृष्णः, भ्रमरश्च, सतृष्णः साशस्सन्, तृट्सहितस्सन्निति च, आदित्सते आदातु मिच्छति - 'तृष्णे स्पृहा पिपासे द्वे' इत्यमरः। यद्यधरेऽत्र मकरन्दो न स्यात्तर्हि मधुहृतोऽत्र कांक्षा नोदीया दिति भावः। अत्र वदनमे वारविन्दं, रदांशवएव किञ्जल्काः, अधरएव मधूदयस्थानं, कृष्णएव भ्रमरः इति निरूपणा त्सावयवरूपकालङ्कारः। अधरसुधाया मरन्दत्वारोपस्तु गम्यते। यथा कमलस्य मध्ये किञ्जल्कपरीतस्थले मकरन्दाविर्भावः, तथा वक्त्रफाललोचननासादिबहुळावयवशालिनो मुखस्य मध्ये अधरप्रदेशे एव सुधोदय इति औपम्यं व्यज्यते- ११६

श्लो ॥ तवाधरः पल्लव ऐव बाले! रसालसालस्य रसालसाङ्गि!
न चे त्कथं वा परपुष्ट ऐष। सदा तदास्वादनसादर स्स्यात्? ११७

तवेति॥ रसालसाङ्गि! रसेन शृङ्गारेण, अलसं व्याप्त, माङ्गं शरीरं, यस्या स्तस्या स्सम्बुद्धिः — शृङ्गाररसभरिताङ्गीत्यर्थः। नायिकायाः शृङ्गाररसालम्बनविभावभूतत्वा दिति भावः। यद्यपि शृङ्गाररसो मनस्येव परिपूर्तिं याति नतु शरीरे तस्य मानसिकत्वा त्तथापि शृङ्गाररसोत्पादकसौन्दर्यपरिपूर्णत्वा दङ्गस्य तत्त्वेन व्यपदेश इति ज्ञेयम्। अथवा रसशब्दस्यैवात्र, लक्षणया सौन्दर्य मित्यर्थो वाच्यः- हेबाले सुन्दरि! तवाधरः रसालसालस्य रसालवृक्षस्य पल्लवः किसलय मेव भवतीति शेषः। ऐवकारेण न त्वन्यपल्लवः नाप्यधर इति

व्यज्यते। अत्राधरे अधरत्व मपह्नुत्य रसालपल्लवत्वारोपणा त्सापह्नवो रूपकालङ्कारः। ऐवकारस्य ध्रुवादिशब्दव दुत्प्रेक्षावाचकत्वाङ्गीकारे तु उत्प्रेक्षैव। नचेत् त्वदधरो रसालपल्लवो न स्याचेत् एष परपुष्टः परेण नन्देन, पुष्टः रक्षितः, अह मित्यर्थः; परभृतः कोकिक इति च - सदासर्वदा, तदास्वादनसादरः तस्य अधरपल्लवस्य, आस्वादने पाने भक्षणे च, सादरः सतृष्णः, कथं वा स्यात्? न कथम पीत्यथः। कोकिलानां चूतपल्लवप्रियत्वा दित्येको भावः - भगवतः कृष्णस्य अतिसुन्दरवस्तुप्रियत्वा दित्यन्यो भावः - ११७

श्लो॥ नितान्तशुद्धद्विजवास एष। स्तवाधरोष्ठ स्त दिहामृतं स्यात्
कांक्ष त्यत स्त त्पुरुषोत्तमोऽपि। निर्वाणहेतो स्सततं कृतेष्टिः॥ ११८

नितान्तेति॥ एषः अयं तवाधरोष्ठः, नितान्तशुद्धद्विजवासः अतिशुभ्रदन्तवस्त्रं, अतिपवित्रब्राह्मणनिवासश्च, भवति - अत्र एष स्तवेति पाठोऽसाधुः। एततदो स्सुलोपोऽको रनञ्समासे हली'ति सुलोपात्। तस्मात् 'एष तवेति' पाठ्यम्। न च छन्दोभङ्गः पादान्ते लघोरपि गुरुत्वात्। त तस्मात्, इह अधरे, अमृतं सुधा, स्यात्; पद्मिनीजातिस्त्रीत्वा द्राधाया इति भावः - अन्यत्र अमृतं यज्ञशेषान्नं, 'अमृतं यज्ञशेषे स्या'दिति विश्वः। इह ब्राह्मणगृहे स्यात् इति- अतः यतोऽत्रामृत मस्त्यतो हेतो रित्यर्थः। निर्वाणहेतो स्सुखार्थं, कृतेष्टिः कृताभिलाषः, पुरुषोत्तमोपि कृष्णश्च, तत त्वदधरामृतं, सततं सर्वदा, कांक्षति वाञ्छति। कांक्षामात्रमेव न त्वेतावता प्यनुभव इति कार्पण्यं व्यज्यते। अन्यत्र अतो हेतोः निर्वाणहेतोः, मोक्षार्थं, सततं कृतेष्टिः कृतयागः, फलानभिसन्धिपूर्वकयागानुष्ठानस्य मोक्षहेतुत्वा दिति भावः। पुरुषोत्तमः पुरुषश्रेष्ठोऽपि, अतिविरक्तोऽपीत्यर्थः। त यज्ञशेषान्नं कांक्षति - जीवन्मुक्तोऽपि येन केनचि द्योगेन शरीरं बिभृयात् - तत्र 'याचये च्छ्रोत्रियस्यान्नं तदभावे जलं पिबे'दिति शास्त्रात्। श्रोत्रियान्नेनैव शरीरधारणं तस्यावश्यकं पापनिर्हरणसम्भवादिति भावः। अत्र प्रथमपादे रूपकं द्वितीये त्वनुमानं - अधरोऽमृतवा न्भवितु मर्हति नितान्तशुद्धद्विजवासश्रेष्ठत्वात् यज्ञवाटवत् इति प्रयोगः - उत्तरार्धे तु श्लेषः त्रयाणा मङ्गाङ्गिभावेन सङ्करः - ११८

श्लो॥ स्वतोऽमृतस्यन्द्यपि याचते तेऽ। धरं विधुः किन्नु ततोऽपि कांक्ष्यम्
तं सत्पतिं प्रीणय सौमनस्य। प्रदं यदि स्या त्सुरतादर स्ते॥ ११९

स्वत इति॥ स्वतः स्वयं, अमृतस्यन्दी मोक्षदाता, 'मोक्ष मिच्छे ज्जनार्दना'दिति स्मरणादिति भावः - सुधास्रावीति च - विधु र्विष्णुरपि चन्द्रोऽपीति च - ते तव, अधरं याचते प्रार्थयते, अमृतार्थमिति भावः। ततोऽपि तस्मादपि, कांक्ष्यं अभिलषणीयं, वस्तु किन्नु किंवा अस्तीति शेषः - न किम प्यस्तीत्यर्थः। साक्षा द्भगवतो मम त्वदधरामृतयाचनेति यत् तदेव तव महान्लाभः - न त्वस्मा दधिकं किमपि भाग्य माशास्यं लोकत्रयेऽपि विद्यते इत्येको भावः। अमृतमय श्चन्द्रएव साक्षा त्वदधरामृतं याचते इति य त्तदेव तव मह

त्सुकृतं सत्पात्रलाभा दित्यन्यो भावः । अनेन च चन्द्रमण्डलगतामृतादपि त्वदधरामृत मुत्कृष्ट मिति व्यज्यते । ते तव, सुरतादरः सङ्गमेच्छा, स्या यदि सौमनस्यप्रदं चित्ताह्लादकरं, तं पूर्वोक्तं, सत्पतिं प्रशस्तं प्रियं, मामिति यावत् – प्रीणय प्रीतं गमय, अधरदानेनेति भावः । अन्यत्र ते सुरतादरः सुराणां भावस्सुरता देवत्वं, तत्रादरः प्रीतिः, स्या यदि सौमनस्यप्रदं सुमनसां देवानां भाव स्सौमनस्यं देवत्वं, तत्प्रदं तद्दातारं तं सत्पतिं नक्षत्रेशं प्रीणय – अत्राप्रस्तुतार्थप्रतीति र्व्यंजनाव्यापारेणैवेति शब्दशक्तिमूलध्वनिः । श्लेष इति तु न – अधरशब्दे अर्थद्वय प्रतीत्यभावात् – ११९

श्लो ॥ स्नेहस्य पात्रं ह्यधरो जडानां । माधुर्य मत्र भ्रममात्रमूलम्
इति द्वितीयाधरमाधुरीण । तत्त्वानभिज्ञाः प्रलपन्ति विज्ञे ! ॥ १२०

स्नेहस्येति ॥ अधरः स्नेहस्य अनुरागस्य, पात्रं विषयो हि – हिः प्रसिद्धौ – अत्राधरे माधुर्यं मधुरत्वं, जडानां मायामोहितानां, भ्रममात्रमूलं भ्रममात्रं भ्रमएव मूलं हेतु र्यस्य तत् – मायामोहिता जनाः अधरं मधुरमिति भ्रान्त्या वदन्तीत्यर्थः; यद्वा अधरः जडानां स्नेहस्य पात्रं न तु ज्ञानिना मित्यर्थः । तत्र हेतु माह – अत्राधरे माधुर्यं भ्रममात्रमूलं भ्रान्तिसिद्धं – न तु स्वतस्सिद्धमिति भावः । जडा अधरे माधुर्यमस्तीति भ्रमित्वा स्निह्यन्ति-ज्ञानिनस्तु अधरे माधुर्यज्ञानं भ्रमएव नतु प्रमेति न तत्र स्निह्यन्तीति निर्गलितार्थः । हे विज्ञे पण्डिते ! एतेन केवलमूर्खत्वं तव न युक्तमिति व्यज्यते । इत्येवं पूर्वोक्तविधयेत्यर्थः । द्वितीयाधरमाधुरीणतत्त्वानभिज्ञाः स्वप्रेयस्यधरमाधुर्ययाथार्थ्यज्ञानरहिताः मूढा इत्यर्थः । प्रलपन्ति उन्मत्तव द्य त्किमपि वदन्तीत्यर्थः । अत्र आरोप्यात्मानन्दं विषये तद्भोगलोलुपो बालः हस्तस्थितं क्षुराग्रे माक्षिकमाक्षिप्य वेढु मुत्सहते इति अभियुक्तवचनात्- '...प्रस्तौति विद्वानपि । प्रत्यक्षाशुचिभस्त्रिकां स्त्रिय महो मोहस्य दुश्चेष्टित' मिति भर्तृहरिवचनाच्च । अधरे माधुर्यं भ्रान्तिसिद्धमित्यर्थस्य सिद्धान्तत्वेऽपि ज्ञानिष्वे वाज्ञत्वारोपणपूर्वकं तत्सिद्धान्तस्य पुनःप्रतिक्षेपात् - सारालङ्कारः । अधरं मधुरमिति साधारणजनप्रवादः आत्मानन्द एवाधरे आरोप्य तेन तु पुन रन्योऽस्त्यत्र रस इति तत उत्कृष्टाः ज्ञानिनः । यद्येव मधरे आत्मानन्द मारोप्येत तथा करे प्यारोप्येतैवेति कुत स्तत्र करे तादृशरसानुपलम्भः ? अतः अधरे कोऽप्यत्यद्भुतो रसोऽस्तीति ततोऽप्युत्कृष्टा रसिका इति उत्तरोत्तर मुत्कर्षप्रतीतेः – यद्वा अधरं मधुरमिति ये वदन्ति न ते जडाः – किन्तु एतान् जडा न्मन्यन्ते त एव जडाः – अधरतत्त्वानभिज्ञत्वा दिति एकत्र जडत्वं निषिध्य, अन्यत्र तद्रचना त्परिसङ्ख्यालङ्कारः । परिसङ्ख्या निषिध्यैक मेकस्मिन् वस्तु यन्त्रण' मिति लक्षणात् । १२०

श्लो ॥ धयानि मोहि न्यधरं सुधान्धुं । हिंत तवै वेद मुदारशीले !
गृहीत एवानुदिनं सतृष्णैः । रसो हि माधुर्य मुपैति नान्यः ॥ १२१

धयानीति ॥ हे मोहिनि! मोहशालिनि! अज्ञे! इत्यर्थः। सुधान्धुं अमृतकूपं, अधरं धयानि पिबानि इति प्रार्थनायां लोट् - 'पुंस्येवान्धुः प्रहिः कूप' इत्यमरः - अत्र हेमोहिनि ! मोहिन्याख्ये देवि! श्रीविष्णो रमृतविभागे मोहिनीरूपधारणादिति भावः। अधर मधोगतं करतललम्बमान मित्यर्थः। सुधान्धुं अमृतघटं- अन्धुशब्दोऽत्र लक्षणयाऽमृतवत्त्वगुणसम्बन्धेन अक्षयपात्रं बोधयति- धयानि इति व्यज्यते- हे उदारशीले उदारं महत् शीलं स्वभावो यस्या स्तस्या स्संबुद्धिः - महाकुलीनत्वा दुत्कृष्टस्वभावशालिनीत्यर्थः - उदारं दातृशीलं यस्या इति व्युत्पत्त्या दानशीले इति च व्यज्यते- अनेन उदाराया स्तव सक्र न्ममाधरदानं न खेदावहं किन्तु मोदावहमेवेति व्यज्यते- इद मधरपानं तवैव हितं प्रियं - ऐवकारेण नतु ममेत्यर्थः - कूपोदकस्य प्रत्यह मुद्धरणेन नवनवस्य माधुर्यातिशयोपलम्भादिति भावः - अमुमेव भावं कवि स्स्वयमेव प्रकटयति गृहीतइति- हि यतः, अनुदिनं प्रत्यहं, सतृष्णैः, सस्पृहैः सतृड्भि रितिच गृहीतः पीत एव उद्धृत एवेति च, रसः स्वादः जलं च, माधुर्यं मधुरत्व, मुपैति प्राप्नोति- अन्यः अनैवंविधो रसः न, माधुर्यं नोपैतीत्यर्थः - अत्र प्रथमपादे अधरे सुधान्धुत्वरूपणा द्रूपकालङ्कारः - स्वहिते अधरपाने एवकारेण स्वहितत्व मपह्नुत्य सखीहितत्ववचनात् द्वितीय- पादे अपह्नवः - इदं पानं तवैव हितमिति वाक्यार्थस्य उत्तरवाक्यार्थेन सामान्येन समर्थना दर्थान्तरन्यासालङ्कारः - 'उक्ति रर्थान्तरन्यास स्स्या त्सामान्यविशेषयो' रिति लक्षणात्।

**श्लो ॥ य द्दन्तवासोदर एष तेन। रदः पद तत्र विधित्सते मे**
**कोवापराधोऽस्य नखस्तु वार्यः। पदं कुचेऽप्यस्वपदे विधित्सुः॥ १२२**

यदिति॥ यद्यस्मात्, एषः अधरः, दन्तवासः रदनवस्त्रं दन्तस्थानं च भवतीति शेषः। तेन हेतुना तत्र अधरे, मे मम, रदः दन्तः, जात्येकवचनं- दन्ता इत्यर्थः। पदं स्थानं क्षतमिति च- विधित्सते विधातु मिच्छति स्थातु मिच्छतीत्येकोऽर्थः - क्षतं चिकीर्षतीत्यन्योऽर्थः - अस्य रदस्य अपराधः अपचारः, कोवा न कोऽपीत्यर्थः - यद्वा अस्य कोवा अपराधोऽस्तीति शेषः स्वगृहावस्थानं नापराधायेति भावः। अस्वपदे अस्वस्थानेऽपि, स्वस्य पदं स्वपदं, तन्न भवती त्यस्वपदं तस्मिन्निति विग्रहः। कुचे - स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणेति वामनवृत्त्या जात्येकत्वं - स्तनयो रित्यर्थः। पदं स्थानं क्षतं च. विधित्सुः चिकीर्षुः, नखस्तु मामककर- रुहस्तु, वार्यः निवार्यः - अधरो दन्तवास इतिव त्कुचो नखवास इति प्रसिद्ध्यभावात् - कुचो न नखपद इति तत्र पदविधित्सा तु नखस्य अपराध एव - दन्तस्य तु नैव मपराध इति भावः। अनेन यदि त्व मधरं यदि न दद्या स्तर्हि त्वत्कुचौ गृह्णीयामिति बिभीषिका व्यज्यते- अत्र दन्तवास इत्यत्रान्यार्थकल्पनात् निरुक्तिरलङ्कारः। अधरे पदविधित्सोरपि नखस्य निरपराधत्वं प्रति अधरो दन्तवासो भवतीति पूर्ववाक्यार्थस्य हेतुत्वा त्काव्यलिङ्गम् -

अव ॥ अधरवर्णन मुपसंहरति इतीति -

**श्लो ॥ इति मुहुः स्तुवता तव तावता । न खलु हानि रिति ब्रुवताऽमुना**
**सकृ दचुम्बि कथञ्चन वञ्चना । वचनसञ्चयमोचनचुञ्चुना ॥**

इतीति ॥ इत्येवं, मुहु रतिशयेन, स्तुवता, तावता अधरग्रहणमात्रेण तव हानिः क्षतिः, न खलु नास्त्येव - इत्येवं, ब्रुवता वदता, वञ्चनावचनसञ्चयमोचनचुञ्चुना - वञ्चनावचनानां प्रतारणवाक्यानां, सञ्चयस्सङ्घः, तस्य मोचनेन विसर्जनेन रचनेनेत्यर्थः । वित्तः तथोक्तः तेन 'तेन वित्तश्चुञ्चुप्चणपा'विति चुञ्चुप्प्रत्ययः - वञ्चनचतुरेणेति निष्कृष्टार्थः । अमुना कृष्णेन, कथञ्चन कृच्छ्रेण, नतु सुलभेनेति भावः - सकृ देकवारं, नतु बहुवारमिति भावः - अचुम्बि चुम्बितं - भावे लुङ् - तदधरं पपावित्यर्थः । १२३

**श्लो ॥ प्रियतमाकुचकोकसभाजने । कृतरुचिः कमलाप्ततम स्ततः**
**कर मचालय दम्बुजबान्धवं । सपदि तावपि किञ्चि दुदञ्चितौ ॥ १२४**

प्रियतमेति ॥ ततः अधरचुम्बनानन्तरं, प्रियतमाकुचकोकसभाजने प्रियतमायाः प्रेयस्याः, कुचौ कोकाविव कुचकोकौ चक्रवाकतुल्यस्तनावित्यर्थः । तयो स्सभाजने आनन्दने, कृतरुचिः साभिलाषः, तत्कुचौ जिघृक्षु रित्यर्थः । कमलाप्ततमः लक्ष्मीपतिः, अम्बुजबान्धवं कमलसदृशं, करं हस्त, मचालयत् चालयामास - सपदि तदैव, तौ कुचावपि, किञ्चि दीषत् उदञ्चितौ उच्छूनौ, हर्षातिरेकादिति भावः - व्यंग्यार्थस्तु - ततः उदयगिरिशिखरारोहणानन्तरं प्रियतमायाः प्रेयस्याः पद्मिन्याः कुचभूतयाः कोकयो स्सभाजने परस्परसंयोजनेनानन्दने, कृतरुचिः कमलाना माप्ततमः रविः, अम्बुजबान्धवं कमलहितं, करं किरण मचालयत् - सपदि तदैव, तावपि चक्रवाकौ, किञ्चि दुदञ्चितौ उद्गतौ - यद्वा - कुचकोकाविति विषयनिगरणं - कुचकोकतुल्यौ कोशावित्यर्थः । कोशावेव पद्मिन्याः कुचकोकत्वेन भासत इति भावः - तावपि कोशावपि, किञ्चिदुदञ्चितौ विकसितौ इति - अथवा कृतरुचिः कृतकान्तिः, कमलाप्ततमः प्रियतमायाः स्वप्रेयस्याः कुचौ प्रियतमाकुचौ ताविव कोकौ तयो स्सभाजने विषये स्वप्रेयसीकुचतुल्यत्वेन प्रीत्या कोका वानन्दयितु मित्यर्थः । अम्बुजबान्धवं कर मचालय दित्यन्वयः । १२४

**श्लो ॥ बाले ! न वेत्सि पदयो र्गतिसौकुमार्य**
**मूर्वोः करं हृदि च कुम्भयुगं क्रमेण**
**क्षिप्त्या गज स्सकल माक्रमितु तवाङ्ग**
**मत्यर्घ मिच्छति हरिं शरणं भजे माम् ।** १२५

बाले इति ॥ हेबाले मुग्धे! न वेत्सि न जानासि, गजकृत मनर्थमिति भावः - अनर्थमेव दर्शयति-पदयोः त्वच्चरणयोः, गतिसौकुमार्यं गमनसुकुमारत्वं, स्त्रीणाम्मदगजगमनत्वादिति भाव.-ऊर्वोः त्वत्सक्थिनोः, करं शुण्डां, ऊर्वो श्शुण्डौपम्यादिति भावः - हृदि वक्षसि, कुम्भयुगं

कुम्भद्वन्द्वं च स्तनद्वयव्याजेनेति भावः - क्रमेण क्रमात् , क्षिप्त्वा अधो मध्योपरिभागेषु क्रमेण निक्षिप्येत्यर्थः । वामनभिक्षुपादप्रसारणन्यायादिति भावः - गजः द्विपः, अत्युन्नतजन्तुः, नतु मक्षिकादिवदल्पपरिमाण इति भावः - अत्यर्घः बहुमूल्यः, अनन्तजन्मसञ्चितसुकृतपरिपाकभूत मित्यर्थः । अतिसुन्दरमिति यावत् - नतु दुष्टम्- येव शरीरधारणे उद्वेगो जायेतेति भावः - तव सकल मङ्गं शरीरं, आक्रमितुं स्वायत्तीकर्तुं, इच्छति वाञ्छति- अथ का गति र्ममेत्यत आह-हरिं कृष्णं सिंहञ्च-मां शरणं भजेः गच्छ- गजा द्भीतायाः स्तव हरिरेव शरण मित्यर्थः । अत्र गजस्यैवंविधाङ्गाक्रमणेच्छासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः - कुम्भयुग मित्यत्र तु निगीर्णाध्यवसानलक्षणातिशयोक्तिः - १२५

श्लो ॥ तेनैव ते सम्प्रति पारवश्यं । विदारय त्येष हरि स्तदेतौ
नखेन कुम्भौ यदि ते सुखं। स्या त्तदा हितं ज्ञास्यसि भाषितं मे ।

तेनेति॥ तेनैव गजानुप्रवेशेनैव, सम्प्रति अधुना, ते तव, पारवश्यं परवशत्वं, भवतीति शेषः । एकस्मिन् प्राणिनि, प्राण्यन्तरसमावेशा त्पारवश्यं भवति- यथा पिशाचदेवताद्याविष्टे इति भावः । तत्तस्मात्, एष हरिः कृष्णः सिंह श्च, एतौ कुम्भौ अतिशयोक्त्या कुचौ कुम्भस्थले इति च-नखेन कररुहेण, विदारयति भिनत्ति यदि, सिंहो नखैः कुम्भस्थलं विदार्य गजं मारयतीति प्रसिद्धम्। ते सुखमानन्दः स्यात्- गजरूपपिशाचापगमादिति भावः। कुचयो र्नखक्षतेषु सत्सु सुखलाभादिति च-तदा सुखानुभवसमये, मे भाषितं वचनं, हितं प्रियं, ज्ञास्यसि वेत्स्यसि- वचनस्य हिताहितत्वे फलत एव ज्ञेये इति भावः । यद्वा एष हरि रेतौ कुम्भौ नखेन विदारयतीत्येवान्वयः। ते सुखं स्या द्यदि कुचकुम्भक्षतिना तव सुखं भवेच्चेत् तदा मे भाषितं हितं ज्ञास्यसीत्यन्वयः। अत्र गजपिशाचमारणरूपहितोपदेशव्याजेन कुचग्रहणरूपस्वेष्टसाधनोद्युक्तत्वा त्पर्यायोक्त मलङ्कारः। 'पर्यायोक्तं तदप्याहु र्यद्व्याजेनेष्टसाधन' मिति लक्षणात्- १२६

अव । अथ एकादशभिः कुचौ वर्णयति-

श्लो ॥ त्वत्कञ्चुकाग्रयुगयोगमिषैककाण्ड
बद्धं कुचद्वय मिदं स्मरधीवरस्य
पेटीयुगं यदिह मीनतनुं कदाचि
त्प्राप्तः पुराप्यहह ! लौल्य मुपैमि बद्धः । १२७

त्वदिति । इदं कुचद्वयं त्वत्कञ्चुकाग्रयुगयोगमिषैककाण्डबद्धं तव कञ्चुकाग्रयोः कूर्पासाग्रयोः, युगं युगळं, तस्य योगः सम्बन्धः ग्रन्थी रित्यर्थः - तन्मिषं तद्व्याजं, यदेककाण्डं एको दण्डः, विविध इत्यर्थः। तत्र बद्धं स्मरधीवरस्य मन्मथरूपकैवर्तस्य, पेटीयुगं पेटिकायुगळं, भवतीति शेषः - कैतवापह्नुतिसङ्कीर्ण रूपकालङ्कारः - य द्यस्मात् , पुरा पूर्वं, न त्वधुनेत्यर्थः -

कदाचि त्कस्मिं श्चि त्समये, नतु सर्वदेत्यर्थः - मीनतनुं मत्स्यशरीरं, प्राप्तोऽपि वेदोद्धरणार्थं मत्स्यरूपेणावतीर्णोऽपीत्यर्थः - अहं इह त्वत्कुचपेटीयुगे बद्धस्सन् सन्धानितः सक्तश्च- धीवरा हि जालतो मीन माच्छिद्य पेटिकायां क्षिपन्तीति प्रसिद्धम्। लौल्यं जलवियोगजन्यतापकृतं चाञ्चल्यं आसक्तिं च, उपैमि प्राप्नोमि। यदीदं धीवरपेटीयुगं न स्या त्तर्हि मत्स्यस्य ममाल बन्धो नस्यादिति भावः - अहहे त्याश्चर्ये-धीवरा हि तदानीं मीनतनुधारिणमेव जीवं बध्नन्ति- अयं कामधीवरस्तु पूर्वं यदाकदापि मीनतनुधारिणं परमेश्वरमेव बध्नातीति चित्रमिद मित्यर्थः। एतेन धीवरा त्स्मरस्य व्यतिरेकः फलितः - पेटीयुगे मीनानां साक्षादेव बन्धः - कुचयुगे तु भगवन्मनस एव बन्धः - नतु भगवत इति स्थिते भगवानेव बद्ध इति वर्णना दतिशयोक्तिः॥

श्लो ॥ निर्वाणहेतो र्भवदङ्गसीम्नि । विधिः प्रतिष्ठाप्य रतीशदेवम्
कुम्भौ निचिक्षेप सुवर्णपूर्णौ । कुचच्छलेनागमपारगामी ॥ १२८

निर्वाणेति ॥ आगमपारगामी वेदपारदर्शी, निखिलवेदज्ञ इत्यर्थः। पाञ्चरात्रागमपार- दर्शीति च-विधिः ब्रह्मा, तस्यैव स्रष्टृत्वादिति भावः। निर्वाणहेतोः मोक्षार्थं, अस्मत्सुखार्थञ्च- देवताप्रतिष्ठापने मोक्षस्मरणादिति भावः। भवदङ्गसीम्नि त्वच्छरीरभूमौ, रतीशदेवं मन्मथ- रूपदेवतां, प्रतिष्ठाप्य स्थापयित्वा, कुचच्छलेन स्तनव्याजेन, सुवर्णपूर्णौ, स्वर्णेन परिपूर्णौ, कुम्भौ कलशौ, निचिक्षेप क्षिप्तवान्-देवतायतने स्वर्णपूर्णकुम्भनिक्षेपः पाञ्चरात्रागमसिद्धः। कुचच्छले- नेत्यत्र कैतवापह्नुतिः - 'कैतवापह्नुति र्व्यक्तेः व्याजाद्यैर्निह्नुतिः पदै'रिति लक्षणात् - तत्सङ्कीर्णो- रूपकालङ्कारः। तन्वीदेहस्य सुवर्णवर्णत्वा त्कुचकुम्भयो स्सुवर्णपूर्णत्वं प्रतिपादित मिति वेद्यम्। अत्र कुम्भप्रतिष्ठापनार्थं विधे रागमपारगामित्वस्याकांक्षितत्वेन न समाप्तपुनराख्यातदोषापत्तिः। अत एव साभिप्रायविशेषणविन्यासा त्परिकरालङ्कारः। त्वदङ्गे रतीशदेवसन्निधानादेव तव शृङ्गाररसशेवधित्वं त्वां दृष्टवतो मम मन्मथव्यथा चेति गूढाशयः - १२८

श्लो ॥ अन्तःपुरं रति मिमौ हृदयेशयस्य
कामस्य गोप्तु मयि ! कञ्चुकिनौ स्तनौ ते
दण्डौ तयो र्हितकरौ भवताम्बुजौ मे
न क्वापि दण्डरहितः किल कञ्चुकी स्यात् - १२९

अन्तःपुरमिति ॥ अयि प्रेयसि ! ते तव, इमौ स्तनौ, हृदयेशयस्य हृदये मनसि, शेते इति हृदयेशयः - मनसि भव इत्यर्थः। तस्य कामस्य मन्मथस्य, अन्तःपुरं अवरोधनं, रतिं तत्रस्थां कामपत्नीं च, गोप्तुं रक्षितुं। यद्वा अन्तःपुरशब्दोऽत्र लक्षणया तत्स्थां स्त्रियं बोधयति - अन्तःपुरस्त्रियमित्यर्थः। महिषीमिति यावत् - कामस्य अन्तःपुरं महिषीं रतिं गोप्तु मित्यन्वयः। — कञ्चुकिनौ सकूर्पासौ सौविदल्लौ च भवत इति शेषः। मन्मथो हि हृदये वर्तते तत्समीपे रतेरप्यवस्थान मावश्यकम्। अन्तःपुररक्षणार्थं च कञ्चुकिभि र्भवितव्य

मिति काममहिष्या रते रन्तःपुरभूतं त्वद्धृदयं रक्षयन्तौ कञ्चुकिनौ नाम सकञ्चुकौ त्वद्वक्षोजावेवेत्यर्थः । अन्यथा अनयोः कुचयोः कञ्चुकित्व मुपलभ्यमानं नैव घटेतेति भावः । अत्र कुचयोः सौविदल्लत्वरूपणा द्रूपकालङ्कारः । रते रन्तःपुरत्वरूपणन्तु तदङ्गम् । कामस्य महाराजत्वं हृदयस्यान्तःपुरत्वं चेत्येतद्द्वयं तु व्यङ्ग्यम् । तयोः कञ्चुकिनोः कुचयोः हितकरौ हितसम्पादकौ, दण्डहीनात्कश्चिदपि न बिभेतीति भावः । अन्यत्र हितकरौ धृतकरौ, हस्तवन्तावित्यर्थः । हस्ताभ्यामेव कुचग्रहणसम्भवादिति भावः । मे भुजौ बाहू दण्डौ भवतां स्ताम्-प्रार्थनायां विधौ च लोट् - त्वत्कुचकञ्चुकिनो र्दण्डत्वेन मद्भुजौ त्वया स्वीक्रियतामिति प्रार्थना - विधिमेव व्यतिरेकमुखे नाह- क्वापि कुत्रापि, जगति दण्डरहितः दण्डहीनः पुमान्, कञ्चुकी सौविदल्लः, न स्यात् किल न भवेदेव - कञ्चुकिनो दण्डवत्त्वं विहितमेवेत्यर्थः - अत्र तृतीयपादोक्तस्यार्थस्य चतुर्थपादोक्तेन सामान्येन समर्थना दर्थान्तरन्यासो व्यतिरेकमुकः - तृतीये तु पादे रूपकमेव भुजयोर्दण्डत्वरूपणात् । अत्र पूर्वार्धेन हृदयेशयकामान्तःपुररति गोपनार्थं त्वत्स्तनौ कञ्चुकिनौ सकूर्पासौ सकवचौ च भवत इति व्यज्यते । यथा राजानं गोप्तुं भटाः कञ्चुकधारिणस्सन्त स्सावधानं वर्तन्ते तद्वदिति भावः - १२९

श्लो ॥ कथन्नु मूढाः कथयन्ति साम्यं । शैलेन बाले ! कुचकुम्भयो स्ते
क्षिप्तो भवद्भूषण मेव यत्र । वज्रः प्रतीपाचरणे क्व शङ्का ? १३०

कथन्न्विति ॥ हेबाले सुन्दरि ! मूढाः अल्पज्ञाः, क्षुद्रकवय इत्यर्थः । न पुनः केवलं मूढाः; तेषां कुचशैलयो रौपम्यज्ञानस्यैवाभावादिति ज्ञेयम् । ते कुचकुम्भयोः कुम्भौ घटौ ताविव कुचौ स्तनौ तयोः - शैलेन गिरिणा, साम्यं औपम्यं कथं नु कथं वा, कथयन्ति वदन्ति— त्वत्कुचयो श्शैलसाम्यं ब्रुवन्तः कवयो मूढा एव नतु प्राज्ञा इत्यर्थः । तत्र हेतु माह - यत्र त्वत्कुचे क्षिप्तः स्थापितः, वज्रः हीरः कुलिशं च-भूषणमेव भूषैव भवतीति शेषः - वज्रः कुचयोरलङ्कारायते इत्यर्थः । अभूषणत्वे तु किमर्थं मत्र तिष्ठसीति वज्रः कुचेनाधिक्षिप्येतेति भावः - प्रतीपाचरणे, प्रतिकूलकरणे· शङ्का तद्विषयशङ्केत्यर्थः । क्व तच्छङ्कायाः न काप्यवकाश इत्यर्थः । पर्वते तु वज्रः क्षिप्तस्सन् तत्पक्षच्छेदनरूपं प्रतीपमे वाचचार- क्व पुनं स्तत्र भूषणत्वशङ्केति भावः - अत्र शैलकुचयोः कविसमयसिद्धं साम्यं सहेतुकं प्रतिषिध्य शैलसाम्यं कुचे मास्तु नाम- प्रत्युत कुचसाम्यमपि शैले नास्ति- कुचयो र्वज्रभूषणत्वा च्छैलस्य वज्रछिन्नत्वाच्चेति वर्णना त्प्रतीपालङ्कारभेदः - 'वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च त'दिति लक्षणात् । यत्र शैले कुचसाम्यमेव दुर्लभं तच्छैलसाम्यं कुचयो स्सम्पादयित्वा वर्णयन्तः कवयो मूढा एवेति निष्कृष्टार्थः । १३०

श्लो ॥ न्यधत्त वेधा हृदि भूषणाय । कुचच्छलं कोकयुगं तवेदम्
यद्यत्र पद्मात्तकराभिमर्शं । श्लिष्टं तदेदं सुखितां प्रयातात् ॥ १३१

न्यधत्तेति । वेधाः विधाता, तव हृदि वक्षसि, भूषणाय अलङ्कारार्थं, वक्षोजयो र्वक्षोभूषणत्वादिति भावः - कुचच्छलं स्तनदम्भ, मिंद कोकयुगं चक्रवाकद्वयं, न्यधत्त निहितवान् - नेदं स्तनयुगळं किन्तु कोकयुगमेवेत्यपह्नवालङ्कारः - अत्र कुचकोकयो र्वक्षोभूषण-त्ववर्णनेन वक्षसः कासारत्वं तल्लावण्यस्य जलत्वं च व्यज्यते । सरोभूषणं हि चक्रवाकयुगमिति भावः - अत्र कुचच्छलकोकयुगे पद्मासकराभिमर्शः पद्मायाः आप्तः प्रियः पद्माप्तः कृष्ण, 'लक्ष्मीः पद्मालया पद्मे'ति कोशात् - पद्माना माप्तो रविश्च, तस्य करो हस्तः किरणश्च, पद्माप्त-कर एव पद्माप्तकर स्सूर्यकिरणमिति श्लिष्टरूपकं- तस्य अभिमर्शः सम्बन्धः, स्याद्यदि स्याच्चेत् तदा इदं कुचचक्रवाकयुगं श्लिष्टं अन्योन्यसम्बद्धं परस्परालिङ्गितं च सत्, सुखितां सौख्यं, प्रयायात् भजेत् । चक्रवाकयो र्निशायां वियोगा दह्नि संयोगाच्चेति भावः । अहं यदि कराभ्यां तव स्तनद्वय मापीड्य अन्योन्यसंसक्तं कुर्यां तदा तव महत्सौख्यं स्यादिति प्राकर-णिको भावः - श्लिष्टमित्यनेन कुचयो रुच्चोन्नतत्वेन मध्ये नातीव विश्लेषः - किन्तु रोमावळी दर्शनमात्रमेव विश्लेष इति व्यज्यते- अन्यथा पीडनेनापि तयो स्संश्लेषासंभवात्- अत्र साप-ह्नवो रूपकालङ्कार स्स्फुट एव ॥ १३१

श्लो ॥ त्वदङ्गलावण्यझरीजिहीर्षया । करद्वयेनापि विधिः कुचच्छलात्
न्यमज्जय त्कुम्भयुगं करेण मे । न वार्यते चे दबलेति वञ्चसे ॥ १३२

त्वदङ्गेति ॥ विधि र्वेधाः, त्वदङ्गलावण्यझरीजिहीर्षया तवाङ्गे शरीरे, या लावण्यझरी भूयिष्ठं तेजएवाद्भि र्बहुळाभि र्मृदूकृतं- 'चक्षुरानन्दजनकं लावण्यमिति कथ्यते' इत्युक्तलक्षणः छायाविशेषः लावण्यपदार्थः, तस्य झरी प्रवाहः, तस्या जिहीर्षया हर्तु मिच्छया, त्वत्तुल्यान्य-वधूसृष्ट्यर्थमिति भावः - करद्वयेनापि द्वाभ्यामपि हस्ताभ्यां, एकेन हस्तेन कुम्भद्वयनिमज्जना-सम्भवादिति भावः - कुचच्छलात् स्तनव्याजात् , कुम्भयुगं घटद्वयं, न्यमज्जयत् निमज्जयामास- यथा जलाहर्ता कश्चित् प्रवाहे प्रविश्य हस्तद्वयेन घटद्वयं प्रवाहे मज्जयति घटयो रुदकपूरणार्थं तद्वद्वेधा अपि तावकतनुप्रसृतलावण्यप्रवाहे प्रविश्य देवत्वात् स्वय मदृश्यस्सन् लावण्य मपहर्तुं कुचच्छलं कुम्भद्वयं लावण्यझर्यां मज्जयति ; कुचयोर्लावण्यपूरणार्थ मितिभावः - अनेन राधातनु स्सर्वापि लावण्यप्रवाहमयीति व्यज्यते- राधाकुचकुम्भौ लावण्योदक परिपूर्णाविति कविविवक्षा अपह्नवालङ्कारः - मे मम, करेण हस्तेन, न वार्यते ननिवार्यते चेत् विधि रिति पदस्यात्राप्य-न्वयः तयोः कुचकुम्भयोरुपरि करौ प्रसार्य मया पुरुषेण स चोरो विधि र्न निवार्यते यदीत्यर्थः- त्वं अबला स्त्री, इतिहेतो र्वञ्चसे प्रतार्यसे, विधिनेति शेषः - स्त्रियं त्वां वञ्चयित्वा विधि रवश्यं त्वल्लावण्यं हरिष्यत्येवेत्यर्थः - चन्द्रं प्रतारयित्वा तद्गतलावण्यझर्या त्वदङ्गस्य विधिना निर्मि-तत्वा द्यथा चन्द्रः कळङ्की खिद्यति तद्वत् त्वद्गतलावण्यापहारेण तवापि कळङ्क स्स्यात् - स तु महाननर्थ इति गूढाशयः ॥ १३२

श्लो ॥ यत्कञ्चुकं प्राञ्च मपास्य गौरं
द्रागन्यमन्यं नव मादधाते
तद्भोगिनो स्त्वत्कुचयो र्नितान्तं
कानिर्वृति स्स्पर्शनमन्तरेण ? ॥ १३३

यदिति ॥ यत् यस्माद्धेतोः, इमाविति शेषः - इमौ त्वत्कुचौ, गौरं पीतं हरिद्रचूर्णादि-सम्पर्कादिति भावः - अन्यत्र शुभ्रं 'अवदात स्सितो गौर' इति- 'पीतो गौरो हरिद्राभ' इतिचोभयत्राप्यमरः । प्राञ्चं प्राचीनं, कञ्चुकं कूर्पासं, सर्पनिर्मोकं च - अपास्य त्यक्त्वा, द्राक् शीघ्रमेव लज्जयेति भावः - अन्यत्र सहजत्वादिति भावः - नवं नूतनं, अन्य मन्यं, इतर मितरं कञ्चुकं- वीप्सायां द्विर्भावः- आदधाते धारयतः, त त्तस्मात् , भोगिनो स्सुखिनोः, सर्पयोश्च पुनःपुन र्नवकञ्चुकधारणं भोगित्वसूचक मित्यर्थः - त्वत्कुचयोः स्पर्शनं आलिङ्गनं, वायुश्च - अन्तरेण विना, नितान्त मत्यन्तं, निर्वृतिः सुखं सुखहेतु रित्यर्थः - अतएव हेत्वलङ्कारः । का न कापीत्यर्थः - कुचयो रालिङ्गनस्यैव सुखावहत्वा दित्येको भावः, - सर्पाणां वाताहारत्वा दित्यन्यो भावः - अत्र पूर्वपूर्वकञ्चुकत्यागपूर्वक मुत्तरोत्तरकञ्चुकधारणं कुचयोस्सर्पत्वारोपणे निमित्तमिति श्लेषोत्थापितरूपकालङ्कारः । स च वाच्यार्था त्पृथगेव प्रतिभातीति व्यङ्ग्यः - वाच्यार्थे कुचयोः पूर्वपूर्वकार्पासत्यागपूर्वकोत्तरोत्तरनूतनकार्पासधारणहेतुना सुखित्वसमर्थना त्काव्यलिङ्गम् ॥ १३३

श्लो ॥ लावण्यसागरतया त्वयि मग्नमूर्तेः
प्राङ्मेनकात्मजगिरे श्शिखरौ स्तनौ ते
अद्याभयाय त दमुष्य करं ददामि
सोऽहं हरि श्शिरसि खेदविनोदिनं मे ॥ १३४

लावण्येति ॥ ते तव, स्तनौ कुचौ, प्राक्पूर्वं, लावण्यसागरतया सौन्दर्याश्रयत्वेन, लवणस्यभावो लावण्यं तदाश्रय स्सागरः लावण्यसागरः मध्यमपदलोपी समासः - यद्वा लावण्यस्य सागर इति षष्ठीसमासो वा- लवणाब्धि रित्यर्थः - तत्वेनेति च हेतुना त्वयि मग्नमूर्तेः निमग्नशरीरस्य, इन्द्राद्भीत्येति भावः - मेनकात्मज श्चासौ गिरिश्च मेनकात्मजगिरिः तस्य मैनाकस्येत्यर्थः - शिखरौ शृङ्गौ भवत इति शेषः - त त्तस्मात्, अद्याधुना, अभयाय अभयार्थं, अमुष्य अस्य मैनाकस्य, शिरसि शिखरे, कुचाग्रे इति च, सः प्रसिद्धः हरिः कृष्णः, अहं-सः प्रसिद्धः हरिः इन्द्रः, अहमिति च - खेदविनोदिनं मैनाकखेदापहं, कुचतापापहं च - मे करं हस्तं, ददामि क्षिपामि । पुरा किल पक्षच्छेदका दिन्द्राद्भीतस्सन् मैनाकः लवणसागरं शरणं जगाम- सोऽपि तं गर्भीकृत्य रक्षयामास- सीतान्वेषणार्थं गच्छन् हनूमांश्च समुद्र-मध्योद्गतमैनाकशिरसि किञ्चिद्विश्रम्य मनो विनोदयामास- एवं हनूमद्विश्रान्त्या स्वशत्रुभूत-रावणविध्वंसकरामभृत्याय कृतोपकारं मैनाकं मत्तो न तव भीति रिति इन्द्रोऽभयं दत्वा रक्ष-

यामासेति रामायणकथाऽत्रानुसन्धेया – अत्र राधायां लावण्यसागरत्वेन हेतुना मैनाकम – ज्जनस्य अनुमितत्वा दनुमानालङ्कारः। स च श्लेषोत्थापितः - त्रेतायुगे समुद्रे निर्मज्ज्य वर्तमानस्य मैनाकस्य द्वापरे राधालावण्यसागरनिर्मग्नत्ववर्णना दतिशयोक्तिसङ्कीर्णश्च – स्तनयोः तच्छिखरत्वरूपणा दभेदरूपकालङ्कारः - उत्तरार्धे हरि रित्यत्र श्लेषः – हरिः कृष्ण एव हरि रिन्द्र इत्यर्थवर्णने तु श्लिष्टरूपकम्॥ १३४

श्लो॥ चक्रीति कोकस्य ममापि शब्द। स्वस्वामिभावं प्रकटं विधत्ते
कुचच्छलं चक्रयुगं करेण। निषेधसि स्प्रष्टुमपीति चित्रम्॥ १३५

चक्रीति॥ चक्रीति शब्दः चक्रं सुदर्शन मस्यास्तीति व्युत्पत्त्या भगवति प्रायशः प्रयुज्यमान श्चक्रिन्शब्दः - कोकस्य चक्रवाकस्य, ममापि मम च, स्वस्वामिभावं स्वं भृत्यः स्वामी राजा, तयो र्भावं तद्रूपं सम्बन्ध मित्यर्थः। प्रकटं विधत्ते प्रकटीकरोति - चक्र श्चक्रवाकोऽस्यास्तीति व्युत्पत्तेरिति भावः। अतएव निरुक्ति रलङ्कारः - यथा राज्ञः पुरुष इत्यत्र राजन्शब्दोत्तरवर्तिन्याष्षष्ठ्याः स्वस्वामिभावरूपसम्बन्धोऽर्थः - राजसम्बन्धी पुरुष इति शाब्दबोधोपगमात् - एवं चक्रिन्शब्दस्य विग्रहवाक्ये चक्रोऽस्यास्तीत्यस्मिन् - अस्येति षष्ठ्या स्वस्वामिभावरूपसम्बन्धोऽर्थः। तथा च एतत्सम्बन्धी चक्र इति शाब्दबोधः - तेन चक्रस्याहं स्वामीति चक्रिन्शब्दार्थवशादेव स्फुटमिति तत्त्वम् - नन्वेवं भवतु भवान् चक्रस्वामी किं तेनाधुनेत्यत आह- कुचच्छलं स्तनमिषं, चक्रयुगं कोकद्वन्द्वं, करेण हस्तेन, स्प्रष्टुमपि अपिना किमुत आलिङ्गितुमिति व्यज्यते - अन्यत्र स्वायत्तीकर्तुं किमुतेति व्यज्यते - निषेधसि निरुणत्सि- इति चित्रं अद्भुतं- यतोऽहं चक्री इमौ स्तनौ तु चक्रौ; ततो मदीयत्वेन मदधीनतया वर्तनीया वमू स्प्रष्टुमपि मां निषेधसीति यत् तदतीव विरुद्ध मित्यर्थः। अपह्नवालङ्कारः॥

श्लो॥ मुग्धे! कुचौ दुर्गकृते जिहीर्षु। रस्ति स्मर स्ते त दमुष्य भीत्यै
गूढं गिरीशत्व मिहार्धचन्द्रं। नखेन दत्वा स्फुटयामि मूर्ध्नि॥ १३५

मुग्धे इति॥ हेमुग्धे मूढे! स्मरः मन्मथः, दुर्गकृते दुर्गार्थं, ते कुचौ पर्वततुला विति भावः। जिहीर्षु हर्तुं इच्छुः अस्ति भवति- यथा राजानः स्वनगरे शत्रूणा मप्रवेशार्थं पर्वतदुर्गं रचयन्ति तद्वदिति भावः। तत्तस्मात्, अमुष्य स्मरस्य, भीत्यै भयाय, नखेन मामककररुहेण, मूर्ध्नि त्वत्कुचगिर्यग्रे, अर्धचन्द्रं चन्द्रखण्डं, नखाङ्कं च, दत्वा कृत्वा, इहास्मिन् कुचे, गूढं अप्रकाशं, गिरीशत्वं शिवत्वं, पर्वतोत्तमत्वं 'गिरीशो गिरिशो मृड' इत्यमरः। स्फुटयामि प्रकटमामि- शिरस्यर्धचन्द्रधारणस्य शिवचिह्नत्वादिति भावः। त्वत्कुचौ पर्वतबुद्ध्या स्मरो जिहीर्षति यद्येत न्मूर्ध्नि चन्द्रखण्डस्स्या त्तर्हि त्वत्कुचं शिवं मत्वा भीत्या मदनः पलायेत; नोचे द्धरिष्यत्येवेत्येको भावः। त्वद्धृदयेशयस्य कामस्य पुरं यत्त्वद्धृदयं तस्य दुर्गपर्वतावेवेमौ त्वत्कुचौ- यथा तन्तुमये पटे झडिति पटोऽयमिति प्रतीति र्भवति तन्तुप्रतीतिस्तु विलम्बिता- एवं पर्वतमयो स्त्वत्कुचयोः पर्वतोत्तमत्वंतु विलम्बा त्प्रतीयते इति गूढं भवति- एव मनयो

गूढं पर्वतत्वं तु मन्नखाङ्कदानेन स्फुटं स्यात् - नखक्षतिसमये पर्वतवत् काठिन्यस्योपलभ्यमानत्वा दित्यन्यो भावः - अत्र दुर्गार्थं स्मरस्य कुचजिहीर्षासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः - कुचे स्वतस्सिद्धस्य गिरीशत्वस्य अर्धचन्द्रदानेन स्फुटीकरणोक्ते रनुगुणालङ्कारः। 'प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधेः' इति लक्षणात्। कुचपर्वतजिहीर्षुस्मरसन्त्रासनार्थकार्धचन्द्रदानव्याजेन कुचनखाङ्कदानरूपस्वेष्टसाधना त्पर्यायोक्तालङ्कारभेदः - अथ मलङ्कार एषु श्लोकेषु प्रायिक एव। १३६

श्लो॥ रसालसत्वं हृदि वीक्ष्य तस्य। फले कुचा वाक्रमिता स्मर स्ते
करेण मे कण्टकवेष्टितौ त। दिमौ विधेया दधुनैव मुग्धे! १३७

रसालसत्वमिति॥ स्मरः मन्मथः, ते हृदि मनसि, रसालसत्वं शृङ्गाररसपरिपूर्णत्वं, वीक्ष्य दृष्ट्वा, हृदयेशयत्वा न्मन्मथस्य तद्दर्शन मुपपद्यते इति भावः - तस्य हृदयस्य फले फलभूताविल्यर्थः। अनेन हृदयस्य वृक्षत्वरूपणं गम्यते इत्येकदेशविवर्तिरूपकम्- कुचौ आक्रमिता आक्रमिष्यति-नहि, नीरसहृदयानां वर्षीयसीनां कुचौ स्मरः स्पृशतीति भावः - हे मुग्धे सुन्दरि! तत्तस्मात्, इमौ कुचौ अधुनैव यौवनदशाया मेवेत्यर्थः। मे करेण कण्टकवेष्टितौ सरोमाञ्चौ विधेयौ कर्तव्यौ भवत इति शेषः - मदीयकरस्पर्शेन रोमाञ्चः कुचयो स्स्यादित्यर्थः। इदमेव स्मराक्रमणस्य यौवनस्य फलमिति भावः - इति व्यङ्ग्यार्थः - वाच्यार्थस्तु - स्मरः ते हृदि वक्षसि रसालसत्वं रसालस्य चूतस्य, सत्वं सत्तां, रसालवत्त्वमित्यर्थः। वीक्ष्य तस्य रसालस्य फले कुचा वाक्रमिता हरिष्यति- हे मुग्धे मूढे! तत्तस्मात् अधुनैव जिहीर्षासमकाल मेवेत्यर्थः - हरणानन्तरं कण्टकवेष्टनस्य व्यर्थत्वादिति भावः - इमौ रसालफलभूतौ कुचौ मे करेण कण्टकवेष्टितौ कण्टकै र्द्रुमाङ्गैः परिवेष्टितौ विधेयौ-यथा फलितं रसालवृक्षं तत्फलरक्षणार्थं अभितः कण्टकै र्वेष्टयन्ति तद्वदिति भावः। अत्र कुचयोः रसालफलत्वरूपणा द्रूपकालङ्कारः॥ १३७

श्लो॥ कृशानुभाजा हृदयेशयेन। योगः किलायं तव तापहेतुः
ददामि शीतं हृदयेशयं मे। तेनैव नूनं तव निर्वृति स्स्यात्॥ १३८

कृशानुभाजेति॥ अयं कृशानुभाजा कृशानु मग्निं, भजतीति कृशानुभाक् तेन अग्निदग्धेनेत्यर्थः - अग्निसंयुक्तेनेति च हृदयेशयेन मन्मथेन, सह योगस्सम्बन्ध एव, तव तापहेतुः सन्तापकारणं भवतीति शेषः - किलेति प्रसिद्धौ अग्निसंयुक्तस्य लोहादे स्संयोगस्य तापजनकत्वं प्रसिद्धमित्यर्थः- अत्र हृदि मूर्छितमदनशरजन्ये विरहजन्ये वा तापे कृशानुभाक्स्मरसंयोगजन्यत्वोत्प्रेक्षणा दुत्प्रेक्षालङ्कारः - तस्य च किल शब्दो वाचकः - किञ्च हृदयेशयस्य संयोग स्तापहेतुरिति वाक्यार्थस्य विशेषेण गत्या कृशानुभाक्त्वरूपपदार्थहेतुकत्वा त्काव्यलिङ्गम्- हृदये त्वद्वक्षसि, शीतं शीतलं, मे शयं हस्तं, ददामि क्षिपामि- करेण त्वदुरोजौ

स्पृशामीत्यर्थः [ शीतं शीतलं, मे मदीयं, हृदयेशयं मन्मथं, ददामीति च व्यज्यते- तेनैव मत्करस्पर्शेनैव शीतलमन्मथदानेनैवेति च-तव निर्वृतिः सुखं, स्यात् - नूनं ध्रुवम् ॥ १३८

श्लो ॥ न किञ्चि दिच्छामि सकृत्कुचाख्यं । स्पृशानि शैलं शृणु तस्य साध्यम्
एकाचलस्य ग्रहणेऽपि तादृ । गस्ति प्रशस्तिः कियती द्वयोस्तु ॥

नेति ॥ किञ्चिदपि नेच्छामि न कांक्षामि, किन्तु कुचाख्यं स्तननामकं, शैलंगिरिं, सकृ देकवारं, नतु बहुवारमित्यर्थः - स्पृशानि प्रार्थनायां लोट् - नहि हस्तस्पर्शेन पर्वतस्य कापि क्षतिरिति भावः । किं तावता तव फलं मत आह- तस्य त्वत्कुचशैलस्पर्शनस्य साध्यं फलं शृणु- एकाचलस्य गोवर्धनाभिधस्यैकस्य पर्वतस्य ग्रहणेऽपि, उद्धारेऽपि तादृक् तादृशी- अत्य-द्भुतेत्यर्थः - प्रशस्तिः ख्यातिः, कीर्तिरिति यावत् - अस्ति ममेति शेषः - द्वयोः पर्वतयोः त्वत्कुचरूपयो रित्यर्थः - ग्रहणे तु ग्रहण इति पदस्यात्राप्यन्वयः - कियती कियत्परिमाणा प्रशस्ति रित्यस्याप्यत्रान्वयः - अस्त्विति शेषः - महती प्रतिष्ठा स्यादित्यर्थः - अत्यद्भुत — कीर्तिलाभ एव फलमिति भावः - अत्र कुचे शैलत्वरूपणा द्रूपकालङ्कारः - उत्तरार्धे त्वर्थापत्तिः ॥

श्लो ॥ नाटय न्विनयितां हरिरेवं । चाटुवादपरिपाटिपटीयान्
अस्पृश त्कुचयुगं स कथञ्चि । च्चुम्बनं च कृतिचुङ्कृतिराधात् ॥

नाटयन्निति ॥ चाटुवादपरिपाटिपटीयान् चाटुवादानां प्रियभाषणानां, परिपाटिः रीतिः, यद्वा- चाटूनां प्रियवाक्यानां, वादः वचन मुक्ति रित्यर्थः - तस्य परिपाटिः रीतिः, तस्यां पटीयान् पटुतरः, हरिः कृष्णः, एवं विनयितां विनयवत्त्वं विनयमित्यर्थः - नाटयन् अभिनयन्, कुचयुगं स्तनद्वन्द्वं, अस्पृशत् स्पृष्टवान् - स हरिः कृतचुङ्कृतिः कृतचुङ्कारस्सन् — चुम्बनसमये चुङ्कारश्रवणं प्रसिद्धम् - कथञ्चि त्कृच्छ्रेण, चुम्बनं च आधात् चकार - चाटु— वादै स्तां वञ्चयित्वा तत्कुचौ पस्पर्श चुचुम्बचेत्यर्थः ॥ १४०

ततः ॥ ततश्चेति - चुम्बनानन्तर मित्यर्थः ॥

श्लो ॥ निवेश्य तल्पे शिशिरांशुकल्पेऽ । नल्पेच्छया प्राणसमां स मायी
नीवीविमोक्षाय विमोक्षदायी । मतङ्गजास्यं हरि राशध ॥ १४१

निवेश्येति ॥ मायी वश्यमायः, कपटवांश्च 'मायिनन्तु महेश्वर' मिति श्रुतेः - विमोक्ष-दायी मोक्षप्रदः, 'मोक्षमिच्छेज्जनार्दना'दिति स्मरणात् - स हरिः कृष्णः, सिंह इति च व्यज्यते - अनल्पेच्छया अधिकस्पृहया, प्राणसमां प्रेयसीं, शिशुरांशुकल्पे चन्द्रतुल्ये, तद्वद्धवळ इत्यर्थः । ईषदसमाप्तौ कल्पप्-तल्पे शय्यायां, पातयित्वेत्यर्थः । नीवीमोक्षाय नीवी वस्त्रग्रन्थिः, तस्याः विमोक्षः विमोचनं, तस्मै मतङ्गजास्यं विनायकं, मदगजस्य मुखं चेति व्यज्यते-आरराध पूजितवान्-आरभतेत्यर्थः । एवं हि लोके प्रयुञ्जते-आरभते इत्यर्थे विनायकपूजां करोतीति विनायकपूजाया आरम्भसूचकत्वादिति तदाशयः - अत एव लोकोक्ति रलङ्कारः । अत्र

हरिरपि मतङ्गजास्य माराराधेत्येको विरोधः - स्वयं विमोक्षदाप्यपि नीवीविमोक्षाय विनायकं पूजयामासेत्यन्यो विरोधः - परिहारस्तूक्त एव-अत एव विरोधाभासालङ्कारः। शिशुरांशुकल्पे तल्पे इत्यत्रतूपमालङ्कारः - १४१

अव ॥ अथ नीवीमोक्षं कर्तुं हरिरारभतेति यदुक्तं तदेव वर्णयति चतुर्भिः-बाले इत्यादिभिः-

श्लो॥ बाले! चेल मिदं जहीहि धवळं पीताम्बराश्लेषतः
प्राज्यं सौख्य मपेक्षितं यदि गुणा नाकर्णयास्य क्रमात्
गोप्ये श्रोणिकुचोरुणि प्रियलसन्नेत्रानुबन्धो रुचे
रुत्कर्ष स्सुकुमारताकृतसुखं श्रेयांसि भूयांसि च॥ १४२

बाले इति॥ हे बाले सुन्दरि! पीताम्बराश्लेषतः पीतवस्त्रधारणात्, प्राज्यं प्रभूतं, सौख्यं सुखं, अपेक्षितं यदि कांक्षितं चेत्, इदं धवळं शुभ्रं चेलं वस्त्रं, दुकूल मित्यर्थः। जहीहि त्यज, पीताम्बरधारणजन्यसौख्याभिलाषो यदि तवास्ति तर्हि धवळ मेत च्चेलं जहीत्यर्थः। अस्य पीताम्बरधारणस्य गुणान् क्रमा त्क्रमेण, आकर्णय श्रुणु-यद्वा हेबाले! इदं धवळं चेलं जहीहि-पीताम्बरश्लेषतः प्राज्यं सौख्यं स्यादिति शेषः - अपेक्षितं यदि पीताम्बरधारणं तज्जन्यं सौख्यं वा कांक्षितं चेत् अस्य गुणान् क्रमा दाकर्णय यदि तवापेक्षा तर्ह्यस्य गुणा न्वक्ष्यामि श्रृणिवत्यर्थः - गोप्ये गोपनयोग्ये, श्रोणिकुचोरुणि श्रोणिः कटिः, कुचः स्तनः, ऊरुः सक्थि, एतेषां द्वन्द्वे प्राण्यङ्गत्वा देकवद्भावः - समाहारत्वात्क्लीबत्वं - श्रोणिकुचोरु तस्मिन्-प्रियलसन्नेत्रानुबन्धः - प्रियं हृद्यं, लसत् चञ्चलं, च नेत्रं वस्त्रं, 'नेत्रं विलोचने वस्त्र' इति भास्करः। तस्य अनुबन्ध स्सम्पर्कः, रुचे रुत्कर्षः, कान्तेरतिशयः; सुकुमारताकृतसुखं सुकुमारता वस्त्रमार्दवं तया कृतं सुखं सौख्यं, भूयांसि अमितानि, श्रेयांसि मङ्गळानि, च एवमादयो गुणा इत्यर्थः - गोप्य श्रोण्यादिगोपनं यद्यपि दुकूलधारणेनापि सिद्ध्यति- तथापि न तद्गोपनं हृद्यवस्त्रकृतमिति ज्ञेयम् - यद्वा शरीरस्य काञ्चनवर्णत्वेन तच्छाया दुकूलाद्बहिः प्रसरत्येवेति दुकूलधारणेन श्रोण्यादिगोपनं न भवत्येवेति ज्ञेयम्- देहस्य पीतत्वेन वस्त्रमपि यदि पीतं स्यात्तर्हि पीतच्छायोत्कर्षो भवति-दुकूलधारणे तु श्वेतच्छायया पीतच्छायाया स्सङ्कोच एवेति पीताम्बरधारणे कान्त्यतिशयो ज्ञेयः – यवागूरसबन्धनादिना दुकूलस्य फळफळात्कारवत्त्वेन कठिनत्वा न्न सौकुमार्यम्। पीताम्बरस्य तु पट्टतन्तुमयत्वेन मार्दवातिशय इति ध्येयम्। पीतवस्त्रधारणस्य मङ्गळकरत्वन्तु प्रसिद्धमेव-व्यङ्ग्यार्थस्तु- हे बाले मुग्धे! धवळमिदं चेलं जहीहि विवस्त्रा भवेत्यर्थः - पीताम्बरस्य मम, आश्लेषतः आलिङ्गनात्, प्राज्यं सौख्यं स्यात्-विवस्त्रा सतीयदि मामालिङ्गसि तर्हि महदानन्दलाभ इत्यर्थः - यद्यपेक्षितं तादृशसुखापेक्षा तच्छ्रवणापेक्षा वा अस्तिचेदित्यर्थः - अस्य मदालिङ्गनस्य गुणान् क्रमा दाकर्णय- अहं वक्ष्यामि श्रृणिव त्यर्थः - गोप्ये श्रोणिकुचोरुणि प्रियस्य मम, ललत्सविलासं, यन्नेत्रं चक्षुः, तस्य सम्पर्कः प्रियदृग्गोचरत्वमित्यर्थः। गोप्यं वस्तु स्वप्रियाय प्रदर्शनं ताव देको गुणः- माता हि भक्ष्या-

दिकं सङ्गोप्य पुत्राय प्रदत्ते इति लोकस्वभावात्-रुचे रनुरागस्य, उत्कर्षः स्वमर्मज्ञे खलु सुहृदादौ जने लोको दृढ मनुरज्यते इति भावः। यद्वा त्वयि मम योऽनुरागोऽस्ति स त्वत्कुचादिसम्पर्केण प्रवर्धते इति भावः। सुकुमारताकृतसुखं शोभनः कुमारः पुत्रः यस्या स्तस्या भावः सुकुमारता-त्वतलो रिति पुंवद्भावः। संज्ञाजातिव्यतिरिक्ताश्च गुणवचना इति सम्प्रदायः - यद्वा शोभनः कुमारो यस्य तत्सुकुमारमिति सामान्ये नपुंसकम् - तस्य भावस्तत्ता- सुपुत्रावाप्ति रित्यर्थः। तत्कृतसुखं, भूयांसि श्रेयांसि च, एते गुणा इत्यर्थः - १४२

श्लो ॥ भवद्दुकूलान्तर एव लीनं। मनो ममान्यत्र न दृश्यते यत्
तदर्पयेदं यदि वा विमुच्य। क्षौमं मम प्रत्यय मातनुष्व ॥ १४३

भवदिति ॥ मम मनः चित्तं, भवद्दुकूलान्तरे तावकवसनमध्ये एव, अत्र भवतः, दुकूलं भवद्दुकूलमिति समासः - भवदिति सामान्ये नपुंसकम्-अर्थस्तु स्त्री एव- तेन भवतः भवत्याः, दुकूलं क्षौमं, भवद्दुकूलं- तस्यान्तरे मध्ये इति विग्रहार्थः। अन्यथा भवती दुकूलान्तरे इति स्यात् – लीनं लग्नं, भवतीति शेषः। तत्र हेतु माह-यद्यस्मात् अन्यत्र विषये नदृश्यते नावलोक्यते, त्यक्तान्यविषयं सत् मन्मनो भवद्दुकूल एव रज्यते इति वास्तवार्थः। मन्मन स्त्वद्वस्त्रान्तरे निलीय वर्तते कमलान्तरे भृङ्गवत्-अन्यथा कथं मम तद्दर्शनं न स्यादिति छलार्थः। त तस्मात्, इदं मन्मनः, अर्पय मह्यं प्रत्यर्पयेत्यर्थः। यदिवा यद्वा-क्षौमं दुकूलं, विमुच्य विसृज्य, मम प्रत्ययं विश्वासं, आतनुष्व जनय-संकोचितं वस्त्रं प्रसार्य दर्शने मम विश्वास स्स्यात्; अन्यथा नेति भावः - यथा अपहृतधनः कश्चित् स्वशङ्कास्पदस्य कस्यचिद्गृहं प्रविश्य तत्र बहुधा विशोध्य निश्शङ्को भवति तद्वदिति व्यज्यते- तद्वस्त्रापहरणे सति मन्मनः स्तिमितं स्या दन्यथा उन्मादं प्रयायादिति प्रकृतव्यङ्ग्याशयः - १४३

अव ॥ ननु विवस्त्रा कथ महं वर्तेय मत आह आच्छादयिष्यामीति-

श्लो ॥ आच्छादयिष्या म्यह माशया ते। नितम्ब मेत त्यज किंदुकूलम्
दिगम्बरत्वं कि मवाप्य मुग्धे। शिवं जगत्पूज्यतमं नवेति। १४४

आच्छादयिष्यामीति ॥ अहं अघटितघटनासमर्थः परमेश्वर इत्यर्थः। ते नितम्बं कटिं आशया दिशा, अतिसूक्ष्मनिर्मलनित्यसिद्धविस्तृतवस्त्रायितयेत्यर्थः। आच्छादयिष्यामि गोपिष्यामि- एतत् धृत मित्यर्थः - किंदुकूलं कुत्सितक्षौमं 'स किंसखा साधु न शास्ति योऽधिप' मित्यादिप्रयोगात् - नातिसूक्ष्मं तर्कितमलसम्बन्धं केनचित्कृतं षोडशहस्तादिप्रमाणत्वेन नातिविस्तृतं च इति दिगपेक्षया क्षौमस्य नीचत्वं बोध्यम्-त्यज-अत्र अहं त्वत्प्रियः, आशया अनुरागेण, ते नितम्ब माच्छादयिष्यामि व्याप्तं करिष्यामि- एतत्किंदुकूलं त्यज - दुकूले त्यक्ते सर्वमपि नितम्बं सस्पृह मालोकयिष्यामीति व्यज्यते। ननु दुकूलं परित्यज्य दिग्रूपाम्बरधारण मयुक्त मित्यत आह - हेमुग्धे मूढे! दिगम्बरत्वं दिग्वस्त्रधारकत्वं, अवाप्य प्राप्य, जगत्पूज्य-

तमं त्रिलोकसम्पूज्यं, शिवं शर्वं, न वेत्सि न स्मरसि किम्?– दिगम्बरधारणा त्वापि जगत्पूज्यतास्यादिति भावः - दिगम्बर स्स शिवः जगत्पूज्य एव-त्वं यदि दिगम्बरा स्याः तर्हि जगदीश्वरेणापि मया भृशं पूज्यसे इति गूढाशयः - अत्र स्मृतिमदलङ्कारः। तेन च राधाशिवयो र्दिगम्बरत्वकृतजगत्पूज्यत्वरूपसाधारणधर्मनिबन्धनोपमा व्यज्यते ॥ १४४

श्लो ॥ रम्भाप्रकाण्डाद् द्विरदस्य शुण्डा। दण्डादपि श्रीनिलये त्वदूरौ
तिरस्क्रिया मादधतोंऽशुकस्य। परिग्रहः किन्नु शुभो विभाति?॥

रम्भेति॥ रम्भाप्रकाण्डात् मोचास्तम्भात्, द्विरदस्य गजस्य, शुण्डादण्डात् दण्डाकारात्कराच्च, श्रीनिलये अधिकशोभाश्रये, उष्णत्वा न्मृदुलत्वाच्चेति भावः। उक्तञ्च कालिदासेन- 'नागेन्द्रहस्ता स्त्वचि कर्कशत्वा देकान्तशैत्यात्कदलीविशेषाः लब्ध्वापि लोके परिणाहि रूपं जाता स्त्वदूर्वो रुपमानबाह्यौ-' इति त्वदूरौ तव सक्थिनि, तिरस्क्रियां परिभव माच्छादनं च, आदधतः कुर्वतः, अंशुकस्य वस्त्रस्य, परिग्रहः स्वीकारः धारण मित्यर्थः - शुभः प्रशस्तः, विभाति किन्नु प्रतिभाति किं - नैव शुभ इत्यर्थः। रम्भाशुण्डातिरस्कारिणो रतिसुन्दरयो स्त्वदूर्वोः अंशुकमात्रा त्तिरस्कारो दुस्सहः - राज्या स्तव एतद्दुर्जनांशुकान्वयश्च अनर्थहेतुरिति भावः। अत्र पूर्वार्धे व्यतिरेकालङ्कारः। उत्तरार्धे अंशुकपरिग्रह स्तव न शुभ इति वाक्यार्थम्प्रति ऊरुतिरस्क्रियाधानस्य विशेषणतया हेतुत्वा त्काव्यलिङ्गं श्लेषोज्जीवितम् ॥

श्लो ॥ इतीरयित्वा स्पृशतीव नीवीं। हरौ न्यरुन्धे वचसा तदासीत्
अनर्थभूम्नः पद मुत्तरस्य। रन्ध्रं तटागस्य यथाऽतिसूक्ष्मम् ॥ १४६

इतीति॥ इत्येव मीरयित्वा हरौ कृष्णे, नीवीं वस्त्रग्रन्थिं, स्पृशतीव सति विलासेन स्पर्शनं नाटयति सतीत्यर्थः - शिथिलयितुमिति भावः। सा राधा च न्यरुन्धेव न्यवारयदिव, न तु वस्तुत स्तन्निवारणोत्सुकेत्यर्थः। स्वस्यापि सम्भोगोत्सुकितत्वादिति भावः। तत निवारणनटनं दृढ मनिवारण मित्यर्थः - उत्तरस्य भविष्यतः, अनर्थभूम्नः अनर्थातिशयस्य, नीवीविमोक्षविषयकबलात्कारस्येत्यर्थः। अस्यानर्थत्वं च प्रेयसीकर्तृकानिष्टत्वाभिनया दौपचारिकम् - पदं चिह्नं-, हेतुरित्यर्थः। आसीत् - धूर्तयाचकस्य लुब्धप्रभुविषयकमृदुत्वोक्तिवदिति भावः - यदि प्रथमतो नीवीस्पर्शने एव साग्रहं प्रियं तर्जनभर्त्सनादिभि र्निवारयेत्तर्हि तस्य नीवीमोचने आशैव नोदीयात् इति तत्त्वम्। अत्र दृष्टान्त माह - यथा तटाकस्य वारिवारिणस्य अतिसूक्ष्मं रन्ध्रं सुषिरं उत्तरस्यानर्थभूम्नः पदं भवति तथेत्यर्थः - सम्पूर्णजलस्य तटाकस्य यदि क्वचि दत्यल्पमपि रन्ध्रं स्यात् तद्धि जलवेगवशा दधिकं सत् तटाकं छेदयतीति प्रसिद्धम्। उपमालङ्कारः॥ १४६

श्लो ॥ दुकूल माकर्षति निर्विशङ्कं। हरौ विमुग्धा शरण क मेतु
तध्यान तस्याः कटकं परं मे। श्रितस्य नोपेक्षण मौचितीति ॥

दुकूलमिति ।। हरौ निर्विशङ्कं निस्संशयं यथा तथा, दुकूलं क्षौमं, आकर्षति हरति सति, विमुग्धा विशेषेण मुग्धा, राधा कं अन्यं कंवा, शरणमेतु प्राप्नोतु- अन्तःपुरे यस्य कस्यापि तदन्यस्याभावात् इति भावः - श्रितस्य तदाश्रितस्य मे उपेक्षणं तूष्णीम्भावः - औचिती उचितं, न न भवति, इति मत्वेति शेषः - तस्याः कटकं वलयः, जात्येकवचनं कटकानीत्यर्थः - परं भृशं, दध्वान ननाद- यथा चोरेण कस्याञ्चि दपह्रियमाणायां सन्निहितो दुर्बलो भृत्यः केवलं रोदिति, रोदनं श्रुत्वा अन्ये आगत्य एनां मोचयेयुरिति बुद्‌ध्या तद्व-दिति भावः - स्वाम्बर माकर्षन्तं कृष्णं करेण राधायां निषेधयन्त्यां सत्यां वलया दध्वनुरिति निर्गळितार्थः - अत्र गम्योत्प्रेक्षालङ्कारः - स च अचेतनस्य कटकस्य मुग्धाया मां विना न कोऽपि शरणं तदाश्रितस्य मम तदुपेक्षणं नोचित मित्येवंरूपज्ञानासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिसङ्कीर्णम् ।। १४७

श्लो ।। दृढं जघानेव कटाक्षबाणै । र्हृदि न्यधत्तेव विरोधभारम्
तथाप्यसौ मुञ्चतु भीतव त्किं । मायी समस्ताशयवृत्तिसाक्षी ।।

दृढमिति । राधेति हरिमिति च प्रकरणा दत्र लभ्यते- राधा हरिं कटाक्षबाणैः अपाङ्गरूपै र्बाणैः, दृढं गाढं, जघानेव हतवतीव, श्रीकृष्णं सानुरागं पश्यन्ती राधा तं कटाक्षबाणै स्ताडयन्तीव रेजे इत्यर्थः । हृदि स्वमनसि, विरोधभावं विरोधातिशयं, श्रीकृष्ण-कृतापराध मित्यर्थः । न्यधत्तेव निहितवतीव, तर्जनभर्त्सनादिद्वारा विरोधं न बहिः प्रकटयामास किन्तु भ्रूविक्षेपादिना अनुमेयं विरोध मन्तरेव बभारेत्यर्थः । एतेन विरोधस्य अळीकत्वं व्यज्यते- तथापि एवं विरोधनाटनेऽपीत्यर्थः - मायी मायावी, अत एव समस्ताशयवृत्तिसाक्षी सर्वबुद्धिवृत्तीनां साक्षिभूतः परमेश्वर इत्यर्थः - असौ कृष्णः, भीतवत् भीत इव, मुञ्चतु त्यजतु किम्- अम्बरहरणमिति शेषः - यथा राधा स्वसुरतौत्सुक्यं गर्भीकृत्य बहिः केवल मसूयां प्रकाशयति - तथाविधं राधान्तःकरण मन्तरात्मना भगवता कथ मविदितं स्यात् ? इति भावः – काव्यलिङ्ग मलङ्कारः - समस्ताशयवृत्तिसाक्षित्वस्य विशेषणगत्या श्रीकृष्णकर्तृक-वस्त्रामोचनं प्रति हेतुत्वात - किञ्च मुग्धाङ्गनाः स्वसुरतौत्सुक्यं गर्भीकृत्य बहिः केवल मनिष्टं व्यञ्जयन्तीति सर्वरसिकजनविदितविषये सर्वज्ञस्य भगवतः किमुत तद्ज्ञानमिति अर्थापत्ति श्च व्यज्यते - १४८

श्लो ।। अपि पुरा बलिनिग्रहणेन मे । कृतवतोऽम्बर माक्रमितुं क्रियाम्
सपदि किन्त्वबलेन तदाक्रमे । बलमिति व्यनय द्धरि रम्बरम् - १४९

अपीति ।। पुरा त्रिविक्रमावतारे बलिनिग्रहणेन बलिचक्रवर्तिपरिभवेन, तद्‌द्वारेत्यर्थः - बलवत्पुरुषनिग्रहणेनेति च - अम्बर माकाशं, वस्त्रं च- आक्रमितुं व्याप्तुं, हर्तुं च - क्रियां उपायं 'उपायः कर्म चेष्टा च चिकित्सा च नवक्रिया' इत्यमरः । कृतवतोऽपि मे मम, सपदि इदानीं, हे अबले! स्त्री दुर्बले इति च तदाक्रमे अम्बराक्रमणे, बलं शक्तिः न किन्तु नास्ति किंवा?

इत्येवं वदन्निति शेषः - हरिः अम्बरं वस्त्रं, व्यनयत् अपजहार- बलिचक्रवर्तिनं निगृह्य, आकाशं सर्व माक्रमितवतः परमेश्वरस्य मम त्वद्वस्त्राक्रमणं कियदित्येकोऽर्थः - बलवत्पुरुषानपि निगृह्य तद्वस्त्राण्यपहृतवतः प्रसिद्धचोरस्य मम त्वद्वस्त्रापहरणं किय दित्यन्योऽर्थः - अत्र श्लेषोज्जीवितार्थापत्ति रलङ्कारः - १४९

श्लो ॥ पुनर्जिघृक्षौ वसनं प्रियायां । मायाबलेनेद मदृश्य माधात्
योगे दुरूहं कपटं यदस्य । ततः प्रसिद्धोऽजनि योगमायी ॥

पुनरिति ॥ प्रियायां प्रेयस्यां, राधायां - पुन र्भूयः, वसनं स्ववस्त्रं, जिघृक्षौ हर्तु मिच्छन्त्यां सत्यां, हरिरिति शेषः - इदं वस्त्रं मायाबलेन योगमायाप्रभावेन, अदृश्यं द्रष्टु मशक्यं, आधात् चकार-भगवन्मायाबलात् राधायाः स्ववस्त्र प्रत्यक्षमेव नासीदित्यर्थः - यत्-यस्माद्धेतोः, अस्य कृष्णस्य, योगे हठादियोगे, कपटं सामर्थ्यं, दुरूहं अवितर्क्यम्, एतावद्योग-महिमा अस्यास्तीति वक्तु मशक्यमिति व्यङ्ग्यार्थः - योगे संयोगे, अस्य कृष्णस्य, कपटं माया, वञ्चनेत्यर्थः - दुरूहं इति तु वाच्यार्थः - ततो हेतोः अयमिति शेषः - योगमायी योगमाया-वानिति प्रसिद्धः प्रथितः, अजनि जातः - निरुक्तिरलङ्कारः - १५०

श्लो ॥ अथैष पस्पर्श नितम्बबिम्ब । मनम्बरालम्बि हरिः प्रियायाः
भूभृद्भुवः किन्नु नितम्ब मस्या । स्स्पृशे न्न नीलोऽमृतद स्सलौल्यः ॥

अथेति ॥ अथ एवं वस्त्रापहरणानन्तरं, एष हरिः कृष्णः, प्रियायाः राधायाः अन-म्बरालम्बि वस्त्रावलम्बनरहितं, विवस्त्र मित्यर्थः - नितम्बबिम्बं नितम्बमण्डलं, पस्पर्श स्पृष्टवान्-सलौल्यः सानुरागः, चञ्चलश्च नीलः नीलवर्णः, अमृतदः मोक्षदाता, जनार्दन इत्यर्थः - अन्यत्र जलदः - अस्भूयाः भृद्भुवः राजपुत्र्याः, पर्वतभूमेश्च- नितम्बं कटिपश्चाद्भागं, सानुं च-न स्पृशेत्किं ? स्पृशेदेवेत्यर्थः – पर्वतनितम्बस्पर्शो मेघस्यैव, राधानितम्बस्पर्शः कृष्णस्य समी-चीन इति भावः - अत्र उत्तरार्धे अन्यार्थप्रतीतिर्व्यञ्जनाव्यापारेणैव-ततः उपमालङ्कारोऽत्र व्यङ्ग्यः - उदाहृतं च उपमाव्यङ्ग्योदाहरणप्रकरणे चित्रमीमांसायाम्- किरति प्रकरं गवां प्रकामं सुमन स्स्वच्छतरं निधौ कणानाम् । कतिचित्कलयन्ति यत्प्रबोधं कतिचिन्नति सत स्स्वभाव एव' इति- १५१

श्लो ॥ अविषयो वचसां सुरतक्रम । स्तदनु यः प्रचचाल त मेककः
अविधृताङ्गतया सविधे वसन् । कुसुमसायक एव स बुध्यते ॥

अविषय इति ॥ तदनु नितम्बस्पर्शनानन्तरं, वचसा मविषयः वागगोचरः, वक्तु मशक्य इत्यर्थः - ग्राम्यधर्मत्वा दित्येको भावः - भगवद्विषयत्वा दित्यन्यो भावः - यः सुरतक्रमः सुरत-रीतिः, प्रचचाल प्रवृत्तः - तं सुरतक्रमं, अविधृताङ्गतया अनङ्गत्वेन हेतुना, सविधे समीपे, वसन् तिष्ठन्, रहसि मिथुनव्यतिरिक्तस्त्रीपुंव्यक्तिप्रवेशासम्भवादिति भावः – एककः एक एव

एककः स्वार्थे कः - सः कुसुमसायकः मन्मथ एव, बुध्यते जानीते- श्रीकृष्णस्य चतुरशीतिबन्धनधुरन्धरत्वं मन्मथ एक एव वेद- तस्य वात्स्यायनतन्त्रसारत्वात्- अन्ये पुनः के वयं तत् वेत्तुं वर्णयितुं वेति भावः ॥ १५२

श्लो॥ निदद्रतु स्ता वथ केळिलालसौ । चिराय भूत्वा बहुळश्रमालसौ
सशिञ्जिनीबन्धमपि स्वधन्वन । श्चकार मार श्शिथिलं पृथुश्रमः ॥

निदद्रतु रिति॥ अथ ततः, चिराय चिरकालं, आप्रभात मित्यर्थः - आत्रियामाव धीति वा- केळिलालसौ क्रीडासक्तौ, क्रीडितवन्ता वित्यर्थः - अतएव तौ बहुळश्रमालसौ अतिश्रान्तौ, भूत्वा निदद्रतुः निद्रां ययतुः - पृथुश्रमः अविरतबाणप्रहारेण बहुळायासः सः मारः मदन श्च, स्वधन्वनः स्वधनुषः, शिञ्जिनीबन्धं मौर्वीबन्धनं च, शिथिलं श्रष्टं, चकारयुद्धानन्तरं योद्धारः धनुषो मौर्वीं शिथिलयन्तीति प्रसिद्धम् - अत्र यदा राधामाधवौ सुरतक्रीडातः श्रान्तौ निद्रोन्मुखौ तदैव मन्मथोऽपि युद्धा दुपरत इति वर्णनात् समाधि रलङ्कारः - 'समाधिः कार्यसौकर्यं कारणान्तरसन्निधे' रिति लक्षणात् । नहि मदनव्यापारोपरमं विना तयो र्निद्रा स्यादिति भावः - १५३

श्लो॥ कृकवाकुरुतं निशम्य तारं । दयिते स्वप्नचि बुध्यते स्म राधा
मुखरो विविधस्तुतिप्रपञ्चै । स्सहसा बोधकरव्रजोऽप्युपागात् ॥ १५४

कृकवाकिति॥ दयिते प्रिये, स्वप्नचि सुप्ते सति, 'स्वप्नक्शयालु र्निद्रालु' रित्यमरः - तार मधिकं - कृकवाकुरुतं कुक्कुटध्वनिं, निशम्य श्रुत्वा, राधा बुध्यते स्म बुबोध - अजागर दित्यर्थः । अनेन दन्तक्षतादिचिह्नानि दृष्ट्वा सख्यो मा मपहासेयु रिति चिन्तया निर्निद्रा राधेति व्यज्यते- यद्वा मुग्धाङ्गनासम्भोगस्य क्लेशावहत्वेन श्रीकृष्णस्य श्रमातिशया न्निद्रातिशयः - राधाया स्तु श्रमस्य अल्पत्वान्निद्राप्यल्पैवेति व्यज्यते-सहसा तदैव, अनेन यदा कृष्णः निदद्रौ- तदैव कुक्कुटरुतं जातं - तदैव राधा बुबुधे इति श्रीकृष्णनिद्रादीनां तुल्यकालत्वं व्यज्यते- विविधस्तुतिप्रपञ्चैः बहुविधस्तोत्रविस्तारैः, मुखरः शब्दायमान स्सन्, बोधकरव्रजोऽपि वैतालिकगण श्च उपागात् आजगाम, श्रीकृष्णान्तःपुरं प्रतीत्यर्थः । १५४

ग॥ उपगम्य च वैतालिकनिकर स्तार मिद मवादीत् - १५५

उपगम्येति॥ वैतालिकनिकरः वैतालिकसङ्घः, उपगम्य तार मुच्चैः इदं वक्ष्यमाणं वचन, मवादीच्च जगाद च- १५५

अव॥ वैतालिकवचनमेव दर्शयति ।

श्लो॥ उत्तिष्ठाखिललोकपालनकलानिष्णात! कृष्णाधुना
दत्तामोदमुदस्य सर्वजगतां भद्राय निद्रारसम्
राधाया दयितो रुचिं विधुरसा वौज्झ त्परस्यामिति
क्षुब्धोऽयं कमलाशयं प्रयतते भेत्तुं किलालिव्रजः ॥ १५६

उत्तिष्ठेति ॥ अखिललोकपालनकलानिष्णात अखिलानां सर्वेषां, लोकानां जगतां, पालनकलायां परिपालनवैखर्यां, निष्णात धुरन्धर, हे कृष्ण! अधुना प्रभाते इत्यर्थः- दत्तामोदं दत्तानन्दं, निद्रारसं निद्रासक्तिं, निद्रा मित्यर्थः। उद्स्य त्यक्त्वा, सर्वजगतां सर्वलोकानां, भद्राय क्षेमाय, उत्तिष्ठ तल्पा दुत्थितो भव- उतोऽनूर्ध्वकर्मणीति ऊर्ध्वकर्मत्वान्नात्मनेपदम्- त्वन्निद्रा तु तवैकस्यैव आनन्दं दत्ते-त्वज्जागरस्तु सर्वजगतामपि भद्रावहः; तव सर्वलोकापालकत्वात्- तस्मात् स्वसुखमपि परित्यज्य स्वीयभव्यार्थं सत्पुरुषोत्तमेन त्वया अवश्यं तल्पदुत्थितव्य मित्यर्थः। अत्र निद्रात्यागपूर्वक श्रीकृष्णोत्थनस्य विशेषणगत्या लोकपालनकलानिष्णातत्वरूपपदार्थहेतुकत्वाा काव्यलिङ्गम्। नच परिकरालङ्कार इति भ्रमितव्यम् - लोकपालनेति विशेषणव्यङ्ग्यस्य सर्वजगतां भद्रायेत्यनेन कविनैव व्यक्तीकृतत्वात् - अथ उत्तरार्धेन अधुनेति पदव्यञ्जितं प्रभातं वर्णयति - असौ राधायाः विशाखायाः, दयितः प्रियः, विधुश्चन्द्रः - इन्दोर्विशाखाया मनुरागातिशयः प्रसिद्धः - परस्यां पश्चिमायां दिशि, रुचिं कान्तिं, औज्झत् तत्याज - अस्तमित इति यावत् - इति क्षुब्धः प्रभातं सञ्जातमिति उद्बुद्ध इत्यर्थः- अय मळिव्रजो भृङ्गसङ्घः, कमलाशयं पद्माभ्यन्तरं, भेत्तुं उद्घाटयितुं, पत्रोद्घाटनेन अन्तःप्रवेष्टुमित्यर्थः। प्रयतते यत्नं कुरुते - किलेति प्रसिद्धौ- व्यङ्ग्यार्थस्तु-राधायाः दयितः प्रियः, राधया वशीकृत इत्यर्थः। असौ विधुः कृष्णः, परस्यां स्त्र्यन्तरे, रुचि मनुरागं, औज्झत् त्यक्तवान् - इति हेतोः क्षुब्धः कुपितः, अयं आळिव्रजः रुक्मिण्या स्सखीबृन्दः, कमलाशयं रुक्मिण्या हृदयं, 'कमला श्रीर्हरिप्रिया' इति कोशात - भेत्तु मन्यथाकर्तुं, प्रयतते इति शब्दशक्तिमूलध्वनिः - १५६

**ग ॥ भगवा नभिव्यञ्जितार्थान्तरं वैतालिकवचन माकर्णयन्नेव सत्वर मवबुध्य रुक्मिणीरोषसम्भावनया विदारितहृदयतया केलिनिकेतना न्निरगात्।**

भगवानिति ॥ भगवान् श्रीकृष्णः, अभिव्यञ्जितार्थान्तरं अन्यार्थप्रतीतिजनक मित्यर्थः- वैतािळकवचनं आकर्णयन्नेव तद्वाक्यश्रवणक्षणमेवेत्यर्थः- सत्वरं द्रुतं, अवबुध्य प्रबुध्य, रुक्मिणीरोषसम्भावनया रुक्मिणीकोपोत्प्रेक्षया- मयि राधायां सक्ते सति, अवश्यं रुक्मिण्याः कोप स्स्यादिति शङ्कित्वेत्यर्थः - विदारित हृदयतया निर्भिन्नचित्तत्वेन, अस्य हृदयं रुक्मिणीरोषसम्भावनरूपशस्त्र्या बहुधा शकलितमित्यर्थः - केळीनिकेतनात् क्रीडामन्दिरात, निरगात् निर्ययौ ॥ १५७

**तदानी मेव** ॥ प्रभाते एवेत्यर्थः -

**श्लो ॥ राधावशीकृतं शौरिं। विनिवेद्य विदर्भजाम्**
**आळयः कलयामासुः। कलुषां परुषामपि ॥** १५८

राधेति ॥ शौरिं कृष्णं, राधावशीकृतं राधया स्वाधीनीकृतं, राधापरतन्त्रमित्यर्थः - विनिवेद्य ज्ञापयित्वा, तव पतिः कृष्णः राधापरतन्त्रोऽभवदिति निवेदयित्वेत्यर्थः - आळयः

सख्यः. विदर्भजां रुक्मिणीं, कलुषां कुपितां, परुषामपि कठिनां च, कलयामासुः चक्रुः - तथाहि- सख्युपदेशमेव वर्णयति द्वाभ्यामित्यर्थः - १५८

श्लो ॥ मुग्धे ! प्राङ्महिषीषु सप्तसु परा स्वाधीयमानासु वा
सम्प्राप्ता स्वयुताधिकासु ललनास्वन्यासु मान्यासु वा
जाता त्वं मधुवैरिणो निरवधिप्रेमप्रवाहास्पदं
तस्या स्सम्प्रति बाधिका तव हरे राराधिका राधिका ॥ १५९

मुग्धे इति ॥ हे मुग्धे मूढे ! तव सांप्रत मनर्थं त्वमेव न जानासीत्यर्थः । प्राक् पूर्वं परासु त्वत्तो भिन्नासु सप्तसु महिषीषु जाम्बवत्याद्यासु कृताभिषेकासु नारीषु, 'कृताभिषेका महिषी' त्यमरः । आधीयमानासु गृहीतासु सतीषु, कृष्णेनेति शेषः । अन्यासु अष्टमहिषीभ्य इतरासु, मान्यासु श्लाघ्यासु, अयुताधिकासु अयुतं दशसाहस्रं ततोऽप्यधिकासु, षोडशसहस्र, सङ्ख्यास्वित्यर्थः । ललनासु वा कन्यासु च सम्प्राप्तासु स्वीकृतासु सतीष्वित्यर्थः । त्वं मधुवैरिणः कृष्णस्य, निरवधिप्रेमप्रवाहास्पदं निरवधे रपारस्य, प्रेमप्रवाहस्य प्रेमलहर्याः, स्नेहपूरस्येत्यर्थः । आस्पदं स्थानं, जाता असीति शेषः - सप्ताधिकषोडशसहस्रसङ्ख्याकस्त्रीकदम्बेऽप्युदासीन स्सन् श्रीकृष्णः त्वय्येवानुरक्तोऽभूदित्यर्थः । एतेन एतत्सर्वाङ्गनापेक्षया रुक्मिण्याः सौन्दर्यातिशयो व्यज्यते- हरेः कृष्णस्य, आराधिका आराधनकारिणी भार्येत्यर्थः । राधिका राधा, सम्प्रति अधुना, तस्या स्तादृशाया स्तव, बाधिका बाधाकारिणी भवतीति शेषः । त्वय्यपि श्रीकृष्णस्य, यथा औदासीन्यं स्यात् स्वस्मिन्नेव यथा दृढानुराग स्स्यात् तथा राधा श्रीकृष्णं स्वविलासजालपरतन्त्रं विधत्ते इत्यर्थः । अत्र राधायाः रुक्मिणीबाधिकाभावं प्रति विशेषणगत्या हरे राराधिकत्वस्य हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ १५९

अव ॥ ऐवं राधावशीकृतं शौरिं विनिवेद्य कर्तव्य मुपदिशन्ति -

**ततः खलु** ॥ तस्मादेव श्रीकृष्णस्य राधावशीकृतत्वा देवेत्यर्थः -

श्लो ॥ मानं प्रतीच्छ पटुचाटुवचःप्रपञ्चैः
साभूः प्रतारितमना दयितस्य तस्य
वक्त्राबुजं च ललितं पलितं विधेहि
मुग्धे ! विदग्धविधयैव स चे द्विधेयः ॥ १६०

मानमिति ॥ हेमुग्धे मूढे ! मानं कोपं, प्रतीच्छ स्वीकुरु- 'स्त्रीणा मीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' इति मानलक्षणम्' तस्य दयितस्य प्रियस्य, पटुचाटुवचःप्रपञ्चैः समर्थ प्रियवाग्विस्तारैः, प्रतारितमनाः वञ्चितहृदया, माभूः- नमाङ्योगे इत्यडागमप्रतिषेधः- ललितं सुन्दरं, वक्त्राम्बुजं मुखकमलं च, वलितं सञ्जातवलिं, भ्रूविक्षेपवशादिति भावः - विधेहि कुरु- एवं करणे फलित माह - सः कृष्णः, विधेयः वश्यः, चेत् स्याद्यदि, विदग्धविधयैव चातुर्येणैव, विधेय स्स्यादित्यर्थः-चातुर्यं विना स मायावी तव वश्यो न स्या दतोऽस्मद्वचनं शृण्वित्यर्थः-

ग ॥ एवमादिभि स्सखीजनभाषितै रुपजप्ता विदर्भजा निर्व्याजहृदयापि विरचितकुङ्कुमाङ्गरागविरागा ताम्बूलरसविरसा समुज्झितकुसुममाल्यलौल्या अव्यञ्जिताञ्जनरञ्जना विमुक्तमुक्ताहारा मुक्ताहारा च भूत्वा केवल मवनितल मधिशयाना च मान मानटयत् – १६१

एवमिति ॥ निर्व्याजहृदयापि निष्कपटचित्तापि, विदर्भजा रुक्मिणी, एवमादिभिः पूर्वोक्तप्रमुखैः, सखीजनभाषितैः सखीजनवाक्यैः, उपजप्ता भेदं प्रापिता, 'भेदोपजापा वुपधे' त्यमरः । अत एव विरचितः कृतः, कुङ्कुमाङ्गरागे कुङ्कुमाङ्गलेपने, विरागः विरक्तिः यया सा, कुङ्कुमाङ्गरागं त्यक्तवतीत्यर्थः- ताम्बूलरसविरसा ताम्बूलरसविरक्ता, त्यक्तताम्बूलचर्वणेत्यर्थः- समुज्झितं त्यक्तं, कुसुममाल्येषु पुष्पमालासु, लौल्यमासक्तिर्यया सा, अव्यञ्जित मप्रकटितं, अञ्जनरञ्जनं अञ्जनेन लेपनं, नेत्रयो रित्यर्थः - यया सा- विमुक्ताः त्यक्ताः, मुक्ताहाराः मौक्तिकस्रजो यया सा- मुक्ताहारा त्यक्तभोजना च– भूत्वा अवनितलं केवलं भूतलमेव- नतु सास्तरण मित्यर्थः- अधिशयाना अधिष्ठित्य शयाना च, भूत्वा, मान मीर्ष्याकृतकोपं, आनटयत् नाटितवती - १६१

श्लो ॥ अत्रान्तरे यदुपतिः प्रतिपन्नमाना
मेना मनूनमनना मनुनेतुकामः
आसेदिवा न्सदन माशु विदर्भजाया
जाया मजायत कृशां विवशोऽपि वीक्ष्य ॥ १६२

अत्रेति ॥ अत्रान्तरे अस्मिन् समये, प्रतिपन्नमानां प्राप्तकोपां, अत एव अनूनमननां अनून मधिकं, मननं चिन्ता, यस्या स्तां चिन्ताकुलामित्यर्थः - एनां रुक्मिणीं, अनुनेतुकामः अनुनेतुं प्रसादयितुं, कामः अभिलाषः, यस्य स तथोक्तः - 'तुं काममनसो रपी'ति मुलोपः- यदुपतिः कृष्णः, आशु द्रुतं, विदर्भजायाः रुक्मिण्याः, सदनं सद्म, विवेश अविशत् - कृशां चिन्तया कार्श्यं प्राप्तां, जायां भार्यां, वीक्ष्य, विवशः परवशः, खेदातिशयादिति भावः । अजायत च अभवत् – अत्र पूर्वार्धे वृत्त्यनुप्रासालङ्कारः । उत्तरार्धे तु समुच्चयः - १६२

ग ॥ उपसृत्य च प्राणप्रिया मिद मवादीत् - १६३

उपसृत्येति ॥ उपसृत्य समीप मेत्य, प्राणप्रियां प्राणेभ्योऽपि प्रियां, रुक्मिणी मिदं वक्ष्यमाण मवादीत् - १६३

श्लो ॥ क्रुद्धासि किन्नु दयते! कुचकुम्भसाम्य
मुद्घाव्य जम्भरिपुकुञ्जरकुम्भयुग्मे
भित्वा तदेव कुचयो रचयामि हार
मात्तेन मौक्तिकगणेन मम प्रसीद ॥ १६४

क्रुद्धेति ॥ हेदयिते प्रेयसि ! जम्भरिपुकुञ्जरकुम्भयुग्मे जम्भरिपुकुञ्जरः इन्द्रगजः, ऐरावत इत्यर्थः - तस्य कुम्भयुग्मे कुम्भद्वन्द्वे कुचकुम्भसाम्यं कुम्भाविव कुचौ कुचकुम्भौ, तयो स्साम्यं औपम्यं, उद्भाव्य पर्यालोच्य, क्रुद्धा कुपिता, असि किन्तु भवसि वा किम् ? अनुपमस्यापि मदीयकुचकुम्भयुगस्य ऐरावतकुम्भरूपं सदृशं वस्त्वन्तरमस्तीति पर्यालोच्य कुप्यसि किमित्यर्थः - महात्मानः स्वसादृश्यरूपापचारमपि न क्षमन्ते इति भावः - अत्र ऐरावतकुम्भयोः कुचोपमानत्वं मास्तु नाम, कुचोपमेयत्वमपि नास्तीति वर्णनात्प्रतीपालङ्कारभेदः - 'वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च त'दिति लक्षणात् - तदेव ऐरावतकुम्भयुग्ममेव, भित्वा निर्भिद्य, आत्तेन तत स्स्वीकृतेन मौक्तिकगणेन मुक्ताफलजालेन, कुचयोः, तव स्तनयोः हारं स्रजं, रचयामि करोमि - मम प्रसीद प्रसन्ना भव- 'करीन्द्रजीमूतवराहशङ्खमत्स्याहि शुक्त्युद्भवमेव भूरि' इति करिकुम्भयो र्मुक्तायोनित्वदर्शना दिति भावः । अत्र श्रीकृष्णस्य सिंहसाम्यं व्यज्यते- १६४

श्लो ॥ प्राणप्रिये ! किमिव वस्तु तवास्त्वपेक्ष्य
मीदृङ्मनःकलुषता यदलाभत स्ते
लोलासि बालविधया विधुखेलने चे
दापादयामि चरणाम्बुजसक्त मेनम् ॥ १६५

प्राणेति ॥ हे प्राणप्रिये प्राणेश्वरि ! तव अपेक्ष्यं कांक्ष्यं, वस्तु किमिव किंवा, अस्तु भवतु-कस्मिन् वस्तुनि तवापेक्षास्तीत्यर्थः - यदलाभस्य यस्य वस्तुनः अलाभतः अप्राप्तेर्हेतोः, ते तव, ईदृङ्मनःकलुषता ईदृशचित्तक्षोभः, जातेति शेषः - बालविधया बालवत्, विधुखेलने चन्द्रेण साकं क्रीडने, कृष्णेन साकं विहारे- इति च गम्यते- लोला आसक्ता, असिचेत् भवसि यदि, एनं विधुं चरणाम्बुजसक्तं त्वत्पादारविन्दलग्नं' आपादयामि करोमि- चन्द्रं त्वत्पादयोः पातयामीत्येकोऽर्थः । मां त्वत्पादयोः पातयामी त्यन्योऽर्थः ॥ १६५

श्लो ॥ किं पारिजात मुपनीत मवेक्ष्य सत्य
भामाकृते कलुषिताऽसि ममैष नेति
कल्पद्रुमं सपदि सद्म नयामि किन्तु
सोऽयं सुरूपकरनिर्जितपल्लव स्ते ॥ १६६

किमिति ॥ सत्यभामाकृते सत्यभामार्थं, मुपनीत मानीतं, पारिजात मवेक्ष्य दृष्ट्वा, एष पारिजाततरुः मम न नासीदिति हेतोः, कलुषिता सञ्जातकलुषा असि किम्-? सपदि इदानीं, कल्पद्रुमं कल्पतरुं, सद्म तव सदनं, नयामि प्रापयामि, 'मन्दारः पारिजातकः सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दन'मिति देवतरूणां पञ्चाना म्मध्ये सत्यभामार्थं पारिजात एक एवानीतः - त्वदर्थन्तु कल्पवृक्षमानयामीत्यर्थः । ननु इतः प्रा क्कुतो नानीत मित्यत आह- किन्तु सोऽयं कल्पतरुः, ते तव, सुरूपकरनिर्जितपल्लवः सुन्दरकरतिरस्कृतकिसलयः, भवतीति

शेष: । त्वत्करनिर्जितपल्लवस्याश्चर्यसम्पादकत्वाभावात् - इतःप्रा क्तदानयने उपेक्षा कृता स्पृहणीयश्चे दिदानी मानयिष्यामीत्यर्थः । अत्र चतुर्थे पादे कल्पतरुकिसलयव्यतिरेकः रुक्मिणीकरयो रुक्तइति व्यतिरेकालङ्कारः । व्यङ्ग्यार्थस्तु- सपदि कल्पद्रुमः आश्रिताभीष्टदाने कल्पवृक्षतुल्यं मामित्यर्थः - विषयनिगरणा दतिशयोक्ति रलङ्कारः - सद्म नयामि किन्तु सोऽयं जनः अह मित्यर्थः - ते सुरूपं शोभनसौन्दर्यं, तदेव करः बलिः, तेन निर्जितः सचासौ पल्लवो विटः भवति-अयं विटः त्वद्रूपविभ्रमनिर्जितत्वेन त्वदधीन एवेति कृत्वा मच्छरीरं त्वत्सद्म नेतुमपि त्वमेव शक्नोषि नत्वहं-त्वत्परतन्त्रत्वादिति भावः ॥ १६६

श्लो ॥ प्राणादपि प्रियतमा मतिलङ्घ्य धर्म्यां
त्वा मन्यसुभ्रुविरुचि र्मम चे त्प्रमादात्
अज्यत्कळङ्कवदनद्विजराट्प्रसाद
मुन्मुच्यते कथमिवाह मघच्युत स्स्याम् ? ॥ १६७

प्राणादिति । धर्म्यां धर्मा दनपेतां, धर्मपथ्यर्थन्याया दनपेते इति यत् - प्राणादपि प्राणेभ्योऽपि, प्रियतमां अतिप्रियां, त्वां अतिलङ्घ्य अतिक्रम्य, मम प्रमादात् अनवधानतायाः हेतोः - 'प्रमादो धीमतामपी'ति न्यायादिति भावः । अन्यसुभ्रुवि स्त्र्यन्तरे, परदारेष्विति च व्यज्यते- रतिः अनुरागः, स्याच्चेत् ते तव, अज्यत्कळङ्कवदनद्विजराट्प्रसादं निष्कळङ्कमुख चन्द्रप्रसन्नत्वं, निर्दुष्टब्राह्मणोत्तमानुग्रहं च- उन्मुच्य त्यक्त्वा, कथमिव कथं वा, अहं अघाद् दुःखात्, पापाच्च-च्युतः त्यक्तः, स्याम् भवेयं ? 'अंहो दुःखव्यसने ष्वघ' मित्यमरः । प्रामादिकं मद्दोष मविगणय्य यदि त्वं मयि प्रसन्नवदना स्याः तर्हि मम दुःखनिवृत्ति स्स्यात्, नोचेन्नैवेत्यर्थः - अत्र अज्यत्कळङ्केत्यनेन त्वन्मुखचन्द्रे मयि कोपेन वलिते सति त्वन्मुखसदृशं मन्मनोविनोदावह मन्य द्वस्तु नास्त्येवेति मम निर्गतिरेव स्यात्- नच चन्द्रोऽस्तीति वाच्यं तस्य कळङ्कित्वादिति व्यज्यते - प्रमादा त्परदारानुरक्तस्य द्विजोत्तमानुग्रह मन्तरेण पापनिवृत्ति र्नस्यादेवेति व्यङ्ग्यार्थः - अत्र वदनद्विजराजः निष्कळङ्कत्वविशेषणेन चन्द्रा द्व्यतिरेकः प्रतीयते इति व्यतिरेकालङ्कारः ॥ १६७

श्लो ॥ प्राणप्रिया ऋतुमती न समागमार्हा
तिस्रो निशा इति विलीनविलासजालः
खेदं प्रपद्य हृदयस्य विनोदमात्र
मासादयं स हि कयापि विधेयया ते ॥ १६८

प्राणेति ॥ ऋतुमती पुष्पिणी, प्राणप्रिया रुक्मिणी, तिस्रो निशाः रात्रीः - कालाध्वनो रत्यन्तसंयोगे द्वितीया -समागमार्हा संयोगार्हा, न न भवति - 'चतुर्थेऽहनि शुद्धि स्स्या द्दतु स्संभोगकर्मणी'ति वचनादिति भावः - गर्भाधानमहोत्सवस्यापि रात्रित्रयपरिमितत्वादिति गूढाशयः - इति हेतोः विलीनविलासजालः सङ्कोचिताखिलविलासः, वैमनस्यादिति भावः-

अहमिति शेषः- खेदं विरहखेदं, प्रपद्य प्राप्य, ते विधेयया त्वद्दासीप्राययेत्यर्थः- अनेन विधेयजने कोपायोगात् त्वया राधायामपि न कुपितव्यमिति श्रीकृष्णप्रार्थना व्यज्यते- कयापि कयाचित् स्त्रिया सह 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयःकामो न गृह्णीयात् ज्येष्ठापत्यकळत्रयो'रिति प्रसिद्धेः कयापीत्युक्तम् – अनेन च रुक्मिण्यपेक्षया राधायाः नैच्यं व्यज्यते- कयापीत्यनेन अनादरप्रतीतेः - हृदयस्य मनसः, विनोदमात्रं दुःखोपशमनमात्र मित्यर्थः - आसादयं संपादितवानस्मि- अत्यन्तखेदे उन्मादप्राप्तेरिति भावः - १६८

श्लो ॥ मञ्जीरमञ्जुतरशिञ्जितरञ्जितं ते
पादाम्बुजं प्रियतमे ! कलयामि मूर्ध्ना
आधेहि मुग्धमधुरं वदनेन्दुबिम्ब
मेकान्तकान्त ममितस्मितचन्द्रिकाभिः ॥ १६९

मञ्जीरमिति ॥ हे प्रियतमे प्रेयसि ! मञ्जीरमञ्जुतरशिञ्जितरञ्जितं मञ्जीराणां नूपुराणां मञ्जुतरेण मनोज्ञेन, शिञ्जितेन ध्वनिना, रञ्जितं भूषितं, उत्क्षेपणसमये ध्वन्युदयादिति भावः- ते पादाम्बुजं पादारविन्दं, मूर्ध्ना शिरसा, कलयामि वहामि- अनेन मच्छिरसि समञ्जीरसिञ्जितं त्वच्चरणताडनमपि मम महद्भाग्यमिति व्यज्यते - मुग्धमधुरं अतिसुन्दरं, मुग्धा त्सुन्दरादपि मधुरं सुन्दरमिति समासः - वदनेन्दुबिम्बं मुखचन्द्रबिम्बं, अमितस्मितचन्द्रिकाभिः अधिकहासरूपज्योत्स्नाभिः, एकान्तकान्तं अतिदीप्तं, आधेहि कुरु- अतिसुन्दरस्य तव मुखरूपचन्द्रस्य स्मितरूपज्योत्स्नासंयोग श्शोभातिशयावह इत्यर्थः- रूपकालङ्कारः - त्वद्वक्त्रप्रसादार्थं त्वत्पादारविन्दं शरणं भजामीति वचनेन कृष्णस्यातिकार्पण्यं व्यज्यते - १६९

**ग ॥ एवं सकपटशपथपरम्परया प्रशंसया विनयाभिनयेन च प्रेयसी मनुनीय सोन्नमन मुत्सङ्गसङ्गिनी माधाय, पांसुनिरसनेन, शिरोरुहसहनेन, कण्ठाश्लेषेण, कपोलपरिचुम्बनेन च प्रमोद मापाद्य, यदुनन्दनः कमपि वचसा मविषयं हर्ष मभजत ॥**

एवमिति। यदुनन्दनः कृष्णः, एव मुक्तरीत्या, सकपटशपथपरम्परया सव्याज शपथस्तोमेन, प्रशंसया स्तुत्या, विनयाभिनयेन विधेयताप्रकटनेन च, प्रेयसीं रुक्मिणीं, अनुनीय प्रसादयित्वा, सोन्नमनं उन्नमनपूर्वकं, उत्सङ्गसङ्गिनीं सक्थिगतां, आधाय कृत्वा, भूतलादुन्नमय्य उत्सङ्गे आरोप्येत्यर्थः। पांसुनिरसनेन भूतलविलुण्ठनजन्यपरागनिष्कासनेन, शिरोरुहसहनेन कचबन्धनेन, कण्ठाश्लेषेण कण्ठालिङ्गनेन, कपोलपरिचुम्बनेन गण्डस्थलचुम्बनेन च, प्रमोद मानन्दं, आपाद्य सम्पादयित्वा, पांसुनिरसनादिसेवाभि स्ता मानन्दयित्वेत्यर्थः। वचसा मविषयं वागगोचरं, मनोमात्रसंवेद्य मित्यर्थः । यद्वा अस्माकं वर्णयितु मशक्य मित्यर्थः - कमपि महान्तं, हर्षं आनन्दं, अभजत प्राप-ब्रह्मानन्दनिर्मग्नोऽभू दित्यर्थः । श्रीकृष्णस्य स्वयं ब्रह्मत्वा त्तदानन्दो महानिति भावः । अत्र श्रीकृष्णपरब्रह्मानन्दवर्णनस्य ग्रन्थान्ते कृतत्वा देतद्ग्रन्थस्य भव्यप्रदत्वं व्यज्यते- १७०

अव ॥ अथ कवि ग्रन्थान्ते मङ्गळं चिकीर्षुः तन्मुखेन कृतिनायिकानायकयोः रुक्मिणी कृष्णयो रायुरादिक माशास्ते श्लोकद्वयेन- इत्थ मित्यादिना ।

श्लो ॥ इत्थं मानुषलीलया कलयते सर्वावनीं पावनीं
कल्याणैकनिकेतनाय जगदानन्दादिकन्दाय ते
देवाय स्पृहयामि सर्वभुवनं गोपाय गोपायते
लक्ष्मीचित्तमुषे नवामृतझरीकल्पाय कल्पायुतम् ॥ १७१

इत्थमिति ॥ इत्थं पूर्वोक्तरीत्या, मानुषलीलया मनुष्यविलासेन, मनुष्यधर्माभिनयेनेत्यर्थः - श्रीकृष्णस्य लीलामानुषत्वादिति भावः । सर्वावनीं समस्तामपि भुवं, पावनीं पवित्रां, कलयते कुर्वते-स्वस्मिन् श्रीकृष्णपादारविन्दविन्यासेन सर्वापि भूः पवित्रेत्यर्थः - तत्र हेतुमाह- कल्याणैकनिकेतनाय सकलकल्याणगुणानां मुख्याश्रयाय, एवं परमेश्वरस्य मानुषलीलास्वीकरणे हेतुमाह- सर्वभुवनं समस्तलोकं, गोपायते रक्षयते इति-अतएव जगदानन्दादि कन्दाय जगता मानन्दस्य आदिकन्दः - कन्दशब्दो गौण्या वृत्त्या कारणमात्रं बोधयति - प्रधानकारण मित्यर्थः - तस्मै सकलकल्याणगुणनिलयो भगवान् मानुषवेषेण भुवि भुवनरक्षार्थ मवतीर्य भुवनानि रक्षय न्नानन्दयंश्च स्वपादन्यासै र्भुवं पावयतीत्येतावता निष्कृष्टोऽर्थः - ननु परमेश्वरस्यावाप्तसमस्तकामस्य किमनेन जगद्रक्षणेनेत्यत आह-देवायेति - दीव्यति भूतपालनादिना क्रीडतीति देव स्तस्मै, भगवतः क्रीडेय मिति भावः । ननु ब्रह्मन्! कथं भगवत श्चिन्मात्रस्याविकारिणः - 'लीलयावापि युज्येर न्निर्गुणस्य गुणाः क्रिया' इति भागवतात् चिन्मात्रस्य निर्गुणस्य लीलापि कथ मित्यत आह - लक्ष्मीचित्तमुषे रुक्मिणीमनश्चोराय, मायावशा ल्लीलारसोदय इति भावः । अनेन सलक्ष्मीकायैव कृष्णाय कवि रायु राशास्ते इति व्यज्यते - ननु तादृशत्रिजगन्मोहिन्या अपि लक्ष्म्या मनः कथं चोरितवा नत आह - नवामृतझरीकल्पाय नूतनसुधाप्रवाहतुल्याय, अनेन अमृतवद्भगवद्रूपस्य भोग्यत्वं व्यज्यते- परमानन्दपदत्वं च-यद्वा-तस्य ब्रह्मणः स्वरूपलक्षण माह - नवामृतझरीकल्पायेति-परमानन्दस्वरूपायेत्यर्थः - अमृतशब्दस्य सुखवाचित्वात् - साक्षात् श्रीकृष्णावतारस्यैव वाचकं विशेषण माह गोपायेति- गोपालायेत्यर्थः - अनेन सौलभ्यं व्यज्यते- यद्वा भगवत एवंविधत्वे प्रमाण माह गोपायेति- गाः वेदवाचः, पातीति गोपः, वेदपरिबृढः वेदवेद्य इति यावत्- शास्त्रयोनित्वा दित्यधिकरणेन भगवतो वेदप्रमाणत्वं भगवता व्यासेनैव प्रतिपादितं- ते तुभ्यं कल्पायुषं कल्पपरिमित मायुः - अजिति योगविभागात्समासान्तोऽच्-स्पृहयामि अभिलषामि ॥ १७१

श्लो ॥ तस्यै विदर्भसुदृशे जगदम्बिकायै
गोपालकाय च जगज्जनकाय तस्मै
कल्याणजात मतिवेल मनल्पकाल
माशास्महे न हि ततोऽधिक मर्थयामः ॥ १७२

तस्यै इति ।। जगदम्बिकायै त्रिलोकमात्रे, तस्यै विदर्भसुदृशे रुक्मिण्यै, जगज्जनकाय त्रिलोकपित्रे, तस्मै गोपालकाय कृष्णाय च, अनल्पकालं बहुकालं, 'कालाध्वनो रत्यन्त-संयोगे द्वितीया'-अतिवेलं भृशं, कल्याणजातं मङ्गळसमूहं, आशास्महे इच्छामः - आङ् इशासु इच्छायाम्-ततः तस्मात्, अधिकमन्यत्, वस्तुवाहनस्वर्गमोक्षादिक मित्यर्थः - नार्थयामो हि नैवेच्छामः - निष्कामस्य ग्रन्थकर्तु र्मम भगवच्छ्रेयोऽभिलाषा दन्यस्याभिलाषो नास्तीत्यर्थः - १७२

अथ ॥ एवं लोकोत्तरं प्रबन्धं निर्माय 'य त्करोषि य दश्नासि य ज्जुहोषि ददासि यत्। य त्तपस्यसि कौन्तेय! त त्कुरुष्व मदर्पण' मिति भगवद्वचनमनुसन्दधानः कविः स्वग्रन्थं व्यङ्ग्यमर्यादया परमेश्वराय समर्पयति ॥

श्लो ॥ 'ममेदं मेदिन्या मुदित ममृतासारसरसं
गभीरं जानीयात्क इव रसिकाग्रेसर' इति-
कृताऽनन्ता चिन्ता कथमिव मया हन्त जनके
दयाळौ सर्वज्ञे सति भवति निर्मत्सरतरे ॥ १७३

ममेति ॥ मेदिन्यां भुवि, उदितं जातं, मनस स्सकाशाद् ग्रन्थरूपेण भुवि प्रभूत मित्यर्थः- अमृतासारसरसं अमृतस्य सुधायाः, आसारः धारासम्पातः, स इव सरसं सस्वादं, शृङ्गारादिरससहितं चेति व्यज्यते- गभीरं, गम्भीरं, ध्वनिप्राधान्यादिति भावः - मम मत्कर्तृक मित्यर्थः - इदं काव्यं, रसिकाग्रेसरः सहृदयोत्तमः, क इव कोवा, जानीयात् विद्यात्- इत्येवं अनन्ता अमिता, चिन्ता मया कथमिव कथं वा, कृता भवत्विति शेषः - न कथमपीत्यर्थः - एतन्मत्काव्यं ज्ञातुं रसिकाग्रेसरोऽस्ति वा नवेति चिन्तितुं मम नैवावसर इत्यर्थः - यद्वा- इति अनन्ता चिन्ता मया कथमिव कुतो वा कृता न कर्तव्यै वेत्यर्थः - हन्तेत्याश्चर्ये - खेदे वा - इतः प्राङ् मूढत्वान्मया व्यर्थमेव चिन्तितमित्यर्थः - तत्र हेतु माह-जनक इत्यादिना-हेभगवन्निति शेषः – जनके पितरि, अनेन पितुः पुत्रवाक्येष्विव तव मद्वाक्येषु स्वतःप्रीति रस्तीति व्यज्यते– दयाळौ सकरुणे, अनेन च मद्ग्रन्थे दोषा अपि त्वया दयया क्षन्तव्या इति व्यज्यते। सर्वज्ञे सर्वविदि, न हि त्वत्तुल्यो रसिकाग्रेसरो नामेति भावः - निर्मत्सरतरे मात्सर्यरहिते, प्राकृताः रसिका स्सन्तु नाम - ते तु मयि मात्सर्या न्मद्ग्रन्थं न पश्येयुः - त्वन्तु न तथेति भावः - भवति त्वयि सति, कालत्रये सर्वत्रापि, वर्तमाने इत्यर्थः - अन्वयस्तु- हेभगवन्! जनके दयाळौ सर्वज्ञे निर्मत्सरतरे भवति सति, मेदिन्या मुदितममृतासारसरसं गभीरं ममेदं रसिकाग्रेसरः क इव जानीयादिति अनन्ता चिन्ता मया कथमिव कृता हन्त इति कठिनाः किञ्चिद्ज्ञाः मत्सरा अन्ये रसिकाभासा स्सन्तुनाम-मद्ग्रन्थं वेत्तुं त्वमेवार्हसीति तुभ्यमेवेदं समर्पयामीति निष्कृष्टार्थः - १७३

अव ॥ चरमविलासपरिच्छेदं कथयति ।

श्लो ॥ यस्मिन् शङ्करदाससौरभझरीजृम्भत्कटाक्षच्छटा
पाताः कल्पलतावितानसुमनोगुम्भप्रियम्भावुकाः
तस्यासौ नवकालिदासविदुष ष्षष्ठोऽपि काव्यामृते
चम्पूनामनि धीमतां कृतसमुल्लासो विलासोऽगमत् ॥

यस्मिन्निति॥ षष्ठोऽपि षष्ठश्च-

श्लो ॥ चम्पूभागवताख्यदुग्धजलधिं सन्मन्थरेणामुना
निर्मथ्यामृतसार मस्य भगवा नाच्छिद्य लक्ष्मीधवः
वञ्चित्वाऽसुरसन्ततिं सुमनसां वृन्दाय देया दतः
कोऽन्योऽस्ति त्रिजगत्यपारकरुणो नारायण स्सर्ववित् ॥

श्लो ॥ मया यः कारयामास । व्याख्यानं बालिशेन च
चम्पूभागवतस्यापि । गृह्णातु स इदं हरिः ॥

इति श्रीहयवदनरदनरुचिसदनवदनफेनमधुरतररससमास्वादननित्यतृप्तस्य,
फणितरमापरिणयादिप्रबन्धस्य पुरिघल्ल रामसूरिकरुणासमासादितानवद्यशब्दविद्यस्य,
बेल्लङ्कोण्डोपनामक मोहनरायतनूभवस्य रामस्य कृतिषु
चम्पूभागवतव्याख्यायां मन्दरसमाख्यायां
**षष्ठोविलासः, व्याख्या च**
**समाप्ता**
श्रीहयग्रीवार्पण मस्तु ।



गुण्टूरु - पञ्चाक्षरी मुद्राक्षरशालायां सम्मुद्रितम्

# SRI BELLAMKONDA RAMA RAYA KAVINDRA TRUST

Do.No.12-8-5/5 NARASARAOPET. REG NO : - 112/bk - g/09.



గౌరవాధ్యక్షులు :
బ్ర॥ శ్రీ ఆచార్య బెల్లంకొండ శ్రీనివాస బాలసాయి యోగి



అధ్యక్షులు :
బ్ర॥ శ్రీ బెల్లంకొండ వేంకట సుబ్రహ్మణ్యశర్మ



ఉపాధ్యక్షులు :
బ్ర॥ శ్రీ బెల్లంకొండ రామకోటేశ్వరరావు



ప్రధాన కార్యదర్శి :
బ్ర॥ శ్రీ బెల్లంకొండ నరసింహారావు



సహాయ కార్యదర్శి :
బ్ర॥ శ్రీ బెల్లంకొండ మోహనరావు



కోశాధికారి :
బ్ర॥ శ్రీ బెల్లంకొండ వేంకట లక్ష్మీనరసింహవరప్రసాద కుమార్



కార్యనిర్వాహక సభ్యులు :
బ్ర॥ శ్రీ బెల్లంకొండ వేంకట కృష్ణ రాఘవేంద్రరావు



కార్యనిర్వాహక సభ్యులు :
బ్ర॥ శ్రీ బెల్లంకొండ సాయిరామ్

